# VARENDRA RESEARCH SOCIETY

## RAJSHAHI.

FOUNDED IN 1910 BY KUMAR SARAT KUMAR ROY.

### PATRON.

HIS EXCELLENCY THE GOVERNOR OF BENGAL.

### VICE-PATRONS.

MAHARAJA JAGADINDRA NATH ROY OF NATOR.
THE HON'BLE RAJA PRAMADANATH ROY OF DIGHAPATIYA.

### HONORARY VICE-PRESIDENTS.

SIR JOHN MARSHALL, KT., C. I. E.
PROFESSOR JADUNATH SARKAR, M. A., I. E. S.
RAI BAHADUR RAMAPRASAD CHANDA, B. A., F. A. S. B.

### Council of Management, 1925.

*President*—Kumar Sarat Kumar Roy, M. A., M. R. A. S.
*Director*—Babu Akshay Kumar Maitra, B. L., C. I. E.
*Hon. Secretary*—Babu Bijay Nath Sarkar, B. A., C. E.
*Hon. Asst. Secretary* ,, Brajendra Mohan Maitra, M. A.
*Hon. Librarian*— ,, Atalbihari Bhattacharya, M. A.
*Hon. Treasurer*— ,, Mahendra K. Saha Chaudhuri, B. L.
*Hon. Keeper*— Kumar Hemendra Kumar Roy.
*Other Members*:
Babu Santosh Kumar Chatterji, M. A.
,, Sivaprasad Bhattacharya, M. A.
,, Kshitish Chandra Sarkar, M. A., B. L.
,, Nirad Bandhu Sanyal, M. A.
Dr. Jyotis Govinda Sen, B.A., PH.D (London).

### CURATOR OF THE MUSEUM.

BABU NANIGOPAL MAJUMDAR, M. A.

सविताराय-स्मृतिसंरक्षण-ग्रन्थमाला

# काशिकाविवरणपञ्जिका।

## बोधिसत्त्वदेशीयाचार्य्यश्रीजिनेन्द्रबुद्धिपादविरचिता

शास्त्रिश्रीश्रीशचन्द्रचक्रवर्त्तिभट्टाचार्य्येण संस्कृता।

THE

# KASIKA VIVARANA PANJIKA

## (THE NYASA)

A COMMENTARY ON VAMANA JAYADITYA'S KASIKA

BY

JINENDRA BUDDHI.

EDITED BY

SRISH CHANDRA CHAKRAVARTI, B. A

READER OF SANSKRIT DACCA UNIVERSITY

**Vol III**

(Adhyayas 7—8)

PUBLISHED BY

THE VARENDRA RESEARCH SOCIETY

RAJSHAHI, BENGAL.

1925

## PREFACE TO VOL. III.

The publication of the Nyasa was begun by the Varendra Research Society in 1913 and six adhyayas were published till 1924. This year, when the present volume comprising the last two adhyayas was in the press, Kumar Sarat Kumar Roy, President of the Society, very kindly offered to meet the cost of its printing from the Savita Memorial Fund—a fund for the publication of old Sanskrit works instituted by him in memory of his deceased son Savita Ray, and managed by the Society. This offer was thankfully accepted and the last volume of this valuable work is thus issued as a publication of the Savita Memorial Series.

The thanks of the Society are due to the editor, Pandit Srish Chandra Chakravarti, who, in the midst of exacting professional duties, has carried on this labour of love with unremitting zeal for twelve years and has brought this work of 2224 pages to completion.

VARENDRA RESEARCH SOCIETY
RAJSHAHI
*30th August, 1925.*

B. N. SARKAR,
HON. SECRETARY

अथ

# काशिकाविवरणपञ्जिका।

## सप्तमाध्यायस्य

## प्रथमः पादः।

---

### १। युवोरनाकौ।

शास्त्रस्य लाघवार्थमिह युवू प्रत्ययावुपदिष्टौ। तयोः स्थानेऽनाकावादेशौ विधीयेते। यदि हि यत्र यत्र युव्वोरुपदेशस्तत्र तत्रानाकावादेशौ विधीयेयातां तदा शास्त्रस्य गौरवं स्यात्। तयोः प्रभूतवर्णसमुदायात्मकत्वात्। इह युव्वोरनुनासिकयणोः प्रत्यययोरिदं ग्रहणम्। न च तथाविधावननुबन्धकौ युवू शास्त्रे सम्भवतः। तत्र सामर्थ्याद् विशेषकराननुबन्धानुत्सृज्य सामान्येन तयो ग्रहणं विज्ञायत इत्याह युवु इत्येतयो रुत्सृष्टविशेषणयोरिदं ग्रहणमिति वक्ष्यमाणेन सम्बन्धः। विशेषणं यथायोगं लकारादि। तदुत्सृष्टं परित्यक्तं ययो स्तौ तथोक्तौ। एतेन युवोरिति ल्युडादीनां सामान्येन निर्देश इति दर्शयति। यद्यत्र युव्वोरित्यविशेषेण ग्रहणं स्यात् तदा यु मिश्रणे युतो युतवान् युत्वा दिवु क्रीड़ादौ द्यूतो द्यूतवान् द्यूत्वा ऊर्णोया युम् ऊर्णायुरित्येवमादावप्यनाकौ स्याताम्। अतोऽस्यातिप्रसङ्गनिरासायाह अनुनासिकयणोरिति। अनुनासिको यण् ययोरिति बहुव्रीहिः। सन्ति हि यणः सानुनासिका निरनुनासिकाश्च। तत्र हि ययोरनुनासिको यण् तयोरिदं ग्रहणम्। अनुनासिकयणौ च यौ युवू तौ प्रत्ययावेव नाप्रत्ययाविति दर्शयितुमाह प्रत्यययोरिति। अन्ये त्वप्रत्ययनिवृत्त्यर्थं प्रत्यययोरित्युक्तमिति वर्णयन्ति। तदयुक्तम्। अनुनासिकयणोरित्यनेनैवाप्रत्ययनिवृत्तेः सिद्धत्वात्। नह्यप्रत्ययावनुनासिकयणौ युवू शास्त्रे स्तः। तस्मादनुनासिकयणौ यौ युवू तौ प्रत्ययावेव नाप्रत्ययाविति

सम्भवप्रदर्शनार्थं प्रत्यययोरित्युक्तमिति विज्ञायते। अनुनासिकयणोश्च प्रत्यययोर्ग्रहणे सत्यङ्गस्येति सम्बन्धलक्षणेयं षष्ठी विज्ञेया। अङ्गसम्बन्धिनो-र्य्वोरिति सम्बन्धः। स पुनर्निमित्तिनिमित्तभावलक्षणः। प्रत्ययनिमित्तो ह्यङ्गस्यात्मलाभइत्यङ्गं निमित्ति। प्रत्ययो निमित्तम्। योरनो वोरक इत्यनेन यथाक्रमं स्थान्यादेशसम्बन्धमाचष्टे। नन्द्यादिभ्यो ल्युरिति। नन्दिग्रहीत्यादिना (३।१।१३४)। नन्दनो रमण इति। टुनादि समृद्धौ। रमु क्रीड़ायाम्। हेतुमति णिच्। तदन्ताल्ल्युः। सायन्तन इति। सायमादिभ्य ष्ट्यु ष्ट्युलाविति। सायञ्चिरमित्यादिना (४।३।२३) जातादौ शैषिकेऽर्थे तद्धितः। वासुदेवकोऽर्ज्जुनक इति। वसुदेवस्यापत्यं वासुदेवः। वासुदेवो भक्तिरस्येति वासुदेवार्ज्जुनाभ्यां वुन्निति (४।३।९८) वुन्। वासुदेवकोऽर्ज्जुनकः। ऊर्णा अस्य सन्तीत्यूर्णायुः। तत्रानुनासिकयणत्वाभावान्न भवति। किं पुनः कारण मेवमादीनां यणोऽनुनासिकत्वं नास्तीत्याह एवमादीना मित्यादि। प्रतिज्ञानुनासिक्याः पाणिनीया इति। यत्र तैरनुनासिकत्वं प्रतिज्ञायते तत्रैव भवति। नान्यत्र। न च युस्-प्रभृतीनां तैस्तत् प्रतिज्ञायते। लक्ष्यानुरोधात्। तेन तेषां यणोऽनुनासिकत्वं न भवति। आदिशब्देनाहंशुभमोर्युसितीत्रव मादयो (५।२।१४०) गृह्यन्ते। ननु चाहंशुभमोर्युस् कंशंभ्यां वभयुस्तितुतयस (५।२।१३८) इत्यत्र सित्करणादेव न भविष्यति। सित्करणं हि पदसंज्ञार्थम्। पदसंज्ञा चानुस्वारार्था। तस्यां सत्यां मोऽनुस्वार (८।३।२३) इत्यनुस्वारो यथा स्यात्। यदि चात्रानादेशः स्यात् तदा सित्करण मनर्थकं स्यात्। न ह्यनादेशे कृतेऽनुस्वारो भवति। तद्विधौ हलि सर्वेषा (८।३।२२) मित्यतो हलीत्यनुवृत्तेः। आदेशे कृते न भवति। हलादित्वाभावात्। नैतदस्ति। वचनसामर्थ्यादजादावप्यनुस्वारः स्यात्। सित्करणस्यान्यदपि प्रयोजनम् पदसंज्ञा। तत् प्रयोजनम् भसंज्ञा-बाधः। भसंज्ञायामव्ययानां भमात्रे टिलोपः स्यात्। अवग्रहार्थं वा सित्करणं स्यात्। कुतस्तस्यानर्थक्यम्? इह युवोरिति निर्देशे समाहारे वा द्वन्द्व आश्रीयत इतरेतरयोगे वा? तत्र पूर्वस्मिन् पक्षे षष्ठ्येकवचने कृते स नपुंसक-मिति (२।४।१७) नपुंसकत्वादिकोऽचि विभक्ताविति (७।१।७३) नुमा भवितव्यम्। ततश्च युवुन इति निर्देशः स्यात्। इतरस्मिंस्तु पक्ष ओसि परतो यणादेशे कृते युव्वोरिति द्वितीयवकारश्रवण मापद्येतेत्येतच्चोद्यनिरासायाह

इह युवोरिति निर्देश इत्यादि। अनित्यमागमशासनमिति। आगमानां शासनं विधानम्। तदनित्यमिति। क्वचित् तदभावात्। अथवागमाः शिष्यन्ते विधीयन्ते येन शास्त्रेण तदागमशासनं शास्त्रम्। तदनित्यम् अविद्यमानं नित्यं कार्य्यमस्येति कृत्वा। अनित्यता पुनरागमशासनस्य घो र्लोपो लेटि वेत्यत्र (७।३।७०) वाग्रहणाल्लिङ्गाद् (A) विज्ञायते। तद्धि ददद् ददादित्यत्र नित्यं घोर्लोपो मा भूदित्येवमर्थं क्रियते। यदि च नित्यमागमशासनं स्याद्वाग्रहणमनर्थकं स्यात्। भवतु नित्यो लोपः। सत्यपि तस्मिन्, लेटोऽडाटावि (३।४।६४) त्यटि कृते ददद् ददादिति सिद्धत्येव। अनित्यत्वे त्वागमशासनस्याड़ागमाभावान्न सिध्यति। ततो वावचनमर्थवद्भवति। नपुंसकलिङ्गता वेत्यादि। अथवा नपुंसकलिङ्गतैवात्र नास्ति। किं कारणमित्याह लिङ्गमशिष्यमित्यादि। लिङ्गस्य हि लोकधर्मत्वाल्लोक एवाश्रयः। तस्माल्लोकत एव सिद्धत्वात् तदशिष्यं न विधातव्यम्। लिङ्गशास्त्रमेवात्र तादर्थ्याल्लिङ्गशब्देनोच्यते। लिङ्गार्थं शास्त्रमशिष्यं न कर्त्तव्यम्। तत्साध्यस्य लिङ्गस्य लोकाश्रयत्वात्। तदनेन स नपुंसकमित्यादेः (२।४।१७) प्रत्याख्यानं दर्शयति। तस्मिंश्च प्रत्याख्याते सति तद्द्वारेण तस्य नपुंसकत्वं न भवतीति कुतो नुम्प्रसङ्गः? इतरेतरपक्षे तु छान्दसत्वाद् वर्णलोप इति। छन्दोवत् सूत्राणि भवन्तीति छान्दसत्वम्। तेन यथेष्कर्त्तारमध्वर इत्यत्र निमा नकारलोपस्तथेहापि वकारस्यापि लोपो द्रष्टव्यः।

## २। आयन्नेयीनीयियः फढखच्छघां प्रत्ययादीनाम्।

फादयोऽपीह शास्त्रे लाघवार्थमुपदिष्टाः। तत स्तेषामायन्नादय आदेशा विधीयन्ते। ते च विधीयमानाः फकारादेर्हल्मात्रस्य भवन्तीति वेदितव्यम्। कुत एतत्? अन्ते घामित्यनच्कनिर्देशात्। इतरथा हि घानामित्येव ब्रूयात्। अन्यत्र त्वागन्तुकोऽकार उच्चारणार्थ एव। अतएव प्रत्ययादौ वर्त्तमानस्य फादेर्व्यञ्जनमात्रस्य स्थानित्वेनोपादानान्निरनुबन्धकपरिभाषात्र नोप-

(A) On घोर्लोपो लेटि वेत्यत्र (7. 3. 70) says कैयट—"केचित्त्वनित्यमागमशासनमित्यस्य ज्ञापकं वाग्रहणं वर्णयन्ति। अनित्यत्वात् तस्य घसति ददादिति न स्यादिति तत्सिद्धये वाग्रहणं क्रियमाणमेनां परिभाषां ज्ञापयति॥ Does not this establish न्यासकार's priority?

तिष्ठते। सर्व्वत्र हि फादयो निरनुबन्धकाः। यत्र चोभयं सम्भवति तत्रैवास्या उपस्थानम्। नाड़ायन इति। नड़ादिभ्यः फक् (४।१।९९)। अपत्यार्थे फक्प्रत्ययः। उत्तरेष्वप्युदाहरणेष्वोयादेशोदाहरणादन्यत्रापत्यार्थ वेदितव्यः। सौपर्णेयो वैनतेय इति। सुपर्णाविनताभ्यां ढक्। आढ्यकुलीन इति। अपूर्व-पदादन्यतरस्यां यड् ढकञावित्यत्रापूर्व्वपदादिति (४।१।१४०) वचनात् कुलात् खः इत्यनेन (४।१।१३९) सपूर्वपदादपि खो भवति। गार्गीयो वात्सीय इति। गार्ग्यवात्स्यशब्दाभ्यां यञन्ताभ्यां तस्येदमित्यर्थविवक्षायां छः। यस्येति चेत्याकारलोपः (६।४।१४८)। आपत्यस्य च तद्धितेऽनातीति (६।४।१५१) यकारलोपः। फक्कति ढौकत इति। फक्क नीचैर्गतौ। ढौकृ गतौ। खनु अवदारणे। छिदिर् द्वैधीकरणे। घूण घूर्ण भ्रमण इत्येतेषां रूपाणि। ढौकति-घूर्णत्योरनुदात्तेत्त्वादात्मनेपदम्। ऊरुदघ्नं जानुदघ्नमिति। ऊरुप्रमाणमस्य प्रमाणे द्वयसजित्यादिना (५।२।३७) दघ्नच्। इहैत आयन्नादयोऽङ्गाधिकारे विधीयमानाः प्रकृतिप्रत्ययावपेक्ष्य भवन्तीति बहिरङ्गाः। प्रत्ययाद्युदात्तत्वन्तु प्रकृत्यनपेक्षत्वात् प्रत्ययमात्र माश्रित्य भवतीत्यन्तरङ्गम्। ततो बहिरङ्गा यावदायन्नादयो न भवन्ति तावदेव प्रत्ययाद्युदात्तत्वेन भवितव्यम्। तस्मिन् कृते सत्यादेशा भवन्तो यत्र स्वरार्थोऽनुबन्धो न विधीयते शिलायां ढो (५।३।१०२) वृद्धाच्छ इत्यादौ (४।२।११४) तत्रानियतस्वराः प्राप्नुवन्तीत्यस्य चोद्यस्य निरासायाह इहैत आयन्नादय इत्यादि। अयमभिप्रायः। आयन्ना-दयोऽप्यन्तरङ्गा एव। यदि ह्यङ्गस्येत्य त्राभिसम्बध्यते (६।४।१) तदा स्यात् तेषां प्रकृतिप्रत्ययापेक्षया बहिरङ्गत्वम्। न चात्र तदभिसम्बध्यते। प्रयोजनाभावात्। तथाह्यङ्गस्य निमित्तं ये प्रत्यया स्तदादीनां फादीनामायन्ना-यदो यथा स्यु रन्येषां मा भुवन्नित्येतत् प्रयोजनम्। एतच्च विनाप्यङ्गधिकारं सामर्थ्यादेव लभ्यते। नहि फादीनां मध्ये सोऽस्ति प्रत्ययो योऽङ्गस्य निमित्तं न भवति। तस्मात् प्रयोजनाभावादङ्गस्येत्येतन्नाभिसम्बध्यते। तेन स्थानिमात्र मेवादेशा अपेक्षन्ते न प्रकृतिमिति तेऽप्यन्तरङ्गा एव। ततश्च परत्वात् प्रत्ययोपदेशकाले तैरेव तावद् भवितव्यम्। ततश्च प्रत्ययाद्युदात्तत्वेनेति प्रत्ययोपदेशकाल एवायन्नादयो भवन्तीति तेषु कृतेषु प्रत्ययाद्युदात्तत्वं भवतीति। अत्र ज्ञापकमप्याह तथाचेत्यादि। एवञ्चेत्यर्थः। षचश्चितकरणस्यैतत्

प्रयोजनं चित इत्यन्तोदात्तत्वं (६।१।१६३) यथा स्यात्। यदि च प्रत्ययोपदेशावस्थाया मेवायन्नादयो भवन्त्येवं सति घचश्चित्करणमर्थवद् भवति। नान्यथा। अन्यथा हि यद्युपदेशावस्थाया उत्तरकालमेते स्यु स्ततो यत्रैवामति चित्करण उदात्तत्वं भवति घकाराकारे सत्यपि चित्करणे तत्रैव तेन भवितव्यमिति चित्करणमनर्थकं स्यात्। तस्माच्चित्करणादवसीयते प्रत्ययोपदेशकाल एवैत आयन्नाद्यादेशा स्तावद्भवन्ति। पश्चात् प्रत्ययाद्युदात्तत्वमिति भावः। ननु च व्यञ्जनस्यैते विधीयन्ते। तच्च व्यञ्जनमस्वरकम्। एषाञ्चावश्यं येन केनचित् स्वरेण भवितव्यम्। उदात्तादिगुणरहितस्याचोऽसम्भवात्। तत्र स्थानिनः स्वराभावादान्तरतम्यं नास्तीति स्थानेऽन्तरतमपरिभाषाया (१।१।५०) अनुपस्थाने सत्यनियतस्वरैरेभिर्भवितव्यम्। ततश्च यदि चित्त्वं न स्यात् पश्चाद् विधीयमानानामेषां यदाद्युदात्तस्वरो भवति तदा स एव स्वरः प्रसज्येत। सति शिष्टत्वात्। तस्मात् तमपि सतिशिष्टस्वरं बाधित्वाऽन्तोदात्तत्वं यथा स्यादित्येवमर्थं घचश्चित्करणम्। ततः कुतो ज्ञापकत्वमेतच्चिन्त्यम्। अथ शमेः खः शङ्कः षणो ढः षण्ढ इत्येवमादीनां कस्मादादेशा न भवन्तीत्याह शङ्कः षण्ढ इत्यादि। लशक्वतद्धिते (१।३।८) चुटू (१।३।७) इतीत्संज्ञापि बहुलवचनादेव न भवतीति वेदितव्यम्। ऋतेरीयङित्यादि। यदयमृतेरीयङितीयङं (३।१।२९) शास्ति तज् ज्ञापयति धातुप्रत्ययानामायन्नादयो न सन्तीति। यदि हि स्युर् ऋतेश्छङिति ब्रूयात्। ननु सिद्धे विधिरारभ्यमाणो ज्ञापकाय भवतीति? न च च्छङा सिध्यतीति। छङि हि सति वलादिलक्षण इट् प्रसज्येत। तत ईयादित्वादादेशो न स्यात्। नैतदस्ति। यस्मादन्तरङ्गत्वादादेशेनैव भवितव्यम्। अन्तरङ्गत्वन्तु तस्योपदेशावस्थायामेव विधीयमानत्वात्। आदेशे च कृते वलादित्वाभावादिट्प्रसङ्गो नास्ति। तदेतदीयङ्वचनं ज्ञापकमेव। एजेः खशित्यादि (३।२।२८)। तुशब्दः शङ्कः षण्ढ इत्येवमादिभ्यो विशेषप्रदर्शनार्थः। यत्रेत्संज्ञा नास्ति शङ्कादौ तत्रादेशप्रसङ्गे सति तन्निरासार्थं बहुलवचनमित्यृतेरीयङिति वा वचन मुपन्यस्तम्। एजेः (३।२।२८) खशित्येवमादौ तु लशक्वतद्धित (१।३।८) इतीत्संज्ञाया भवितव्यमित्यादेशप्रसङ्गो नास्त्येव। ततो न तत्र तदभावार्थं बहुलवचन मृतेरीयङिति वावचनमुपन्यसनीयमिति भावः। आदिशब्देन प्रियवशे वदेःखच् (३।२।३८) पुंसि संज्ञायां

घः प्रायेणेत्येवमादीनां (३।३।११८) ग्रहणम्। स्यादेतत्। अनवकाशं खकारघकारयोरादेशवचनम्। अतस्तेन बाध्यमानेत्संज्ञा कथमत्र स्यादित्याह तद्धितेष्वित्यादि। खित्यनव्ययस्येति (६।३।६६) ह्रस्वविधानं चजोः कुघिण्ण्यतो (७।३।५२) रिति कुत्वविधानं ज्ञापकं नञ्जादेशविधानेनेत्संज्ञायां बाधितायां तदुपपद्यते। खितो घितश्चात्यन्तासम्भवात्। आयन्नीनोनेकारस्येत्यादि। आयन्नीनोनेकारोऽन्ते वर्त्तत इति तस्य हलन्त्य (१।३।३) मितीत्संज्ञा प्राप्नोति। तस्याञ्च सत्यां तस्य लोप (१।३।९) इति कृते नाड़ायन आढ्यकुलीन इत्यादि न सिध्यति! तस्मादायन्नीनोनेकारस्येत्संज्ञायां प्राप्तायां तत्प्रतिविधानं कर्त्तव्यम्। स्यादेतत्। प्रयोजनाभावादेवेत्संज्ञा न भविष्यतीत्यतआह नित्कार्य्यं हीत्यादि। तत्पुनर्ञ्नित्यादि र्नित्य (६।१।१९७) मित्याद्युदात्तत्वम्। प्रतिविधानं पुनरत्र प्राचामवृद्धात् फिन् बहुल (४।१ १६०) मित्यत्र फिनो नकारानुबन्धकरणम्। तस्यैतत् प्रयोजनम्। नित्त्वादाद्युदात्तत्वं यथा स्यात्। तत्र यद्यायन्नीनोनेकारस्येत्संज्ञा स्यान्नित्त्वे सत्याद्युदात्तस्य सिद्धत्वात् फिनो नित्करणमनर्थकं स्यात्। ननु फेश्छ चेत्यत्र (४।१.१४९) सामान्यग्रहणार्थं स्यात्। तस्मिन्नसति निरनुबन्धकपरिभाषयास्यैव ग्रहणं स्यान्न फिञः। नैतदस्ति। तत्र हि वृद्धाट्ठक् सौवीरेषु बहुलमिति (४।१।१४८) बहुलग्रहणानुवृत्तेः फिञ एव ग्रहणमिष्यते। न फिनः। तदेतत् फिनो नित्करणमित्संज्ञाभावस्य ज्ञापकमेव। योगापेक्षञ्चेदं ज्ञापकम्। अनेन योगेन विहितस्यादेशस्य यो नकार स्तस्येत्संज्ञा न भवतीति। तेनेनोऽपि नकारस्येत्संज्ञाऽभावो भवति सिद्धः।

## ३। झोऽन्तः।

प्रत्ययग्रहणमनुवर्त्तत इति। अनन्तरसूत्रात्। यद्येवमेकयोगनिर्द्दिष्टत्वादादिग्रहणमप्यनुवर्त्तेत। ततश्च शयान्तायित्यत्र न स्यात्। चकारस्यादित्वाभावादित्यत आह आदिग्रहणं निवृत्तमिति। एवं मन्यते। स्वरितत्वप्रतिबद्धा हि शब्दानामनुवृत्तिः। तच्च स्वरितत्वं प्रतिज्ञाधर्मः। प्रतिज्ञास्वरिताः पाणिनीया इति। यत्रैव तैः स्वरितत्वं प्रतिज्ञायते तत्रैव भवति। नान्यत्रेति। तेनैकयोगनिर्द्दिष्टाना मप्येकतरस्यानुवृत्तिर्न विरुध्यते। इह च

प्रत्ययस्यैव स्वरितत्वं प्रतिज्ञायते। नादिग्रहणस्य। तेन सत्यप्येकयोगनिर्दिष्टत्वे प्रत्ययग्रहणमनुवर्त्तते। आदिग्रहणं निवृत्तमिति। अन्तइत्ययमादेशो भवतीति। अकारसहित एवादेशः करणीयः। अकार स्तकारेत्संज्ञा मा भूदित्येवमर्थः। स च जरन्तो वेशन्त इत्यत्र। कुर्वन्तीत्यादौ न विभक्तौ तुस्मा इति ( १।३।४ ) प्रतिषेधादेवेत्संज्ञा न भवति। अथ तूणादयो बहुलमिति ( ३।३।१ ) वचनाज्जरन्तो वेशन्तइत्यादौ न भवति। तथाच सत्यकार उच्चारणार्थः। न विभक्तौ तुस्मा ( १।३।४ ) इत्यस्यानित्यत्वज्ञापनार्थं वाऽकारोच्चारणम्। तेन किमोऽदित्यादीनां ( ५।३।२२ ) तकारेत्संज्ञा भवति। कुर्व्वन्तीति। अतउत्सर्व्वधातुक इत्युत्त्वम् ( ६।४।११० )। शयान्तायिति। शीङो लिङर्थे लेट् ( ३।४।७ )। लेटोऽडाटावित्याट् ( ३।४।९४ )। टेरेत्त्वम् (३।४।९७)। एत आयित्यनुवर्त्तमाने (३।४।९३) वैतोऽन्यत्रेतैत्त्वम् (३।४।९६)। उज्झितेति। उज्झ उत्सर्गे! तृच्। ऋदुशनइत्यादिनानङ् (७।१।९४)। नोपधायाः ( ६।४।७ ) सर्वनामस्थाने चेति दीर्घः ( ६।४।८)। उज्झितुमिति। तुमुन्। उज्झितव्यम् इति तव्यः। अस्मिन्नपीत्यादि। ननु चान्तरङ्गत्वात् प्रत्ययाद्युदात्तत्वेन प्राग् भवितव्यम्। पश्चादादेशेन। नैवम्। अन्तादेशस्याप्यन्तरङ्गत्वात्। अन्तरङ्गत्वन्तु तस्यायन्नादिवद् वेदितव्यम्। उभयोरन्तरङ्गत्वात् पूर्व्वमन्तादेशः पश्चात् प्रत्ययाद्युदात्तत्वम्। अत्रैव ज्ञापकमाह तथाचेत्यादि। एतच्च चञ्चौ चेति ( ४।४।११७ ) घच स्वित्करण मर्थवद्भवतीत्येतद्व्याख्यानेन व्याख्यात मिति। प्रत्ययाद्युदात्तत्वात् पूर्व्वमन्तादेशस्य भावे सति द्विषन्तीत्यत्र मध्योदात्तत्वम्। अन्यथाऽन्तोदात्तता स्यात्। सा चानिष्टेति पूर्वमन्तादेशः क्रियते।

## ४। अदभ्यस्तात्।

अनात्मनेपदार्थं आरम्भः। आत्मनेपदेषूत्तरसूत्रेणैव सिद्धत्वात्। ददतीति। श्नाभ्यस्तयो रात ( ६।४।११२ ) इत्याकारलोपः। दर्दात्विति। लोट्। एरु (३।४।८६) रित्युत्वम्। जक्षति जाग्रतीत्यत्र जक्षित्यादयः षड़ित्यभ्यस्त- ( ६।१।६ ) संज्ञा। युक्तं जक्षित्यादिकमुदाहरणम्। ददतीत्याद्ययुक्तम्। अत्र झकारस्यात्मलाभकालसमनन्तरमेव तावदन्तरङ्गत्वादन्तादेशेन भवि-

तव्यम्। ततः शपः श्लुः। श्लाविति द्विर्वचनम् (६।१।१०)। ततोऽभ्यस्त-संज्ञा। तदा झकारस्य स्थानिनोऽभावादङ्भावो न प्राप्नोति। न च शक्यते वक्तुं स्थानिवद्भावाद् भविष्यति। नह्यत्र स्थानिवद्भावोऽस्ति। अल्विधित्वात्। नापि बहिरङ्गोऽनवकाशत्वादन्तादेशं बाधित्वाऽदादेशो भविष्यतीति युक्तं परिकल्पयितुम्। जक्षितयादिषूपदेशावस्थायामेव लब्धाभ्यस्तसंज्ञकेषु तस्य सावकाशत्वादिति चोद्य मपाकर्त्तुमाह अन्तादेशापवादोऽयमिति। अन्ता देशस्य सामान्येन सर्वत्र प्रसक्तस्यायमङ्भावोऽपवाद आरभ्यते। न चापवाद-विषयमुत्सर्गोऽवगाहते। तथाचोक्तम् पूर्वमपवादाः प्रवर्त्तन्ते पश्चादुत्-सर्गाः। परिहृतशापवादविषयमुत्सर्गः प्रवर्त्तत इति। अतएव तर्हि जुस्भावो न स्यात्। यथैव ह्यन्तादेशस्य सामान्येन प्रवृत्तस्य विशेषोऽद्भाव आरभ्य-माणोऽपवाद स्तथा जुस्भावस्यापीतयाश्च जुसादेशेन तु बाध्यत इति। जुसा-देशस्यानवकाशत्वादितयदादेशो बाध्यते। अदद्नुरिति। लङ्। सिजभ्यस्त-विदिभ्यश्चेति (३।४।१०९) झेर्जुस्। अजागरुरिति। जागर्त्तेर्या गुणप्राप्ति स्तस्या अविचिण्णल्ङित्स्विति (७।३।८५) प्रतिषेधाल्लक्षणान्तरेण जुसि चे-(७।३।८३) त्यनेन गुणः। अत्राप्यदादेशे कृते प्रतययाद्युदात्तत्वं भवतीति। तेन पुनत इतयादिकं (B) पदं मध्योदात्तं भवतीति भावः। यदि तु विपर्य्ययः स्यादन्तरङ्गत्वात् प्रतययाद्युदात्तत्वे कृते व्यञ्जनमात्रस्यादभावो विधीयमानोऽ-नियतस्वरः प्रसज्येत। तत्र यदासावनुदात्तः स्यात् तदा पुनत इतयादेः पदस्यान्तोदात्तता प्रसज्येत। यदा स्वरित स्तदा मध्यस्वरितता। मध्योदात्तता चेष्यते। ननुच प्रतययाद्युदात्तत्वं प्रतययमात्रापेक्षयाऽन्तरङ्गम्। आदेशस्तु प्रकृतिप्रतययापेक्षत्वाद्बहिरङ्गः। अन्तरङ्गबहिरङ्गयोरन्तरङ्गं बलीय इति प्रतयया-द्युदात्तत्वेनैव पूर्व्वं भवितुं युक्तम्। पश्चादादेशेनेति। तत् कथमुच्यतेऽदादेशे कृते प्रतययाद्युदात्तत्वं भवतीति? नैतदस्ति। उक्तं ह्युपदेशिवद्‌ वचनं कर्त्तव्यमिति। किञ्चादेशो नितयः। कृताकृतप्रसङ्गित्वात्। स हि कृते प्रतययाद्यु-दात्तत्वे प्राप्नोतयकृतेऽपि। प्रतययाद्युदात्तत्वं पुनरनितयम्। शब्दान्तरप्राप्तेः। तथाह्यकृतेऽदादेशे झेरिकारस्य प्राप्नोति। कृते त्वदादेशाकारस्य। शब्दान्तरस्य

---

(B) ददतीत्यादिक मिति पाठान्तरम्। इदन्तु चिन्त्यम्। अभ्यस्तानामादिरिति (६।१।१८९) ददत्या-देराद्युदात्तत्वात्।

प्राप्नुवन् विधि रनित्यो भवति। नित्यानित्ययोर्नित्यं बलीय इति बलीयस्त्व-मस्य। तदेतन्नित्यत्वादनयोर्बलीयसोः परत्वाददादेशेन पूर्व्वं भवितव्यम्। ततः प्रत्ययाद्युदात्तत्वेन। तस्मात् सुष्ठूक्तमादेशे कृते प्रत्ययाद्युदात्तत्वं भवतीति।

## ५। आत्मनेपदेष्वनतः।

चिन्वत इति। लट्। स्वरितत्वादात्मनेपदम्। चिन्वतामिति। लोट्। झः। टेरेत्त्वम्। आमेतः ( ३।४।९० )। अचिन्वतेति। लङ्। अडागमः। हुश्नुवोः सार्वधातुक इति (६।४।८७) यणादेशः। पुनते लुनत इति। पूर्व्ववदाकारलोपः। च्यवन्ते प्लवन्त इति। अत्र शपि कृतेऽनकारान्तादङ्गादुत्तरो झकारो न भवति। ननु परत्वाददादेशेन भवितव्यम्। पश्चाद् विकरणेनेत्यत आह नित्यत्वादत्रेत्यादि। नित्यत्वन्तु कृताकृतप्रसङ्गित्वात्। विकरणो हि कृतेऽप्यदादेशे प्राप्नोत्यकृतेऽपि। ननु तस्मिन् कृतेऽङ्गावस्य प्राप्तिरस्तीत्यनित्यत्वमस्य। अनकारान्तेनेत्यादि। प्रत्ययः कस्मादनकारान्तेनाङ्गेन न विशिष्यत इति मन्यमान आह इहेत्यादि। यदि प्रत्ययो विशिष्येत शयान्तायित्यत्रापि स्यात्। भवति ह्यत्राप्यनकारान्तादङ्गादुत्तरो झप्रत्ययः। आटा व्यवहितत्वान्न भवतीति चेत्? न। तस्य तद्भक्तत्वान्न हि तदेकदेशेन व्यवधानं युक्तम्। झकारे तु विशिष्यमाणे न दोषः। आटा व्यवहित-त्वात्। समुदायभक्तो ह्याट् समुदायमेव न व्यवदध्यात्। अवयवन्तु व्यवदधात्येव। न ह्यवयवोऽवयवान्तरस्याव्यवधायको दृष्टः। तङ्यनतो झस्यानत इति वा वक्तव्य आत्मनेपदेष्वनत इति वैचित्र्यार्थम्।

## ६। शीङो रुट्।

झादेशस्यातो रुडागमो भवतीति। ननु नचेहाद्ग्रहणमस्ति। यदपि प्रकृतं तदपि प्रथमान्तम्। षष्ठीनिर्द्देशेन चेहार्थः। तत् कथं झादेशस्यातो रुडागमो भवतीति शक्यं विज्ञातुम्? नैतदस्ति। तस्मादित्युत्तरस्येति ( १।१।६७ ) शीङ इत्येषा पञ्चम्यदित्यस्याः प्रथमायाः षष्ठीत्वं परिकल्पयिष्यतीत्यदोषः। शेरत इति। शीङः सार्व्वधातुके गुणः ( ७।४।२१ )। ननु चात्र रुटा व्यवहितं सार्वधातुकम्। तत् कुतो गुणः? न ह्ययं सार्व्वधातुकभक्त स्तत् कथं व्यवधायको न स्यात्? अच्छब्दस्य सार्वधातुकावयवस्यायमवयव इति तद्ग्रहणेन गृह्यते। न सार्वधातुक-ग्रहणेन। अवयवावयवस्य समुदायानवयवत्वात्। तथाहि च्छे चेत्यत्रोक्तं

( ६।१।७३ )—नावयवावयवः समुदायावयवो भवतीति। नैष दोषः। अवयवावयवोऽपि समुदायावयवो भवत्येव। तथाहि देवदत्तोऽलङ्क्रियतामित्युक्ते देवदत्तस्य येऽवयवा हस्तपादादयस्तदवयवाश्चाङ्गुल्यादयोऽलङ्क्रियन्ते। तस्मात् सार्वधातुकावयवस्याच्छब्दस्य योऽवयवो रुडागमः सोऽपि सार्वधातुकावयव इति तद्ग्रहणेन गृह्यते। अतो नास्ति व्यवधानम्। यत् पुनरुक्तं चेत्यत्रोक्तं ( ६।१।७३ ) नावयवावयवः समुदायावयवो भवतीति तत् तत्सूत्रविहितमेव तुगागममभिप्रेत्योक्तम्। स तुगवयवावयवोऽपि समुदायग्रहणेन न गृह्यत इति कृत्वा। कस्मात् पुनर्न गृह्यते? ह्रस्वानुकर्षणसामर्थ्यात्। तत्र हि चकारेण ह्रस्वोऽनुकृष्यते। ह्रस्वमात्रस्यागमित्वं यथा स्यात्। ह्रस्वान्तस्य मा भूदिति। यदि ह्रस्वान्तस्यागमित्वं स्याच्चिच्छिदतुश्चिच्छिदुरित्यत्र तुकोऽभ्यासग्रहणेन ग्रहणाद्धलादिशेषेन निवृत्तिः स्यात्। यदि च तत्सूत्रविहित स्तुगवयवावयवः समुदायग्रहणेन न गृह्येत तदा ह्रस्वमात्रस्यागमित्वे हलादिशेषेण निवृत्तिः स्यादेव। ह्रस्वावयवस्य तुकोऽभ्यासग्रहणेन ग्रहणात्। ततश्च ह्रस्वानुकर्षण मनर्थकं स्यात्। अथ किमर्थं मदादेशस्य रुड् विधीयते? न झकारस्य विधीयताम्? तत्रायमर्थः। अत इति षष्ठी प्रकल्पयितव्या न भवति। झ इत्यस्य षष्ठ्यन्तस्य प्रकृतत्वात्। अत आह रुडयमित्यादि। यदि ककारमनुबन्धमासज्य पूर्वान्तः क्रियेत तदा शेरत इत्यत्र गुणो न स्यात्। अनिगन्तत्वात्। तस्मान्मा भूदेष दोष इति रुडयं परादिः क्रियते। परादिरपि क्रियमाणे यदि झकारस्यैव स्यात् किमनिष्टं स्यादित्याह स यदीत्यादि। यदि झकारस्यैव रुट् स्यात् तदाऽदादेशो न स्यात्। ततो यथा शयान्तायितस्याटा व्यवहितत्वाददादेशो न भवति तथा शेरतइत्यत्रापि न स्यात्। रुटा व्यवहितत्वात्। तस्मादस्य दोषस्य परीहारार्थमत एव रुडागमो विधीयते। न झकारस्येति केचिद्व्याचक्षते। एतच्चासम्यक्! झकारस्य क्रियमाणे रुट् तस्यैव भक्तो भवति। तत् कथं तेन व्यवधानं भवेत्? न हि स्वावयवेन व्यवधान मुपपद्यते। आटा च व्यवधानं युक्तम्। तस्य समुदायभक्तत्वात् समुदायं न व्यवदधाति। अवयवन्तु व्यवदधात्येव। तस्मादसद्व्याख्यानमेतदित्यन्यथा व्याख्यायते। अदादेशो न स्यादित्यत्र झकारस्येत्येतदपेक्ष्यते। तदयमर्थो भवति। यदि रुडागमो झकारस्यैव स्यात् तदादादेश स्तस्यैव न स्यात्। कस्य तर्हि स्यात्? तस्यैव रुटः स्यात्। आदेः परस्येति ( १।१।५४ ) वचनात्। अनेकाल्त्वेपि सर्वादेशो न भवति। रुट आनर्थक्यप्रसङ्गात्। रुटो विधानसामर्थ्यान्न भविष्यतीति चेत्? वार्त्तमेतत्।

अस्ति ह्यन्यद्रुड्विधेः प्रयोजनम्। किं तत्? झकारस्य श्रवणं यथा स्यात्। यद्येतत् प्रयोजनं स्यादतटमेव विदध्यात्। न रुटम्। तस्माद्रुड्वचनसामर्थ्यादवगम्यते नेदमिह प्रयोजनम्। अभीष्टमिति चेत्? नैतदस्ति। उत्तरार्थं रुड् विधानं स्यात्। बहुलञ्छन्दसीत्यत्र (७।१।८) रुडागमो यथा स्यात्। न ह्यदृश्रमित्यतटा (C) सिध्यति। तस्माज् झकारश्रवणं रुड्विधेः प्रयोजनम्। सत्र-तस्मिन् प्रयोजने यदि झकारस्यैव रुडागमः स्यात् तदा तस्यैवादादेशः स्यात्। न झकारस्य। तदेतस्य दोषस्य निरासायादादेशस्य रुड् विधीयते। न झकारस्य। शीङ्इत्यनुबन्धेन निर्देशो यङ्लुङ्निवृत्त्यर्थो व्यतिशेरते इति।

## ७। वेत्तेर्विभाषा।

संविद्रते संविदत इति। विद ज्ञाने। समो गम्यृच्छीत्यदिनाऽऽत्मनेपदम्। (१।३।२९,वा) अदादित्वाच्छपो लुक्। संविद्रताम् संविदतामिति। लोट्। टेरेत्त्वे कृत आमेत ( ३।४।९० ) इत्याम्। वेत्तेरिति लुग्विकरणस्य ग्रहणं किमिति? एवं मन्यते। विदेरिति सामान्यनिर्देशेन सर्वविदीनां ग्रहणमस्तु। लघु ह्येवं सूत्रं भवति। सत्यपि सर्वविदीनां ग्रहणे लुग्विकरणादेव भविष्यति। नान्यतः। विकरणेन व्यवधानात्। यद्यविशेषेण विदीनां ग्रहणं स्याद् विद विचारण इत्यस्मादपि रौधादिकात् स्यात्। नह्यत्र विकरणो व्यवधायकः। धात्वन्तःपातित्वादित्यत आह इहेत्यादि। विन्ते विन्दाते विन्दत इति। अनुदात्तत्वादात्मनेपदम्। श्नसोरल्लोपः ( ६।४।१११ )। अत्र तु विन्दत इति बहुवचनान्तं प्रत्युदाहरणम्। एकवचनद्विवचनयो रूपन्यासो विदे विचारणार्थस्य रूपमिति प्रदर्शनार्थः। अन्यथा विन्दत इत्येतावत्युच्यमाने लाभार्थस्य विदेरेकवचनान्तमिदं रूपमिति कस्यचिद्भ्रान्तिः स्यात्। श्तिपानिर्देशाद् यङ्लुकि न भवति। संवेविदते व्यतिवेविदते। (D)

---

(C) अदृश्रन्नस्य नैतव इत्युदाहरणं न्यासधृतम्। अदृश्रमिति मुद्रितकाशिकायाम् भट्टोजिग्रन्थे च पाठः। अत्र भट्टोजि :—"बाहुलकादेव अदृशौरङि गुणो नेत्यके। भाष्ये तु गुणं वारयितुं इरितम् [illegible] इत्युक्तम्। व्यत्ययेन प्रथमपुरुषबहुवचनस्थाने उत्तमपुरुषैकवचनं बाहुचाः। शाखान्तरे [illegible] पठ्यत इति माधवः" इति।

(D) समो गमादिषु विदिप्रच्छिस्वरतीनामुपसंख्यानमिति (१।३।२९, वार्तिक) तङ्। प्रकृतिग्रहणं यङ्लुगन्तस्यापि ग्रहणमिति (प,१०१) परिभाषात्वादित्याहुः।

## ८। बहुलञ्छन्दसि।

अदुक्षतेति। स्वरितत्वादात्मनेपदम्। ननु च विभाषाग्रहणानुवृत्तेरेवादुक्षते-त्यादि सिद्धम्। तत् किं बहुलवचनेनेति यश्चोदयेत् तं प्रत्याह बहुलवचना-दित्यादि। विभाषानुवृत्त्या हि विकल्पमात्रं लभ्यते। नत्वन्यत्रापि भवति। बहुलवचनादन्यत्रापि भवति। तेन विभाषायां प्रकृतायां बहुलवचनमिति भावः। अहृश्रन्निति। दृशेर्लुङ्। झेरन्तादेशः। इरितो (३।१।५७) वेति च्लेरङ्। तस्य रुट्। इतश्चेतीकारलोपः (३।४।१००)। संयोगान्तस्येति (८।२।२३) तकारस्य च। अतो गुणे (६।१।९७) पररूपत्वम्। अथात्र ऋदृशोऽङीति (७।४।१६) गुणः कस्मान्न भवति? क्ङिति चेति (१।१।५) प्रतिषेधादिति चेत्? न। तस्य ङित्येव विधानात्। सार्वधातुकमपि ङित्त्वमाश्रित्य प्रतिषेधः प्राप्नोतीति चेत्? न। एकादेशः पूर्वविधौ स्थानिवद्भवतीति यश्चोदयेत् तं प्रत्याह-ऋदृशोरङि गुण इति।

## ९। अतो भिस ऐस्।

समासे कृत इत्यादि। कुगतिप्रादय (२।२।१८) इति क्रान्ताद्यर्थेऽतिशब्दस्य। ह्रस्वत्वं चेति। गोस्त्रियोरुपसर्जनस्येति (१।२।४८) ह्रस्वः। ननु यदि ह्रस्वः क्रियते तदा जराशब्दस्योच्यमानो जरसादेशो जरशब्दस्य न प्राप्नोतीति चोद्यमपा-कर्तुमाह एकदेशविकृतमित्यादि। ननु चैकदेशविकृतस्यानन्यत्वेऽपि नैवात्र जरसा-देशेन भवितव्यम्। सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति (प,८६) परि-भाषया। जरशब्दसन्निपातलक्षणो ह्यैस् विधीयते। स कथं तस्य विघातस्य निमित्तं स्यादित्याह सन्निपात इत्यादि। अनित्यत्वं पुनरस्याः कष्टाय क्रमण इत्यतो (३।१।१४) कष्टायेति निर्देशाद्वेदितव्यम्। यदि ह्येषा नित्या स्यात् ततोऽकारान्तलक्षणो विधिरकारान्तताविघातस्य निमित्तं न स्यादिति सुपि चेति (७।३।१०२) दीर्घत्वं न स्यात्। ततश्च कष्टायेति निर्देशो नोपपद्यत इति। अथ किमर्थमैस् विधीयते? न एसेव विधीयताम्? तत्रापि वृद्धिरेचीति (६।१।८८) वृद्धौ कृतायां वृक्षैः प्लक्षैरित्यादि सिध्यति। कः पुनरेवं सति गुणो लभ्यते? न ह्यैस्येसि वा क्रियमाणे कश्चिल्लाघवकृतो विशेषः। प्रक्रियागौरवमेव तु स्यात्।

(E) एत्वं विधाय लक्षणान्तरेण वृद्धेर्विधानात्। अतिजरसैरिति तु न सिध्यति। वृद्ध्यभावात्। वृद्ध्यभावस्त्वकारान्तताभावादिति यत्किञ्चिदेतत्। इह वृक्षैरित्यत्र भिसि परभूतेऽतो भिस ऐसित्यैस्भावः प्राप्नोति। बहुवचने झल्येदि-( ७।३।१०३ )-त्येत्त्वञ्च। उभयञ्चैतत् सावकाशम्। तत्रैस्भावस्य सावकाशत्वं कृतेऽप्येत्त्वे भूतपूर्वमकारान्तत्वमाश्रित्य। एत्त्वस्यावकाशो भ्यसादिः। परत्वादेत्त्वेनात्र भवितव्यमिति यो मन्येत तं प्रत्याह एत्त्वं भिसि परत्वादित्यादि। भिसि परत्वादेत्त्वञ्चेन्मन्यसेऽत ऐस् क्व भविष्यति ? अकारान्तात् परस्य भिस ऐस् विधीयते। तत्र यदि परत्वादेत्त्वं भवेत् क्वेदानीमैस् भविष्यति ? न क्वचित्। अकारान्ततायाः सर्वत्रैत्त्वेन विहितत्वादिति भावः। ऐस्भावस्य विषयं दर्शयितुमाह कृतेऽप्येत्त्व इत्यादि। कथं पुनः कृत एत्त्व ऐस् भवति ? यावताऽकारान्तादङ्गादुत्तरस्य भिस ऐस् भवति। न च कृत एत्त्वेऽकारान्तमङ्गं भवतीत्याह भौतपूर्व्यादिति। उच्यते चेदमतो भिस ऐसिति। न च परत्वादेत्त्वे कृतेऽकारान्तादङ्गादुत्तरो भिस् भवति। तत्र वचनप्रामाण्यात् कृतेऽप्येत्त्वे भूतपूर्वमकारान्तत्व माश्रित्यैस् भविष्यति। ऐस्तु नित्य स्तथा सतीति। एवं कृतेऽप्येत्त्व ऐस्भावेन भवितव्यमकृतेऽपीति कृताकृतप्रसङ्गित्वादैस्तु नित्यः। एत्त्वन्त्वनित्यम्। नहि तदैस्भावे कृते प्राप्नोति। झलो निमित्तस्याभावात्। नित्यानित्ययोश्च तुल्यबलत्वाद् विप्रतिषेधो नोपपद्यते। ततश्च परमप्येत्त्वमपास्य बलवानैस् भविष्यतीति भावः।

## १० । बहुलञ्छन्दसि ।

बहुलग्रहणं विस्पष्टार्थम्। शक्यते हि मण्डूकप्लुतिन्यायेन बहुलग्रहणमनुवर्त्तयितुम्।

## ११ । नेदमदसोरकोः ।

अविद्यमानः ककारो ययो स्तावकौ। एभिरिति। इदमस्त्यदाद्यत्वम्। बहुवचने झल्येदित्येत्त्वम् ( ७।३।१०३ )। हलि लोप ( ७।२।११३ ) इतीद्रूपस्य लोपः। अमीभिरिति। अदस एत्त्वे कृत एत ईद्बहुवचने ( ८।२।८१ ) इतीत्त्वम्। दस्य च मत्वम्। इमकैरिति। अव्ययसर्वनाम्नामकच् प्राक् टे-( ५।३।७१ )

(E) ऐस्यपि वृद्धेः कर्त्तव्यत्वेन प्रक्रियागौरवमापद्यते। स्वरूपेणैवैस्य कारस्थितेः।

रित्यकच्। दश्चेति (७।२।१०९) दकारस्य मत्वम्। अमुकैरिति। अदसोऽसेर्दाद् दो म इति (८।२।८०) मत्वोत्वे। अथ नेदमदसोरित्येवं कस्मान्नोक्तम्? किमकोरित्यनेन? अकोरित्यनुच्यमाने सककारयोरपि प्रतिषेधः स्यादिति चेत्? नैतदस्ति। इदमदसो र्हि प्रतिषेध उच्यमानः कः प्रसङ्गो यः सककारयोः स्यात्? नैव प्राप्नोति शब्दान्तरत्वादित्याह अकोरित्येतदित्यादि। ज्ञापकस्य प्रयोजनमकज्वतां सर्वनामसंज्ञा सर्वादीनाम्। स्वरादीनाञ्चाव्ययसंज्ञा। अथेदमदसोः कादिति कस्मान्नोक्तम्? तत्र पूर्वेण सिद्धे नियमार्थं भविष्यति। इदमदसोः सम्बन्धी यो भिस् तस्य कादेव परस्यैस् भवतीत्येवं विज्ञायमाने नियमे सर्व्वमभीष्टं सिध्यत्येव। लघु च सूत्रं भविष्यति। सत्यमेतत्। किन्त्वस्मिन् सूत्रविन्यासे तन्मध्यपतितस्तद्ग्रहणेन गृह्यत इत्येषा (प, ८०) न ज्ञापिता स्यात्। विपरीतनियमोऽपि मन्दधीभिराशङ्क्येतेदमदसोरेव कादिति। तत्रायं नियमार्थः स्यात्। इदमदसोरेव यः ककारस्तस्मात् परस्य भिस ऐस् भवतीति। ततो विश्वकैः सर्वकैरित्यत्र न स्यात्। नियमेन व्यावर्त्तितत्वात्। इह च स्यादेवेभिरमीभिरिति। नियमेनाव्यावर्त्तितत्वात्। तस्माद् यथान्यासमेवास्तु।

## १२। टाङसिङसामिनात्स्याः।

अतिजरसिनेत्यादि। पूर्व्ववत् समासे कृते ह्रस्वत्वे च जरसादेशः। केचिदिति। सूत्रकारमतानुसारिणः। यदि ह्यतिजरसिनेत्येतत् सूत्रकारस्य साधुत्वेनाभिमतं न स्याट् टेत्येतस्य नादेशमेव कुर्य्यात्। तत्राप्यत्वे कृते वृत्तेणेत्यादि सिध्यति। कथमत्त्वमिति चेत्? एवमत्त्वविधौ योगविभागः करिष्यते। इदमस्ति। बहुवचने झल्येत् (७।३।१०३)। तत ओसि च (७।३।१०४)। तत आङि चाप (७।३।१०५) इति। तत्राङीति योगविभागः कर्त्तव्यः। आङि परतोऽत एत्त्वं भवति वृत्तेण स्नुत्तेण। तत आपः। सम्बुद्धौ चेति (७।३।१०६)। ननु च नादेशे सतीदम इद्रूपस्य हलि लोपः प्रसज्येत। ततश्चानेनेति न सिध्यति। नैष दोषः। हलि लोप (७।२।११३) इत्यत्र जराया जरसन्यतरस्या (७।२।१०१) मित्यतोऽन्यतरस्यांग्रहणमनुवर्त्तते। सा च व्यवस्थितविभाषा विज्ञायते। तेन नादेशे कृते सतीद्रूपस्य लोपो न भवति। तदेवन्नादेशेनैव वृत्तेणेत्यादि सिध्यति। ततः स एव कर्त्तव्यः। नेनादेशः। कृतश्चासौ। अतोऽवगम्यते नूनं सूत्रकारस्यातिजरसिनेत्येतत् साधुत्वेनाभिमतं यस्य सिद्ध्यर्थमिनादेशं कृतवानिति। तथा यद्यति-

जरसादित्यस्य साधुत्वमभीष्टन्न स्यात् ङसेरङ्गावं विदध्यात्। तत्राप्यकः सवर्णे दीर्घत्वेन ( ६।१।१०१ ) वृत्त्यादित्येवमादि सिद्धत्येव। ननु चाकः सवर्णापवादोऽतो गुणे ( ६।१।६१ ) पररूपत्वम् प्राप्नोति। तत् कथं सिध्यति? नैतदस्ति। अकारोच्चारणसामर्थ्यान्न भविष्यति पररूपम्। अन्यथा तकारमेव विदध्यात्। अत्र ह्यादेः परस्ये ( १।१।५४ ) त्यकारस्य तकारे विहिते संयोगान्तलोपे वृत्त्यादित्येवमादि सिध्यत्येव। तस्मादकारोच्चारणसामर्थ्यात् पररूपत्वं न भविष्यतीत्यङ्गावो विधेयः। किमाङ्गावेनेति? विहितश्चाङ्गावः। ततोऽवमीयते नूनमतिजरसादित्यस्य साधुत्वं सूत्रकारस्याभिमतं यत् सिद्ध्यर्थमाङ्गावं विहितवानिति। एवं सूत्रकारस्य मतमनुसरन्तः केचिदतिजरसिनातिजरसादित्यस्य साधुत्वमिच्छन्ति। यथा त्वित्यादि। भाष्ये ह्यथ किमर्थमिनादेश उच्यते? न नादेश एवोच्येतेत्येवं ग्रन्थसन्दर्भेणनादेशं प्रत्याख्याय नादेश एव व्यवस्थापितः। अथ किमर्थमादित्युच्यते? न अदेवोच्येतेत्येवमादिना ग्रन्थसन्दर्भेण आदादेशं प्रत्याख्याय अदादेश एव व्यवस्थापितः। यदि चातिजरसिनातिजरसादित्यस्य साधुत्वमिष्टं स्यादिनादेशमाङ्गावं भाष्यकृन्न प्रत्याचक्षीत। न हि प्रयोजने सति प्रत्याख्यानं युक्तम्। कृतञ्च तयोः प्रत्याख्यानम्। ततोऽवगम्यते नैतदिष्यत इति (F)।

## १३। ङेर्यः।

ङेरिति। चतुर्थ्येकवचनस्येदं ग्रहणम्। कस्मान्न भवति सप्तम्येकवचनस्य ग्रहणम्? यदि हि तस्य ग्रहणं स्यात् तदाऽत्यन्तसंयोगे भावेऽपवर्गे कारकमध्य (G) इत्येवमादि न सिद्ध्यति। तस्मादेतेभ्यो निर्देशेभ्यो नेदमिह सप्तम्येकवचनस्य ग्रहणम्। अतः पारिशेष्याच्चतुर्थ्येकवचनस्य ग्रहणं निश्चीयतइति। तस्मै हितमिति ( ५।१।५ ) निर्देशाच्च लिङ्गादुत्तरत्राप्येतदेवानुवर्त्तते। वृक्षायेति। सुपि चेति (७।३।१०२) दीर्घः। ननु सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति (प,८६) परिभाषाया उपस्थाने सति सन्निपातलक्षणो यविधिरकारविघातं प्रति निमित्तं

(F) The भाष्यकार is revered as the highest and the best authority in interpreting the intention of the सूत्रकार। Hence they do not reject his opinion but rather support it.—The Brahmin commentators therefore clearly assert यथोत्तरं मुनीनाम् प्रामाण्यम्।

(G) These are the applications by the सूत्रकार himself in 2.1.29, 2.3.37, 2.3.6, and 2. 3. 7 respectively. तस्मै हितम् is 5.1.5.

नोपपद्यते । कुतो दीर्घत्वमित्याह सन्निपातलक्षण इत्यादि । अनित्यत्वं त्वस्याः प्रागेव प्रतिपादितम् । अथ ङकारोच्चारणं किमर्थम् ? एकारमात्रस्य ग्रहणं मा भूदिति । यदि स्यात् पचे यजइत्येवमादावपि स्यात् । ननु चातो गुणे (६।१।९७) पररूपत्वे कृते निमित्ताभावान्न भविष्यति । नैतदस्ति । नाप्राप्ते ह्यतो गुणे पररूपत्वेऽयमादेश उच्यते । स यथा वृक्षायेत्यत्रातो गुणे पररूपत्वं बाधते तथा पचे यज इत्यत्रापि बाधेत । प्रतिपदोक्तस्यैकारस्य ग्रहणादिह न भविष्यतीति चेत् ? न । अस्याप्येकारस्य प्रतिपदोक्तत्वात् । टित आत्मनेपदानां टेरे (३।४।७९) इति निर्देशादेकारः प्रतिपदोक्तो भवति । तस्माद् विशेषणार्थो ङकारः कर्त्तव्यः ।

## १४ । सर्वनाम्नः स्मै ।

भवतइति । त्यदाद्यत्वं न भवति । द्विपर्य्यन्ता स्त्यदादयइति (७।१।१०२, वा) भवच्छब्दस्य त्यदादित्वाभावादकारान्तता न भवति । अथो अत्रेत्यादि चोद्यम् । अत्र इदम् ए इति स्थिते इदमोऽन्वादेश (२।४।३२) इत्यशादेशे कृते परमपि स्मैभावं बाधित्वा नित्यत्वादेकादेशोऽकः सवर्णे दीर्घत्वं (६।१।१०१) प्राप्नोति । नित्यत्वं पुनरस्य कृताकृतप्रसङ्गित्वात् । एकादेशे च कृतेऽनकारान्तत्वात् स्मैभावो न प्राप्नोति । तत्रेत्यादि परीहारः । तत्रैकादेशे प्राप्तेऽन्तरङ्गत्वात् पूर्वं स्मैभावो विधीयते । पश्चादेकादेशः । अन्तरङ्गत्वं तु स्मैभावस्यैकपदाश्रयत्वात् । एकादेशस्य द्विपदाश्रयत्वाद्बहिरङ्गत्वम् ।

## १५ । ङसिङ्योः स्मात्स्मिनौ ।

ङेरल्पाच्तरस्य पूर्वनिपाते प्राप्ते परनिपातो वैचित्र्यार्थः ।

## १६ । पूर्वादिभ्यो नवभ्यो वा ।

पूर्व्वेण नित्यं प्राप्तयोः स्मात्स्मिनो र्विकल्पार्थं वचनम् । ननुच पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायां ( १।१।३४ ) स्वमज्ञातिधनाख्यायाम् ( १।१।३५ ) अन्तरं बहिर्योगोपसंव्यानयो (१।१।३६) रिति नवैव सूत्रे पूर्व्वादीनि पठ्यन्ते । तदपार्थकं नवग्रहणम् । नैतदस्ति । नहीह सूत्रपरिपठितानि पूर्वादीनि गृह्यन्ते । किं तर्हि ? गणपठितानि । कुत एतत् ? जसि हि

सूत्रपरिपठितानां तेषां सर्व्वनामसंज्ञा। न ङसिङ्योः। सर्व्वनाम्नश्चेतीहानुवर्त्तते। किं प्रयोजनम्? विद्यमाने स्वे यजते स्वाङ्ग्भितीत्यत्र मा भूत्। तस्मात् गणपरिपठितान्येव पूर्वादीनि गृह्यन्ते। तत्रामति नवग्रहणे त्यदादिभ्योऽपि स्यात्। तस्मान्नवग्रहणं कर्त्तव्यम्।

## १७। जसः शी।

शकारः सर्व्वादेशार्थः। असति तस्मिन्नादेः परस्येति (१।१।५४) वचनादकारमात्रस्य स्यात्। अथ दीर्घोच्चारणं किमर्थम्? न ह्रस्व एव विधीयताम्। अकारान्ताद्धयं विधीयते। अत्राद्गुणेन (६।१।८७) भवितव्यमिति नास्ति गुणे कृते ह्रस्वस्य दीर्घस्य वा विधाने विशेष इत्याह दीर्घोच्चारणमित्यादि। नपुंसकाच्चेति (७।१।१९) वक्ष्यति। तत्र त्रपुणी जतुनी इत्यत्र दीर्घस्य श्रवणं यथा स्यादित्येवमर्थं दीर्घोच्चारणम्। सर्वनाम्न इत्येव। दक्षिणा इमे गाथकाः। अत इत्येव। भवन्तः।

## १८। औङ आपः।

वृद्धिरेचीति (६।१।८८) वृद्धौ प्राप्तायामयमारम्भः। औङिति प्रथमाद्वितीयाद्विवचनयोः सामान्येन ग्रहणम्। आप इति टाब्डाप्चापाम्। खट्वे इति। अजाद्यतष्टाप् (४।१।४)। तिष्ठतः पश्येति यथाक्रममनुप्रयोगयोरुपन्यासः प्रथमान्ततां द्वितीयान्ततां च प्रतिपादयितुम्। अन्यथा खट्वे इत्युभयत्र रूपस्य तुल्यत्वात् प्रथमान्ततादौ विशेषे सन्देहः स्यात्। बहुराजे इति। बहवो राजानो ययोरिति बहुव्रीहिः। डाबुभाभ्यामन्यतरस्यामिति डाप् (४।१।१३)। कारीषगन्ध्ये इति। करीषस्येव गन्धोऽस्येति बहुव्रीहिः। उपमानाच्चेतीच् (५।४।१३७)। करीषगन्धेरपत्यमित्यण्। तस्याणिञोरित्यादिना (४।१।७८) ष्यङादेशः। यङश्चाबिति चाप् (४।१।७४)। औकारोऽयमित्यादि। शीविधौ शीविधाने। औकारोऽयं स्थानी ङिद्गृहीतो ङकारानुबन्ध उपात्त इत्यर्थः। ङकार इद् यस्य स ङित्। ङिच्चास्माकं वैयाकरणानां मतेन शास्त्रे औकारो नास्ति। ततः कोऽयं प्रकारः? किंशब्दः कुत्सायां वर्त्तते। कुत्सितोऽयं सूत्रप्रणयनप्रकार इत्यर्थः। कुत्सितत्वन्त्वसत एवोपादानात्। ङकारासञ्जनप्रयोजनप्रदर्शनद्वारेण

कुत्सितत्वं सूत्रप्रणयनस्य निराकर्त्तुमाह सामान्यार्थं इति। यदि ह्यौकारोऽनुबन्धरहितः स्थानित्वेनोपादीयेत ततो निरनुबन्धकग्रहणे न सानुबन्धकस्येति (प,८२) द्वितीयाद्विवचनं न गृह्येत। अथ तस्य टकारोऽनुबन्ध उपादीयेतैवमपि प्रथमाद्विवचनं न गृह्येत। तस्मात् सामान्येन द्वयोरपि ग्रहणं यथा स्यादित्येवमर्थं ङकार आसज्यते। ननु च द्वितीयाद्विवचने यष्टकारो नासौ तस्यानुबन्धः। कस्य तर्हि? समुदायस्य। प्रत्याहारार्था हि येऽनुबन्धास्ते समुदायानुबन्धा एव विज्ञायन्ते यथा महिङो ङकारः। सुपश्च पकारः। तस्मान्निरनुबन्धकग्रहणे द्वयोरप्यननुबन्धकत्वात् सामान्येन ग्रहणं भविष्यति। तत् किं ङकारेण? नैतदस्ति। समुदायानुबन्धकत्वेऽवयवानुबन्धकत्वमपि ह्येषां प्रतिज्ञायते। नहि समुदायानुबन्धकत्वे प्रत्ययानुबन्धकत्वं विरुध्यते। इत्संज्ञको ह्यनुबन्ध उच्यते। हलश्चान्त्यस्येत्संज्ञा विधीयते। औटश्च टकारो यथा समुदायं प्रत्यन्त स्तथा प्रत्ययं प्रत्यपि। तस्मात् तस्य हलन्त्य-(१।३।३) मितीत्संज्ञायां विहितायां यथासौ समुदायं प्रत्यनुबन्ध स्तथा प्रत्ययमपि। प्रयोजनाभावात् प्रत्ययानुबन्धकत्वमनुपपन्नमिति चेत्? न। इहास्ति प्रयोजनम्। द्वितीयाद्विवचनस्य सानुबन्धकत्वं यथा स्यात्। यदि तर्हि प्रत्ययानुबन्ध स्तदा सत्यपि ङकारासङ्गे तदनुबन्धकग्रहणेनातदनुबन्धकस्येति (प,८३)। एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्येति (प,८१) च प्रथमाद्विवचनस्यैव ग्रहणं स्यात्। तस्य हि ङकार एवैकोऽनुबन्धः। द्वितीयाद्विवचनस्य तु स चान्योऽपि टकारः। नैष दोषः। ङकारोच्चारणसामर्थ्याद् द्वितीयाद्विवचनमपि ग्रहीष्यते। अन्तरेणैव ङकारं प्रथमाद्विवचनस्यैव ग्रहणे सिद्धे ङकार उपदिश्यते सामान्यार्थः। यदि च सत्यपि ङकारे प्रथमाद्विवचनमेव गृह्यते ङकारोऽनर्थकः स्यात्। कथं पुनरस्य ङकारस्येत्संज्ञा? यावतोपदेशे योऽन्त्यो हल् तस्येत्संज्ञा विहिता। नचायमुपदेशेऽन्त्यः। भवतु वा तस्येत्संज्ञा। टकारस्य औटस्तर्हि न स्यात्। कथं ह्येकस्मिन्नुपदेशे द्वावन्त्यौ स्याताम्? नैष दोषः। औङिति वचनात्। द्वयोरप्यौकारयो रौङित्ययमादेशो विज्ञायते। तस्य चोपदेशोऽस्ति। यथा चक्षिङः ख्याञिति ञकार उपदेशेऽन्त्य इति। यथा तस्येत्संज्ञा तथा ङकारस्यापि। टकारस्य तु पूर्व्वमेव क्रमेणेत्संज्ञा लोपश्च क्रियत इति नास्ति दोषः। यश्चासावादेश औकारः स एव औभावस्य स्थानित्वेनोपात्त इति वेदितव्यम्। तस्य चेत्यादिना ङकारा-

मञ्जने यो दोषः प्राप्नोति तं दर्शयति। अनुबन्धभूतस्य ङकारस्योपादान मामञ्जनम्। ङिति यत् कार्य्यं तत् ङित्कार्य्यम्। मयमोति (२।१।४०) योग विभागात् समासः। तत् पुनः कार्य्यं याड़ाप ( ७।३।११३ ) इति याट्। यदि सामान्यार्थोऽयं ङकार आसज्यत एवं सति ङकारस्यासञ्जने ङिति यत् कार्य्यं तत् ते तव सूत्रकारस्य मते न स्यां प्रसक्तं प्राप्तम्। स दोषः। याड़ाप (७।३।११३) इति याड़ागमे सति खट्वै इति रूपं न सिध्येत्। अथ स्यामिति कथमासाटौ स्याताम्? कथञ्च न स्याताम्? अनदीत्वात्। अनदीत्वञ्च तस्यास्त्र्याख्यत्वात्। नैतदस्ति। यथैव हि खट्वादयः स्त्रियां वर्त्तन्ते तथा गोशब्दोऽपि। तथाचाह लिङ्गकारिकाकार ईदूदन्तं यच्चैकाच् शरद्दृदृषत्-प्रावृषश्चेति। तस्मात् स्त्र्याख्यत्वादयमपि नदीसंज्ञक एव। श्रुतिसामानाधि-करण्यात्। श्रुतौ वर्त्तमानः गोशब्दो नदीसंज्ञां प्रतिपद्यते। श्रुतिः स्वरूपमेव। ङित्त्व इत्यादि। याड़ापइत्यत्र (७।३।११३) घेर्ङितीत्यतो (७।३।१११) ङिद्-ग्रहणमनुवर्त्तते। तत्र ङिदिति नायं बहुव्रीहिः। ङकार इद् यस्य स ङिदिति। किं तर्हि? तत्पुरुषः। ङकार एव इद् ङित्। तस्मादौकारो यो ङित् तस्मिन्न भ्युपेते सति ङितीत्यस्मिन्निर्द्देशे ङकारस्येत्संज्ञकस्य वर्णमात्रस्य निर्द्देशं विद्या-दवगच्छेत् प्राज्ञः। मात्रशब्दस्ततोऽन्यव्यवच्छेदाय। यदि ङितीत्यत्र ङकारस्य वर्णमात्रस्य निर्द्देशो न ङकारानुबन्धस्य प्रत्ययस्य तत् किमिति स्यां ङित्कार्य्यं न भवतीत्याह वर्ण इत्यादि। वर्णे परभूते यत् कार्य्यं विधीयते तद् यस्मिन् विधिस्तदादावल्ग्रहण इति (प,३४) परिभाषया तदादौ वर्णादौ विद्यात्। ततश्च यत्र ङकार आदावित्संज्ञक स्तत्रैव भवितव्यं याटा। न स्याम्। नह्यत्रादौ ङकारः। क्व तर्हि? अन्ते। एवमयं ङित्त्वमभ्युपेत्य परी-हार उक्तः। इदानीं ङित्त्वमनभ्युपेत्य परीहारान्तरमाह वर्णश्चायमित्यादि। वार्थे चशब्दः। वर्णो वायमिति यावत्। औङित्योवर्णोऽयमुपात्तः प्रत्यय विशेषणार्थो नतु प्रत्ययः। अङ्गाधिकारादावन्तात् परो यः सामर्थ्यप्राप्तः प्रत्ययः स औकारेण विशिष्यते। विशेषणेन च तदन्तविधि र्भवतीति। तेनाय मर्थो जायते। औकारान्तोऽस्य प्रत्ययस्येति। औकारान्तत्वं व्यपदेशिवद्भा-वात्। ङकारश्चायमनानुबन्धः। मुखसुखार्थस्त्वयम्। यथा ऋदोरबि (३।३।५७) त्यत्र दकारः। वर्णरूपतया च तथौकारस्य ग्रहणे सति द्वयोरप्यौकारयोः शीभावः सिद्धो भवति। प्रत्ययग्रहणे हि निरनुबन्धकपरिभाषोपतिष्ठते।

नचेह प्रत्ययग्रहणम् । किं तर्हि ? वर्णमात्रस्य । ननु च हावप्येतौ प्रत्ययौ । तत् किमिति नोपतिष्ठते ? सत्यम् । यद्यपि तौ प्रत्ययौ तथापि नात्र शास्त्रे प्रत्ययरूपेणोकार उपात्तः ? किं तर्हि ? वर्णरूपेणेति । अतस्तस्या नेहोपस्थानम् । ङित्त्वमनभ्युपेत्य परीहारान्तरमाह निर्द्देशोऽयमित्यादि । नेह व्याकरण ओकारस्य ङकारोऽनुबन्ध उपादीयते । पूर्व्वाचार्य्याणान्तु सूत्रे द्वे अप्येते द्विवचने ङितौ पठ्येते । तथाह्यौवौटावौङिति तत्र सूत्रपाठः । अतस्तत्सूत्रानुरोधेनायं निर्द्देशः कृतः । यत स्तेषामौङिति निर्देश स्तस्येह ग्रहणं यथा स्यात् । तस्मान् ङित्त्वाभावान्नास्ति ङित्कार्य्यस्य प्रसङ्गः । न हि पूर्व्वाचार्य्यसूत्रानुरोधेनेहानुबन्धकार्य्याणि क्रियन्ते । तेन ङित्त्वेऽप्यदोष इति । किं पुनर्यत्र नास्त्येव ङित्त्वम् इत्यपिशब्दस्यार्थः । तदेतदुक्तं भवति । ङित्त्वेऽभ्युपेते सति ङित्त्वे विद्याद् वर्णनिर्द्देशमात्रम् । वर्णे यत् स्यात् तच्च विद्यात् तदादावित्येवं ङित्कार्य्यप्रसङ्गनिरासाय यस्मात् परीहार उक्तः । यस्माद्वर्णश्चायमितरनेन निर्द्देशोऽयं पूर्वसूत्रेण वा स्यादित्यनेन चौकारयो र्ङित्त्वाभावः प्रतिपादितः । तेन हेतुना सत्यपि ङित्त्वेऽप्यदोषः । किं पुनर्न्नास्त्येव यत्र ङित्त्वमिति ।

## १९ । नपुंसकाच्च ।

दधिनो इति । इकोऽचि विभक्ताविति नुम् ( ७।१।७३ ) ।

## २० । जसिशसोः शिः ।

जसीत्यत्रेकार (H) उच्चारणार्थः । कुण्डानीति । नपुंसकस्य झलच ( ७।१।७२ ) इति नुम् । सर्व्वनामस्थाने चेति ( ६।४।८ ) दीर्घः । अथेह कस्मान्न भवति कुण्डं कुण्डं ददाति । संख्यैकवचनाच्च वीप्सायां ( ५।४।४३ ) मिति शस् । कुण्डशो ददातीत्याह जसा साहचर्य्यादित्यादि । एतच्चोद्यपरिहारवचनं यदार्थप्रकरणादेर्वृत्तौ कुण्डादिशब्द एकवचनो भवति तदा वेदितव्यम् । न त्वन्यदा । शस्विधौ हि वृत्तिस्थैकार्थताऽश्रीयते । न वाक्यस्था ।

---

(H) The न्यासकार reads the Rule as जसिशसोःशिः and not as जश्शसोःशि । जसि was the form adopted by the grammarians prior to पाणिनि The latter made it जस्. See also the न्यास on the Rule आज्जसेरसुक् (7.1.50).

अर्थप्रकरणादिरहितः कुण्डादिशब्दो वृत्तौ निवृत्तायां विभक्तावेकार्थो न भवतीति शसा न भवितव्यम्। कस्मात् पुनः कुण्डादिशब्दो वृत्तावेकार्थो न भवति? जातिशब्दत्वात्। जातिशब्दा हि नैकस्यामेव जात्याधारभूतायां व्यक्तौ वर्त्तन्ते। किं तर्हि? अनेकस्यामपि। एवञ्च यत् तत्र शस् विधौ प्रत्युदाहरण मुपन्यस्तं-संख्यैकवचनादिति किम्? घटं घटं ददाति—तदुपपद्यते। यद्यर्थप्रकरणादिरहितो जातिशब्दो वृत्तावेकार्थो न भवति तदा न भवितव्य-मेव शसा॥

## २१। अष्टाभ्य औश्।

कृताकारोऽष्टन्शब्दो गृह्यत इति। यत्रात्वं तत्रौश्त्वं यथा स्यादित्यभिप्रायः। अष्टौ तिष्ठन्तीति। आत्वे कृत औश्त्वम्। अष्ट तिष्ठन्तीति। अत्रात्वाभावादौश्त्वं न भवति। कथं पुनरत्रात्वाभावः? यावता न तत्रात्वविधौ विकल्पस्य प्रतिपादकं किञ्चिदन्यतरस्यांग्रहणादिकमस्तीत्याह एतदेवेत्यादि। कृतात्वनिर्देशस्यैतदेव प्रयोजनं यत्रात्वं तत्रैवौश्त्वं यथा स्यात्। अन्यत्र मा भूदिति। यदि च नित्यमात्वं स्यात् तदा कृतात्वस्य निर्देशोऽनर्थकः स्यात्। व्यावर्त्याभावात्। अष्टन इत्येवं ब्रूयात्। तदेवं लघुनिर्देशे सम्भवति सति यत् कृतात्वस्य निर्देशो गरीयान् क्रियते तज्ज्ञापयति विकल्पेनात्वं भवतीति। यद्यपि चायमर्थोऽष्टनो दीर्घादित्यत्रापि (६।१।१७२) ज्ञापित स्तथापि विस्मरणशीलानामनुग्रहाय पुनरिह ज्ञाप्यते। अथाष्टपुत्रोऽष्टभार्य्य इत्यत्र कस्मान्न भवति? सुपो धातुप्रातिपदिकयोरिति (२।४।७१) लुका बाधितत्वादिति चेत्? न। इहापि तर्हि न स्यादष्टौ तिष्ठन्ति। अष्टौ पश्येति। षड्भ्यो लुगिति (७।१।२२) लुका बाधितत्वात्। अथौश्भावस्य लुगपवादत्वादत्र लुकं बाधित्वा स एव भवति। पूर्वत्रापि तर्हि स एव स्यात्। अतएव हेतोरित्याह षड्भ्यो लुगित्य (७।१।२२) स्यापवादोऽयमिति। अत्रैवोपपत्तिमाह नाप्राप्त इत्यादि। षड्भ्यो लुगित्यसमासे (७।१।२२) प्राप्नोतष्टौ तिष्ठन्तीत्यादौ। समासे चाष्टपुत्र इत्यादौ। तस्मान्नाप्राप्ते ह्येतस्मिँल्लुक्यौश्त्वमारभ्यत इति। तस्यैवायं बाधक इत्यभिप्रायः। स्यादेतत्। इतरस्मिन्नपि लुकि नाप्राप्त एवेद मारभ्यत इत्यत आह यस्त्वित्यादि। सुपो धातुप्रातिपदिकयो (२।४।७१)

रित्यत्राह अष्टपुत्र इत्यादौ नाप्राप्ते सतीद मारभ्यते। अष्टौ तिष्ठन्तीत्यत्राप्राप्ते। अप्राप्तिस्तु धातुप्रतिपदिकावयवत्वात् सुपः। तस्मादिहोत्मर्गापवाद धर्म्मा-भावान्नायमस्यापवाद इति सोऽनेन न बाध्यते। तेनाष्टपुत्रोऽष्टभार्य्य इत्यत्र सुब्लुकैव भवितव्यमित्यौश्त्वन्न भवति। तदन्तग्रहणमित्यादि। किं पुनरिष्य-माण मपि लभ्यते ? अङ्गाधिकारे तस्य तदुत्तरपदस्येति वचनात्। अथवाष्टाभ्य इत्यथ प्रधाननिर्द्देशोऽयं बहुवचननिर्द्देशादवसीयते। शब्दप्रधाने हि निर्द्देशेऽष्टन इत्येव ब्रूयात्। अर्थाच्च शब्दद्वारेणैव जश्शसोः परत्वं विज्ञायत इति केवलाच्चाष्टनो भवति। तदन्ताच्चातदन्तेऽपि हि शब्दद्वारेणार्थात् परौ जश्शसौ भवत इति। यदि तदन्तग्रहणमत्रेष्यते प्रियाष्टान इत्यत्रापि प्राप्नोति। अत आह प्रियाष्टान इत्यत्रेत्यादि। प्रिया अष्टौ येषामिति बहुव्रीहिः। ननु च विकल्पे-नात्वम्। तत्र यदात्वं न भवति तदा मा भूदौश्त्वम्। यदात्वं तदा स्यादेव। व्यवस्थितविभाषयात्रात्वं न भविष्यतीत्यदोषः।

## २२। षड्भ्यो लुक्।

पञ्च सप्तेति। नलोपः प्रतिपादिकान्तस्येति (८।२।७) नलोपः। षट्-प्रधानात् तदन्तादपि भवतीति। अत्र पूर्व्वको हेतुर्वक्तव्यः। यत्र त्वित्यादि। अर्थस्येदं ग्रहणं बहुलवचनादवमितम्। स चार्थो द्विविधः। प्रधानोऽप्रधानश्च। तत्र प्रधाने कार्य्यसंप्रत्ययइति (प,१०६) यत्रार्थस्य प्राधान्यं तत्रैव भवति। ननु यत्रार्थस्याप्राधान्यं तत्र। एष च हेतुः प्रियाष्टान इत्यत्रौश्त्वाभावेऽपि वेदितव्यः। प्रियषष इति प्रिया षड़ेषामिति बहुव्रीहिः। अत्रान्यपदार्थस्य प्राधान्यम्। षड़र्थस्तु तत्र गुणभावादप्रधानः।

## २३। स्वमो नपुंसकात्।

स्विति यद्यपि सप्तमीबहुवचनमस्ति तथाप्यमा द्वितीयैकवचनेन साहचर्य्यात् प्रथमैकवचनमेव गृह्यते। तद् ब्राह्मणकुलमिति। अत्र परत्वात् त्यदाद्यत्वेनैव भवितव्यम्। तदाद्यत्वे कृते लुग् न प्राप्नोति। अतोऽमित्यम्भाव-(७।१।२४) प्रसङ्गात्। तस्मात् त्यदाद्यत्वात् प्राग् लुग् वक्तव्य इत्याह तद् ब्राह्मणकुल-मित्रेत्यादि। लुकोऽवकाशो दधि मध्वित्यत्र। त्यदाद्यत्वस्यावकाशः स ब्राह्मण

इति। इह्नोभयं प्राप्नोति तद् ब्राह्मणकुलमिति। लुग् भवति पूर्वविप्रतिषेधेन। न च पूर्वविप्रतिषेधो वक्तव्यः। इष्टवाचित्वात् परशब्दस्य। नित्यत्वाद्वेति। वाशब्दः समुच्चये। यद्यपि लुक् त्यदाद्यत्वञ्चोभयं प्राप्नोति तथापि लुकएव नित्यत्वं विज्ञायते। कुतः ? सामर्थ्यात्। लुका त्यदाद्यत्वं बाध्यत इत्यत्र ह्योदं हेत्वन्तरमुक्तम्। एवञ्चेदमत्रार्थे हेत्वन्तरं सम्भवति यदि लुको नित्यत्वम्भवति। नान्यथा। नित्यत्वं पुनः कृताकृतप्रसङ्गित्वात्। त्यदाद्यत्वं हि विभक्तावुच्यमानं कृते लुकि विभक्त्यभावान्न प्राप्नोति। प्रत्ययलक्षणेन चास्य प्राप्ति नं युक्ता। न लुमताङ्गस्येति ( १।१।६३ ) प्रतिषेधात्। लुक् पुनः कृते त्यदाद्यत्वे प्राप्नोत्यकृतेऽपि। ननु च कृते त्यदाद्यत्वे लुकः प्राप्तिरेव नास्ति। अतोऽमित्य ( ७।१।२४ ) मपवादविधानात्। तस्मात् सोऽप्यनित्य एवेत्याह लुको ह्योत्यादि। असत्यतोऽमिति ( ७।१।२४ ) लक्षणेऽकारान्तमप्यङ्गं लुको निमित्तमासीत्। तदनेन लक्षणेनोपजायमानेनापवादविधानाल्लुकं प्रत्यनिमित्तभावमापद्यते। लुग्निमित्ताभावापादनमेव विघातः। न पुनस्त्यदाद्यत्वेनेति। लुको निमित्तभावो विहन्यत इति सम्बन्धनीयम्। यद्यतोऽमि-( ७।१।२४ ) त्यपवादविधायि लक्षणान्तरं न स्यात्। कृते त्यदाद्यत्वे स्यादेवाकारान्तमङ्गं लुको निमित्तम्। तच्चातोऽमित्य (७।१।२४ ) पवादेनेव लुको निमित्तं व्याहन्यते। न पुनस्त्यदाद्यत्वेन। यद्येवं तत् किमित्यनितरो लुग् न भवतीत्याह यस्य चेत्यादि लक्षणान्तरत्वं पुनरम्भावशास्त्रस्य त्यदाद्यत्वशास्त्रापेक्षया वेदितव्यम्।

## २४। अतोऽम्।

पूर्वेण प्राप्तस्य लुकोऽयमपवादः। तपरकरणं मुखसुखार्थम्। न तु दीर्घनिवृत्त्यर्थम्। दीर्घस्याभावात्। अभावस्तु ह्रस्वो नपुंसके प्रातिपदिकस्येति ( १।२।४७ ) ह्रस्वविधानात्। अथ किमर्थमम्भावउच्यते ? न मकारादेश एवोच्येत ? नचैवम्। आदेः परस्येति ( १।१।५४ ) द्वितीयैकवचनाकारस्य मकारे कृते द्वयोर्मकारयोः श्रवणं प्राप्नोति। एकस्य संयोगान्तलोपेनापहृतत्वात्। नापि सुपि चेति ( ७।३।१०२ ) यञादौ सुपि विधीयमानं दीर्घत्वं प्राप्नोति। सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति ( प,८६ ) वचनात्।

अकारान्तसन्निपातेन हि मकारविधिः। स कथमकारविघातस्य निमित्तं स्यात् ? एवं तर्हि मकारादेशे विधातव्येऽमादेशं कुर्व्वन्नेतज् ज्ञापयत्यनित्यैषा परिभाषेति । तेनातिजरसादतिजरसैरिति जरसादेशः सिद्धो भवति ।

## २५ । अद्‌ड्‌डतरादिभ्यः पञ्चभ्यः ।

द्विडकारोऽयं निर्द्देशः । तत्रैको डतरसम्बन्धी । द्वितीयस्त्वादेशसम्बन्धी । डतरादयश्चैते सर्व्वाद्यन्तःपातिनो गृह्यन्ते । न तु द्वयोरेकस्य डतरजित्येवमादयः ( ५।३।९२-९३ ) प्रत्ययाः । कुत एतत् ? नेतराच्छन्दसीति (७।१।२६) प्रतिषेधात् । प्रत्ययग्रहणे हीतरशब्दात् प्राप्तिरेव नास्तीति प्रतिषेधोऽनर्थकः स्यात् । तेषां डतरादीनां मध्येऽन्यानि त्रीणि प्रातिपदिकानि । डतरडतमौ च प्रत्ययौ । तत्र प्रत्ययग्रहणपरिभाषया ( प,२४ ) तदन्तयोर्ग्रहणं भवति । कतरदिति । किंयत्तदो निर्धारणे द्वयोरेकस्य डतरच् (५।३।९२)। कतमदिति । वा बहूनां जातिपरिप्रश्ने डतमच् ( ५।३।९३ ) । कतरत् तिष्ठतीत्यत्रेत्यादि । असति हि डित्करणे कतरत् तिष्ठतीत्यत्राकः सवर्णे दीर्घ ( ६।१।१०१ ) इत्यनुवर्त्तमाने प्रथमयोः पूर्वसवर्ण ( ६।१।१०२ ) इति दीर्घः स्यात् । अतः स मा भूदित्येवमर्थं डित्करणं क्रियते । अत्र हि कृते दीर्घत्वप्रसङ्गो न भवति । टिलोपेनाकोऽपहृतत्वात् । किं पुनः कारणम् प्रथमैकवचनस्यैव डित्करणस्य दीर्घाभावः प्रयोजनमुच्यते ? नतु द्वितीयैकवचनस्येत्यत आह इह त्वित्यादि । अमो हि स्थाने य आदेशस्तस्य स्थानिवदादेशोऽनल्विधा ( १।१।५६ ) विति स्थानिवद्भावादमि पूर्व्वत्वेनापि सिध्यति कतरदित्येतत् । तस्मान्न तत्र डित्करणस्य दीर्घत्वाभावः प्रयोजनमिति नोच्यते । तकारादेश एव कस्मान्न क्रियत इति । यद्यत्र दीर्घत्वं नेष्यते तदा तकारादेश एव कर्त्तव्यः । तत्राप्ययमर्थः—दीर्घनिवृत्त्यर्थं डित्करणं न कर्त्तव्यमिति हे कतरदित्यादि । यदि तकारादेश एव क्रियेत तदा तस्य स्थानिवद्भावेन सम्बुद्धिभावोऽस्तीी ( ६।१।६९ ) त्येङ्‌ह्रस्वात् सम्बुद्धेरिति लोपः प्राप्नोति । अतः स मा भूदित्येवमर्थं तकारादेशो न क्रियते । अपृक्तस्येदित्यादि । हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्त (६।१।६८) मित्यतस्येदपृक्तग्रहणं सम्बुद्धिलोपेऽनुवर्त्तते तदामो दोषः । हे कुण्डेत्यत्र निवृत्तेऽपृक्ताधिकारे डतरादिषु दोषो हे कतरदिति । तस्माड् डित्करणादेवाकारलोपे कृते ह्रस्वाभावान्न लोपो न च दीर्घतेति ।

## २६ । नेतराच्छन्दसि ।

पूर्व्वेणाद्ड्डादेशस्य प्रसक्तस्यायं प्रतिषेधः। अथातोऽमित्य-( ७।१।२४ ) स्यानन्तरमितराच्छन्दसीति कस्मान्नोक्तम् ? एवं हि नेति प्रतिषेधः कर्त्तव्यो न भवति। अमादेशोऽद्ड्डादेशस्यापवादो भविष्यतीत्याह अतोऽमित्यस्यानन्तर मित्यादि। योगविभागार्थमिति। नेत्येकयोगविभागो यथा स्यादिति। किमर्थं पुनर्योगविभाग इष्यत इत्याह एकतराद्धीत्यादि। एकतरशब्दाद्धि सर्व्वत्र प्रतिषेध इष्यते। स च नेति योगविभागाल्लभ्यते। तस्माद् योगविभाग इष्यते। स च यथान्यासे सिध्यति। नान्यथेति नेतराच्छन्दसीत्युच्यते।

## २७ । युष्मदस्मद्भ्यां ङसोऽश् ।

यदि शेष लोप ( ७।२।९० ) इत्यन्त्यलोप स्तदास्य भावे प्राप्त इदं वचनम्। अथ टिलोप स्तदा विभक्तेः अवणप्राप्त आदेशार्थं वचनम्। तव स्वम्। मम स्वमिति। तवममौ ङसीति ( ७।२।९६ ) मपर्य्यन्तयोर्युष्मदस्मदोस्तव-ममा-देशौ भवतः। शेषे लोप ( ७।२।९० ) इति टकारलोपे कृतेऽतो गुणे (६।१।९७) पररूपत्वम्। शित्करणं सर्व्वादेशार्थमिति। असति शित्करण आदेः परस्ये-( १।१।५४ ) त्यकारस्यादेशोऽकारः स्यात्। ननु चाकारस्याकारवचने प्रयोजनं नास्तीत्यन्तरेणापि शित्करणं सर्व्वादेशो भविष्यति। अन्तस्य वा। तत्र द्वयो-रकारयोरतो गुणे पररूपत्वेनेष्टं सिध्यति। अत आह अन्यथा हीत्यादि। अन्यथा यदि शित्करणन्न स्यात् तदाऽदेश इति योऽयं व्यपदेश स्तस्य या प्रक्लृप्ति र्निष्पत्तिस्तदर्थमादेरेव स्यात्। आदेः परस्येति वचनात् ( १।१।५४ )। स्यादेतत्। यद्यादेशव्यपदेशप्रक्लृप्तितः कश्चिदर्थः सम्पद्यते तदा स्यात् तदर्थं मादेरेव वचनम्। न च ततः कश्चिदर्थः सम्पद्यते। तस्मादयुक्तमेवेत्यत आह ततश्चेत्यादि। चशब्दो हेतौ। लिङ् सम्भावनायाम्। तत आदेशव्यपदेश-प्रक्लृप्तेर्योऽचीति (७।२।८९) कार्य्यं न स्यात्। एतद्धि यत्र विभक्तावादेशो नास्ति तत्र विधीयते। अनादेश (७।२।८६) इत्यधिकारात्। तस्मात् प्रयोजनवत्यादेश-व्यपदेशप्रक्लृप्तिरिति तदर्थमादेरेव स्यात्। ततश्चेष्टं रूपं न सिध्येत्। तस्मात् सर्व्वादेशार्थः शकारः कर्त्तव्यः।

## २८। ङे प्रथमयोरम्।

ङेइत्यविभक्तिकोऽयं निर्देशः। सुपां सुलुगिति (६।१।३९) षष्ठ्या लुप्तत्वात्। प्रथमयोरिति षष्ठीद्विवचनान्तम्। प्रथमा च प्रथमा च ते प्रथमे। तयोः प्रथमयोः। षष्ठीनिर्देशस्योभयत्र तुल्यत्वात् प्रथमयोः प्रत्यययोः स्वौकारयो र्ग्रहणमिति कस्यचिद् भ्रान्तिः स्यात्। अतस्तां निराकर्त्तुमाह विभक्त्योरिति। एतदेव स्पष्टीकर्त्तुमाह प्रथमाद्वितीययोरिति। कथं पुनर्द्वितीया प्रथमाशब्देनोच्यते? उपदेशे प्रथमासामीप्यात्। भवति हि सामीप्यात् ताच्छब्द्यं यथा गङ्गायां घोष इति। अथ विभक्त्योरिदं ग्रहणं न प्रत्यययोरिति कुतोऽयं निश्चयः? लिङ्गात्। तत् पुनर्लिङ्गं द्वितीयायाञ्चेत्यात्त्व-(७।२।८७) विधानम्। तद्ध्यादेशार्थमुच्यते। अनादेशे हि युष्मदस्मदोरनादेश (७।२।८६) इत्यनेनैव सिद्धत्वात्। यदि च विभक्त्योरिदं ग्रहणं नच प्रत्यययो रेवमस्यादेशार्थतोपपद्यते। नान्यथा। ननु च योऽचीति (७।२।८९) यत्वबाधनार्थं द्वितीयायाञ्चेत्याद्यवनं (७।२।८७) स्यात्? नैतदस्ति। तदर्थे हि वचने यकारमेव विशेषणं विदध्याद्। योऽच्यद्वितीयायामिति। योऽच्यन-चीति वा ब्रूयात्। अतो द्वितीयायामात्त्वविधानं ज्ञापकमेवैतद् विभक्ति-ग्रहणस्य। तुभ्यं मह्यमिति। मपर्यन्तयो र्युष्मदस्मदो स्तुभ्यमह्यावादेशौ। शेषे लोपः (७।२।९०)। अमि पूर्वः (६।१।१०७)। त्वमहमिति। त्वाहौ सौ (७।२।९४)। युवामावामिति। युवावौ द्विवचन (७।२।९२) इति युवावौ। प्रथमायाश्चेत्यादिनाऽऽत्त्वम् (७।२।८८)। यूयं वयमिति। यूयवयौ जसि (७।२।९३)। त्वां मामिति। त्वमावेकवचने (७।२।९०)। द्वितीयायाञ्चे-(७।२।८७) त्यात्त्वम्। अथ किमर्थममादेश उच्यते? न मकार एवोच्येत? स चैकाल्-त्वादादे र्भविष्यति। तत्र परस्य संयोगान्तलोपेन सिद्धम्। शेषे लोप (७।२।९०) इति टिलोपान्न सिध्यतीति चेत्? नैष दोषः। शेषे लोपो यद्यपि टिलोपःस्यात् तथापि त्वाहौ सावित्येवमादीनामकारान्तत्वात् सिद्ध्यत्येव। ते ह्यावश्यक-मकारान्ता विधेयाः। अन्तोदात्तत्वं यथा स्यात्। नच मकारादेशे सुपि चेति (६।३।१०२) दीर्घत्वं प्राप्नोति। अङ्गवृत्ते पुनरङ्गवृत्तावविधिर् निष्ठितस्येति वचनात्। एवं तर्हि वैचित्र्यार्थममादेशविधानम्। अथवा मकार एवादेशः।

अकारस्तूच्चारणार्थः। नह्यन्यथास्मिन्निर्देश आदावन्ते वाऽकारमकृत्वा मकार-उच्चारयितुं शक्यते। ङेस्टोरिति वक्तव्ये ङेप्रथमयोरिति वचनं वैचित्र्यार्थम्।

## २९। शसो न।

पूर्व्वेणामादेशे प्राप्ते शसो नो विधीयते। युष्मान् ब्राह्मणान्। अस्मान् ब्राह्मणानिति। आदेः परस्येत्यकारस्य (१।१।५४) नकारः। संयोगान्तलोपः। पूर्व्ववदात्वम्। ननुचैतदुदाहरणद्वयममादेशे कृतआत्वे च प्रथमयोः पूर्वसवर्ण (६।१।१०२) इति दीर्घत्वे च तस्माच्छसो नः पुंसीति (६।१।१०३) नत्वेनैव सिध्यति। नैतदस्ति। नह्यत्र पूर्वसवर्णदीर्घत्वं प्राप्नोति। अमि पूर्व्वत्वेन बाधितत्वात्॥

## ३०। भ्यसोभ्यम्।

युष्मभ्यमस्मभ्यमिति। शेषे लोप (७।२।९०) इत्यन्तलोपः। यदि भ्यमादेशोऽयमेवं सति तत्र विहिते शेषे लोपे च बहुवचने झल्येदित्येत्त्वं (७।३।१०३) प्राप्नोति। ततश्चानिष्टरूपमापद्येतेत्यत आह भ्यमादेशे कृत इत्यादि। वर्त्तनं वृत्तम्। अङ्गे वृत्तं यस्य तदङ्गवृत्तं कार्य्यम्। तस्मिन्नङ्गवृत्ते कार्य्ये पुनरुत्तरकाल मङ्गवृत्तावपरस्य कार्य्यस्य प्राप्तौ तस्य कार्य्यस्याविधिरविधानम्। निष्ठितस्येतरेनेन यत्सम्बन्धिनः कार्य्यस्याविधि र्भवति तदङ्गं विशिष्यते। निष्ठितं परिसमाप्तं प्रयोगार्हमङ्गम्। तत्सम्बन्धिनः कार्य्यस्याविधि र्भवति। नान्यसम्बन्धिन इत्यर्थः। केचिदित्यादि। तेषामन्त्यलोपे कृतेऽतो गुणे (६।१।९६) पररूपत्वं भवति। येषान्त्वित्यादि। यैः शेषे लोप (७।२।९०) इत्यन्तलोपः क्रियते तेषां मतभेदः। ते हि केचिद् भ्यमादेशमिच्छन्ति केचिदभ्यमादेशम्। येषान्तु शेषे लोपष्टिलोप स्तेषां सर्व्वेषां मतेनायमभ्यमादेशएव। न भ्यमादेशः। अन्यथा युष्मभ्यमस्मभ्यमिति न सिध्येदित्यभिप्रायः। यदि तर्हि शेषे लोपष्टिलोप एवं सत्यनुदात्तस्य यत्रोदात्तलोप (६।१।१६१) इत्यनेनाभ्यम्-शब्दस्यान्तोदात्तत्वं स्यादित्यत आह उदात्तनिवृत्तिस्वरश्चेत्यादि। पूर्व्वपक्ष-वादिनोदात्तनिवृत्तिस्वरविधौ कर्षात्वतो घञोऽन्तउदात्त (६।१।१५९) इत्यतोऽन्तग्रहणमनुवर्त्तत इति मन्यमानेन चोदितम्। उत्तरपक्षवादिना त्वन्तग्रहणं

तत्र निवृत्तमुच्चारणक्रमप्रतायासत्तया चादेरेवोदात्तत्वेन भवितुं युक्तमिति मन्यमानेन परिहृतम् ।

## ३१ । पञ्चम्या अत् ।

पूर्वेण प्राप्तस्य भ्यमोऽयमपवादः ।

## ३२ । एकवचनस्य च ।

चकारोऽदादेशानुकर्षणार्थः । भ्यसपेक्षया समुच्चयार्थो वा । ङसेश्चेति वक्तव्य एकवचनस्येति वचनं वैचित्र्यार्थम् ।

## ३३ । साम आकम् ।

**साम** इति षष्ठीबहुवचनमागतसुट्कं परिगृह्यत इति । युष्मदस्मद्भ्या-मुत्तरस्यान्यस्य सामशब्दस्यासम्भवात् । आगतः सम्प्राप्तः सुट् यत्र येन वा तत् तथोक्तम् । अथैतस्यादौ वाक्य आगतसुट्क इत्याम्प्रत्ययापेक्षया पुंलिङ्गत्वं वेदितव्यम् । अथ किमर्थमागतसुट्कः परिगृह्यत इति पृष्टस्य ससुट्कस्यादेशो यथा स्यादिति प्रतिवचनमाशङ्क्याह नह्येतस्यादि । आमि सर्वनाम्नः (७।१।५१) सुडित्यतस्आज् जसे (७।१।५०) इत्यतः सुगित्यत आदिति वर्त्तते । तेनाकारान्तात् सर्वनाम्नः सुड् विधीयते । अकारान्तता च युष्मदस्मदोः शेषे लोप (७।२।९०) इत्यन्त्यलोपे सति भवति । शेषे लोपेनाप्याकमादेशे कृते भवितव्यम् । तस्मादादेश-विधानकाले सुण् न विद्यते । ततश्च ससुट्कस्यादेशो यथा स्यादित्येतत् प्रयोजन-न्नोपपद्यत इत्यन्यद्वक्तव्यमित्यभिप्रायेणाह तस्यैवेत्यादि । यद्यसुट्को गृह्यते निर्दिश्यमानस्यादेशा (प, १३) भवन्तीत्यसुट्कस्यैवादेशः स्यात् । एवञ्चाभिनिर्वृत्ते स्थान्यादेशभावे पश्चाद्भवतः सुटः केन निवृत्तिः स्यात् ? इष्यते च तस्यापि निवृत्तिः । अतस्तस्य भाविनोऽपि निवृत्ति र्यथा स्यादित्येवमर्थं ससुट्को गृह्यते । ननुच युष्मदस्मद्भ्यामुत्तरस्यामः सुड़ेव न प्राप्नोति । अकाराद्धि सर्व्वनाम्नःसुड् विधीयते । युष्मदस्मदोश्च त्यदाद्यत्वं नास्ति । द्विपर्य्यन्तास्त्यदादय इति त्यदाद्यत्वस्याभावाच्छेषे लोपस्य च टिलोपादकारान्तता न सम्भवति । अतो भाविनोऽपि सुटो निवृत्तिर्नैव प्रयोजनमुपपद्यते । एतच्चोद्यमपाकर्तुं शेषे लोप

(७।२।९०) इत्यन्त्यलोप इति हृदि कृत्वाह कृते ह्रीत्यादि। अथ क्रियमाणं ससुट्कस्य ग्रहणं कथमसौ निवर्त्तते ? शास्त्रान्तराद्धि प्रसक्तस्य शास्त्रेण निवृत्तिः क्रियते। नचादेशविधानकाले सुट्प्रसङ्गोऽस्तीत्याह स च स्थान्यन्तर्भूतत्वादित्यादि। यद्यादेशविधानकाले सुटः प्रसङ्गः सम्भवेत् ततो भावी न निवर्त्तेत। न चासावादेशकाले सम्भवति। तस्माद् भाविनः सुटः ससुट्कग्रहणेन स्थान्यन्तर्भूतत्वाद् यस्यामवस्थायां तस्य प्राप्तिस्तस्यां प्रसक्तः स निवर्त्तते। अन्यथा हि तस्य स्थान्यन्तर्भावोऽनर्थकः स्यात्। स्यादेतत्। यदि शेषे लोप (७।२।९०) इत्यन्त्यलोपस्ततः ससुट्कस्योपादानमर्थवद् भवति। यदा तु शेषे लोपष्टिलोप स्तदा नार्थः ससुट्कग्रहणेन। टिलोपे हि कृतेऽकारान्तत्वाभावात् सुटः प्रसङ्ग एव नास्तीति। एवं तर्हि टिलोप एव कस्मान्नाश्रीयते। तस्यानुपपत्तेः। अनुपपत्तिस्तु लक्षणाभावात्। अन्त्यलोपस्यास्यैतदेवास्ति लक्षणमिति स एवाश्रितः। यद्येवं युषद् ब्राह्मणीभ्यो गच्छतीत्यन्त्यलोपे सत्यजाद्यतष्टाबिति (४।१।४) टाप् प्रसज्येत। अलिङ्गे युष्मदस्मदी इति नैषोऽस्ति प्रसङ्गः। दीर्घोच्चारणमित्यादि। ननुचाकस्याप्यकः सवर्णदीर्घत्वे (६।१।१०१) न सिध्यत्येव। न सिध्यति। अतो गुणे (६।१।९७) इति पररूपत्वमपवादः प्राप्नोतीति चेत् ? न। अकारोच्चारणसामर्थ्यात्। यद्यतो गुणे (६।१।९७) पररूपत्वं स्यात् तदाकारोच्चारणमनर्थकं स्यात्। कामित्येव ब्रूयादित्यत आह अकामि त्वित्यादि। तु-शब्दो दीर्घोच्चारणापेक्षया समुच्चयार्थः। इतिकरणो हेतौ। यदि ह्यकारोच्चारणस्य प्रयोजनं न स्याच्छक्यते वक्तुमकारोच्चारणसामर्थ्यान्न भविष्यतीति। अस्ति च तस्य प्रयोजनम्। किं तत् ? बहुवचने झल्येदितीत्त्वं (७।३।१०३) मा भूत्। तस्मात् सत्यप्यकारोच्चारण एत्वनिवृत्त्यर्थेऽतो गुणे (६।१।९७) पररूपत्वं स्यात्। न सवर्णदीर्घत्वम्। अतस्तदर्थं दीर्घोच्चारणं क्रियते।

## ३४। आत औ णलः ।

तस्थाविति। शर्पूर्वाः खय इति (७।४।६१) खयः शेषः। जग्लाविति। कुहोश्चुरिति (७।४।६२) चुत्वम्। इह पा इत्यादिभ्यो णलि परत्वावस्थिते युगपत् त्रीणि कार्य्याणि प्राप्नुवन्ति। द्विर्वचन एकादेश औत्वञ्च। तेषाञ्च तथा प्राप्तानां युगपत् प्रवृत्तिः सम्भवतीति सामर्थ्यात् प्राप्तः क्रम आश्रीयते। तत्र येन क्रमेण तानि कर्त्तव्यानि तं दर्शयितुमाह अत्रेत्यादि। अत्रेत्यनेन पपावित्यादीन्युदा-

हरणानि प्रत्यवमृश्यन्ते। यदि द्विर्वचनादेकादेशः पूर्वं क्रियते तदा वृद्धिरेचीति (६।१।८८) वृद्धावेकादेशे कृते निमित्तनिमित्तिनो विशेषाभावाण्णिटि परतः पूर्वस्योच्यमानं द्विर्वचनं न प्राप्नोतीति तस्य निरासायेदमुक्तं स्थानिवद्भावाद्विर्वचनमिति। केन पुनरत्र स्थानिवद्भावः ? द्विर्वचनेऽचीत्यनेन (१।१।५९)। नैवम्। द्विर्वचननिमित्तेऽचि परतः पूर्वस्य स्थानिवद्भाव उच्यते। नचात्र द्विर्वचननिमित्तं परमचं पश्यामः। अत्र केचिदाहुः-अचीत्युपलक्षणम्। अचि य आदेशो दृष्टः स द्विर्वचने कर्त्तव्ये स्थानिवद् भवतीतीमं सूत्रार्थमाश्रित्यैतदुक्तम्। इह संप्रत्यनच्परत्वेऽप्येकादेशकरणकालेऽचः परस्य निमित्तभावेनाश्रयणादच्ययमादेशः कृतः। तस्माद् भवितव्यं स्थानिवद्भावेन। अन्ये त्वाहुः— एकादेशः पूर्वविधौ स्थानिवद्भवतीति वक्तव्यमित्यनयेष्ट्या स्थानिवद्भावः। द्विर्वचनेऽचीति (१।१।५९) योगविभागाद्वा स्थानिवद्भाव इत्यपरे। कथं पुनरयमेषां कार्य्याणां क्रम उपलभ्यत इत्यत आह एकादेशादित्यादि। पा अ इति स्थितेऽकः सवर्णे दीर्घत्वं (६।१।१०१) प्राप्नोति। औत्वञ्च। तत्रैकादेशो दण्डाग्रमित्यादौ सावकाशः। औत्वं तु न क्वचित् सावकाशम्। अतस्तावदनवकाशत्वात् प्रागौत्वं क्रियते। तत्र कृते वृद्धिः प्राप्नोति। द्विर्वचनञ्च। तत्र परत्वाद्वृद्धि र्भवति। द्विर्वचनं हि पपाचेत्यादौ सावकाशम्। वृद्धेस्तु वकाशो खट्वैडकेत्यादौ। अतो वृद्धौ कृतायां पश्चाद्भवति द्विर्वचनं स्थानिवद्भावेन। णल इति। णकारोच्चारणं प्रत्ययग्रहणं यथा स्यात्। णलो णकारोच्चारणे हि णल् प्रत्ययोऽस्तीति तस्य ग्रहणं भवति। तस्मिंश्चासत्यल इत्युच्यमाने सत्यल् प्रत्ययस्याभावात् प्रत्याहारग्रहणं विज्ञायेत। लकारोच्चारणं श्याद्व्यधेत्यादिना (३।१।१४१) विहितस्य णप्रत्ययस्य ग्रहणं मा भूदित्येवमर्थम्। अथैकवचनस्येत्यनुवर्त्तते ? तथा सति मुखसुखार्थम्।

## ३५। तुह्योस्तातङ्ङाशिष्यन्यतरस्याम्।

जीवताद् भवानिति। आशिषि लिङ्लोटाविति (३।३।१७३) लोट्। तिप्। शप्। एरुरित्युत्वम् (३।४।८६)। तस्य तुशब्दस्य तातङ्। जीवतात् त्वमिति। सिप्। सेर् ह्यपिच्चेति (३।४।८७) हिरादेशः। तस्य तातङ्। जीव त्वमिति। अतो हेरिति (६।४।१०५) हेर्लुक्। अथ जीवतात् त्वमित्यत्र स्थानिवद्भावेन तातङो हिग्रहणेन ग्रहणाल्लुक् कस्मान्न भवति ? हुझल्भ्यो (६।४।१०१) हेर्धिरित्यतो हेरित्यनुवर्त्तमाने पुनरतो हेरिति (६।४।१०५)

ग्रहणात्। तस्य ह्येतत् प्रयोजनम्। हिरूपावस्थितस्यैव हेलुंग् यथा स्यात्। स्थानिवद्भावेन यच्छब्दान्तरं हिग्रहणेन गृह्यते तस्य मा भूत्। अथ ङिच्चेति (१।१।५३) वचनात् तातङयमन्त्यस्य कस्मान्न भवतीत्याह ङित्करणमित्यादि। गुणप्रतिषेधार्थं ब्रूतात् भवानित्यत्र। वृद्धिप्रतिषेधार्थं मृष्टादित्यत्र। इतिकरणो हेतौ। यस्माद् गुणवृद्धिप्रतिषेधार्थं ङित्करणं तस्मात् सर्वादेशस्तातङ् भवति। यदि हि तस्यान्यत् प्रयोजनं न स्यात् स्यादेवान्त्यस्य तातङ्। अस्ति च तस्यान्यत् प्रयोजनं गुणवृद्धिप्रतिषेधः। तस्मिन् सति किं ङिच्चेत्यन्त्यस्य (१।१।५३) भवत्वथानेकाल्शित् सर्वस्येति (१।१।५५) सर्वस्य वा? तत्र परत्वात् सर्वादेशेनैव युक्तम् भवितुम्। तस्मादनेकाल्शित् सर्वस्येति (१।१।५५) सर्वस्यैव स्यादिति सर्वादेशो भवति। ननु च तुस्थानिकस्य तातङः स्थानिवद्भावेन पित्त्वं प्राप्नोति। ततश्च हलि पिति सार्वधातुके यथा ब्रवीत्वित्यत्रे ड् भवति तथा ब्रूतात् भवानित्यत्रापीटा भवितव्यम्। एतच्चोद्यमपाकर्त्तुमाह ङित्त्वाच्चेत्यादि। अस्येति तातङः। किं कारणं निवर्त्तत इत्याह ङिच्चेत्यादि। चकारो हेतौ। तुस्थानिकस्य तातङो नाप्राप्ते पित्त्वे ङित्त्वमारभ्यतइति ङित्त्वेन हि पित्त्वं बाध्यते। तथासौ ङिद् भवति यदि स्थानिवद्भावेन प्राप्तं पित्त्वं निवर्त्तते। तेनेत्यादि। यत एवं पित्त्वं निवर्त्तते तेन पित्त्वाश्रय ईण् न भवति। ग्रामं गच्छतु भवान्। त्वं गच्छेति। लोट् चेति (३।३।१६२) विध्यादौ लोट्।

## ३६। विदेः शतुर्वसुः।

यद्यपि विदेरिति सामान्यनिर्देशोऽयं तथापि ज्ञानार्थस्य ग्रहणं विज्ञायते। तस्यैव हि शतानन्तरः सम्भवति। नान्येषां विदीनाम्। तत्र सत्ताविचारणार्थयोः शतुरसम्भव एव। आत्मनेपदित्वात्। लाभार्थस्य तूभयपदित्वात् सम्भवत्यसौ। न त्वनन्तरः। शप्रत्ययेन व्यवधानात्। ज्ञानार्थस्य तु लुग्विकरणत्वाच्छतु विकरणकृतं व्यवधानं नास्ति। अतस्तस्यैव ग्रहणमित्याह विद ज्ञान इति। विद्वानिति। उगित्त्वान्नुम्। सान्तमहतः संयोगान्तस्येति (६।४।१०) दीर्घः। अन्यतरस्यांग्रहणमनुवर्त्तते। तेन पक्षे विदन् विदन्तौ विदन्त इत्याद्यपि भवति। एतच्च गम्यमानत्वाद्वृत्तौ नोक्तम्। अथ किमर्थमुकारोऽनुबन्धः क्रियते? नुमाद्युगित्कार्यं यथा स्यादिति चेत्? न। तस्य स्थानिवद्भावेनैव सिद्धत्वादित्यत आह स्थानिवद्भावादित्यादि। क्वसोरपीति। अपिशब्दादस्यापि। असत्युकारे सामान्यार्थे

क्समोरेव ग्रहणं स्यात्। नान्यस्य। अथ वमोः संप्रसारणमिति सूत्रं ( ६।४।१३१ ) क्रियत एवास्यैव ग्रहणार्थम्। न क्समोः। ननु च सत्यप्युकारकरणे सामान्य-ग्रहणन्नोपपद्यते। एकानुबन्धकपरिभाषयास्यैव ग्रहणं स्यात्। न क्समोरित्याह एकानुबन्धकग्रहणइत्यादि। एतत् परिभाषासूत्रं न भवति। नोपतिष्ठत इत्यर्थः। किं कारणं न भवतीत्याह तथाच सतीत्यादि। एवञ्च सतीत्यर्थः। यदि क्रियमाणेऽप्युकार एकानुबन्धपरिभाषोपतिष्ठत एवं सतुग्रकारकरण मनर्थकं स्यात्। विनापि तेन न वमः संप्रसारणमित्युच्यमाने केवलस्यास्य ग्रहणं लभ्यत एव। तस्मादुकारकरणसामर्थ्यादियं परिभाषा नोपतिष्ठते।

## ३७। समासेऽनञ्पूर्वे क्त्वो ल्यप्।

अनञ्पूर्वेइति। न नञ् अनञ्। अनञ् पूर्वो यस्य सोऽनञ्पूर्वः। प्रकृत्ये-त्यादि। समानकर्त्तृकयोः पूर्वकाले क्त्वा ( ३।४।२१ )। कुगतिप्रादय इति ( २।१।१८ ) समासः। ह्रस्वस्य कृति पिति तुगिति ( ६।१।७१ ) तुक्। पार्श्वतः-कृत्येति। स्वाङ्गे तस्प्रत्यये कृभ्वोरिति ( ३।४।६२ ) क्त्वा। तृतीयाप्रभृतीन्य-न्यतरस्यामिति ( २।२।२१ ) समासः। नानाकृत्येति। नाधार्थप्रत्यये च्व्यर्थे इति (३।४।६२) क्त्वा। पूर्ववत् समासः। कृत्वा हृत्वेति। एतत् प्रत्युदाहरणम्। अत्र कृत्वाशब्दोऽनञ्पूर्वोऽस्ति। किन्तु समासो न भवतीति ल्यबभावः। परमकृत्वोत्तम-कृत्वेति। सन्महदित्यादिना ( २।१।६१ ) समासः। कथं पुनरनेन समासः? कथञ्च न स्यात्? सामानाधिकरण्याभावात्। वार्त्तमेतत्। कर्त्तरि क्त्वा विहितः। स एव च परमोत्तमशब्दाभ्यां विशिष्यते। तत् कथं सामानाधिकरण्याभावः। अथ क्रियाविशेषणत्वं तयो राश्रित्य सामानाधिकरण्याभाव उच्यत एवमपि विशेषणं विशेष्येण बहुल ( २।१।५७ ) मित्यतो बहुलग्रहणानुवृत्तेरसामानाधिकरण्येऽपि समासो भवति। ननुचानञ्पूर्वावेतौ समासौ। तत् कथमेतत् प्रत्युदाहरणमुप-पद्यत इत्याह अनञित्यादि। अनञिति नायं प्रसज्यप्रतिषेधः। किं तर्हि? पर्युदासः। नञोऽन्यदनञ्। तत्र नञिवयुक्तन्यायेन (प, ७५) नञो यदन्यन् नञ्सदृश-मव्ययं तदनञिति परिगृह्यते। तेन कारणेन नञव्ययमनव्ययञ्च परमशब्दादिक मुभयमप्येतदनञ् न भवति। न तत्राव्ययेन नञा सादृश्यमस्ति। अत्यन्ताभेदा-दनव्ययत्वाच्च यथाक्रमम्। तस्माद् यथाऽकृत्वाऽहृत्वेत्येतत् प्रत्युदाहरण मुपपन्न-रूपमेवं परमकृत्वोत्तमकृत्वेत्यपि। यदि तर्ह्यनञिति नञ्सदृशमव्ययम्

परिगृह्यते स्नात्वाकालकः पीत्वास्थिरक इत्यादावपि स्यात्। अस्ति ह्यत्रापि नञ्सदृश मव्ययं पूर्वपदम्। क्त्वाप्रत्ययस्याव्ययत्वादित्याह स्नात्वाकालक इत्यादि। मयूरव्यंसकादिषु समाससंज्ञार्थमेते समुदायाः पठ्यन्ते। तस्मान्निपातनाल्ल्यबादेशो न भवति। अथवेत्यादि। समास इत्यधिकरणसप्तम्यां सत्यां स्नात्वाकालकादिषु ल्यबादेशप्रसङ्गो भवतीति। तथाह्यधिकरणसप्तम्यामयमर्थो भवति समासेऽनञ् पूर्वे यः क्त्वा वर्त्तते तस्य ल्यब् भवति। एवञ्च सति देशविशेषपरिग्रहाभावाद् यथा समासस्यान्ते वर्त्तमानस्य क्त्वो ल्यब् भवति तथा मध्येऽपि स्यात्। तस्मान् न चेयमधिकरणसप्तमी। किं तर्हि ? निर्धारणसप्तमी। तस्मिंश्च पक्षे समास इति जातावेकवचनम्। यथा कारक (१।४।२३) इति। अथवा व्यत्ययो बहुलमिति (३।१।८५) सुब्व्यत्ययेन ( ३।१।८५ ) बहुवचनस्य स्थान एकवचनं वेदितव्यम्। तेनेत्यादि। यतो निर्धारण इयं सप्तमी तेन क्त्वान्तः समास एव गृह्यते। न समासावयवः स्नात्वेति। निर्धारणं हि समानजातीयस्यैव भवति। यथा कृष्णा गवां सम्पन्नक्षीरतमेत्युक्ते गौरेव निर्धार्य्यमाना प्रतीयते तथात्रापि समासेऽनञ्पूर्व इत्युक्ते समासेष्वनञ्पूर्वेषु मध्ये यः क्त्वान्तः समासः स एव निर्धार्य्यमानः प्रतीयते। तेन समासस्यैव क्त्वान्तस्य ग्रहणमिति तस्यैव ल्यबादेशेन भवितव्यम्। न च स्नात्वाकालकादिषु क्त्वान्तः समासः। स्नात्वाकालकादयो यद्यपि समासा ननु क्त्वान्ता इति ल्यबादेशो न भवति। स च समासो येन विधिस्तदन्तस्येति (१।१।७२) तदन्तविधिना क्त्वान्तो गृह्यते। कृद्ग्रहणे गतिकारकपूर्वस्यापि (प,२८) ग्रहणेन वा प्रत्ययग्रहणपरिभाषया (प,२४) तदन्तग्रहणं न शक्यते वक्तुम्। न हि क्त्वाप्रत्ययः समासादुत्पद्यते। तत्र यदि कृद्ग्रहणपरिभाषया तदन्तो गृह्यते नानाकृत्वेत्यत्र न स्यात्। नह्ययं गतिकारकपूर्वः। इहैव तु स्यात् प्रकृत्य पार्श्वतःकृत्येति। अस्ति ह्यत्रापि गतिः कारकञ्च पूर्वोऽवयवः। येन विधिस्तदन्तस्येत्यनेन ( १।१।७२ ) तदन्तविधौ गम्यमाने सर्वत्र भवतीति मन्यमान आह स चेत्यादि। अत्रैवोपपत्तिमाह तथाचेत्यादि। यस्माद् येन विधिस्तदन्तस्येत्यनेन (१।१।७२) क्त्वान्तः समासो गृह्यते। एवञ्च कृत्वाऽनञ्पूर्व इत्युच्यते। येन विधिस्तदन्तस्येत्यनेन ( १।१।७२ ) हि सामान्येन तदन्तविधौ सति नञ्पूर्वस्यापि प्रसज्येत। तस्मात् तन्निवृत्त्यर्थमनञ्पूर्व इति युक्तमुक्तम्। यदि कृद्ग्रहणपरिभाषया क्त्वान्तः समासो गृह्यते तदा गतिकारकपूर्वस्यैव ग्रहणं स्यात्। एवञ्च गतिकारकपूर्वस्य ग्रहणे सति नञ्पूर्वस्य प्रसङ्ग एव नास्ति। नञ् न गति र्न च कारकमिति। अतो हेतोर्यथैव परमकृत्वेत्यत्र प्रसङ्गो नास्ति परम-

शब्दस्यागतित्वादकारकत्वाच्च तथाऽकृत्वेत्यत्रापि । नञोऽगतित्वादकारकत्वाच्च । ततश्च प्रसङ्गाभावादनञ्पूर्व इति न वक्तव्यं स्यात् । उक्तञ्च । तदेतस्मादनञ्पूर्व इति वचनाद् येन विधिस्तदन्तस्येत्यनेन ( १।१।७२ ) क्त्वान्तः समासो गृह्यते । न तु कृद्ग्रहणपरिभाषयेति (प,२८) स्थितमेतत् । प्रधायेति । अत्रान्तरङ्गत्वाद् दधातेर्हिरिति ( ७।४।४२ ) हिः प्राप्नोति । प्रस्थायेत्यत्रापि द्यतिस्यतिमास्थामित्ति कितीतीत्त्वम् ( ७।४।४० ) । प्रखन्येति । जनसनखनामित्यात्त्वम् ( ६।४।४२ ) । प्रगम्येति । अनुनासिकस्य क्विझलोः ( ६।४।१५ ) क्ङितीति दीर्घः । आपृच्छ्येति । च्छ्वोः शूड़नुनासिके चेति ( ६।४।१९ ) शत्वम् । प्रतिदीव्येति । तेनैवोट् । प्रपठ्येति । आर्धधातुकस्येड् ( ७।२।३५ ) वलादेरितीट् । अन्तरङ्गत्वं पुनरेषामेकपदाश्रयत्वात् । ल्यबादेशस्य तु बहिरङ्गत्वम् । समर्थानेकपदाश्रयसमासापेक्षत्वात् । हिप्रभृतिषु कृतेषु प्रधायेत्यादीनि रूपाणि न सिध्यन्तीति यश्चोदयेत् तं प्रत्याह प्रधायेत्यादि । ज्ञापित मेतदिति । अदो जग्धिर्ल्यप्ति ( २।४।३६ ) कितीत्यत्र । अथ पूर्वग्रहणं किमर्थम् ? नानञीत्येवमुच्येत ? नेवं शक्यम् । अनञीत्युच्यमाने बहुव्रीहिरयं स्यादविद्यमानो नञ् यत्रासावनञिति । ततश्चेहापि न स्यात् स्त्रैणीकृतेरति । स्त्रिया इदं स्त्रैणम् । स्त्रीपुंसाभ्यां नञ्स्नञौ ( ४।१।८७ ) भवनादिति नञ् । तदन्तादभूततद्भावइत्यादिना च्विः ( ५।४।५० ) । अस्य च्वा- ( ७।४।३२ ) वितीत्त्वम् । कुगतिप्रादय इति ( २।१।१८ ) समासः । पूर्वग्रहणे तु सति पूर्वशब्द आदिभूतावयवमाचष्टे । तेन यत्र समासादिभूतो नञ् तत्र न ल्यपा भवितव्यम् । तत्र स्त्रैणीकृतेत्यत्र भवत्येव । नह्यत्र समासादिभूतो नञवयवः । किं तर्हि ? मध्यभूतः । लित्करणं प्रचिकीर्ष्येत्यत्र लित्प्रत्ययात् पूर्वस्योदात्तत्वं यथा स्यात् । प्रकृत्येत्येवमादावुदात्तार्थं लित्करणं नोपपद्यते । धातुस्वरेणैव पूर्वस्योदात्तत्वं सिध्यति । तस्मादनेकाजवयव एव धातु र्लित्वं प्रयोजयति ।

## ३८ । क्त्वापि छन्दसि ।

परिधापयित्वा प्रत्यर्पयित्वेति । दधाते र्ऋतेश्च हेतुमण्णिच् । अर्त्तिह्रीत्यादिना पुक् ( ७।३।३६ ) । पुगन्तलघूपधस्येति गुणः ( ७।३।८६ ) । क्त्वा । इट् । अयादेशः । उद्धृत्येति । हृञ् हरणे । झयो होऽन्यतरस्यामिति ( ८।४।६२ )

ह्नकारस्य भकारः। वा छन्दसीति वक्तव्ये क्वापि च्छन्दसीति वचनमसमासेऽपि यथा स्यात्। अर्च्छ तान् देवान् गत इति।

## ३९। सुपां सुलुक् पूर्व्वसवर्णाच्छेयाडाड्यायाजालः।

पन्था इति। पथिन्नित्येतस्माज्जस्। तस्य सुः। पथिमथ्यृभुक्षा ( ७।१।८५ ) मादित्यात्त्वम्। इतोऽत् सर्वनामस्थान ( ७।१।८६ ) इतीकारस्यात्त्वम्। थोन्थ ( ७।१।८७ ) इति न्थादेशः। सुपामित्यादिना सुपां स्थाने सुप आदेशो भवन्तीत्येतदर्थरूपं व्याख्येय मित्यर्थः। तत्रेदं व्याख्यानम्। पूर्वसूत्रादपिशब्दोऽनुवर्त्तते। स चानुक्तसमुच्चयार्थः। तेन सुपामन्येऽपि सुपो भवन्ति। धुरि दक्षिणाया इति। सप्तम्येकवचनस्य स्थाने पञ्चम्येकवचनं षष्ठोकवचनं वा। तिङामित्यादि। तिङाञ्च तिङो भवन्तीत्येतदर्थरूपं व्याख्येयमित्यर्थः। व्याख्यानन्तु पूर्व्ववदेव वक्तव्यम्। आर्द्रे चर्म्मन्निति। सप्तम्येकवचनस्य चर्म्मन्शब्दाल्लुक्। यदित्यत्रापि यच्छब्दात् तच्छब्दाच्च। धीतीत्यादि। धीतिमतिसुष्टुतिशब्देभ्यः परस्य तृतीयैकवचनस्य पूर्वसवर्ण इकारः। उभयोरकः सवर्णे ( ६।१।१०१ ) दीर्घत्वम्। उभा इति। उभशब्दात् प्रथमाद्विवचनस्याकारः। प्रथमयोः ( ६।१।१०२ ) पूर्वसवर्ण इत्येकादेशः। न ताद् ब्राह्मणान् निन्दामीति। तच्छब्दाद् ब्राह्मणशब्दाच्च द्वितीयैकवचनस्यात्। निशब्दे परतो यरोऽनुनासिकेऽनुनासिको ( ८।४।४५ ) वेति तकारस्य नकारादेशः। युष्मे अस्मे इति। युष्मदस्मच्छब्दाभ्यां परस्य च जसः शेइत्ययमादेशः ( १।१।१३ )। शकारः सर्वादेशार्थः। अथेह यूयवयौ जसीति ( ७।२।९३ ) यूयवयादेशौ कस्मान्न भवतीत्याह यूयादेश इत्यादि। उरुया धृष्णुयेति। उरुधृष्णुशब्दाभ्यां परस्य तृतीयैकवचनस्य यादेशः। नभेति। नाभिशब्दात् सप्तम्येकवचनस्य डादेशः। डकारष्टिलोपार्थः। अनुष्टेति। अनुष्टुप्शब्दात् तृतीयैकवचनस्य ड्यादेशः। साधुयेति। साधुशब्दात् परस्य प्रथमैकवचनस्य याजादेशः। चकारोऽन्तोदात्तार्थः। सौर्लुकि प्राप्त इति। याजित्ययमादेशो विधीयत इति शेषः। लुक्प्राप्तिस्तु स्वमोर् नपुंसकादित्यनेन ( ७।१।२३ )। वसन्तेति। वसन्तशब्दात् परस्य सप्तम्येकवचनस्यालित्ययमादेशः। लित्करणं लित्प्रत्ययात् पूर्वस्योदात्तत्वं यथा स्यात्। उपसंख्यानमिति। प्रतिपादनमस्यार्थः। उत्तरत्राप्युपसंख्यानशब्दस्य प्रतिपादनमर्थः। प्रतिपादनन्त्वपिशब्दमाश्रित्य कर्त्तव्यम्।

उर्विया दार्वियेति। उरुदारुशब्दाभ्यां परस्य तृतीयैकवचनस्येयादेशः। सुचेत्रियेति। सुचेत्रिन्नित्यादेर्मत्वर्थीयेनिप्रत्ययान्तात् परस्य तृतीयैकवचनस्य ड़ियाजादेशः। डकारष्टिलोपार्थः। चकारोऽन्तोदात्तार्थः। सरसी इति। सरः शब्दात् सप्तम्येकवचनस्य ईकारः। प्रबाहवेति। प्रबाहुशब्दात् तृतीयैकवचनस्याड्डादेशः। घेर्ङितीति ( ७।३।११ ) गुणः। अवादेशः। ननु च ङित्त्वे विद्याद् वर्णं निर्देशमात्रं वर्णं यत् स्यात् तच्च विद्यात् तदादौ वितुग्रह्णम् ( ७।१।१८,वा )। नचेहादौ ङकारः। तत् कथं गुणः ? ङित्करणसामर्थ्याद् भविष्यतीत्यदोषः। स्वप्नयेति। स्वप्नशब्दात् परस्य तृतीयैकवचनस्यायाच्। अतो गुणे ( ६।१।९७ ) पररूपत्वम्। चकारः स्वरार्थः। नावयेति। नौशब्दात् परस्य तृतीयैकवचनस्यायारादेशः। रेफ उपोत्तमं ( ६।१।२१७ ) रितीतुग्रपोत्तमाकारस्योदात्तत्वार्थः।

## ४० । अमो मश् ।

अमिति मिबादेशो गृह्यतइति। द्वितीयैकवचनाशङ्कां निराकरोति। द्वितीयैकवचनस्याग्रहणं छन्दसि यथादृष्टानुविधानात्। अपिशब्दानुवृत्तेर्वा। तदनुवृत्तौ ह्येवं सम्बन्धःक्रियते। अमो मश भवत्यपिशब्दात् क्वचिच्छ्रवणमपीति। वधीमिति। हन्तेर्लुङ्। च्लेःसिच्। मिप्। तस्य तस्थेत्यादिना (३।४।१०१) ऽम्। तस्य मशादेशः। अकार उच्चारणार्थः। लुङि (२।४।४३) चेति हन्तेर्वधादेशः। आर्धधातुकस्येत्यादिनेट् (७।२।६५)। अस्तिसिचोऽ (७।३।९३) पृक्तइतीट्। इट इटीति (८।२।२८) सिचो लोपः। सवर्णदीर्घत्वम्। क्रमीमिति। क्रमु पादविक्षेपे। सर्वं पूर्ववत्। अयमत्र विशेषः। सुक्रमोरनात्मनेपदनिमित्त (७।२।३३) इतीट्। अवधिषम्। अक्रमिषमिति प्राप्ते। शित्करणं सर्वादेशार्थमिति। असति तस्मिन्नलोऽन्त्यस्य (१।१।५२) स्यादिति भावः। ननुच मकारस्य मकारवचने प्रयोजनन्नास्तीत्यन्तरेणापि शकारं सर्वादेशो भविष्यतीत्याह मकारस्येत्यादि। अस्ति हि मकारविधाने प्रयोजनम्। किं तत् ? मोऽनुस्वारः (८।२।२३) प्राप्नोति। स मा भूदिति। सत्येतस्मिन् प्रयोजने यदि शकारो न क्रियेत तदाऽन्त्यस्यैव स्यात्। न सर्व्वस्य। तस्मात् सर्व्वादेशार्थः शकारः कर्त्तव्यः।

## ४१ । लोपस्त आत्मनेपदेषु ।

अदुह्रेति । दुहेर्लङ् । अदादित्वाच्छपो लुक् । आत्मनेपदेष्वनत (७।१।५) इत्यदादेशः । बहुलं छन्दसीति (७।१।८) रुट् । तकारलोपे कृते द्वयोरकारयोरतो गुणे ( ३।१।९७ ) पररूपत्वम् । दुह्रामिति (I) । लोट् । बहुवचनं झः । टेरेत्वम् । आमादेशः (३।४।९०) । झादेशस्यातो रुड़ागमः । पूर्ववच्छपो लुक् । तकारलोपे कृतेऽकः सवर्णे दीर्घः (६।१।१०१) । शय इति । लट् । एकवचनान्तः । शीङः सार्वधातुके (७।४।२१) गुणः । शपो लुक् । दुह्रामिति । लोट् । एकवचनान्तः । टेरेत्वम् । आमेत (३।४।९०) इत्याम् । दुग्धामिति । दादेर्धातोर्घः (८।२।३२) । झषस्तथोर्धोऽध (८।२।४०) इति धत्वम् । झलां झश् झशीति (८।४।५३) घकारस्य गकारः । अपीत्यधिकारादित्यादि । क्वापिच्छन्दसी-( ७।१।३८ ) त्यतोऽपीत्यनुवर्त्तते । तत्रैवमभिसम्बन्धः क्रियते । लोपो भवति श्रवणमपीति । तेन कुरुत इत्यत्र न भवति । करोतेर्गुणे कृतेऽतउत् सार्व्वधातुक (३।४।११०) इत्युत्वम् । यद्यपिशब्दानुवृत्तेः क्वचिच्छ्रवणमपि भवत्यत एव हेतोः परस्मैपदेषु न भवतीति किमात्मनेपदग्रहणेन ? एवं तर्हि विस्पष्टार्थमात्मनेपदग्रहणम् ।

## ४२ । ध्वमो ध्वात् ।

वारयध्वादिति । वृञो वृङो वा हेतुमण्णिजन्ताद् वृञ् आवरण इत्यस्माद्वा चुरादिण्यन्ताल्लोट् । तस्य ध्वम् । तस्य ध्वात् । वारयध्वमिति । टेरेत्वे कृते सवाभ्यां वामौ (३।४।९१) वित्यमादेशः ।

## ४३ । यजध्वैनमिति च ।

## ४४ । तस्य तात् ।

लोण्मध्यमपुरुषबहुवचनस्येति । अथ प्रथमपुरुषस्यैकवचनं कस्मान्न भवति ? छन्दसि यथादृष्टानुविधानात् । अपिशब्दानुवृत्तेर्वा । कृणुतादिति । कृवि हिंसाकरणयोरित्यस्येदित्त्वान्नुम् । धिन्विकृण्व्योर (३।१।८०) चेतुप्रत्ययः ।

---

(I) दुह्रामिति तु मुद्रितकाशिकायां पदमग्रन्थ्याच्च नास्ति ।

अकारश्चान्तादेशः । अतो लोपः ( ६।४।४८ )। संसृजतादिति । सृजेस्तुदादित्वाच्छः । गमयतादिति । णिच् । मितां ह्रस्वः ।

## ४५ । तप्तनप्तनथनाश्च ।

शृणोतेरिति । श्रुवः शृ चेति (३।१।७४) श्नुप्रत्ययः शृभावश्च । पित्त्वे ङित्त्वाभावाद् गुणः । सुनोतेति । स्वादिभ्यः श्नुः (३।१।७३) । दधातनेति । दधातेः श्लाविति (३।१।१०) द्विर्वचनम् । अत्रापि पूर्व्ववन् ङित्त्वाभावाच् श्नाभ्यस्तयो (३।४।११२) रात इत्याकारलोपो न भवति । धत्तेति । दधस्तथोश्चे-(८।२।३८) त्यभ्यासदकारस्य धकारः । धातोराकारलोपे कृते झलाञ्जश् झशीति (८।४।५३) जश्त्वं दकारः । तस्य खरि चेति (८।४।५५) चर्त्वं तकारः । जुजुष्टनेति । जुषेः पूर्व्ववच्छः । तस्य (२।४।७६) बहुलं छन्दसीति (२।४।७३) श्लुः । द्विर्वचनम् । (J) ष्टुत्वम् । यदिष्ठनेति । इषेरिच्छार्थात् पूर्ववच्छः । बहुलं च्छन्दसीति ( २।४।७७ ) तस्य लुक् । यदिच्छतेति । इषुगमियमाञ्छः (७।३।७७) । चकारस्तस्येत्यस्येहानुकर्षणार्थः ॥

## ४६ । इदन्तो मसिः ।

इदन्तइति । तकारोऽसन्देहार्थः । असति हि तकारे यणादेशे कृते यन्तइति भवितव्यम् । तत्र सन्देहः स्यात् किमयं यकारान्त उतकारान्त इति । इद् अन्तो यस्य इदन्तः । मसित्ययं शब्दोऽन्यपदार्थः । सकारान्तमसीत्यविभक्तिकोऽयं निर्देशः । सुपां सुलुगिति ( ७।१।३९ ) प्रथमैकवचनस्य लुप्तत्वात् । इकार उच्चारणार्थः । मसीत्ययं शब्द इकारान्तो भवतीत्यस्यार्थं मसः सकारान्तस्येत्यादिना व्यक्तीकरोति । सकारान्तस्येत्यनेन मन्त्वं वोचेमेत्यत्राकारान्तस्य न भवतीति दर्शयति । कथं पुनः सकारान्तस्योपादानेऽसकारान्तस्य प्राप्नोति ? एकदेशविकृतस्यानन्यत्वात् । यद्येवं कस्मान्न भवति ? छन्दसि यथादृष्टानुविधानात् । अपीत्यधिकाराद्वा । वोचेमेति । वचेः परस्याशिषि लिङो मस् । यासुट् । लिङ्याशिष्यङ् ( ३।१।८६ ) । अतो येय ( ७।२।८० ) इतीयादेशः । वच उम् (७।४।२०) इत्युमागमः । छन्दस्युभयथेति (३।४।११७) सार्व्वधातुकत्वाल्लिङः

---

(J) व्यत्ययो बहुलमिति ( ३।१।८५ ) परस्मैपदम् ।

मलोपोऽनन्त्यस्येति (७।२।७९) सलोपः। नित्यं ङितइत्युत्तमस्य (३।४।९९) सलोपः। लोपो व्योर्वलीति (६।१।६६) यकारस्य च। आद् गुणः (६।१।८८)। आगम इकारो भवतीति। कथम्पुनरयमागमः ? कथञ्च न स्यात् ? आगमलिङ्गाभावात्। टित्त्वकित्त्वमित्त्वान्यागमलिङ्गानि। अत्र चैषामेकमपि नास्ति। ततो नामावागमः। यथास्तेर्भूरिति (२।४।५२) भूभावः। यद्येवं न याभ्यां पूर्वौ च ताभ्यामैजित्यैजागमो (७।३।३) न स्यात्। अथ पूर्वग्रहणात् तस्यागमत्वमवसीयते। अस्याप्यन्तग्रहणादवसीयताम्। यथैव हि पूर्वशब्दोऽवयववचनो नियतदेशमवयवमाचष्टे तथान्तशब्दोऽपीति समानमेतत्। स च तस्यान्तो भवतीति। अन्त एकदेशोऽवयव इति यावत्। अतएवासौ तद्ग्रहणेन गृह्यत इत्याह तद्ग्रहणेनेत्यादि। एतेनागमत्वमिकारस्य दर्शयति। आगमो हि तद्ग्रहणेन गृह्यत इति प्रसिद्धमेतत्। तद्ग्रहणे च प्रयोजनं पृथक् स्वरनिवृत्तिरिति। तिङ्ङतिङ इति (८।१।२८) निघातश्च। मस इगिति नोक्तम्। असन्देहार्थम्। एवं ह्युच्यमाने सन्देहःस्यात् किमिगागम उत प्रत्याहार इति। दीपयामसि जम्भयामसीति। दीपी दीप्तौ। जभि जृभी गात्रविनामे। आभ्यां ण्यन्ताभ्यां लट्। रधिजभोरचीति (७।१।६१) नुम्। क्वचिद् भञ्जयामसीति पाठः। स च भञ्जो आमर्द्दन इत्यस्य ण्यन्तस्य वेदितव्यम्॥

## ४७। क्त्वो यक्।

दत्त्वायेति। दो दद् घोरिति (७।४।४६) ददादेशः। क्त्वापिच्छन्दसीत्यादि। एवमुच्यमाने हिः क्त्वाग्रहणं न कर्त्तव्यमिति भावः। समास इत्यत्रानुवर्त्तत इति। समासेऽनञ्पूर्व इत्यतः (७।१।३७)। यदि तस्यानन्तरमिदमुच्यते तत्रापि समासग्रहणमनुवर्त्तेत इत्याशङ्का स्यात्। ततस्तस्यानुवृत्तिनिवृत्त्यर्थं तस्यानन्तरमिदं नोक्तमित्यभिप्रायः।

## ४८। इष्ट्वीनमिति च।

इष्ट्वीनमिति। वच्यादिसूत्रेण (६।१।१५) संप्रसारणम्। पीत्वीनमिति। घुमास्थेत्यादिनेत्त्वम् (६।४।६६)। एतच्चेतिकरणादाद्यर्थाच्चकारस्यानुक्तसमुच्चयार्थत्वाद्वा लभ्यते। अनयोरन्यतरोपादानेनैव सिद्ध उभयोरुपादानं वैचित्र्यार्थम्।

## ४९। स्नात्व्यादयश्च।

स्नात्वी पीत्वीति। आकारस्य स्थान ईत्त्वन्निपात्यते। ननुच स्नात्व्यादयः शब्दाः प्रातिपदिकगणे न पठ्यन्ते। तत् कथं ते वेदितव्याः? कथञ्चादिशब्देन ते शक्या लक्षयितुमित्याह प्रकारार्थोऽयमादिशब्द इति। एवंप्रकारा य एतत्सदृशाः शब्दास्ते स्नात्वादयो वेदितव्याः।

## ५०। आज्जसेरसुक्।

जसेरिति पूर्वाचार्य्यनिर्द्देशः। पूर्व्वाचार्य्या हि जसिरित्येवं विहितवन्तः। ये पूर्व्वासो ये परास इत्यत्रेत्यादि चोद्यम्। एतच्च जातौ पदार्थे। तत्रान्यत्र चरितार्थत्वाच्छास्त्रयोस्तुल्यबलयोर्विरोधे सति परस्परप्रतिबन्धादप्रवृत्तौ प्राप्तायां विप्रतिषेधे परं कार्य्यमिति (१।४।२) क्रियते। विप्रतिषेधे परं भवति। तत्र कृते यदि पूर्वमपि प्राप्नोति तदपि भवतीति जातिपदार्थः पुनःप्रसङ्गविज्ञानस्य विषयः। सकृदित्यादिना परीहारः। एष च व्यक्तौ पदार्थेऽन्यत्राकृतार्थत्वाद् द्वयोरपि शास्त्रयोरीदृशे विषये पर्य्यायेण प्रवृत्तौ प्राप्तायामयन्नियम आरभ्यते। विप्रतिषेधे परमेव (१।४।२) भवति। न पूर्वमिति। तेन पुनःप्रसङ्गविज्ञानाभावाद्बाधितः शीभावो न भवति। न ह्यसति पुनः प्रसङ्गे यद् बाधितं तदुत्सहते पुनर्भवितुम्।

## ५१। अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि।

आत्मप्रीताविति। विषयसप्तमीयम्। तच्च क्यचो विशेषणम्। अतएवाहात्मप्रीतिविषये क्यचीति। आत्मप्रीतिर्विषयो यस्य क्यचः स तथोक्तः। अश्वस्यतीति। आत्मनोऽश्वमिच्छतीति सुप आत्मनः क्यच् (३।१।८)। अनेनासुक्। अतो गुणे (६।१।९७) पररूपत्वम्। एवं क्षीरस्यतीत्यादावपि वेदितव्यम्। सर्व्वत्रात्मप्रीतिविषये क्यच्। यो ह्यात्मनोऽश्वादिकमिच्छति स नियोगत आत्मनः प्रीत्यर्थमिच्छति। यद्येवमिच्छायां क्यज् विधीयमानः सर्वत्रात्मप्रीतिविषये भविष्यतीतीच्छायां क्यचीत्येवं वक्तव्यम्। प्रसिद्ध्युपसंग्रहार्थमात्मप्रीताविति लौकिकस्यार्थस्योपादानम्। तेन यत्रात्मप्रीतावसुग् लोके प्रयुज्यते तत्रैव भवति। नान्यत्र। तेनाश्ववृषयो मैथुनेच्छायां क्षीरलवणयो लौलसायामित्युपपन्नं भवति। अश्वीयतीति।

अश्वमिवाचरतीत्युपमानादाचार ( ७।१।१० ) इति क्यच्। क्यचि चे-(७।४।३३) तीत्त्वम्। अश्ववृषयोरित्यादि। अश्ववृषयो मैथुनेच्छायामसुग् भवतीत्येतदर्थं रूपं व्याख्येयमित्यर्थः। क्षीरलवणयोरित्यादि वक्तव्यमित्येतदपेक्षते। क्षीरलवणयो र्लालसायामसुग् भवतीत्येतदर्थं रूपं व्याख्येयमित्यर्थः। व्याख्यानन्तु कृतमेव। अन्यत्रात्मप्रीतावपि न भवतीति। आत्मनोऽश्वादिकमिच्छत्यश्वीयतीति। लवणीयति। तृष्णातिरेकइति। तृष्णाया अतिरेकोऽतिशयः प्रकर्षआधिक्यमित्यर्थः।

## ५२। आमि सर्वनाम्नः सुट्।

ह्रस्वनद्यापो नुड़िति ( ७।१।५४ ) प्राप्ते वचनम्। आमीति षष्ठीबहुवचनं परिगृह्यत इति। इह बहव आमः सम्भवन्ति। षष्ठीबहुवचनम्। ङेराम्-नद्याम्नीभ्यः ( ७।३।११६ ) इति। किमेत्तिङव्ययघादाम्वद्रव्य-( ५।४।११ ) प्रकर्ष इति। कास्प्रत्ययादाममन्त्रे ( ३।१।३५ ) लिटीत्याम्। एषां यदि सर्वेषां ग्रहणं स्यात् तदा सर्वेषां ह्रस्वनद्यापो नुड़िति ( ७।१।५४ ) नुट् प्रसज्येत। तत्राप्येतदेवाम्ग्रहणमनुवर्त्तते। षष्ठीबहुवचनस्यैवेष्यते। अतस्तदेव गृह्यत इत्याह तस्य हि परत्वादित्यादि। सुटो नुटश्च षष्ठीबहुवचनमवकाशः। आट्-प्रभृतीनान्तु चतुर्थ्येकवचनादिः। ङेराम्नद्याम्नीभ्यः ( ७।३।११६ ) इति परत्वा-दाड़ादयो भवन्ति। तत्राण् नद्या इत्याट् ( ७।३।११२ ) कुमार्य्यामिति। याड़ाप इति याट् ( ७।४।११३ ) खट्वायामिति। सर्वनाम्नः स्याड्ढ्रस्वश्चेति ( ७।३।११४ ) स्याट् सर्व्वस्यामिति। यस्तर्हि घान्तादाम् विधीयते यश्च लिट्याम् तौ कस्मान्न गृह्येते इत्याह यश्च किमित्यादि। तयोर्ह्येको घान्ताद् विधीयतेऽपरो धातोः। न च घान्तस्य सर्व्वनामसंज्ञा। नापि धातोरिति। न तौ सर्व्वनाम्नः परौ सम्भवत इति न गृह्येते। अथ तु सर्व्वनाम्नः परौ न सम्भवत इति कृत्वैतदर्थं तयोर्ग्रहणमनुपपन्नं तथाप्युत्तरार्थं न्तूपपद्यते। विद्येते तौ हि ह्रस्वात्तात् परो पचतितराम् पचतितमां चिकीर्षाञ्चकार कारयाञ्चकारेत्यत आह सानुबन्धकाविति वा तौ न गृह्येते इति। निरनुबन्धकपरिभाषयेति भावः। तत्र घादामोरुकारोऽनुबन्धः। इतरस्य लकारः। तथाचोक्तमामोऽमित्त्वमदन्तत्वादिति। उत्तरार्थं इत्यादि। त्रेस्त्रय ( ७।१।५३ ) इत्यामि परतो यथा स्यात्। एतदर्थोऽप्यामीति सप्तमीनिर्देशः कस्मान्न भवति। अस्ति ह्यत्रापि प्रयोजनम्। आमि परतः सर्व्वनाम्नः सुड् यथा स्यादित्यत आह

इह त्वित्यादि। उभयनिर्देशे पञ्चमीनिर्देशो बलीयानिति। तस्मादित्युत्तरस्येति (१।१।६६) सर्वनाम्न इत्यनया पञ्चम्या आमीत्यस्याः सप्तम्याः षष्ठ्यां परिकल्पितायामाम एव सुटा भवितव्यमिति नास्तीह सप्तमीनिर्देशस्य प्रयोजनम्।

## ५३। त्रेस्त्रयः।

ह्रस्वनद्यापो नुडिति प्राप्ते (७।१।५४) वचनम्। त्रयाणामिति। सुपि चेति (७।३।१०३) (K) दीर्घः। ननु च निजां त्रयाणां गुणः श्लाविति (७।४।७५) निपातनादेव सिद्धम्। तत् किमर्थमिदमारभ्यते? एवं सिद्धे सतीद मारभ्यमाणमेतज् ज्ञापयति अबाधकान्यपि निपातनानि भवन्तीति (प,११८)। तेन पुरातनमिति सिद्धं भवति। अन्यथा पुराणप्रोक्तेष्विति (४।३।१०५) निपातनेन बाधितत्वान्न सिध्यति। त्रीणामपीष्यते छन्दसीति। एतच्चापीत्यधिकाराद्वा सर्व्वं विधयश्छन्दसि विकल्प्यन्त इति वा लभ्यते॥

## ५४। ह्रस्वनद्यापो नुट्।

कुमारीणामिति। वयसि प्रथमइति (४।१।२०) ङीप्। गौरीणामिति। षिद्गौरादिभ्य (४।१।४१) श्चेति ङीष्। शार्ङ्गरवीणामिति। शार्ङ्गरवाद्यञो ङीनिति (४।१।७३) ङीन्। लक्ष्मीणामिति। अवितॄस्तॄतन्त्रिभ्य ईरित्यनुवृत्तौ (उण् ३।४३८) लक्षे र्मुट् चेति (उण् ३।४४०) ई मुट् च। ब्रह्मबन्धूनामिति। ब्रह्मा बन्धुरासामिति बहुव्रीहिः। ऊङुत इत्यूङ् (४।१।६६)। खट्वानामिति। अजाद्यतष्टाप् (४।१।४)। बहुराजानामिति। डाबुभाभ्यामन्यतरस्यामिति (४।१।१३) डाप्। कारीषगन्ध्यानामिति। कारीषगन्धेरपत्यमित्यण्। तस्याणिञोरनार्षयोरित्यादिना (४।१।७८) ष्यङादेशः। यङश्चाविति (४।१।७४) चाप्।

---

(K) सुपि चेति (७।३।१०३) दीर्घो यद्यपि परत्वथापीह न प्रवर्त्तते। सन्निपातपरिभाषाविरोधादिति भट्टोजिप्रभृतिमतेऽत्र नामीत्यनेनैव (६।४।३) दीर्घः।

## ५५। षट्चतुर्भ्यश्च।

पञ्चानामिति। नोपधाया (६।४।७) इति दीर्घः। नलोपः प्रातिपदिकान्तस्येति (८।२।७) नलोपः। षण्णामिति। झलाञ्जशोऽन्त इति (८।२।३९) षकारस्य डकारः। यरोऽनुनासिकेऽनुनासिको वेति डकारस्य णकारः। (८।४।४५, वा)। ष्टुना ष्टुरिति (८।४।४१) नकारस्य णकारः। ष्णान्ता षड़िति (१।१।२४) रेफान्ताया अपि संख्यायाः कस्मान्न विहिता षट्संज्ञेति? एवं सतीह चतुर्ग्रहणं न कर्त्तव्यं भवतीत्याह रेफान्ताया इत्यादि। गतार्थम्। बहुवचननिर्देशादित्यादि। यदि हि शब्दस्य प्रधानस्य ग्रहणं स्यात् तदेतरेतरयोगपक्षे षट्चतुर्भ्यामिति द्विवचनेन निर्देशं कुर्य्यात्। समाहारपक्षे त्वेकवचनेन षट्चतुर इति। बहुवचनेन तु निर्देशः कृतः। तस्माद्बहुवचननिर्देशात् संख्याप्रधानस्यैव षट्संज्ञकस्य चतुःशब्दस्य च ग्रहणम्। तस्य चेदं प्रयोजनम्। यत्र संख्यायाः प्राधान्यं तत्र तदन्तादपि यथा स्यात्। अतएव परमषण्णामित्यादिषूत्तरपदार्थप्रधानत्वात् तत्पुरुषस्य संख्यायाः प्राधान्यम्। तेन तदन्तादपि भवति। अर्थप्रधाने हि निर्देशेऽर्थग्रहणमेतद् भवति। अर्थाच्च शब्दद्वारेणैवामः परत्वं विज्ञायते। अतः केवलेभ्यः षट्चतुर्भ्यो भवति। तदन्ताच्च। तदन्तादपि शब्दद्वारेणैवामः परत्वं भवत्येव। उपसर्ज्जनीभूतायास्त्वित्यादि। बहुवचननिर्देशाद्धि संख्यार्थस्येदं ग्रहणम्। स चार्थो द्विविधः। प्रधानोऽप्रधानश्च। तत्र प्रधाने कार्य्यसंप्रत्ययाद् (प,१६) यत्र संख्यायाः प्राधान्यं तत्र तदन्तादपि भवति। यत्र तूपसर्जनीभूता संख्या तत्र न भवति प्रियषषामित्यादौ। अन्यपदार्थस्य ह्यत्र प्राधान्यम्। संख्यायास्त्वप्राधान्यम्। प्रियपञ्चामिति। अल्लोपे (६।४।१३४) कृते स्तोः श्चुना श्चुरिति (८।४।४०) श्चुत्वम्।

## ५६। श्रीग्रामण्योश्छन्दसि।

श्रीग्रामण्योरिति सम्बन्धलक्षणा षष्ठी। नित्यार्थं वचनमिति। श्रीशब्दस्य। नतु ग्रामणीशब्दस्य। तस्य तु प्राप्त्यर्थमेव। यथैव हि भाषायां नदीसंज्ञापक्षे ह्रस्वनद्यापो नुडिति (७।१।५४) सिध्यति तथा छन्दस्यपि। तस्मान्नित्यं यथा स्यादित्येवमर्थं वचनम्। असति ह्यस्मिन् यदा नदीसंज्ञा तदैव स्यान्नान्यदा।

यदा सूताश्चेत्यादि। एतेनैतद् दर्शयति यदा सूतशब्दस्य ग्रामणीशब्देन सह कर्मधारयः क्रियते तदा सूतग्रामिणीशब्दो न ह्रस्वान्तः। न नद्यन्तो नाप्यावन्त इति न प्राप्नोति। इष्यते च। ततो यथा स्यादित्येवमर्थं वचनम्। यदा तु सूतग्रामणीशब्दयोः सर्वो द्वन्द्वो विभाषयैकवद्भवतीत्येकवद्भावो (प,३५) द्वन्द्व स्तदा स नपुंसकमिति (२।४।१७) नपुंसकत्वाद् ह्रस्वो नपुंसके प्रातिपदिकस्येति (१।२।४७) ह्रस्वत्वं कृत्वा बहूनां सूतग्रामणीशब्दानामेकशेषश्च ततः षष्ठीबहुवचनं विधीयते। तदा ह्रस्वान्तत्वादेव सिद्धमिति नार्थ स्तदर्थेन वचनेन।

## ५७। गोः पादान्ते।

ऋक्पादान्ते वर्त्तमानादिति। छन्दसि ऋक्पाद एव सम्भवति। न श्लोकपाद इति ऋक्पादग्रहणम्।

## ५८। इदितो नुम् धातोः।

कुण्डिता हुण्डितेति। कुड़ि दाहे। हुड़ि संघाते। आभ्यां तृच्। इट्। ऋदुशन इत्यादिनानङ् (७।१।९४)। किमयं धातूपदेशावस्थायामेव नुम् विधीयत इत्याह कुण्डा हुण्डेत्यादि। यदि प्रत्यय उत्पन्ने नुम् स्यात् तदा प्रत्ययविधानवेलायां कुडिहुडयोरगुरुत्वात् क्तिन्नेव स्यात्। नत्वकारप्रत्ययः। स चेष्यते। तस्मात् तदर्थं धातूपदेशावस्थायामेव नुम् भवतीत्यवसीयते। कथं पुनर्धातूपदेशावस्थायां नुम् भवतीत्यवसीयते? यावतात्रोपदेशग्रहणन्नास्तीत्याह तथाहीत्यादि। धिन्विकृण्व्योर (३।१।८०) चेत्यप्रत्ययविधानकाले नुमनुषक्तयो र्ग्रहणं सनुम्कयोरेव प्रकृतत्वं यथा स्यात्। एवं सनुम्कयोः प्रकृतत्वम्भवति यद्युपदेशावस्थायामेव नुम् भवति। नान्यथा। तस्मान्नुमनुषक्तयो र्ग्रहणाज् ज्ञापकादवसीयते धातूपदेशावस्थायामेव नुम् भवतीति। तस्य ह्येतत् प्रयोजनम्। उपदेशावस्थायामेव नुम् यथा विज्ञायेतेति। नहि तन्नुमर्थम् प्रयुज्यते। नुम इदित्त्वादेव सिद्धत्वात्। ननुचेक्श्तिपौ धातुनिर्देश (३।३।१०८, वा) इतीगिति प्रत्ययेऽङ्गसंज्ञायां सत्यां नुमा भवितव्यम्। तत्र लक्षणवशादेव धिन्विकृण्व्योर चेति (३।१।८०) नुमनुषक्तयोर्ग्रहणम्। तत् कथमस्यार्थस्य ग्रहणं ज्ञापकम्? नैतदस्ति। नहि

धिन्विकृण्वोरचेत्ययमिका ( ३।१।८० ) निर्द्देशः। स हि रोगाख्यायांण्वुल् बहुलमिति ( ३।३।१०८ ) बहुलवचनेन सन्निधानात् क्वचिदेव भवति। न सर्व्वत्र। एवञ्च गुप्तिज्किद्भ्यः ( ३।१।५ ) सन्नित्येवमादयो निर्द्देशा उपपद्यन्ते। तस्माद्धिन्विकृण्वो (३।१।८०) रिति नायमिका निर्द्देशः। किं तर्हि ? उच्चारणार्थेनेकारेण यथेन्भिभवतिभ्या ( १।२।६ ) श्चेत्यत्रेकारेण निर्द्देशः। अन्यथाऽनिदिता (६।४।२४) मित्यादिनानुनासिकलोपः स्यात्। यथापि हि धिन्विकृण्वोरितीकानिर्द्देशः (३।१।८०) स्यादेवमपि यदि धातूपदेशावस्थायामेव नुम् भवतीत्ययमर्थो ज्ञापयितुं नाभीष्टः स्यात् ततो लाघवार्थमनित्यत्वादागमशासनस्य नुममकृत्वैव निर्द्देशं कुर्य्याद् यथा युवोरनाकावित्यत्र ( ७।१।१ ) छन्दकवद्भावपच उक्तम्। तस्मान् नुमनुषक्तयो र्ग्रहणं ज्ञापकमेव धातुग्रहणादप्यवसीयते। नुमुपदेशावस्थायामेव भवतीति दर्शयितुमाह धातुग्रहणञ्चेत्यादि। धातुसंज्ञाप्रवृत्तिकालो धातूपदेशकालः। तत्रैव नुम् भवतीत्येवमर्थमिह धातुग्रहणं क्रियते। तस्मादतोऽपि धातुग्रहणादुपदेशावस्थायामेव नुम् भवतीति ज्ञायते। न ह्यन्यद्धातुग्रहणस्य प्रयोजनमस्तीत्यभिप्रायः। ननुच भित्ताऽभैत्मोदित्यत्राधात्वोस्तासिसिचोरिदितोनुंम् मा भूदित्येवमर्थं धातुग्रहणं स्यादित्याह तासिसिचोरित्यादि। यदि तासिसिचोरिदित्कार्य्यं स्यात् तदेकारस्येत्संज्ञार्थमनुनासिकत्वं प्रतिज्ञायेत। नचास्ति प्रयोजनमिति न प्रतिज्ञायते। ततश्च निरनुनासिकोऽप्रतिलब्धेत्संज्ञक उच्चारणार्थ एवानयोरिकारः पठ्यत इति नुमः प्रसङ्ग एव नास्ति। तत् किं तन्निवृत्त्यर्थेन धातुग्रहणेन ? ननु चारंस्तामंस्त मन्ता संगन्तेत्यत्रानिदिता ( ६।४।२४ ) मित्यनुनासिकलोपो मा भूदित्येवमर्थं तासिसिचोरिदित्कार्य्यम्। तत् किमुच्यत इदित्कार्य्यं तासिसिचोर्नास्तीत्यत आह अरंस्तामंस्तेत्यादि। हनःसिजिति ( १।२।१४ ) कित्त्वविधावस्यैतत् प्रयोजनमाहतेत्रानुनासिकलोपो यथा स्यात्। यदि सिजन्तस्यानुनासिकलोपः सार्वधातुकङित्त्वमाश्रित्य स्याद् धनःसिजिति ( १।२।१४ ) कित्त्वमनर्थकं स्यात्। प्रयोजनाभावात्। नैतदस्ति। अस्ति ह्यन्यत् कित्वविधानस्य प्रयोजनम्। अनुदात्तोपदेश इत्यादिना ( ६।४।३८ ) सिच्यनुनासिकलोपो यथा स्यादिति। अनिदिता ( ६।४।२४ ) मित्यादिना सिजन्तस्य सार्वधातुके मा भूदिति। कः पुनरत्र विशेषः ? सार्व्वधातुके ङिति वा सिचि किति वा ? अयमस्ति विशेषः। समानाश्रये सिच्यनुनासिक-

लोपस्यासिद्धत्वादतो लोपो ( ६।४।४८ ) न भवति। सार्वधातुके तूपधालोपे तस्य व्याश्रयत्वेनासिद्धत्वाभावादतो लोपः स्यादेव। नैषोऽस्ति विशेषः। अतो लोपविधावनुदात्तोपदेशेत्यादेः ६।४।३७) सूत्रादुपदेशग्रहणमनुवर्त्तते। तेनार्धधातुकोपदेशे यदकारान्तमङ्गं तस्य लोपो विज्ञायते। नचाहतेत्यत्रोपदेशेऽकारान्तमेतत्। तस्माद्धनः सिजिति ( १।२।१४ ) कित्त्वविधानसामर्थ्यादरंस्तेत्यादौ नकारलोपो न भवति। तदेवं सिच इदित्कार्य्यं न भवतीति प्रतिपादितम्। इदानीं तासेरप्यनुनासिकलोपाभाव इदित्कार्य्यं न भवतीति प्रतिपादयितुमाह मन्तेत्यादि। नकारलोपो न भवतीति प्रकृतेन सम्बन्धः। उपधानकारस्यानिदिता ( ६।४।२४ ) मित्यादिना लोप उच्यते। न च मन्तेत्यत्र नकार उपधा भवति। टिलोपस्यासिद्धित्वात्। तस्मात् तासेरपीदित्कार्य्यं न विद्यते। ततश्च युक्तं तामिसिचोरिदित्कार्य्यं नास्तीति। अथ नुमागम इदित्कार्य्यं कस्मान्न भवति? अनिष्टत्वात्। नह्यनिष्टं कार्य्यं शास्त्रे परिकल्पयितुं युक्तम्। यदि तर्हि तासेर निरनुनासिक इकार उच्चारणार्थ एवं तर्हि स्यतासी लृलुटो ( ३।१।३३ ) रित्यत्र यदुक्तमिदित्करणमनुनासिकलोपप्रतिबन्धार्थं तत् कथं न विरुध्यते? यथा न विरुध्यते तथा तत्रैवोक्तम्। अथ भिदिरित्येवमादीनां नुम् कस्मान्न भवति? अस्ति ह्येषामपीकार इत्संज्ञक इत्याह इरितामित्यादि। भिदिरप्रभृतयो ह्यीरितो न त्विदितः। यस्मादिर उपसंख्यानमिति ( १।३।७, वा ) रेफेकारस्य समुदायस्य तेषामित् संज्ञा। न प्रत्येकमवयवस्य। तत्रेदिता मुच्यमानो नुम् कः प्रसङ्गो यदिरितां स्यात्? स्यादेतत्। उपदेशेऽजनुनासिक ( १।३।२ ) इतीत्संज्ञेकारस्य। हलन्त्यमिति (१।३।३) रेफस्य। तस्मादस्त्येव तेषामिदित्त्वमित्याह अवयवस्यापीति। गतार्थम्।

## ५९। शे मुचादीनाम्।

मुचादय स्तुदादौ पठ्यन्ते मुच्लृ मोचण इत्यतः प्रभृत्या गणपरिसमाप्तेः। मोक्तेति। त्वच्। एकाच (७।२।१०) इतीट् प्रतिषेधः। चोः कुरिति (८।२।३०) कुत्वम्। के पुनः तृम्फादय इति? एवं मन्यते। तृम्फादिषु तृफादयो निरनुषङ्गा अपि गणे पठ्यन्ते तृफ तृन्फ तृपावित्येवमादयः। तत्र यदि तेऽपि तृम्फादिग्रहणेन गृह्येरंस्तृफतीत्यादि रूपं नोपपद्यत इत्यत आह ये तत्र सानुषङ्गाः पठ्यन्ते ते तृम्फादय इति। आदिशब्दोऽयं प्रकारार्थः। प्रकारस्तु सादृश्यम्।

तस्मात् तृम्फतिना सानुषङ्गेण ये सदृशा स्तृम्फादिग्रहणेनोपलक्ष्यन्त इत्यभिप्रायः। सानुषङ्गा इति। नकारोऽनुषङ्गः। तेन सह वर्त्तन्त इति सानुषङ्गाः। यदि तर्हि ये सानुषङ्गाः पठ्यन्ते ते तृम्फादय स्तेषां नुमि कृते परस्यानुस्वारे कृते तस्य परसवर्णे द्वयोर्नकारमकारयोः श्रवणं प्राप्नोतीत्यत आह तेषामित्यादि। कृते हि नकारलोपे नुम् विधीयते। अतो न भवत्येष दोष इति भावः। अथ सोऽपि नुम् कस्मान्न लुप्यत इत्याह स चेत्यादि। यदि सोऽपि लुप्येत नुमो विधानमनर्थकमेव स्यादिति मन्यते। उपसंख्यानशब्दस्य प्रतिपादनमर्थः। तत्रेदं प्रतिपादनम्। धातोरित्यनुवर्त्तते। श इति योगविभागः क्रियते। तेन तृम्फादीनाञ्च नुम् भविष्यति। मुचादीनामित्येवमनर्थकं स्यात्। श इत्यनेन सिद्धत्वात्। नानर्थकम्। श इत्यस्यासर्व्वविषयत्वज्ञापनार्थत्वात्। एवं ह्यतिप्रसङ्गो न भवति। कथं मुचादिष्वेव तृम्फादयो न पठिताः? येऽत्र निरनुषङ्गाः पठ्यन्ते तेषां नुमागमो मा भूदित्येवमर्थम्।

## ६०। मस्जिनशो र्झलि।

मङ्क्तेति। टुमस्जो शुद्धौ। तृच्। पूर्व्ववदिड्भावः। कुत्वञ्च। अन्त्याज्जकारात् पूर्वो नुम्। स्कोरित्यादिना (८।२।२९) सकारलोपः। अनुस्वारपरसवर्णौ। नंष्टेति। रधादिभ्यश्चेति (७।२।४५) यदेण् नास्ति तदायं नुम्। व्रश्चादिसूत्रेण (८।२।३६) षत्वम्। ष्टुत्वम्। इट्पक्षे झलादित्वाभावान्नुम् नास्ति नशितेति। मज्जनं नशनमिति। ल्युट्। झलाञ्जश् झशीति (८।४।५३) जश्त्वं सकारस्य दकारः। तस्य चुत्वं जकारः। मस्जेरित्यादि। यदि मस्जे रन्त्यादचः परो नुम् स्यादसंयोगादित्वात् सलोपो न प्राप्नोति। अनुपधत्वान्न नलोपः। स चेष्यते। अन्यथा मग्नो मग्नवानिति न सिध्येत्। तस्मादन्त्यात् पूर्वमाचार्य्या मस्जेर् नुममिच्छन्ति। कथं पुनरिष्यमाणोऽप्ययमर्थो लभ्यते? नशेरल्पाच्तरस्य पूर्वनिपातलक्षणव्यभिचारचिह्नात्। स हि लक्षणनिरपेक्षतां सूचयन् मिदचोऽन्त्यात पर (१।१।४७) इत्येतदपीह लक्षणं नापेक्षत इति सूचयति। तस्मिंश्चानपेक्षिते लक्ष्यानुरोधाद् यत्र मस्जे र्नुमि कृते सतीष्टं सिध्यति तत्रैव विधीयते। तेन मस्जेरन्त्यात् पूर्व्वं नुम् सिद्धो भवति। मग्न इति। ओदितश्चेति (८।२।४४) निष्ठानत्वम्।

## ६१। रधिजभोरचि।

रन्धयतीति। रध हिंसासंराद्ध्योः। हेतुमण्णिच्। रन्धक इति। ण्वुल्। साधु रन्धीति। सुप्यजातौ णिनि स्ताच्छील्ये (३।२।७८) इति णिनिः। रन्धं रन्धमिति। आभीक्ष्ण्ये णमुल् (३।४।२२)। आभीक्ष्ण्ये द्वे भवत इति (८।१।१२, वा) द्विर्वचनम्। रन्धो वर्त्तत इति। भावे घञ्। अथ रन्धयतीत्यादिषु परत्वादत उपधाया (७।२।११६) इति वृद्धिः प्राप्नोति। सा कस्मान्न भवतीत्यत आह परापि सतीत्यादि। नित्यत्वं पुनः कृताकृतप्रसङ्गित्वा- न्नुमः। स हि कृतायां वृद्धौ प्राप्नोत्यकृतायामपीति नित्यः। वृद्धि स्तु नुमि कृते न प्राप्नोत्यकारस्यानुपधत्वादित्यनित्या। रद्धेति। झषस्तथोर्धोऽध (८।२।४०) इति तकारस्य धकारः। धातुधकारस्य जश्त्वं दकारः।

## ६२। नेट्यलिटि रधेः।

पूर्वेण प्राप्तस्य नुमः प्रतिषेध उच्यते। रधितेत्यादि। रधादिभ्यश्चेतीट् (७।२।४५)। ररन्धिव ररन्धिमेति। क्रादिनियमादिट् (७।२।१३)। परस्मैपदाना- मित्यादिना वस्मसोर्वमादेशौ (३।४।८२)। ननु रधिरयमसंयोगान्तः पठ्यते। तत्रासंयोगाल्लिट् किदिति (१।२।५) क्ङित्वेऽनिदितामिति (६।४।२४) न- लोपः प्राप्नोति। स कस्मान्न भवतीत्याह नुमि कृत इत्यादि। उपदेशावस्थाया- मेव नुम् भवतीत्युक्तमेतत्। तेनोपदेशावस्थायामेव नुमि कृते संयोगान्तत्वं जातमिति कित्त्वन्नास्तीति न भवति नलोपः। अथ क्वसौ कथं भवितव्यमिति? किं ररध्वानिति भवितव्यमुत रेधिवानिति पृच्छति। अपरआह रेधिवानिति। लिटः क्वसुश्चेति (७।२।१०७) क्वसुः। द्विर्वचनम्। अत एकहल्मध्यइत्यादिने- (६।४।१२०) त्वाभ्यासलोपौ। वस्वेकाजाद्घसा (७।२।६७) मितीट्। नुम्। सान्तमहतः संयोगस्येति (६।४।१०) दीर्घः। कथमित्यादि। एवम्मन्यते। यदेड् भवति तस्मिंश्च नुमा भवितव्यम्। नुमि च सत्येकहल्मध्यता नास्तीत्येत्वे- भ्यासलोपयोः पुनः प्रत्यापत्त्या भवितव्यम्। ततश्च कृतद्विर्वचन एकाज् न भवतीतीटा न भवितव्यम्। तस्माद्ररध्वानिति युक्तं भवितुमिति। इतरस्तु कृतस्यापि नुमोऽत्र लोपेन भवितव्यम्। ततश्चैकहल्मध्यताभावो नोपपद्यते। कुतः पुनरेत्वाभ्यासलोपयोः प्रत्यापत्तिरित्याह एत्वाभ्यासलोपयोः कृतयो-

रित्यादि। कृतद्विर्वचनानामेकाचां क्रसोरिड् विधीयते। ततो नुमागम इति। अचि तद्विधानात् तस्यौपदेशिककित्त्वाश्रयो लोप इत्यौपदेशिकग्रहणान्नुमि कृते संयोगान्तत्वादातिदेशिकस्य कित्त्वस्यासम्भवात्। अर्थेत्यादि। इटि नेटीतुच्यमाने (७।२।४) पूर्वेण सिद्धे सति नियमार्थमेतद् भविष्यति लिट्येवेड़ादौ। नान्यस्मिन्निड़ादाविति। तेन ररन्धिव ररन्धिमेत्यादौ भविष्यति। न रधितेत्येवमादौ। तस्मादिटि लिटीति कस्मान्नोक्तम्? एवं सतीष्टं सिध्यति। लघु च सूत्रं भवतीति भावः। लिट्येवेति नियमस्वरूपं दर्शयति। नान्यत्रेत्यनेनापि तस्य व्यवच्छेद्यम्। यतो हेतोर्नियमो न क्रियते तं दर्शयितुमाह विपरीतमित्यादि। इट्येव लिटीति विपरीतनियमस्य स्वरूपकथनम्। नान्यत्रेत्यनेनापि तद्व्यवच्छेद्यं दर्शयति। कस्माद्विपरीतमवधारणं नेष्यत इत्याह तथाहीत्यादि। इट्येव लिटीत्यस्य नियमस्यानिड़ादिर्लिड् व्यावर्त्त्य इतीड़ादावेव लिटि भवति। नानिड़ादाविति। ततश्चानिड़ादित्वाद्ररम्भेत्यत्र नुम् न स्यात्। रधितेत्यत्र पूर्वेण स्यादेव। नियमेनाव्यावर्त्तित्वात्। तस्माद् तद्दोषपरिजिहीर्षया नियमो न क्रियते।

## ६३। रभेरशब्लिटोः।

आरिभ इति। रभ राभस्ये। लिट्। अनुदात्तत्वादात्मनेपदम्। लिटस्तझयोरेशिरेजित्येश् (३।४।८१)। पूर्व्ववदेत्वाभ्यासलोपौ।

## ६४। लभेश्च।

पृथग् योगकरण मुत्तरार्थमिति। उत्तरसूत्रेण लभेरेव कार्य्यं यथा स्याद्रभेर्मा भूदिति। यदि रभिलभ्योरशब्लिटोरित्येको योगः क्रियते ततो रभेरित्यनुवृत्तिरुत्तरत्र स्यात्। अतश्च तस्याप्युत्तरत्र कार्य्यं प्रसज्येत।

## ६५। आङो यि।

यकारादौ प्रत्यय इति। अनेन यीत्यस्याः सप्तम्या विषयसप्तमीत्वं दर्शयन् यकारादौ प्रत्यये विषयभूतेऽनुत्पन्न एव नुम् भवतीति दर्शयति। प्रागित्यादिना विषयसप्तम्यां सत्यां यदिष्टं सम्पद्यते तदाचष्टे। परसप्तम्यां हि पूर्वं प्रत्ययेन भवितव्यं पश्चान्नुमा। ततश्चादुपधादिलि (३।१।९८) यत् प्रसज्येत। विषयसप्तम्यान्तु

प्रागुत्पन्नेन नुमादुपधत्वस्य विहतत्वाट्टहलोर्णदिति ( ३।१।१२४ ) ण्यदेव भवति । कः पुनर्णति यति वा विशेषो यावतोभयत्रापि तदेव रूपमिति ? ण्यत्प्रत्ययेऽपि वृद्ध्या न भवितव्यम् । तथाच प्रागुक्तं परापि सती वृद्धि र्नित्यत्वान्नुमा बाध्यत इत्यत आह तत्रेत्यादि । तत्र ण्यति सति तित्स्वरितत्वाद् ( ६।१।१८५ ) गतिकारकोपपदात् कृदिति ( ६।२।१८३ ) प्रकृतिस्वरः । तेनालभ्य इत्युदाहरण मन्त्यस्वरितं भवति । यति तु यतोऽनाव ( ६।१।२१३ ) इत्याद्युदात्तत्वे सति प्रकृतिवद्भावेनाप्युदात्तत्वमित्यस्ति विशेषः । लभ्यमिति । यदन्तमेतत् । एव मालभ्य इत्येतदपि । आलभ्यत इति भावे कर्मणि वा लकारः । अनुषङ्गलोपः क्रियत इति । अनिदितामित्यादिना ( ६।४।२४ ) ।

## ६६ । उपात् प्रशंसायाम् ।

प्रशंसायामिति । उपलम्भाइति स्तुतौ । अतिप्रशंस्य इत्यर्थः । उपलभ्यमिति । प्राशस्त्यमित्यर्थः ।

## ६७ । उपसर्गात् खल्घञोः ।

ईषत्प्रलम्भ इति । ईषद् दुःसुष्वित्यादिना (३।३।१२६) खल् । दुष्प्रलम्भ इति । इदुदुपधस्येत्यादिना ( ८।३।४१ ) षत्वम् । विप्रलम्भइति । भावे घञ् । ननु च लभेश्चेत्यनेन ( ७।१।६४ ) नुम् सिद्धः । तत् किमर्थोऽयमारम्भ इत्याह सिद्ध इत्यादि । उपसर्गादेवेत्यादिना नियममस्य स्वरूपं दर्शयति । अन्यत्र न भवतीति तदयवच्छेद्यम् । उपसर्गात् खल्घञोरेवेत्येष तु विपरीतनियमोऽत्र न सम्भावनीयः । गृधिवञ्च्योः प्रलम्भन इति ( १।३।६९ ) निर्देशात् ॥

## ६८ । न सुदुर्भ्यां केवलाभ्याम् ।

उपसृष्टस्येति । उपसर्गेन सम्बद्धस्येत्यर्थः । सुलाभ इति । सुशब्दोऽयमाधिक्यार्थः । नाकृच्छ्रार्थः । यथा सुषिक्तं नाम किं तवात्रेति । दुर्लाभ इति । दुःशब्दो निन्दार्थः । न कृच्छ्रार्थः । यथा दुर्ब्राह्मण इति । तेन घञेव भवति । न खल् । सुदुर्भ्यामिति तृतीयां मत्वा केवलग्रहणं क्रियत इति । सुदुर्भ्यामिति तृतीयाया मभ्युपेतायां सुदुर्भ्यामुपसृष्टस्य लभेर्नुम् न भवतीत्येषोऽर्थः सम्पद्यते । व्यवहिते-

नाप्युपसृष्टो भवतेव। तत्रामति केवलग्रहणे सुप्रलम्भो दुष्प्रलम्भ इत्यत्रापि प्रतिषेधः स्यात्। तस्मात् तृतीयायामभ्युपेतायां केवलग्रहणं क्रियते। अथ पञ्चम्यां केवलग्रहणं कस्मान्न क्रियेतेति प्रश्नावसरत आह पञ्चम्यां होत्यादि। पञ्चम्यां ह्यस्यां निर्दिष्टग्रहणस्यानन्तर्य्यार्थत्वादनन्तरस्येव प्रतिषेधेन भवितव्यम्। इहच प्रशब्देन व्यवधानमतः प्रसङ्ग एव नास्ति। तत् किं केवलग्रहणेन ? यद्येवं न कर्त्तव्यमेव केवलग्रहणम्। पञ्चमीमेनां प्रतिज्ञास्याम इति। नैतदस्ति। सुप्रलम्भो दुष्प्रलम्भ इति प्रत्युदाहरणद्वयमभिप्रेतैतदुक्तम्। पञ्चम्यां हि व्यवहितत्वादेवाप्रसङ्ग इति। अतिसुलम्भ इत्यत्र यदाभिशब्दोऽप्युपसर्गस्तदा ह्यसति केवलग्रहणे प्रतिषेधः प्रसज्येत। अव्यवधानात्। तस्मात् सर्वथा केवलग्रहणस्य कर्त्तव्यत्वात् क्रमव्यतिक्रमे च प्रयोजनाभावात् तृतीयैवेषा युक्ता प्रतिज्ञातुम्। अतिसुलभमित्यत्रातिनोपसर्गेण सुशब्देन च लभिरुपसृष्टः। तस्मात् प्रतिषेधेन भवितव्यमिति कस्यचिद् भ्रान्तिः स्यात्। अतस्तान्निराकर्त्तुमाह अतिसुलभमित्यत्रेत्यादि। कर्मप्रवचनीयत्वं पुनरतिशब्दस्यातिरतिक्रमणे चेति ( १।४।९५ ) कर्मप्रवचनीयसंज्ञाविधानात्। यस्य कर्मप्रवचनीयसंज्ञा तस्योपसर्गसंज्ञा नास्ति। एकसंज्ञाधिकारात्। कर्मप्रवचनीयसंज्ञयोपसर्गसंज्ञाया बाधितत्वात्। कथं पुनः कर्मप्रवचनीयस्य हि तस्यापि केवलत्वमुपपद्यते ? एवं मन्यते। केवलग्रहणात् स्वशब्दोपात्तादन्यत् तुल्यजातीयमेव व्यवच्छेद्यम्। नतु विजातीयम्। तथाहि केवलाभ्यां देवदत्तयज्ञदत्ताभ्यां प्रवेष्टव्य मित्युक्तेऽन्येनैव तुल्यजातीयेन विष्णुमित्रादिना सहितौ न तौ प्रविशतः। परस्परेण विजातीयेन मर्कटादिना सहितौ प्रविशत एव। अतएवान्योपसर्गरहिताभ्यामित्यनेन तुल्यजातीयनिवृत्त्यर्थता केवलग्रहणस्य दर्शिता। यदि तु सर्वस्य तुल्यजातीयस्य विजातीयस्यापि केवलग्रहणेन निवृत्तिः कर्त्तुं शक्यते तदोपसर्गग्रहणमनर्थकं स्यात्। अन्यरहिताभ्यामितेवं ब्रूयात्। तस्माद्विजातीयेन सहितावपि तौ केवलावेवेत्यतिसुलभमित्यत्र कर्मप्रवचनीयसहितेनापि सुशब्देनोपसृष्टस्य भवत्येव प्रतिषेधः। यत्र तर्हि पूजातिक्रमणाभ्यामन्यत्र वृत्तिरतिशब्दस्य तत्र कर्मप्रवचनीयसंज्ञा न भवति। तदा कथमित्याह यदा त्वित्यादि। पञ्चमीनिर्देशेऽप्येवमर्थं केवलग्रहणं कर्त्तव्यमिति। अन्यथा ह्यत्र व्यवधानाभावात् प्रतिषेधः प्रसज्येतेत्यभिप्रायः। ननु च प्रसुलम्भ इत्येवमर्थं केवलग्रहणं कर्त्तव्यम्। नैतदस्ति। उक्तं हि भाष्ये नैषोऽस्ति प्रयोग इति।

## ६९ । विभाषा चिण्णमुलोः ।

अलाभीति । लुङ् । चिण् भावकर्मणोरिति ( ३।१।६६ ) चिण् । चिणो लुगिति ( ६।४।१०४ ) तकारस्य लुक् । अनुपसृष्टस्येति । उपसर्गेणासम्बद्धस्येत्यर्थः ।

## ७० । उगिदचां सर्वनामस्थानेऽधातोः ।

उगिति प्रत्याहारग्रहणम् । उक् इत् येषां तान्युगिन्ति । अङ्गविशेषणञ्चैतत् । अत आह उगितामङ्गानामिति । अजिति प्रत्याहारस्य ग्रहणमेवेदं वा स्यादञ्चतेर्वा लुप्तनकारस्य ? तत्र यदि प्रत्याहारग्रहणं स्यान्नपुंसकस्य झलच इत्यत्र ( ७।१।७२ ) सूत्रे पुनरज्ग्रहणं न कुर्य्यात् । तर्हि प्रत्याहारग्रहणम् । नाञ्चेः । झला साहचर्य्यात् । तस्मादञ्चतेरिदं ग्रहणमित्यालोच्याह अञ्चतेश्चेत्यादि । भवानिति । अत्वसन्तस्य चाधातोरिति ( ६।४।१४ ) दीर्घः । श्रेयानिति । प्रशस्यशब्दाद्द्विवचनविभज्योपपदे तरबीयसुना-( ५।३।५७ ) वितीयसुन् । प्रशस्यस्य श्र ( ५।३।६० ) इति आदेशः । प्रकृत्यैकाजिति ( ६।४।१६३ ) प्रकृतिवद्भावाट्टिलोपाभावः । आद् गुणः ( ६।१।८८ ) । सान्तमहतः संयोगस्येति दीर्घः ( ६।४।१० ) । ननु चात्र नाङ्गमुगित् । किं तर्हि ? प्रत्ययः । नैतदस्ति । अङ्गमप्युगिदेव । कथम् ? अवयवावयवेनापि समुदायस्य सम्बन्धो भवत्येव । यथा देवदत्तस्याङ्गुलिरित्यत्र देवदत्तस्यावयवस्य हस्तस्य योऽवयवोऽङ्गुलि स्तेन देवदत्तस्य सम्बन्धः । तस्मादिहापि प्रत्ययस्यावयवो य उक् इत्संज्ञक स्तेनाङ्गस्यापि सम्बन्धोऽ स्तीत्यङ्गमप्युगिदेव । प्राङिति । प्राञ्चतीति ऋत्विगादि सूत्रेण ( ३।२।५९ ) क्विन् । नुम्हल्ङ्यादिसंयोगान्त-( ६।१।६८ ) लोपौ ( ८।२।२३ ) । क्विन्प्रत्ययस्य कुरिति ( ८।२।६२ ) कुत्वं नकारस्य ङकारः । प्राञ्चौ प्राञ्च इति चुत्वन्नकारस्य ञकारः । अथाञ्चतिग्रहणं किमर्थम् ? यावतोगित्त्वादेव तस्य नुम् सिद्धइत्यत आह अञ्चतिग्रहणमित्यादि । उखास्रत् पर्णध्वदिति । स्रन्सु ध्वन्सु अधःपतने । उखायां स्रंसते पर्णानि ध्वंसते । क्विप् चेति ( ३।२।७६ ) क्विप् । नलोपः । वसुस्रन्सुध्वंस्वनुडुहान्द ( ८।२।७२ ) इति सकारस्य दकारः । तस्य वाऽवसाने ( ८।४।५६ ) चर्त्वं तकारः । अधातोरिति किमिति । अञ्चतिग्रहणादेव नियमार्थाद्

धातो र्न भवतीत्यभिप्रायः। अधातोरिति नायं प्रसज्यप्रतिषेधः। किं तर्हि? पर्य्युदास इति मन्यमान आह अधातुभूतपूर्व्वस्यापि यथा स्यादिति पूर्वपक्ष-वादिनाऽधातोरिति प्रसज्यप्रतिषेधोऽयमिति मन्यमानेन चोदितम्। सिद्धान्त-वादिना पर्य्युदासेन परिहृतम्। गोमत्यतीति। गोमच्छब्दात् सुप आत्मनः क्यच् (३।१।८)। गोमत्यतेरप्रत्यय इति। अप्रावी प्रत्ययोऽप्रत्ययः। स पुनः क्विप्। अतो लोप इत्यकारलोपः (६।४।४८)। क्यस्य विभाषेति (६।४।५०) यकारस्य। नुम्। अत्वसन्तस्य चाधातोरिति (६।४।१४) दीर्घः। गोमान्। कस्मात् पुनरसत्यधातुग्रहणेऽत्र न सिध्यतीत्यत आह अत्र हीत्यादि। असत्यधातुग्रहणेऽत्वतिग्रहणान्नियमाद् यथोखास्रदितरादौ न भवति तथात्रापि न स्यात्। भवति ह्ययमपि धातुः। सत्यपि धातुत्वे क्विबन्तत्वे क्विबन्ता धातुत्वं न जहतीति कृत्वा। तस्मादधातुग्रहणं क्रियते योऽप्यव-स्थान्तरेऽधातुरासीत् तस्य ग्रहणं यथा स्यात्। अथ गोमानिति कथमत्र दीर्घत्वम्? कथञ्च न स्यात्? अधातोरिति प्रतिषेधात्। नैतदस्ति। अत्र ह्यानन्तर्य्यादसन्तस्यैव धातोः प्रतिषेधो नात्वन्तस्य। अत्र ह्यधातोरिति किम्? पिण्डं ग्रसत इति पिण्डग्रः। चर्म्म वस्त इति चर्म्मव इत्यसन्तस्यैव प्रत्युदा-हरणमुपन्यस्तम्। नात्वन्तस्य। अथवा चकारस्तत्र क्रियते। स चानुक्त-समुच्चयार्थः। तेन क्वचिद्धातोरपीति भविष्यति।

## ७१। युजेरसमासे।

युङ् युञ्जौ युञ्ज इति। पूर्व्ववत् क्विन्नादि। अश्वयुगिति। अश्वं युनक्तीति सत्सूद्विषेत्यादिना (३।२।६१) क्विप्। कथं युजेर्नुम्युच्यमाने समासेऽपि स्यात्? तदन्तविधिना। कथमत्र तदन्तविधिः? एतदेव ज्ञापकमस्तीह तदन्त-विधिरिति। उक्तञ्चाङ्गाधिकारे तस्य तदुत्तरपदस्येति वचनात्। युजेरित्यादि। इकारेण निर्देशो ह्येवमर्थः क्रियते। यस्य युजेरिकारोऽनुबन्ध स्तस्य ग्रहणं यथा स्यात्। अन्यस्य मा भूदिति। तेन युज समाधावित्यस्य ग्रहणन्न भवति। न हि तस्येकारोऽनुबन्धोऽस्ति। युजमिति। सम्पदादित्वात् क्विप्। आपन्ना इति। प्राप्ता इत्यर्थः।

## ७२। नपुंसकस्य झलचः।

पयांसि श्रेयांसीति। सान्तमहतः संयोगस्येति (६।४।१०) दीर्घः। बहुपुरि बहुधुरीति। बह्व्यः पुरो बह्व्यो धुरो येषामिति बहुव्रीहिः। ऋक्पूरब्धूःपथामानक्षे (५।४।७४) इत्यकारः समासान्तो न भवति। समासान्तविधिरनित्य (प,८५) इति कृत्वा। विमलदिवीति। विमला द्यौ येषामिति तानि। विमलदिवि वकारो दन्त्यौष्ठ्यो झल् न भवति। झलः पूर्व्वंण पठितत्वात्। चत्वारीति। चतुरनुडुहोरामुदात्त (७।१।९८) इत्याम्। इह यदुगिन्नपुंसकं झलन्तं तस्यानेन नुमि कृत उगिदचामित्यादिना (७।१।७०) द्वितीयो नुम् प्राप्नोति। सम्भवति हि विधानकालेऽनेकस्य परत्वं यथा पचतीत्यत्र लकारविकरणयो रेकस्माद्धातोरिति। अत्र तुदन्ति नुदन्तीत्यत्र परस्य नुमोऽनुस्वारे कृते तस्य परसवर्णे च द्वयोर्नकारयोः श्रवणमापद्येत। भवतु नाम। हल्परस्य व्यञ्जनस्यैकस्यानेकस्य श्रुतिं प्रति नास्ति विशेषः शक्यते वक्तुम्। इह त्वस्ति विशेषः। कुर्वन्ति कृषन्तीत्यत्र परस्य नुमोऽनुस्वारसवर्णयोः कृतयोः पूर्वस्याझल्परत्वादनुस्वारपरसवर्णौ न स्त इत्यट्कुप्वादिना (८।४।२) णत्वं प्राप्नोति। एकस्मिंस्तु नुमि तस्यानुस्वारे परसवर्णे कृते न भवति णत्वप्रसङ्गः। परसवर्णस्यासिद्धत्वात्। तस्मादुगिल्लक्षणस्य नुमः प्रतिषेधो वक्तव्य इत्याह उगितो झलन्तस्येत्यादि। झलन्तलक्षणस्य नुमोऽवकाशो यदनुगिन्नपुंसकं सर्पींषीति। उगिल्लक्षणस्यावकाशो यदुगिदनपुंसकं गोमान् यवमानिति। यदुगिज्झलन्तं नपुंसकं तस्योभयप्रसङ्गे सति परत्वादनेनैव नुमा भवितव्यम्। तस्मिन् सति पुनरुगिल्लक्षणो नुम् न भवति। सकृद्गतौ विप्रतिषेधे यद् बाधितं तद् बाधितमेवेति (प,४१) कृत्वा। भूयांसीति। बहुशब्दादीयसुन्। बहोर्लोप (६।४।१५८) इतीकारस्य लोपो बहोश्च भूभावः। कुर्व्वन्ति कृषन्तीति। शत्रन्ताज्जश्शसोः शिरिति (७।१।२०) शिभावः। बहूर्जीत्यादि। बहूर्जीत्यस्मिन् नुमः प्रतिषेधो वक्तव्यो व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्। विभाषा चित्समुलोरिति (७।१।६९) विभाषाग्रहणमनुवर्त्तते। सा च व्यवस्थितविभाषा। तेन बहूर्जीत्यत्र न भवति। उर्ज बलप्राणधारणयोरित्येतस्माद् भ्राजभासेत्यादिना (७।२।१७७) क्विप्। बह्व ऊर्जो बलानि येषां तानि बहूर्जि ब्राह्मणकुलानि। अन्त्यात् पूर्वमिति। अन्त्यो जकार स्तस्मात् पूर्वं नुममिच्छन्ति केचिद् बहूर्न्जीति।

## ७३ । इकोऽचि विभक्तौ ।

विभक्ताविति वचनात् सर्वनामस्थान इति निवृत्तम्। अचीति किमिति? एवं मन्यते। त्रपुभ्यां त्रपुभिरित्यत्र व्यञ्जनादौ मा भूदित्येवमर्थमजग्रहणं क्रियते। एतच्चाप्रयोजनम्। अस्त्वत्र नुम्। नलोपः प्रातिपदिकान्तस्येति (८।२।७) लोपो भविष्यति। इतरो विदिताभिप्राय आहोत्तरार्थमिति। अस्थिदधिसक्थ्यक्ष्णामनङुदात्त (७।१।७५) इत्यजादौ यथा स्यात्। इह मा भूदस्थिभ्यामस्थिभिरिति। एवमर्थमजग्रहणम्। इहास्य कारणस्य यत् प्रयोजनं तन्मया पृष्टमतस्तदेव कथ्यतामित्यभिप्रायेणाह यद्येवमित्यादि। इतरो विदिताभिप्राय आह इह तु कारणमित्यादि। त्रपुशब्दात् सम्बोधने प्रथमैकवचने कृते यद्यचीति नोच्येत तदात्रापि नुम् स्यात्। तदत्र नुम् मा भूदित्येवमर्थमचीत्युच्यते। स्यादेतत्। भवतु नाम नुम्। तस्य स्वमोर्नपुंसकादिति सोर्लुकि कृते नलोपः प्रातिपदिकान्तस्येति (८।२।७) नलोपो भविष्यतीत्याह न ङिसम्बुद्ध्यो-(८।२।८) रित्यादि। ननु चेत्यादि। एवकारोऽत्र भिन्नक्रमः प्रतिषेधानन्तरं द्रष्टव्यः। स चौपचारिकमपि विभक्तेरस्तित्वं न लुमताङ्गस्येति (१।१।६३) प्रतिषेधान्नास्तीति प्रतिपादयति। द्विविधं हि विभक्तेरस्तित्वम्। मुख्यमौपचारिकञ्च। तत्र मुख्यं श्रूयमाणाया विभक्तेर्भवति। इतरत् तु लुप्ताया अपि। कार्य्यस्यास्तित्वाद् विभक्तेरप्युपचारेणास्तित्वमुच्यते यथाऽस्त्यतीतं कर्म्मेति। तत्रातीतेन कर्म्मणा यदाहितं फलदानसामर्थ्यं तस्यास्तित्वात् तत् कर्म्मास्तीत्युच्यते। तदिह स्वमोर्नपुंसकादिति विभक्तेः (७।१।२३) लुप्तत्वान्मुख्यं तावदस्तित्वं नास्ति। न लुमताङ्गस्येति (१।१।६३) प्रत्ययलक्षणप्रतिषेधादौपचारिकमपि नास्त्येव। तत्र विभक्तावुच्यमानो नुमः कः प्रसङ्गो यः सर्वथैवासत्यां विभक्तौ हे त्रपवित्यत्र स्यात्? नैव प्राप्नोति। तस्मान्नैतदजग्रहणस्य प्रयोजनम्। एतदेवेत्यादि। यदि ह्यत्र प्रत्ययलोपलक्षणप्रतिषेधः स्यादजग्रहणमनर्थकं स्यात्। कृतञ्च। तस्मादेतदेवाजग्रहणं ज्ञापयति प्रत्ययलोपलक्षणप्रतिषेधोऽत्रेगन्ते नपुंसके सम्बुद्धिविषये नास्तीति। तथाचेत्यादिना ज्ञापकस्य प्रयोजनमाह सम्बुद्धिविषयो गुणः सम्बुद्धौ चेति (७।३।१०६) वर्त्तमाने यो ह्रस्वस्य गुण (७।३।१०८) इत्यनेन गुणः स वेदितव्यः। तौम्बुरवं चूर्णमिति। तुम्बुरुणो विकारः। ओरञ् (४।२।७१)। ओर्गुणः (६।४।१४६)।

क्वचिदिकोऽतिव्यञ्जने मा भूदस्तु लोपः स्वरः कथमित्यादिकं श्लोकद्वयं पठ्यते। इकोऽचि विभक्तावित्यत्राचीति किमर्थमुच्यते? नेको विभक्तावित्येवोच्येत? प्रयोजनमाह व्यञ्जने मा भूदिति। प्रकरणान्नुमिति विज्ञायते। त्रपुभ्यां त्रपुभिरित्यत्र व्यञ्जनादौ मा भूदित्येवमर्थमजग्रहणं क्रियते। यद्येवं नार्थ स्तेन। व्यञ्जनादौ नुमस्तु। न च तस्य श्रवणं प्रसज्येत। यस्मान्नलोपः प्रातिपदिकान्तस्येति (८।२।७) नल्लोपो भविष्यति। पञ्चत्रपुभ्यां पञ्चत्रपुभिरित्यत्र कथं स्वरः? पञ्चभिस्त्रपुभिः क्रीताभ्यां क्रीतैर्वेति तद्धितार्थोत्तरपदसमाहारे (२।१।५१) चेति तद्धितार्थे समासः। संख्यापूर्वो द्विगु (२।१।५२) रिति द्विगुसंज्ञा। आर्हादगोपुच्छेत्यादिना (५।१।१९) ठक्। तस्याध्यर्द्धपूर्वद्विगो र्लुगसंज्ञाया (५।१।२८) मिति लुक्। ततो विभक्तौ नुम्। नकारलोपः। तस्य नलोपः सुप्स्वरसंज्ञातुग्विधिषु (८।२।२) कृतेत्यसिद्धत्वादिगन्तकालकपालभगाल-(६।२।२९) शरावेषु द्विगावित्यनेन पूर्वपदप्रकृतिस्वरो न प्राप्नोति। अनिगन्तत्वात्। न्रः: संख्याया (फिट् २।५) इत्याद्युदात्तत्वं स्यात्। न्र इति नकाररेफान्तयो र्ग्रहणमिति। स्वरो वायित्यादि। वैशब्दोऽचमायाम्। पञ्चत्रपुण इत्यत्र श्रूयमाणे नुमि स्वरो भवति। लुप्ते किं न भविष्यति? भविष्यत्यत्रेवेत्यर्थः। किं पुनः कारणं श्रूयमाणे नुमि स्वरो भवति? स्वरविधौ व्यञ्जनस्याविद्यमानत्वात्। अथवा समुदायभक्तो ह्यसौ नुम् नोत्सहतेऽवयवस्य त्रपुशब्दस्येगन्ततां विहन्तुम्। इह तर्हि रायमतिक्रान्ताभ्यां ब्राह्मणकुलाभ्यां मतिराभ्यामिति कुगतिप्रादय (२।१।१८) इति समासे कृते ह्रस्वो नपुंसके प्रातिपदिकस्येति (१।२।४७) ह्रस्वत्वे च कृते यदि व्यञ्जनादौ नुम् स्यात् तदा तस्य लोपे कृते नलोप स्यासिद्धत्वाद्रायो हलीति (७।२।८५) हलादावुच्यमानमात्वं न प्राप्नोति। नुमा व्यवधानात्। समुदायभक्तोऽसौ समुदायमेव न व्यवदध्यात्। अवयवं तु व्यवदधात्येव। तथा प्रियास्तिस्रोऽनयो र्ब्राह्मणकुलयोरिति बहुव्रीहौ कृते प्रियतिसृभ्यामिति। यदि व्यञ्जनादौ नुम् स्यात् तदा त्रिचतुरोः स्त्रियां तिसृचतसृत्येनेन (७।२।९९) तिस्रादेशो न प्राप्नोति। समुदायभक्तेन नुमा त्रिशब्दस्य व्यवधानात्। नैतदस्ति। रायात्वं तिस्रभावश्च व्यवधानान्नुमापि हि भवतीति शेषः। व्यवधानादिति ल्यब्लोपे पञ्चमी यथा प्रासादात् प्रेक्षत इति। प्रासादमारुह्येत्यर्थः। तदयमर्थः। नुमा व्यवधानमपि प्राप्य राय आत्वं तिसृभावश्च भवतीति। कस्मात् पुनर्व्यवधाने तौ भवतः? रायो हलीत्यत्र (७।२।८५) रायो

या विहिता विभक्ति स्त्रिशब्दाच्च या विहिता विभक्तिस्तस्यामिति विहितविशेषणपक्षस्य तत्राश्रयणात्। अथवा किं व्यवधानचिन्तया? परत्वादेव हि तौ भविष्यतः। तयोस्तु कृतयोः सकृद् गतौ विप्रतिषेधे यद् बाधितं तद्बाधित मेवेति (प,४१) पुनर्नुम् न भवति। नुम्परत्वमनङ्गीकृतत्र व्यवधानान्नुमापि हीतुग्कम्। अतएवापिशब्दः पक्षान्तरद्योतनाय प्रयुक्तो व्यवधाने च यथा भवति तथोक्तमेव। एवं तर्हि नुम्नुटो र्विप्रतिषेधार्थमजग्रहणमिति नुटि कृते नुम् न क्रियते ह्रस्वनद्यापो नुडिति ( ७।१।५४ )। अस्यावकाशोऽग्नीनां वायूनामिति। इगन्तनमोऽवकाश स्त्रपुणे जतुन इति। इहोभयं प्राप्नोति त्रपूणां जतूनामिति। पूर्व्वविप्रतिषेधे नुडागमो भवति। नुटि च सति नामीति ( ६।४।३ ) दीर्घत्वं प्राप्नोति। अस्मिंस्तु सति न स्यात्। अनजन्तत्वात्। यथा वर्म्मणामित्यत्र। स चायं विप्रतिषेधोऽजग्रहणे सत्युपपद्यते। नुटि कृते नुम् न प्राप्नोति। अनजादित्वात्। नुम्यपि कृते नुण् न प्राप्नोति। ह्रस्वान्ताभावादित्येवमुभयोस्तुल्ययो र्विप्रतिषेध उपपद्यते। अक्रियमाणेऽजग्रहणे नुटि कृतेऽप्यकृतेऽपि हलादावजादौ च नुमा भवितव्य मिति तस्य नित्यत्वम्। नुमि कृते ह्रस्वान्तत्वाभावान्नुटा न भवितव्यमिति तस्यानित्यत्वम्। नित्यानित्ययोश्चातुल्यबलत्वादयुक्तो विप्रतिषेध इति नित्यत्वान्नुमेव भवितव्यमिति। तस्मादजग्रहणं विप्रतिषेधार्थमिति। अत्र परीहारान्तरमाह नुड्वाच्य इति। लाघवार्थम्। नुडर्थः पूर्वविप्रतिषेधः। तादर्थ्यान्नुडित्युक्तः। क्रियमाणेऽप्यजग्रहणे विप्रतिषेधेन नुमेव प्राप्नोति। ततोऽवश्यं पूर्वविप्रतिषेधेन नुड् वाच्यः। नुमचिरतृज्वद्भावेभ्यो नुड् भवति पूर्वविप्रतितेधेनेति ( ७।१।९५,वा )। क्रियमाणेऽप्यजग्रहणे पूर्वविप्रतिषेधो वक्तव्यः। अक्रियमाणे तस्मिंस्तेनैव यत्नेन नुड भविष्यतीति किं यत्नद्वयेन? तस्मादजग्रहणमनर्थकम्। ननु चेष्टवाची परशब्दः। इष्टवाचित्वाद भविष्यति। अलं यत्नेन। असदेतत्। अवश्यं हि पूर्वविप्रतिषेधः परिगणयितव्यः। अन्यथेदमिष्टमिदमनिष्टमित्येतदेव न ज्ञायते। ननु च त्रपूणामित्यत्र पूर्वविप्रतिषेधेन नुटि कृते नुम् मा भूदित्येव मर्थमजग्रहणं कर्त्तव्यम्। नैतदस्ति। अस्त्वत्र नुम्। तस्य लोपो भविष्यति। नलोपस्य दीर्घविधावसिद्धत्वान्नामीति ( ६।४।३ ) दीर्घत्वमनजन्तत्वान्न स्यादिति चेत्? मा भूदनेन। नोपधाया (६।४।७) इत्यनेन भविष्यति। इह तर्हि शुचीनामित्यत्र नृहनपूषार्य्यम्णां शाविति ( ६।४।१२ ) नियमाद्दीर्घत्वं न स्यात्। नैतदस्ति। लक्षणप्रतिपदोक्तपरिभाषया (प,११४) प्रति-

पदोक्तस्येग्अन्तस्य स नियमः। अयञ्च नुमि कृते सतीगन्त इति लाक्षणिकत्वादेवास्य नियमेन प्रत्याख्यानं न करिष्यते। एवं प्रत्याख्यातेऽज्ग्रहणे अत उत्तरतो ऽज्ग्रहणस्य प्रयोजनं दर्शयितुमाह उत्तरार्थन्त्विति। तुशब्दस्तर्ह्यर्थे। तर्हि-शब्दः पक्षान्तरोपन्यासे। यद्येतत् प्रयोजनन्नोपपद्यत उत्तरार्थं तर्ह्यज्ग्रहणं कर्त्तव्यम्। इह तु करणस्य यत् प्रयोजनं तदुच्यतामित्याह इहेत्यादि। अपि-शब्दोऽत्र गम्यमानार्थत्वान्न प्रयुक्तः। इहापि प्रयोजन मस्ति। किं पुनस्तदित्याह त्रपो इति। हे त्रपो इत्यस्योदाहरणस्य साधुत्वार्थमज्ग्रहणम्। अक्रियमाणे त्वज्ग्रहणे प्रत्ययलोपलक्षणमिहास्तीति न ज्ञाप्येत। यतश्च हे त्रपवित्यत्र लुप्तायां सम्बुद्धौ सम्बुद्धावुच्यमानो गुणो न स्यात्। अज्ग्रहणे सत्यत्रापि प्रत्यय-लोपलक्षणो भवति। तस्मादेतदर्थमज्ग्रहणं कर्त्तव्यम्। उत्तरार्थञ्च।

## ७४ । तृतीयादिषु भाषितपुंस्कं पुंवद् गालवस्य ।

इगन्तं नपुंसकमिति। नपुंसकस्येक इत्यनुवर्त्तते। तच्च यद्यपि षष्ठ्यन्तं प्रकृतं तथाप्येतदर्थाद् विभक्तिविपरिणामो भवतीति प्रथमान्तं सम्पद्यते। पुंवद् भवतीत्यस्यार्थं स्पष्टीकर्त्तुमाह यथेत्यादि। कथं पुनः पुंवद् भवती-त्यनेन प्रतिषेधातिदेशः शक्यते वक्तुम्। एवम्मन्यते। पुंसि तृतीयादिष्वजादिषु न किञ्चित् कार्य्यं विधीयते यन्नपुंसकेऽतिदिश्येत। तस्मान्नपुंसकाश्रयस्य कार्य्यस्य पुंस्यभावात् प्रतिषेधातिदेश एवायं विज्ञायते। एवमपि नुम एव प्रकृतस्याभावातिदेशः पक्षे स्यात्। न ह्रस्वस्य। तस्याप्रकृतत्वात्। ततश्च ह्रस्वाश्रयाणि गुणनाभाव-नुडौत्त्वात्त्वानि प्रसज्येरन्। घेर्ङिति गुणः (७।३।१११) ग्रामणये ब्राह्मणकुलायेति। आङो नाऽस्त्रियामिति (७।३।१२०) नाभावः। ग्रामण्या ब्राह्मणकुलेनेति। ह्रस्वनद्यापो नुट् (७।१।५४)। ग्रामण्यां ब्राह्मण-कुलानामिति। अच्च घेरित्यौत्त्वात्त्वम् (७।३।११९)। ग्रामण्यां ब्राह्मणकुल इति। नैतदस्ति। नुमभावमात्रातिदेशे ह्यतिदेश एवानर्थकः स्यात्। नुम एव गालवस्य मतेन प्रतिषेधं कुर्य्यात्। तस्मादतिदेशसामर्थ्याद् ह्रस्वाभावोऽप्यति-दिश्यते। ग्रामणी ब्राह्मणः। ग्रामणि ब्राह्मणकुलमिति। भाषितपुंस्कत्व-दर्शनार्थमिदमुक्तम्। नतूदाहरणम्। इदमत्रोदाहरणं ग्रामण्या ब्राह्मण-कुलेनेति। अत्र पुंवद्भावेन ह्रस्वो न भवति। नुमपि। एरनेकाच (६।४।८२) इत्यादिना यणादेशः। ग्रामणिनेति। पुंवद्भावादन्यत्र ह्रस्वो नपुंसके (१।२।४७)

प्रातिपदिकस्येति ह्रस्वत्वम्। आङो नास्त्रियामिति (७।३।१२०) नाभावः। ग्रामणीनामिति। पूर्वविप्रतिषेधेन नुटि कृते नामीति (६।४।३) दीर्घत्वम्। शुचिशब्दस्य तृतीयैकवचनं नोदाहृतम्। विशेषाभावात्। सत्यसति वा पुंवद्भाव आङो नास्त्रिया (७।३।१२०) मिति नाभावेन भवितव्यम्। शुचय इति। पुंवद्‌भावपक्षे न नुम्। घेर्ङितीति (७।३।१११) गुणः। शुचिन इति पुंवद्भावाभावपक्षे नुम्। ग्रामणिनी ब्राह्मणकुले इति। पुंवद्‌भावाभावादिह ह्रस्वनुमौ भवतः। त्रपुणि जतुन इति सर्व्वकालं नपुंसकत्वमेवानयोरिति भाषितपुंस्कत्वाभावः। तेनात्र पुंवद्भावाभावान्नुम् भवत्येव। इह कस्मान्न भवतीति। भाषितपुंस्कशब्दस्य बहुव्रीहेः शब्दोऽन्यपदार्थः। पीलुशब्दश्चायं पुंसि वृक्षे वर्त्तित्वा पीलोर्विकारः फलमिति विवक्षिते मत्योरञित्यागतस्याञः (४।२।७१) फले लुगिति (४।३।१६३) लुक् क्रियते तदा नपुंसके फले वर्त्तत इति भाषितपुंस्को भवति। नचेह कश्चिद्विशेष उपात्तः। तस्माद् भवितव्यमेवात्र पुंवद्भावेनेति मन्यमानस्य प्रश्नः। समानायामाकृतावित्युत्तरम्। अस्यैवार्थं स्पष्टीकर्त्तुमाह तुल्ये प्रवृत्तिनिमित्त इति। अत्र तस्य पुंवद्भावो विधीयत इत्यधाहार्य्यम्। आक्रियेते व्युत्पाद्येते परिच्छिद्येते अनया बुद्धिशब्दावित्याकृतिः। शब्दस्य प्रवृत्तिकारणमिहाकृतिरभिप्रेता। न सन्निवेशो नापि जातिमात्रम्। तस्मिंस्तु तुल्ये प्रवृत्तिनिमित्ते यद् भाषितपुंस्कं तस्य पुंवद्भावो विधीयते। तथाच ग्रामणीशब्दस्य शुचिशब्दस्य च समाने प्रवृत्तिनिमित्ते पुंवद्भाव उदाहृतः। यथा ग्रामणीशब्दस्य पुंसि नपुंसके च वर्त्तमानस्य ग्रामनयनं प्रति कर्त्तृत्वं समानाकृतिः प्रवृत्तिनिमित्तम्। शुचिशब्दस्यापि शुचित्वं गुणः। तत्रैवेतत् स्यात्। इहापि समानैवाकृतिरित्याह इह त्वित्यादि। तुशब्दो ग्रामणीशब्दादे विंशेषं दर्शयति। अनेन पीलुशब्दस्य भिन्नायामाकृतौ भाषितपुंस्कत्वं दर्शयति। वृक्षाकृति वृक्षजातिः। फलाकृतिः फलजातिः। तदेवं समानायामाकृतौ यद्भाषितपुंस्कं तस्य पुंवद्भावो विधीयते। न तु पीलुशब्दः समानायामाकृतौ भाषितपुंस्क इति न भवति तस्य पुंवद्भावः। तदेतदेवमित्यादि। यदेतदुक्तं समानायामाकृतावित्यादि। तदेतदेवम्प्रकारमर्थरूपं कथम्भवति? न कथञ्चिदित्यर्थः। समानायामाकृतावित्यस्य विशेषस्यानुपादानादित्यभिप्रायः। भाषितपुंस्कग्रहणादित्यादिना यथैतदेवं भवति तथा दर्शयति। शब्दे ह्यन्यपदार्थे समाश्रीयमाणे सत्येतन्नोपपद्यते। नचात्रशब्दोऽन्यपदार्थत्वेनाश्रितः। किं तर्हि? अर्थः। सोऽपि न सर्व्वः। अपितु प्रत्यासत्ते-

यस्य शब्दस्य यत् प्रवृत्तिनिमित्तं स एव विज्ञायत इति स एव भाषितपुंस्कशब्देनोच्यते। अन्यथा सर्व एव ह्यर्थो भाषितपुंस्को भवति। अन्ततोऽर्थशब्देनापि भाषितपुंस्कत्वसम्भवात्। तत्र यदि येन केनचिच्छब्देन यो भाषितपुंस्कः स इहाश्रीयते तदा भाषितपुंस्कग्रहणमनर्थकं स्यात्। व्यावर्त्त्याभावात्। तस्माद् यस्य नपुंसकाभिधायिनः शब्दस्य पुंवद्भाव इह विधातुमिष्ट स्तेनैव स्वस्मिन् प्रवृत्तिनिमित्ते पुमान् भाषितः। स एव भाषितपुंस्कोऽत्राश्रीयते। तद्योगादित्यादि। तेन प्रवृत्तिनिमित्तलक्षणेनार्थेन योगात् सम्बन्धादभिधेयं यन्नपुंसकं तदपि भाषितपुंस्कमित्युच्यते। भवति हि तद्योगात् ताच्छब्द्यम्। यथा यष्टीः प्रवेशयेति। योगः पुनरत्र समवायसमवायिलक्षणः। शब्दप्रवृत्तिनिमित्तस्यार्थस्य नपुंसकेन समवायात्। यत् तस्येत्यादि। तस्य नपुंसकस्य यत् प्रतिपादकं शब्दरूपं तदपि भाषितपुंस्केन नपुंसकेन योगाद् भाषितपुंस्कमित्युच्यते। योगः पुनरनयो र्वाच्यवाचकभावः। तत्र यद्यपि सूत्रेऽर्थो भाषितपुंस्कशब्देनोपात्त स्तथाप्यर्थे कार्य्यासम्भवाद् यथोक्तेन प्रकारेण यो भाषितपुंस्कः शब्दस्तस्यैवायं पुंवद्भावो विधीयते। एवञ्च स विधीयमानः समानायामाकृतौ यो भाषितपुंस्कः शब्दः सामर्थ्यात् तस्य भवतीति विज्ञायते। यो ह्येवं भाषितपुंस्केन शब्दप्रवृत्तिनिमित्तेन सम्बद्धं नपुंसकमाह स नियोगतः समानायामाकृतौ भाषितपुंस्को भवति। यथा स एव ग्रामणीशब्दः शुचिशब्दश्च। पीलुशब्देन यत्र भाषितः पुमान् प्रवृत्तिनिमित्ते वृक्षाकृतौ न तत् सम्बद्धमसौ नपुंसकमाह। किं तर्हि? फलाकृतिसम्बन्धम्। तस्मात् पीलुशब्दो न समानायामाकृतौ भाषितपुंस्क इति न भवति तस्य पुंवद्भावः। कीलालपा इति। आतो मनिन्क्वनिब्वनिपश्चेति विच् ( ३।२।७४ )। कीलालपाशब्दोऽयं समानायामाकृतौ भाषितपुंस्कः। उभयत्रापि वर्त्तमानः कीलालपात्वं प्रवृत्तिनिमित्तमादाय प्रवर्त्तत इति कृत्वा। इगन्तस्तु न भवतीति न भवति पुंवद्भावः। तेन ह्रस्वत्वं भवत्येव। तस्मिन् सति टाङसिङसा-( ७।१।१२ ) मिनात्स्यादितीनादेशे कृते कीलालपेनेति भवति। यदि पुनरत्र पुंवद्भावः स्यात् तदा ह्रस्वत्वं न स्यात्। ततश्चातो धातो ( ६।४।१४० ) रित्यकारलोपे कृते कीलालपेति स्यात्॥

## ७५। अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः

इकोऽचि विभक्ताविति ( ७।१।७३ ) नुमि प्राप्तेऽस्थ्यादीनामनङ् विधीयते।

कारोऽन्त्यादेशार्थः। अकार उच्चारणार्थः। अस्थ्यादयश्चैते नब्विषयस्यानि-न्तस्येत्याद्युदात्ताः ( फिट् २।३ )। शेषमनुदात्तम्। तत्रानङ् विधीयमानः स्थानिवद्भावादनुदात्तत्वं प्राप्नोतीत्युदात्तत्वमुच्यते नब्विषयस्येति। नपुंसक-विषयस्येत्यर्थः। अस्नेति। अनङि कृतेऽल्लोपोऽन ( ६।४।१०४ ) इत्यकार-लोपः। एतैरित्यादि। कथं पुनरेतल्लभ्यते ? यावता प्रकृतस्याङ्गस्यास्थ्यादिभि र्विशेषणाद् विशेषणेन च तदन्तविधिरिति विज्ञानादङ्गाधिकारे तस्य तदुत्तर-पदस्येति वचनाद्वा यद्यपि तदन्तविधि र्भवति तथापि सत्यपि तस्मिन्नस्थ्याद्यन्तस्या-नपुंसकस्य ग्रहणं नोपपद्यते। नपुंसकस्येत्यनुवृत्तेः। नैष दोषः। नह्यत्र नपुंसकेनाङ्गं विशिष्यते। अपितु श्रुतत्वादस्थ्यादय एव। एवञ्च तदन्तस्याङ्गस्य लिङ्गान्तरेऽपि वर्त्तमानस्यास्थ्यादीनां नपुंसकत्वं विद्यत एव। तेन नपुंसके ये वर्त्तन्तेऽस्थ्यादयस्तदन्तस्यानपुंसकेऽपि वर्त्तमानस्य ग्रहण मुपपन्नं भवति। यदि तर्हि तदन्तस्य ग्रहणं केवलानां न सिध्यति। अयमप्यदोषः। व्यपदेशि-वद्भावात् केवलानां न भविष्यति। व्यपदेशिवद्भावोऽप्रातिपदिकेनेत्येषा परिभाषा प्रत्ययविधिविषयेतीह नोपतिष्ठत एव। नपुंसकेनास्थ्यादिविशेषणं किम् ? यदा ते यदृच्छाशब्दाः सन्तोऽपि लिङ्गान्तरे वर्त्तन्ते तदा मा भूत्। दधिर्नाम कश्चित्। तेन दधिनेति।

## ७६। छन्दस्यपि दृश्यते।

यतो विहित इत्यादिनाऽपिशब्दस्य सर्व्वोपाधिव्यभिचारार्थतां दर्शयति। अस्थभिरिति। अनङि कृते नलोपः। अस्थानुत्कृत्येति। शस्यनङ्। अक्षण्वतेति। अत्रापि मतुप्यनो नुडिति ( ८।२।१६ ) नुडागमः। अनङो नकारस्य लोपे कृते मादुपधायाश्चेति ( ८।२।९ ) वत्वम्। अक्षण्वन्तमिति। पूर्व्वेण तुल्यम्। द्वितीयान्तमेतत्। यदनस्थेति। अस्थि यस्य नास्तीति सावनङ्। सर्वनामस्थाने ( ६।४।८ ) चेति दीर्घः।

## ७७। ई च द्विवचने।

चकारश्छन्दसीत्यनुकर्षणार्थः। अक्षी ते इति। अक्षि औ इति स्थिते नपुंसकाच्चेति ( ७।१।१९ ) शीभावः। ईकारे कृते प्रथमयोः ( ६।१।१०२ )

पूर्वसवर्ण इति दीर्घः। दीर्घाज्जसि चेति ( ६।१।१०५ ) प्रतिषिद्धोऽपिच्छान्दस-त्वाद्भवति। ननु सवर्ण दीर्घत्वेनाप्येतत् सिद्ध्यति। यद्यपि रूपं सिद्ध्यत्युदात्तत्वन्तु न सिध्यति। एतेनोदात्त ईकारो विधीयते। अथवा रूपमपि न सिध्यति। पूर्वसवर्णाद्धि परत्वात् पूर्वं नुमि कृते नैव सवर्णदीर्घः स्यात्। अथाच्छी इत्यत्रेकोऽचि विभक्ताविति ( ७।१।७३ ) नुम् कस्मान्न भवतीत्याह अच्छी इत्यत्रेत्यादि। नुमोऽवकाशः त्रपुणी जतुन इति। इकारस्यावकाशोऽच्छीभ्यामिति। प्रथमाद्विवचन उभयप्रसङ्गे परत्वादीकार एव भवति। अथेदानीमीकारे कृते पुनः प्रसङ्गविज्ञानान्नुम् कस्मान्न भवतीत्याह सकृद् गताविति॥

## ७८। नाभ्यस्ताच्छतुः।

ददद् ददताविति। श्नाभ्यस्तयोरात ( ३।४।११२ ) इत्याकारलोपः। जक्षितिजागर्त्तेरो जक्षित्यादयः षड़ित्यभ्यस्तसंज्ञा ( ६।१।६ )। कथं पुनरयं नुमः प्रतिषेधो विज्ञायते ? यावताऽनन्तरस्य विधिर्व्वा भवति प्रतिषेधो वेतीकारस्य ( प,६२ ) प्रतिषेधो युक्त इत्याह शतुरनन्तर इत्यादि। लक्षणान्तरेण विहितस्य प्रतिषेधो भवति। ननु शतुरनन्तर ईकारः केनचिद्विहितः। अङ्गस्येति वर्त्तते। नच नुमोऽन्यत् कार्य्यं शतुः सम्भवति। अतः सामर्थ्याद्व्यवहितस्याप्युगिदचामिति ( ७।१।७० ) नुमः प्रतिषेधो विज्ञायत इति।

## ७९। वा नपुंसकस्य।

शतृप्रत्ययमात्रं नपुंसके न वर्त्तत इत्यभ्यस्तादङ्गादुत्तरो यः शता तदन्तस्य नपुंसकस्य विकल्पो विज्ञायत इत्याहअभ्यस्तादङ्गादित्यादि।

## ८०। आच्छीनद्योर्नुम्।

तुदन्ती कुले इति। नपुंसकाच्चेति ( ७।१।१९ ) शीभावः। तुदती ब्राह्मणीति। उगितश्चेति ( ४।१।६ ) ङीप्। याती ब्राह्मणीति। अदादित्वाच्छपो लुक्। उगितश्चेति ( ४।१।६ ) ङीप्। करिष्यन्ती कुले इति। लृटः सद्वेति ( ३।३।१४ ) शत्रादेशः। ऋद्धनोः स्य इतीट् ( ७।२।७० )। अत्रान्तरङ्गत्वादित्यादि चोद्यम्। अकारान्तादङ्गात् परे शतरि व्यवस्थित ईकारे च किं नुम्

क्रियतामुतैकादेशः? अत्रान्तरङ्गत्वादतो गुणे (६।१।९७) पररूपमेकादेशः। अन्तरङ्गत्वं पुनस्तस्य वर्णाश्रयत्वात्। नुमस्तु बह्वपेक्षत्वाद्बहिरङ्गत्वम्। स ह्यकारान्तमङ्गं शब्प्रत्ययान्तं ततश्च परतः शीनद्योर् भावमपेक्षते। वार्णादाङ्गमित्या-दीह (प,५६) नास्ति। भिन्नकालत्वात्। शीनद्योर्हि परभावे सति नुम् प्राप्नोति। एकादेशस्तु ततः प्रागेव। यत्र च वार्णाङ्गयो र्युगपत् प्राप्ति स्तत्रे यमुपतिष्ठत इत्युक्तं प्राक्। एकादेशे कृते (L) व्यपवर्गाभावादवर्णान्तादङ्गादुत्तरस्य शतुरिति शक्यते वक्तुम्। भेदे हि सत्यवध्यवधिमतोरिदमस्मादुत्तरमिदञ्च पूर्वमित्येष व्यवहारो भवति। नान्यथा। स्यादेतत्। अन्तादिवच्चे (६।१।८५) त्यन्तादि-वद्भावेनैकादेशः पूर्वं प्रत्यन्तवद्भवति परञ्च प्रत्यादिवदित्येकादेशस्य पूर्वं प्रत्यन्त-वत्त्वात् परञ्च प्रत्यादिवत्त्वाद् युज्यतएवावर्णादङ्गादुत्तरस्य शतुरित्याह उभय . आश्रय इत्यादि। अत्र ह्यकारान्तमङ्गं शता चोभयमाश्रितम्। उभयत आश्र . नान्तादिवदिति नास्त्यन्तादिवद्भावः। न ह्येकस्यैकदा पूर्वं प्रत्यन्तवद्भावः परञ्च प्रत्यादिवद्भाव उपपद्यते। तथाहि यदि पूर्वं प्रत्यन्तवद्भवति तदा शब्रूपं न सम्पद्यते। अथ परं प्रत्यादिवद्भवति तदाऽकारान्तताऽङ्गस्य न परिकल्प्यते। उच्यते चेदमाच्छीनद्योर्नुमिति न चावर्णान्तादङ्गादुत्तरः शता क्वचित् सम्भवति। तत्र वचनप्रामाण्याद् भूतपूर्वगतिराश्रीयते। अवर्णान्तादुत्तरो यः शता पूर्वमासीदिति। अत आह भूतपूर्वगत्येत्यादि। यदि हि भूतपूर्व्वगतिराश्रीयतेऽदतो घ्नतीत्यादा-वतिप्रसङ्गः स्यात्। अत्राप्यवर्णान्तादङ्गादुत्तरः शता पूर्वमासीदित्याह अत्र केचित् समाधिमाहुरिति। समाधिः परीहारः। परीहारश्च शतुरवयव इति। शतुरवयव स्तकारः। तत्रेह शब्शब्दो वर्त्तते यथा पटो दग्ध इतत्र पटावयवे पटशब्दः। समुदायेषु प्रवृत्ताः शब्दाः क्वचिदवयवेष्वपि वर्त्तन्त इति। स च शत्रवयव एकादेशे हि कृतेऽवर्णान्तादङ्गादुत्तरो भवतीत्यन्तरङ्गत्वादेकादेशे कृत इत्यादिना यत् कृतञ्चोद्यं तत् परिहृतं भवति। किं पुनरनच्कस्य तकारस्य नुम् स्यात्? कथञ्च नुम् स्यात्? कथञ्च न स्यात्? (१।१।४७) मिदचोऽ-न्त्यात् पर इति वचनात्। मा भूत् तकारस्य। तदन्तस्य भविष्यति। एवञ्च सूत्रार्थं वर्णयिष्यामः। अवर्णान्तादङ्गादुत्तरो यः शत्रवयवस्तदन्तस्याङ्गस्य नुम् भवतीति। अङ्गग्रहणञ्च द्विरावर्त्तयिष्यामः। शत्रवयवविशेषणार्थमङ्गकार्य्यप्रति-

(L) व्यपवर्गो भेदइत्यर्थः।

पत्त्यर्थञ्च। कथं पुनस्तुदतीत्यादौ तकारात् पूर्व्वस्याङ्गत्वम्? यावता यतः प्रत्ययो विहितस्तदादेः प्रत्यये परतोऽङ्गसंज्ञा। नच तकारः प्रत्ययः। असत्याञ्चाङ्गसंज्ञायां यदुक्तमवर्णान्तादङ्गादुत्तरो यः शत्रवयव इति तन्नोपपद्यते। नैष दोषः। यथैव हि शत्रवयवे शतृशब्दो वर्त्तते तथाङ्गावयवे तकारात् पूर्व्वस्मिन्नङ्गशब्दः। किं पुनस्तदङ्गम्? यस्यावयवः शत्रन्तम्। तस्य हि शीनद्योः परतोऽङ्गसंज्ञा विधीयते। इहापि तर्हि कस्मान्न भवत्यदती घ्नतीति? अत्रापि ह्यवर्णान्तादङ्गादुत्तरः शत्रवयवो भवति। यद्यत्रापि स्यादादिति विशेषण मनर्थकं स्यात्। शीनद्योरित्येवं ब्रूयात्। यत्र च शीनद्योः परतः शत्रन्तमङ्गम्भवति तत्र नियोगत एवाकारान्तादङ्गादुत्तरो शत्रवयवो भवति। तस्मादात इति विशेषणोपादानसामर्थ्याद् विशेषपरिग्रहो विज्ञायते। शत्रवयवादकारात् पूर्वो योऽकार स्तदन्तादुत्तरो यः शत्रवयव इति। नत्त्वदती घ्नतीति। अत्रैवंविधादवर्णान्तादुत्तरः शत्रवयव इति नेह नुमः प्रसङ्गः। अवर्णान्तादङ्गादुत्तरे ये शीनद्याविति। अत्रापि पूर्व्ववदङ्गावयवेऽङ्गशब्दो वर्त्तते। ननु च तुदन्तीत्यादाववर्णान्तादङ्गादुत्तरे शीनद्यौ न सम्भवत एव। तकारेण व्यवधानादित्याह तत्र येनेत्यादि। गतार्थम्। अथ नुम्यनुवर्त्तमाने किमर्थं पुन र्नुम्ग्रहणम्? नेति वेति च प्रकृतम्। तत्र नुम्ग्रहणमन्तरेणानिष्टमपि विज्ञायते शीनद्योर्विभाषा नुमवर्णान्तान्न भवतीति। किञ्च स्यात् कुर्वती तन्वतीत्यत्र विभाषा स्यात्। करिष्यन्तीत्यत्र न स्यात्। केन पुनः प्राप्तस्य नुमः शीनद्योः प्रतिषेधः क्रियते? एतदेव ज्ञापयत्यस्ति शीनद्यो र्विभाषा नुमिति। नुम्ग्रहणे तु क्रियमाणे विधिरेवायं विज्ञायत इत्यदोषः।

## ८१। शप्श्यनो र्नित्यम्।

## ८२। सावनडुहः।

## ८३। दृक्स्ववस्स्वतवसाञ्छन्दसि।

ईदृङ् कीदृङिति। त्यदादिष्वित्यादिना (३।२।६०) क्विन्। इदम्किमोरीश्की इतीश्की (६।३।९०) आदेशौ। हल्ङ्यादिसंयोगान्तलोपौ (६।१।६८, ८।२।२३)। क्विन्प्रत्ययस्य (८।२।६२) कुरिति कुत्त्वम्। यादृङ् तादृङिति। आ सर्व्वनाम्न (६।३।९१) इत्यात्वम्। सदृङिति। दृग्दृशवतुष्विति (५।३।८९) समानस्य सभावः।

## ८४ । दिव औत् ।

द्यौरिति । औत्त्वे कृते यणादेशः । इहाद्यूरित्यत्र दीव्यतीति क्विपि कृते तदाश्रये चान्तरङ्गत्वात् च्छ्वोः शूडनुनासिके ( ६।४।१९ ) चेत्यूट् । एकादेश-विकृतस्यानन्यत्वात् दिव्शब्द एवाय मित्यूकारस्यौत्त्वं प्राप्नोति । तत् कस्मान्न भवतीत्याह दिविति प्रातिपदिकमित्यादि । अस्त्येवायं दिव्शब्दो धातुः । अस्ति चाव्युत्पन्नं प्रातिपदिकम् । तत्र धातुः सानुबन्धकः । अस्योदितो ( ७।२।५६ ) वेत्युदित्कार्य्यम् । प्रातिपदिकन्तु निरनुबन्धकम् । नहि तस्य किञ्चिदनुबन्धकार्य्य मस्ति । तत्र निरनुबन्धकपरिभाषया ( प, ८२ ) धातुरिह न गृह्यते । तेनाद्यूरित्यत्र न भवत्यौत्त्वप्रसङ्गः । तकारो मुखसुखार्थः ।

## ८५ । पथिमथ्यृभुक्षामात् ।

हल्ङ्यादिलोपे प्राप्ते नलोपे चात्त्वं विधीयते । पन्था इति । थोन्थ ( ७।१।८७ ) इति न्थादेशः । इतोऽत् सर्व्वनामस्थान ( ७।१।८६ ) इत्यत्त्वम् । ननु चास्य स्यान्यनुनासिको नकारः । तत्र तपरस्तत्कालस्येति ( १।१।७० ) सवर्णानां ग्रहणे सत्यान्तरतमत्वादनुनासिकेनैवाकारेण भवितव्यम् । किमिह शुद्धोऽयमुदाह्रियत इत्याह स्यान्यनुनासिकेऽपीत्यादि । अत्रैव कारण माह भाव्यमान इत्यादि । यदि च तपरेणापि भाव्यमानेनाणा सवर्णानां ग्रहणं न भवत्येवं सति विड्वनोरनुनासिकस्यादित्यत्रापि ( ६।४।४१ ) न स्यात् । तथा जनसनखनां ( ६।४।४२ ) सञ्झलोरित्यत्रानुनासिकाकारो न स्यात् । एवं तर्हि नैवायमाकारस्तपरः । किं तर्हि ? दकारः । दकारस्तु मुख-सुखार्थः । स चर्त्वभूतत्वान्न श्रूयते । स्यादेतत् । यद्यपि भाव्यमानोऽण् सवर्णान्न गृह्णाति सवर्णानां ग्रहणं न भविष्यति तथाप्यनुनासिकविशिष्टस्यो-च्चारणादनुनासिकेनैव युक्तं भवितुमित्याह शुद्धो ह्येत्यादि । अयं ह्याकारः शुद्धो निरनुनासिक उच्यते । तस्माच्छुद्ध एवेति । नानुनासिकविशिष्टः । अथायं किमर्थं दीर्घ उच्यते । न ह्रस्व एव क्रियताम् ? अत्राप्यकः सवर्ण इति (६।१।१०१) दीर्घत्वेन सिध्यत्येव । न सिध्यति । अतो गुण इति ( ६।१।९७ ) पररूपत्वं स्यात् । अकारोच्चारणसामर्थ्यान्न भविष्यतीति चेत् ? न ।

अस्ति ह्यन्यद्कारोच्चारणस्य प्रयोजनम्। किं तत्? नकारस्य श्रवणं न स्यादिति। लोपे हि क्रियमाणे गौरवं स्यात्। तस्माद्दीर्घो विधीयते।

## ८६। इतोऽत् सर्वनामस्थाने।

अथादित्यनुवर्त्तमाने किमर्थमद्वचनम्? ह्रस्वस्य श्रवणं यथा स्यादिति चेत्? नैतत्। कृते हि ह्रस्वत्वे सौ परतोऽकः सवर्णे (६।१।१०१) दीर्घत्वेन भवितव्यमन्यत्र नोपधाया (६।४।७) इत्यनेन। तत् कुतो ह्रस्वस्य श्रवणमित्याह आदिति वर्त्तमान इत्यादि। षपूर्वोऽर्थः प्रयोजनं यस्य तत् तथोक्तम्। कथं पुनरिदं षपूर्वार्थं भवतीत्याह ऋभुक्षण इत्यादि। यदि प्रकृतौ दीर्घएव विधीयते तदा ऋभुक्षणमिन्द्रमित्यत्र ह्रस्वस्य श्रवणं न स्यात्। ह्रस्वविधाने तु वा षपूर्वस्य (६।४।९) निगम इति दीर्घविधानात् पक्षे भवति। स्थानिन्यादेशे च तपरकरणं मुखसुखार्थमित्येके। पथोरित्यत्र दीर्घनिवृत्त्यर्थमित्यन्ये। पन्थानमिच्छति सुप आत्मनः (३।१।८) क्यच्। अकृत्सार्व्वधातुकयोर् (७।४।२) दीर्घः। पथीयति। पथीयतेः क्विप्। अतो लोप (६।४।४८) इत्यल्लोपः। क्यस्य विभाषेति (६।४।५०) (M) यकारस्य लोपः। पथीः॥

## ८७। थो न्थः।

थो न्थ इति द्वावपि स्थान्यादेशावनच्कौ। यस्त्वन्थइत्यत्राकारः श्रूयते स उच्चारणार्थः। सत्यप्यादेशस्यानेकाल्त्वे निर्दिश्यमानस्यादेशा भवन्तीति (प,१४) थकारमात्रस्यादेशो विज्ञायते। न सर्वस्य।

## ८८। भस्य टेर्लोपः।

सर्वनामस्थान इत्यादि। यचि (१।४।१८) भमित्यत्र स्वादिष्वसर्वनामस्थान (१।१।१७) इत्यतोऽसर्व्वनामस्थान इत्यनुवर्त्तमाने भसंज्ञा विहिता। तत्र यदि सर्वनामस्थाने परतः पथ्यादीनां टिलोपः स्याद् तदा भसंज्ञका स्ते न स्युः।

(M) वस्तुतस्तु लोपो व्योर्वलीति यलोपः (६।१।६६)। "न्यासे प्रमादपाठो दृश्यते क्यस्य विभाषेति यकारलोप इति। नह्यनेन प्राप्तिर्यस्य हल (६।४।४९) इत्यतो हल्ग्रहणानुवृत्तेः॥" इति मैत्रेयरक्षितः।

अथ भसंज्ञका स्तु स्यस्तदा सर्व्वनामस्थानं परं तेभ्यो न स्यादिति भसंज्ञकानां सर्व्वनामस्थानस्य च सहानवस्थानलक्षणो विरोधः। तस्माद् यद्यप्युत्तरार्थं सर्व्वनामस्थानग्रहणमनुवर्त्तते तथापीह नाभिसम्बध्यते।

## ८९। पुंसोऽसुङ्।

असुङो ङकारोऽन्त्यादेशार्थः। उकार उगित्कार्य्यार्थः। पुमानिति। उगिदचामित्यादिना (७।१।७०) नुम्। सान्तमहतः संयोगस्येति (६।४।१०) दीर्घः। हल्ङ्यादिसंयोगान्तलोपौ। इह परमपुमानित्यादि। परम श्चासौ पुमांश्चेति सन्महदित्यादिना (२।१।६१) समासे कृते यावद्विभक्तिर्नोत्पद्यते तावदसुङादेशेन न भवितव्यम्। तस्य तदाश्रयत्वात्। समासान्तोदात्तत्वन्तु न किञ्चिदपेक्षत इति। अन्तरङ्गत्वात् प्रागेव विभक्तेरन्तोदात्तत्वं भवति। पश्चादुत्पन्नायां विभक्तावसुङ् ङस्वरस्य व्यञ्जनस्य स्थाने भवन्न नियतस्वरः स्यात्। ततश्चानिष्टोऽपि स्वरः प्राप्नोति। अन्तोदात्तमेव चोत्तरपदमिष्यते। आद्युदात्तत्वं प्राप्नोति। तदर्थमित्यादि। अर्थशब्दो निवृत्तिवाचो यथा मशकार्थो धूम इति। तदर्थं तस्यानिष्टस्य स्वरस्य निवृत्त्यर्थमुपदेशिवद्वचनं कर्त्तव्यम्। अकृते समासान्तोदात्तत्व उपदेशावस्थायामिव विभक्त्युत्पत्तेः प्रागसुङ् यथा स्यात्। तेनासुङि पूर्वं कृते पश्चात् समासान्तोदात्तत्वेन परमपुमानित्ययं शब्दोऽन्तोदात्तो भवति। यद्येवं पुमानित्ययं शब्दोऽप्यन्तोदात्तः स्यात्। उपदेशावस्थायामिवासुङि कृते पश्चात् प्रातिपदिकस्वरेण भवितव्यमित्याह पुमानितरयं पुनरित्यादि। पुमस्शब्दोऽयं पुनातेर्भ्रुक्सुनौ ह्रस्वश्चेति (N) मुक्सुन् प्रत्ययान्तो व्युत्पादितः। तेन नित्स्वरेणायमाद्युदात्तो भवति। नान्तोदात्तः।

## ९०। गोतो णित्।

णिदिति संज्ञा वाऽनेन क्रियते गोतः परं सर्वनामस्थानं णिद् भवति णित्संज्ञं भवतीत्यर्थः। अथवा गोतः परस्य सर्वनामस्थानस्य णकार इत्संज्ञको

(N) In the पञ्चपादी of the उणादि Rules पाते र्डुम्सुन् पुमान् (४।१६७) is given for the derivation of पुमस्।

भाव्यते। तेन गोतः परस्य सर्वनामस्थानस्य णकार इत्संज्ञको भवतीति। आदेशो वा विधीयते गोतः परस्य सर्वनामस्थानस्य णित्सकारानुबन्धवानादेशो भवति। अतिदेशो वा क्रियते गोतः परं सर्वनामस्थानं णिद् भवति णिद्वद् भवतीत्यर्थः। विनापि वतिना वत्यर्थो गम्यते यथा गाङ्कुटादि-(१।२।१) सूत्रे। तत्राद्ये पक्षे संज्ञोच्चारिता संज्ञिनं प्रत्याययतीति णित्प्रदेशेषु क्वचि-मत्वादस्यैव सर्वनामस्थानस्य ग्रहणं प्राप्नोति। न ण्वुलादीनाम्। द्वितीये तु णकार इत्संज्ञकः सर्वनामस्थानस्य प्रसज्येत। तृतीये तु पुनर्णित् सर्वनाम-स्थानं न क्वचिद्दृष्टमिति। य एवैते ण्वुलादयस्त एवादेशाः प्रसज्येरन्नित्येते दोषा आद्येषु त्रिषु पक्षेषु यथाक्रमं प्रतिविधेयाः। तत्प्रतिविधाने प्रतिपत्ति-गौरवं स्यात्। अतिदेशपक्षे तु न किञ्चित् प्रतिविधेयम्। अतः स एव साधु-रिति तमेवाश्रित्याह गोशब्दादित्यादि। णित्कार्य्यमित्यादिना णिद्भवतीत्य-स्यार्थं व्याचक्षाणः कार्य्यातिदेशोऽयमित्याचष्टे गौरिति वृद्धि र्णित्कार्य्यम्। चित्र-गुरिति। अत्र बहुव्रीहौ कृते गोस्त्रियोरुपसर्जनस्येति (१।२।४८) ह्रस्वः। तत्रासति तपरकरणेऽङ्गाधिकारे तस्य तदुत्तरपदस्येति वचनात् तदन्तविधि मभ्युपगम्य स्थानिवद्भावेन गोशब्दान्तमेतदङ्गं भवतीति णिद्भावः प्राप्नोति। तपरकरणे तु तत्कालनियमे सति न भवति। भिन्नकालत्वात्। तपरस्तत्-कालस्येत्यत्राण्ग्रहणस्य (१।१।७०) निवृत्तत्वादनणोऽपि तत्कालनियमो भवत्येव। कथमित्यादि। सत्यपि तपरकरणे ह्रस्वस्य गुणः (७।३।१०८)। जसि चेति (७।३।१०९) सम्बुद्धिजसोर्गुणे कृते हे चित्रगो हे चित्रगव इत्यत्र प्राप्नोति। तत्कालत्वादित्यभिप्रायः। ननु च लक्षणप्रतिपदोक्तपरिभाषया (प, ११४) न भविष्यति। नैतदस्ति। यत्र हि स्थानिवद्भाव स्तत्रैषा नोपतिष्ठते। अन्यथा हि स्थानिवद्भावोऽनर्थकः स्यात्। अङ्गवृत्ते पुनरित्यादि परीहारः। एष तु हे चित्रगवित्यत्र परीहारः। न तु चित्रगवइत्यत्र। अनिष्ठितत्वात्। अवादेशे हि कृते निष्ठितत्वमत्र भविष्यति। न च गुणमात्रे। अप्रयोगार्हत्वात्। अतएवा-व्यापकत्वादस्य परीहारस्यापरितुष्यन् परिहारान्तरमाह अथवेत्यादि। स्यादे-तत्। अत्रापि गोः सम्बन्धि सर्वनामस्थानमानन्तर्य्यलक्षणेन भवति सम्बन्धे-नेत्यत आह यद्येत्यादि। यद्यानन्तर्य्यलक्षणेन गोः सम्बन्धि सर्वनामस्थानं गृह्यते तदा षष्ठ्याश्रयणमनर्थकं स्यात्। पञ्चम्येवाश्रयितव्येति। क्रमव्यति-क्रमे प्रयोजनाभावात्। तस्मात् षष्ठ्याश्रयणसामर्थ्याद् गोशब्दस्यार्थस्य य

एकत्वादय स्तेषु यत्सर्व्वनामस्थानं तद् गोः सर्व्वनामस्थानमित्युच्यते। तत् पुन र्गोशब्दस्यैकत्वादीनां वेदितव्यम्। आदिशब्देन द्वित्वादिपरिग्रहः। तत्रैतत् स्यात्। चित्रगुशब्दादपि यत् सर्व्वनामस्थानं तद् गोशब्दस्यार्थस्यैकत्वादिषु वर्त्तत इत्याह चित्रगुशब्दादित्यादि। यदि यद् गोः सम्बन्धि सर्व्वनामस्थानं तस्य णिद्भावो विधीयते तदा तपरकरणमनर्थकं स्यात्। तद्धि चित्रगुरित्यादौ मा भूदित्येवमर्थं क्रियते। नचात्र प्राप्तिः। नह्यत्र गोः सम्बन्धि सर्व्वनामस्थानम्। किं तर्हि ? अन्यपदार्थस्येत्याह तपरकरणन्त्वित्यादि। केचिदित्यादि। किमर्थं पुनस्त एवं पठन्तीत्याह द्योशब्दोऽपीत्यादि। ये त्वेवन्न पठन्ति गोत इति तेषां द्योशब्दात् परस्य सर्व्वनामस्थानस्य णिद्भावो न सिध्यतीत्याह गोतइत्येतदेवेत्यादि। कथं पुनरेतदोकारान्तोपलक्षणार्थं शक्यं विज्ञातुमित्याह वर्णनिर्द्देशेष्वित्यादि। यथा वृद्धिरादैच् ( १।१।१ ) अदेङ् गुण ( १।१।२ ) इत्येवमादिषु योगेषु वर्णं स्तपरो निर्द्दिश्यत इति तपरकरणं वर्णनिर्द्देशेषु हि प्रसिद्धम्। तस्मादिहापि तपरनिर्द्देशाद् गोत इत्येतदोकारान्तोपलक्षणं विज्ञायते। तदेवं गोतइत्येतदेव तपरकरणनिर्द्देशादोकारान्तोपलक्षणं द्रष्टव्यमिति। अतो वचनात् तपरकरणं वर्णनिर्द्देशार्थमिवेतस्यैवौकारान्तोपलक्षणार्थं विज्ञायते।

## ९१। णलुत्तमो वा।

णित्कार्य्यं वा भवतीत्यर्थ इति। अनेन णित्कार्य्यस्य पक्षेऽभावात्सिद्धा भवतीत्युच्यते। नतु णित्त्वस्यैव प्रतिषेधइति दर्शयति। नतु णल उपदेशावस्थायां सिद्धं णित्वं तद्वचनशतेनापि शक्यं प्रतिषेद्धुमिति भावः। चकार चकरेति। यदा णित्त्वं तदाचोऽञ्णितोति वृद्धिः ( ७।२।११५ )। अन्यदार्धधातुकलक्षणो गुणः। पपाच पपचेति। यदा णित्त्वं तदात उपधाया ( ७।२।११६ ) इति वृद्धिः। अन्यदा तदभावः।

## ९२। सख्युरसम्बुद्धौ।

असम्बुद्धाविति पर्य्युदासः। सम्बुद्धेरन्याऽसम्बुद्धिः। हे सख इति। ऋतस्य गुणः ( ७।३।१०८ ) इति गुणः।

## ९३। अनङ् सौ।

पूर्वेण णित्वे प्राप्तेऽनङ् विधीयते। तस्य ङकारोऽन्त्यादेशार्थः। अकार उच्चारणार्थः। सखेति। (६।४।८) सर्वनामस्थाने चासम्बुद्धाविति दीर्घः। हल्ङ्यादि (६।१।६८) सुलोपः। नलोपः प्रातिपदिकान्तस्येति (८।१।७) नकारस्य। आकारे विधातव्येऽनङ्वचनं सोर्लोपो यथा स्यात्। अकार-विधाने तस्य लोपो न स्याद् यथा पन्था इति।

## ९४। ऋदुशनस्पुरुदंसोऽनेहसाञ्च।

ऋकारान्तस्य ऋतो ङिसर्व्वनामस्थानयो (७।३।११०) रिति गुणे प्राप्ते। इतरेषामपि हल्ङ्यादिलोपे कृते रुत्वविसर्जनीयसान्तदीर्घेषु प्राप्तेषु। उशनसः सम्बुद्धावपि पक्ष इष्यतइति। तत् कथम्? चकारोऽत्र क्रियते। स चानुक्तसमुच्चयार्थः। तेन सम्बुद्धावप्युशनसोऽनङ् भविष्यति। यद्येवं नित्यं स्यात्। नैतत्। णलुत्तमो (७।१।९१) वेत्यधिकारात् पक्षे भविष्यति। व्यवस्थितविभाषाविज्ञानाच्चान्येषां नित्यम्। नलोपप्रतिषेधोऽपि पक्ष इष्यत इति। कथमेतल्लभ्यते? तत्र हि स्वरितो वाऽनुदात्ते पदादावित्यतो (८।२।६) वेत्यनुवर्तते। तेनैवं विज्ञायते न ङिसम्बुद्धो र्नलोपप्रतिषेधो वा भवतीति। व्यवस्थितविभाषाविज्ञानाच्चोशनसः सम्बुद्धिनकारस्य लोपो वा भविष्यति। अन्येषान्तु नित्यमेव। लोपो न भविष्यतीति। तथाचोक्त मित्यादिनाऽनन्तरोक्तमर्थमागमवचनेन द्रढयति। सान्तमिति यदाऽनङ् न क्रियते। नान्तमिति। नतु नलोपः। अदन्तमिति। यदा नलोपः क्रियते। तपरकरणमसन्देहार्थमिति। असति हि तस्मिन्नुशनसि परतो यणादेशे कृते सन्देहः स्यात् किमृकारान्तस्य ग्रहणमुत रेफान्तस्येति।

## ९५। तृज्वत् क्रोष्टुः।

क्रोष्टुशब्द स्तुन्प्रत्ययान्तः संज्ञाशब्द इति। क्रुश आह्वान इत्येतस्मात् सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन्निति (उण् १।६९) तुन्प्रत्ययान्तस्य संज्ञायां व्युत्पादितत्वात्। संज्ञा पुनरियं जम्बुकस्य। तृज्वद्भवतीति। तृचा तुल्यं वर्त्तत इति तृज्वत्। रूपातिदेशोऽयमिति वक्ष्यति। तत्र तृज्वद् भवतीत्युक्ते

तृच्छब्दस्य यद्रूपं तदतिदिश्यत इति कस्यचिद् भ्रान्तिः स्यात्। अतस्तां निराकर्तुमाह तृजन्तस्य यद्रूपमित्यादि। एतच्च प्रत्ययग्रहणे यस्मात् स विहित स्तदादे स्तदन्तस्य ग्रहणं भवतीत्यतो लभ्यते। यद्यपि शास्त्रातिदेशोऽप्यदोषो बहुधा भाष्ये प्रदर्शित स्तमस्यादुष्टत्वेन प्रतिपादनात् कार्य्यातिदेशोऽप्यदोषवानेव व्याख्यात स्तस्य शास्त्रातिदेशेनाभिन्नत्वात् तथापि शास्त्रातिदेशकार्य्यातिदेशयो रूपार्थत्वाद् रूपे गुणभावः। रूपस्य तु प्राधान्यम्। ताभ्यां तस्य संस्कार्य्यत्वात्। अतो रूपातिदेशोऽयं युक्त इत्याह रूपातिदेशोऽयमित्यादि। यदि तर्हि तृजन्तस्य यद्रूपं तत् क्रोष्टुशब्दस्यातिदिश्यते तदा यत्किञ्चिदेव तृजन्तस्य रूपं वक्ता, पक्ता, इत्येवमाद्यपि प्राप्नोति। अत आह प्रत्यासत्तेश्चेत्यादि। इह धात्वन्तरस्य पचतिप्रभृते स्तृजन्तस्य रूपमस्ति। क्रुशेरपि। तत् किमश्रुतस्य धातो स्तृजन्तस्य यद्रूपं तदतिदिश्यत उत श्रुतस्य क्रुशेरिति? तत्र श्रुतस्यैव यद्रूपं तदेवातिदेष्टुं युक्त मिति क्रुशेरेव तृजन्तस्य यद्रूपं तदेवातिदिश्यते। किं तद्रूपमित्याह तच्चेत्यादि। अन्तोदात्तार्थमिति। चकारोच्चारणसामर्थ्यात् स्वरोऽप्यतिदिश्यते। अन्यथा तृवदित्येव ब्रूयादितिभावः। क्रोष्टेति। तृज्वद्भावे कृते पूर्वसूत्रेणानङ्। क्रोष्टारौ क्रोष्टार इति। ऋतो ङिसर्वनामस्थानयो- ( ७।३।११० ) रिति गुणः। रपरत्वम्। अप्तृन्नादिसूत्रेण ( ६।४।११ ) दीर्घः। क्रोष्टूनिति। प्रथमयोः ( ६।१।१०२ ) पूर्वसवर्ण इति दीर्घः। तस्माच्छसो नः पुंसीति ( ६।१।१०३ ) नत्वम्।

## ९६। स्त्रियाञ्च।

क्रोष्ट्रीभिरिति। तृज्वद्भावे कृते यणादेशः। केन पुनः क्रोष्टुशब्दादीकारः। तृज्वद्भावे कृत ऋन्नेभ्यो ( ४।१।५ ) ङीबित्यनेनेति चेत्? न। अनुदात्तत्वप्रसङ्गादित्यत आह। क्रोष्टुशब्दं केचिदित्यादि। पञ्चभिः क्रोष्टीभिः क्रीतै रिति। तद्धितार्थोत्तरपदसमाहारे चेति (२।१।५१) समासः। आर्हादित्यादिना ( ५।१।१९ ) ठक्। तस्याध्यर्द्धपूर्वेत्यादिना ( ५।१।२८ ) लुक्। लुक् तद्धितलुकीति ( १।२।४९ ) स्त्रीप्रत्ययस्य लुक्। तस्मिंल्लुप्ते ये ङीष्प्रत्यये कृते तृज्वद्भावं कुर्वन्ति तेषां तृज्वद्भावो न भवति। तस्मात् प्रतिविधेयमिति। प्रतिविधानं कर्त्तव्यमित्यर्थः। तत्रेदं प्रतिविधानम्।

चकारोऽत्र क्रियते। स चानुक्तसमुच्चयार्थः। तेन लुमेऽपि स्त्रीप्रत्यये भविष्यति। ये तर्हि गौरादिषु न पठन्ति तेषामीकारः कथमित्याह गौरादिष्वित्यादि। तेषां पञ्चक्रोष्टुभिरिति। अत्र न किञ्चित् प्रतिविधेयम्। परस्य स्त्रीप्रत्ययस्य निमित्तत्वेनानाश्रितत्वात्। ननु च तेषामपि स्त्रीप्रत्ययस्य लुप्तत्वादसत्यामङ्गसंज्ञायामङ्गस्योच्यमान स्तृज्वद्भावो न प्राप्नोतीति प्रतिविधेयमेव। नैतदस्ति। लुप्ते हि स्त्रीप्रत्यये प्रत्ययलक्षणेनाङ्गसंज्ञा भवत्येव। न लुमताङ्गस्येति (१।१।६३) यः प्रतिषेधः सोऽङ्गाधिकारविहितस्यैव कार्य्यस्य। नचाङ्गसंज्ञाऽङ्गाधिकारे विहिता। क्रतेऽतिदेश इत्यादि। इकोऽचि विभक्ताविल्यनुवृत्ते (७।१।७३) विभक्तावुत्पन्नायां तदाश्रयायाश्चाङ्गसंज्ञायां स्त्रियां वर्त्तमानस्य क्रोष्टुशब्दस्यातिदेशः क्रियते। तस्मिन् कृते ऋकारान्तत्वादृन्नेभ्यो ङीबिति (४।१।५) ङीब् भवति। ननु च ङीप्प्रत्यये कृतेऽन्तोदात्तः क्रोष्ट्रीशब्दो न सिध्यतीत्याह तत्रेत्यादि। क्रोष्टुशब्दोन्तोदात्तोऽतिदिश्यत इति तत्सम्बन्धिन ऋकारस्य स्थाने यणादेशो भवन्नुदात्तयण् भवति। ततश्च शतुरनुमो नद्यजादि (६।१।१७३) रित्यनुवर्त्तमान उदात्तयणो हल्पूर्व्वादित्यन्तोदात्तो (६।१।१७४) भवति क्रोष्ट्रीशब्दः।

## ९७। विभाषा तृतीयादिष्वचि।

स्त्रियामिति नानुवर्त्तते। तेनेयमप्राप्तविभाषा। क्रोष्टुनेति। आङो नास्त्रिया (७।३।१२०) मिति नाभावः। क्रोष्टवइति। घेर्ङिती-(७।३।१११) ति गुणः। क्रोष्टुरिति। ऋतउदित्युत्त्वम् (६।१।१११)। रपरत्वम्। रात् सस्येति (८।२।२४) सलोपः। क्रोष्टोरिति। पूर्ववद् गुणः। ङसिङसोश्चेति (६।१।११०) पूर्व्वरूपत्वम्। क्रोष्टरीति। ऋतो ङिसर्वनामस्थानयो (७।३।११०) रिति गुणः। क्रोष्टाविति। अच्च घेरि-(७।३।११९) त्यत्त्वमौत्त्वञ्च। तृज्वद्भावादित्यादि। तृज्वद्भावस्यावकाशः पुंसि क्रोष्टृ इति। नुमोऽवकाशस्त्रपुणी जतुन इति। प्रियक्रोष्टुने वनायेत्यत्रोभयप्रसङ्गे सति नुम् भवति पूर्वविप्रतिषेधेनेति। नुटोऽवकाशोऽग्नीनां वायूनामिति। तृज्वद्भावस्यावकाशः स एव। क्रोष्टूनामित्यत्रोभयप्रसङ्गे सति नुड् भवति पूर्वविप्रतिषेधेनेति। पूर्वविप्रतिषेधस्तु परशब्दस्येष्टवाचित्वाल्लभ्यते।

## ९८। चतुरनडुहोरामुदात्तः।

सर्वनामस्थान इति (७।१।७०) स्वर्य्यते। न तृतीयादिष्विति (७।१।७४)। आगमा अनुदात्ता भवन्तीत्यनुदात्तत्वे प्राप्ते उदात्तत्वार्थं वचनम्। तदन्तविधिरत्रेष्यत इति। अङ्गाधिकारे तस्य तदुत्तरपदस्येति वचनात्। प्रियचत्वारिति-बहुव्रीहिः। सर्वनामसंख्ययोरुपसंख्यान (२।२।३५, वा) मिति संख्यायाः पूर्वनिपाते प्राप्ते वा प्रियस्येति (२।२।३५, वा) प्रियशब्दस्य पूर्व्वनिपातः।

## ९९। अम् सम्बुद्धौ।

पूर्वणामि प्राप्ते वचनम्। हे प्रियचत्वः। हे प्रियानड्वन्निति। अत्र चतुःशब्दस्य केवलस्य सम्बुद्धिर्न भवतीति तदन्तस्योदाहरणम्। अनडुहस्तु यद्यपि केवलस्य सम्भवति तथापि तदन्तविधिरत्रेष्यत इति तदन्तस्योदाहरणम्।

## १००। ऋत इद्धातोः।

किरति गिरतीति। कॄ विक्षेपे। गॄ निगरणे। तुदादिभ्यः शः (३।१।७७)। आस्तीर्णमिति। स्तॄ आच्छादने। रदाभ्यामिति (८।२।४२) नत्वम्। रषाभ्यामिति (८।४।१) णत्वम्। हलि (८।२।७७) चेति दीर्घः। विशीर्णमिति। शॄ हिंसायाम्। मातॄणाम् पितॄणामिति। नामीति (६।४।३) दीर्घः। सत्यपि ऋकारान्तत्वेऽधातुत्वादिह न भवति। ननुच लक्षण-प्रतिपदोक्तपरिभाषयैवात्र न भविष्यति। तत् किमेतन्निवृत्त्यर्थेन धातुग्रहणे-नेत्याह लाक्षणिकस्यापीत्यादि। किमर्थं पुनर्लाक्षणिकस्य ग्रहणमित्याह चिकीर्षतीत्यादि। कथं पुनरिष्यमाणमपि लाक्षणिकस्यात्र ग्रहणं लभ्यते? अतएव धातुग्रहणाज् ज्ञापकात्। तस्य ह्येतत् प्रयोजनं मातॄणां पितॄणामित्यत्र मा भूदिति। यदीह लाक्षणिकस्य ग्रहणं न स्यात् तदा मातॄणां पितॄणा-मित्यादौ लाक्षणिकत्वादेव न भविष्यतीति। धातुग्रहणमनर्थकम्। तस्माल्ला-क्षणिकस्याप्यत्र ग्रहणम्। तेन चिकीर्षतीत्येवमादिष्वज्झनगमां (६।४।१६) सनीति दीर्घत्वे सत्यपि भवत्येव। तपरकरणमसन्देहार्थम्। र इत्युच्यमाने सन्देहः स्यात् किमयं रेफस्य निर्द्देश उत यणादेश ऋकारस्येति।

## १०१ । उपधायाश्च ।

ऋकारान्तस्य धातोरित्त्वमुक्तम् । उपधाभूतस्य धातोर्ऋकारस्य न प्राप्नोति । इष्यते तदर्थमेतत् । कीर्त्तयतीति । कॄत संशब्दने । चुरादौ पठ्यन्तः । ननु चीतियूतिजूतिसातिहेतिकीर्त्तयश्चेति ( ३।३।९७ ) निपातनादेवेत्त्वं भविष्यतीति कथं तदर्थो योगारम्भः । नैतदस्ति । क्तिन्विषय एव निपातनं स्यात् । एवं तर्हि पूर्व्वयोगे धातुना ऋकारं विशेषयिष्यामः । अत्र तत्स्थस्येति । एतदपि नास्ति । एवं सति ऋकारमिच्छत्यृकारीयतीत्यत्रापि स्यात् । तस्माद्वक्तव्यमिदम् । कॄतश्चेति वक्तव्य उपधायाश्चेति वचनं वैचित्र्यार्थम् । कॄतश्चेत्युच्यमाने तकारस्य स्यात् । नैतदस्ति । ऋत इत्यनुवर्त्तयिष्यते । तेन ऋकारस्यैव भविष्यति । अन्यस्त्वाह ऋत इति पूर्व्वसूत्रे विशेषणत्वेन प्रकृतम् । न शक्यते तद्धि विशेष्यत्वेन विवक्षितुमिति । तस्योपधाया ऋकारस्येकारादेशो भवतीत्येष वृत्तिग्रन्थो विरुध्यते । अत्र हि ऋकारस्य विशेष्यता दर्शिता । तस्माद् यथाङ्गस्यैतत् क्वचिद्विशेषणं क्वचिद्विशेष्यं तथा ऋत इत्येतदपि पूर्व्वसूत्रे विशेषणम् । इह तु विशेष्यम् ।

## १०२ । उदोष्ठ्यपूर्व्वस्य ।

ऋत इद्धातोरितीत्त्वे ( ७।१।१०० ) प्राप्त उत्त्वं विधीयते । पूर्त्त इति । पॄ पालनपूरणयोः । क्तः । न ध्याख्येत्यादिना (८।२।५७) प्रतिषिद्धत्वान्न निष्ठानत्वम् भवति । वुवूर्षतीति । वृ वरणे । मुमूर्षतीति । मृ हिंसायाम् । सुस्वूर्षतीति । स्वृ शब्दोपतापयोः । अज्झनगमां सनीति (६।४।१६) दीर्घत्व ऋकारान्तत्वमस्य । अथेह कथमुत्त्वं वृङ् सम्भक्तौ वृञ् वरणे प्रावुवूर्षते प्रावुवूर्षतीति ? नह्यत्र ऋकार ओष्ठ्यपूर्वः । किं तर्हि ? दन्त्यौष्ठ्यपूर्व्वो भवतीत्यादि । यो ह्युभयस्थाने निष्पद्यते लभतेऽसावन्यतरव्यपदेशम् । तेन दन्त्यौष्ठ्यो यो भवति सोऽप्योष्ठ्यो भवत्येव । दन्त्यौष्ठ्यपूर्व्वोऽप्योष्ठ्यपूर्व एव । अथ समीर्णमित्यत्र कस्मान्न भवति । अस्ति ह्यत्राप्योष्ठ्यपूर्वतेत्याह ओष्ठ्यो ह्यत्रेत्यादि । ओष्ठ्यो ह्यत्राङ्गावयवोऽपि । तत्रेह प्रत्यासत्तेरङ्गावयवो गृह्यते । नोपसर्गावयवः । प्रत्यासन्नत्वम् पुनः प्रसङ्गस्य प्रकृतत्वात् । उपसर्गस्य तु नास्ति प्रत्यासन्नत्वम् ।

विपर्य्ययात्। इत्वोत्वाभ्यामित्यादि। इत्वोत्वयोरवकाश आस्तीर्णं पूर्त्तं इति। गुणवृद्ध्योरवकाश शयनं चायक इति। इहोभयं प्राप्नोत्यास्तरणमास्तारको निपरणं निपारक इति। अत्र गुणवृद्धी भवतो विप्रतिषेधेन।

## १०३। बहुलञ्छन्दसि।

ततुरि जंगुरिरिति। तरते गिरते श्चादृगमहनजनः किकिनौ लिट् चेति ( ७।२।१७१ ) किकिनोरन्यतरः। ततश्चोत्त्वे द्विर्वचनेऽ ( १।१।५८ ) चीति स्थानिवद्भावात् तृ गृ इति द्विरुच्यते। उरदित्यत्त्वम् ( ७।४।६६ )। पप्रितमं वव्रितममिति। पृ वृ इत्येतयोः किकिनोरन्यतरः। यणादेशः। किप्रत्ययान्ता-दतिशायने तमबित्यादिना ( ५।३।५५ ) तमप्।

इति श्रीबोधिसत्त्वदेशीयाचार्य्यजिनेन्द्रबुद्धिपादविरचितायां
काशिकाविवरणपञ्जिकायां सप्तमाध्यायस्य
प्रथमः पादः ॥७॥१॥

---

अथ

# काशिकाविवरणपञ्जिका।

## सप्तमाध्यायस्य

## द्वितीयः पादः।

### १। सिचि वृद्धिः परस्मैपदेषु।

सार्व्वधातुकार्धधातुकयोरिति (७।३।८५) गुणे प्राप्ते वचनमिदमारभ्यते। सिचीति परस्मैपदेष्विति च द्वे अप्येते परसप्तम्यौ। तत्र सिचोऽङ्गापेक्षं परत्वम्। परस्मैपदानां तु सिजपेक्षम्। परस्मैपदपर इति। परस्मैपदं परं यस्मात् स तथोक्तः। इगन्तस्येति। इको गुणवृद्धी (१।१।३) इत्यस्योपस्थानं मतोकाऽङ्गं विशिष्यते। विशेषणेन च तदन्तविधिर्भवतीत्याह इगन्तस्याङ्गस्य वृद्धिर्भवतीति। अचैषीदनैषीदिति। चिञ् चयने। णीञ् प्रापणे। भूते लुङ्। च्लेः सिच् (३।१।४४)। एकाचेत्यादिनेट्-प्रतिषेधः (७।२।१०)। अड़ागमः। नित्यं (३।४।९९) ङितइत्यनुवर्त्तमान इतश्चेतीकार (३।४।१००) लोपः। अस्तिसिचोऽपृक्ते (७।३।९६) इतीट्। इण्को-(८।३।५७) रित्यनुवर्त्तमान आदेशप्रत्ययोरिति (८।३।५८) षत्वम्। अलावीदपावीदिति। पूर्व्ववल्लुङ्। आर्धधातुकस्येड् (७।२।३५) वलादे रितीट्। पूर्व्ववदीट्। इट (८।२।२८) ईटीति सिचो लोपः। अकार्षीदित्युदाहरणं सुबोधम्। ननु चात्रान्तरङ्गत्वाद् गुणेन भवितव्यम्। अन्तरङ्गत्वं पुनस्तस्यार्धधातुकापेक्षत्वात्। वृद्धेस्त्वार्द्धधातुकविशेषं परस्मैपदपरं सिचमपेक्ष्य बहिरङ्गत्वम्। अतआह अन्तरङ्ग-

मपीत्यादि। यद्यन्तरङ्गत्वाद् गुणः स्यात् तदतद्वचनमनर्थकं स्यात्। तस्माद्वचनसामर्थ्याद् बहिरङ्गापि वृद्धिर्गुणं बाधते। यद्येवं तर्हि यथा वचनसामर्थ्याद्वृद्धिरन्तरङ्गमपि गुणं बाधते तथोवङादेशमपि बाधेत। ततश्च न्यनुवीन्यधुवीदिति न सिध्येदित्यत आह न्यनुवीन्यधुवीदित्यादि। यत्र हि वृद्धेः प्रतिषेधो नास्ति तत्र वचनसामर्थ्याद्विध्यन्तरं बाधित्वासौ प्रवर्त्तते। इह तु ङित्त्वे सति क्ङिति चेति ( १।१।५ ) वृद्धिः प्रतिषिध्यते। प्रतिषिद्धा च सती नोत्सहत उवङादेशं बाधितुम्। तेन तस्यां प्रतिषिद्धायामचि श्नुधातुभ्रुवामित्यादिनोवङादेशः ( ६।४।७७ ) क्रियते। ङित्त्वं पुनरत्र णू स्तवने धू विधूनने इत्येतयोः कुटादिषु पाठात् गाङ्कुटादि- ( १।२।१ ) सूत्रेण। यथा सामर्थ्याद्वृद्ध्या गुणो बाध्यते तथा प्रतिषेधोऽपि बाध्यत एव। नैतदस्ति। गुणो हि नाप्राप्ते वृद्धिरारभ्यते। प्रतिषेधे तु प्राप्ते चाप्राप्ते च; तत्र येन नाप्राप्तिन्यायेन गुणस्यैव बाधा युक्ता। न प्रतिषेधस्य। अच्योष्टाप्लोष्टेति। च्युङ् क्ष्माङ् ज्युङ् भ्रुङ् प्रुङ् प्लुङ् गतौ। ङित्त्वादात्मनेपदम्।

## २। अतो ल्रान्तस्य

अन्तशब्दोऽयमस्त्यवयववचनो यथा वस्त्रान्तो वसनान्त इति। अस्ति च समीपवाची यथोदकान्तं प्रियं प्रोथमनुव्रजेदिति। उदकसमीपमित्यर्थः। अत्रावयववाचिनोऽन्तशब्दस्य ग्रहणे हलन्तग्रहणमनर्थकं स्यात्। तस्य ह्युपादानस्यैतत् प्रयोजनं रेफलकारान्तस्य यथा स्यादिति। एतच्च येन विधिस्तदन्तस्ये-(१।१।७२) त्यनेनैव सिध्यति। तस्मात् समीपवाचिन एव ग्रहणमिति मत्वाह रेफलकारौ यावतोऽन्तौ समीपाविति। यदि तर्हि ल्रावन्तौ यस्य समीपावत इत्यनेन निर्दिश्यते वृद्धिभाग् न निर्दिष्टः स्यात्। एवञ्चालोऽन्त्यस्येत्यन्त्यस्य ( १।१।५४ ) स्यादकारसमीपभूतस्य ल्रान्तस्यान्त्यस्य वृद्धिभाज इकोऽभावादित्यत आह अतएव स्थान इति। एवं मन्यते। अकारस्य श्रुतत्वादकारस्यैव स्थाने वृद्धिर्विज्ञायत इति। अचारीदित्यादि। चर सञ्चलने। त्सर छद्मगतौ। ज्वल दीप्तौ। ह्वल ह्मल चलनइत्येतेषां रूपाणि। अतो हलादेर्लघो ( ७।२।७ ) रित्यस्य विकल्पस्यायमपवाद इति। एतेन नित्यार्थतामस्य योगस्य दर्शयति। न्यखोरीन्यमीलीदित्यादि। खुर छेदने। मील श्मील स्मील क्ष्मील निमेषणे। मा भवानटीद् मा भवानशीदिति। अट पट गतौ। अश भोजने। न माङ्योगे ( ६।४।७४ ) इत्याट्प्रतिषेधार्थो माङ्योगः। भवानित्ययं सन्देहनिरासार्थः। अतोऽन्यत्र विशेषाभावात्। अवभ्रीदिति। अभ्र

वभ्र मभ्र चर गत्यर्थाः । अखल्लीदिति । खल्ल खल्ल आशुगमने । न तावतः समीपाविति । भकारलकाराभ्यां व्यवधानादिति ।

## ३ । वदव्रजहलन्तस्याचः ।

अनिगन्तार्थोऽयमारम्भः । अथ वदिव्रज्योर्ग्रहणं किमर्थम् ? यावता हलन्तत्वादेव वृद्धिः सिध्यतीत्यत आह विकल्पबाधनार्थमित्यादि । अतो हलादेरिति (७।२।७) विकल्पं वक्ष्यति । तस्य बाधो यथा स्यात् । अपाक्षीदिति । डुपचष् पाके । चोः (८।२।३०) कुरिति कुत्वम् । अभैत्सीदिति । भिदिर् विदारणे । खरि (८।४।५५) चेति चर्त्वं दकारस्य तकारः । अरौत्सीदिति । रुधिर् आवरणे । अतेत्यादि । वदिव्रज्योरित्येको योगः । अचइति द्वितीयः । एवं योगविभागे सति हलन्तग्रहणमन्तरेणापीष्टं सिध्यत्येव । कथमित्यसम्भावयतः प्रश्नः । वदिव्रज्योरित्यादिना यथा योगविभागे सति सिध्यति तथा दर्शयति । तत्र प्रथमयोगे पूर्वसूत्रादत इति स्थान्यनुवर्त्तते । तेनावादीदव्राजीदित्येतावत् सिध्यति । ततो यदच इति द्वितीयं सूत्रं तत्र विशेषणविशेष्यभावयोर्यथेष्टत्वात् प्रकृतेनाङ्गेनाज् विशिष्यतेऽङ्गस्य योऽजिति । तेनाङ्गस्याचो यत्र तत्रावस्थितस्य सिचि परतो वृद्धिर्भवति । अपाक्षीदित्याद्यपि सिध्यति । यद्येवं योगविभाग एव कर्त्तव्यः । किं हल्ग्रहणेनेत्यत आह तदेतदित्यादि । हल्समुदायपरिग्रहः किमर्थो यत स्तदर्थोऽयं यत्न क्रियत इत्याह इहापीत्यादि । अराङ्क्षीदिति । रञ्ज रागे । असाङ्क्षीदिति । षन्ज सङ्गे । ननु चाङ्गस्य योऽच् तस्य सिचि परतो वृद्धिरुच्यते । नचात्राङ्गसम्बन्धिनोऽचोऽनन्तरः परः सिच् सम्भवति यस्यानेन वृद्धिर्विधीयते । तथाह्यकारान्तस्याङ्गस्य तावदतो लोप (६।४।४८) इति लोपेन भवितव्यम् । नच वचनादतो लोपं वृद्धिर्बाधिष्यत इति शक्यते वक्तुम् । यदि ह्यकारान्तस्यैव वृद्धिः स्यात् प्रत्याहारग्रहणमनर्थकं स्यात् । अत इत्येवं ब्रूयात् । अथवा तदपि न ब्रूयात् । पूर्वसूत्रादत इत्यनुवर्त्तयिष्यते । तस्मादकारान्तस्य तावदङ्गस्य सम्बन्धी योऽच् ततोऽनन्तरः सिज् न सम्भवति । आकारान्तस्य तु कामं सम्भवति यावाप्रभृतेः । नतु तस्यास्ति विशेषः सत्यां वा वृद्धावसत्यां वा । इगन्तस्य पुनः सिचि वृद्धिरित्यादिनैव (७।२।१) वृद्धिर्विहिता । सन्ध्यक्षराणाञ्च नास्त्येव । आदेच उपदेशेऽशितीत्या-(६।१।४५) त्त्वविधानात् । उदवोढामुदवोढमित्यत्रास्ति चेत् ? न । ढलोपस्यासिद्धत्वात् ।

तदयं न क्वचिदचोऽनन्तरः परस्मैपदपरः सिच् सम्भवति। उच्यते चेदं वचनम्। ततो येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्याद् यथाऽपाक्षीदित्यादौ वृद्धि भवति तथाऽराङ्क्षीदित्यादावपि वृद्धिर् भविष्यति। ततो नार्थं हल्ग्रहणेनेत्यत आह अन्यथा हीत्यादि। एकेन वर्णेन सर्वत्र व्यवधानमस्ति। हल्समुदायेन क्वचिदेवाराङ्क्षीदित्यादौ। अपाक्षीदित्यादौ नास्ति। तत्रासति हल्ग्रहणेऽनन्तरोक्तया नीत्या यत्रैकेन वर्णेन व्यवधानमस्त्यपाक्षीदित्यादौ तत्रैव स्यात्। यत्र त्वनेकवर्णेन व्यवधानमस्त्यराङ्क्षीदित्यादौ तत्र न स्यात्। यथाऽपिपठिषीदित्यादौ। आद्ययोरचो र्व्यवधानान्न भवति। हल्ग्रहणे तु सति हल्समुदायेन व्यवधानेऽपि भवति। हल्ग्रहणसामर्थ्यात्। उदवोढामुदवोढ मित्यत्र वहेर्वृद्धिः कस्मान्न भवति? ढलोपे कृतेऽहलन्तादिति चेत्? न। ढलोपस्यासिद्धत्वादिति यश्चोदयेत् तं प्रत्याह क्रियत एवात्र वृद्धिः। तस्यास्त्वोत्त्वं विधीयत इति दर्शयितुमाह उदवोढामित्यादि। आदिशब्देन धत्वादयो गृह्यन्ते। वहेरुत्पूर्व्वाल्लुङ्। तस्थसौ। तयोस्तस्थमिपामित्यादिना ( ३।४।१०१) तान्तमादेशौ यथाक्रमम्। हलन्तलक्षणा वृद्धिः। हो ढ ( ८।२।३१ ) इति ढत्वम्। झलो ( ८।२।२६ ) झलीति सिचो लोपः। झषस्तथो र्धोऽध (८।२।४०) इति धत्वम्। ष्टुना ष्टु ( ८।४।४१ ) रिति ष्टुत्वम्। सहिवहोरोदवर्णस्येत्योत्त्वम् ( ६।३।११२ )। तत्र ह्योत्त्वे कृते पुनर्वृद्धिः कस्मान्न भवतीत्याह तत्र कृते पुनरित्यादि। एकं ह्यत्र वृद्धिशास्त्रम्। तेन च प्रागेव कृता वृद्धिरिति कृतकार्य्यत्वाद् वृद्धिशास्त्रस्य पुनस्तन्न व्याप्रियत इति न भवति पुनर्वृद्धिः। सौढामित्रि रित्यत्र तर्हि कथमोत्त्वे कृते वृद्धि र्भवतीत्याह यत्र त्वित्यादि। यत्र प्राग् वृद्धिः कृता तत्र कृतार्थत्वाद् वृद्धिशास्त्रस्य पुनर्न व्याप्रियत इति न भवति वृद्धिः। सौढामित्रिरित्यत्र तु न कृता वृद्धिः। तस्मादकृतार्थत्वाद् वृद्धिशास्त्रं व्याप्रियत इति भवत्येव वृद्धिः। सा च भवन्त्यौकारस्य भवति नाकारस्य वृद्धिरिति। वृद्धिविधानकाल ओकारस्यैव वृद्धिभाजः सन्निहितत्वात्। सहेर् निष्ठा। तत्र ढत्वादिषु कृतेषु सोढ इति भवति। सोढोऽमित्रोऽनेनेति सोढामित्रः। तस्यापत्यमित्यत इञ् ( ४।१।९५ )। तद्धितेष्वचामादेरिति वृद्धिः ( ७।२।११७ )। येन विधिस्तदन्तस्यैवेति ( १।१।७२ ) सिद्धे तदन्तत्वेऽन्तग्रहणमसन्देहार्थम्। हलोऽ च इत्युच्यमाने सन्देहः स्यात् किमजन्तस्याङ्गस्य हलो वृद्धि र्भवत्यत हलन्तस्याच इति।

## ४ । नेटि ।

हलन्तस्याच इति या वृद्धिः प्राप्ता सा हलन्तलक्षणा वृद्धिरनेन प्रतिषिध्यतेऽनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति (प, ६२) कृत्वा। अदेवीदसेवीदिति। दिवु क्रीडादौ। षिवु तन्तुसन्ताने। इडभावपक्षे वृद्धौ प्रतिषिद्धायां पुगन्तलघूपधस्येति (७।३।८६) गुणः। अकोपीदमोषीदिति। कुप निष्कर्षे। मुष स्तेये। नन्वनेनैव तदन्तरङ्गत्वादिति चोद्यम्। नैतदेवमिति परिहारः। उभयञ्चैतद् गतार्थम्।

## ५ । ह्म्यन्त-क्षण-श्वस-जागृ-णि-श्व्येदिताम् ।

अग्रहीदिति। ग्रह उपादाने। अस्यमीदिति। स्यमु स्वन ध्वन शब्दे। अवमीदिति। टुवम उद्गिरणे। अव्ययीदिति। व्यय वित्तसमुत्सर्गे। अक्षणीदिति। क्षण हिंसायाम्। अश्वसीदिति। श्वस प्राणने। अजागरीदिति। जागृ निद्राक्षये। औनयीदैलयीदिति। ऊन परिहाणे। ईल प्रेरणे। चुरादिर्णिच्। णौनयतीत्यादिना (३।१।५१) चङि प्रतिषिद्धे सिजेव भवति। आड़जादीना (६।४।७२) मित्याट्। आटश्चेति वृद्धिः (६।१।९०)। अश्वयीदिति। टुओश्वि गतिवृद्ध्योः। अरगीदलगीदिति। रगे लगे सङ्गे। अस्थगीदिति। ष्ठगे संवरणे। अकखीदिति। कखे हसने। सा च नेटीति न (७।२।४) प्रतिषिध्यत इति। अनन्तरया हलन्तलक्षणया वृद्धेः प्रतिषेधः। न पूर्वस्याः। अथ किमर्थं ण्श्विग्रहणम्? यावतान्तरङ्गत्वादेवात्र गुणेन भवितव्यम्। कृते गुणेऽयादेशेन। ततश्च यकारान्तत्वादेव तयोः प्रतिषेधो भविष्यतीत्याह नचेत्यादि। इदमन्तरङ्गत्वं सिच्यभ्युपेत्योक्तम्। इदानी मन्तरङ्गत्व मेव सिचि नास्तीति दर्शयितु माह यदीत्यादि। किं कारणं ण्श्विग्रहणमनर्थकं स्यादित्यत आह गुणायादेशयोरिति। यदि तर्हि सिचयन्तरङ्गत्वं नास्ति यदुक्तमन्तरङ्गमपि गुणमेषा वृद्धि र्वचनाद् बाधत इति तद्विरुध्यते। नास्ति विरोधः। अध्यारोप्य तथाभिधानात्। अर्थेत्यादि। अत्र वक्ष्यमाणोऽभिप्रायः। अथ जागृग्रहणं किमर्थमिति पृष्टस्य किं कारणं जागृग्रहणं न कर्त्तव्यमिति प्रश्नावसरे येनाभिप्रायेण पृष्टवांस्तमाविष्कर्त्तुमाह जाग्रोऽविचिण्णल्ङित्स्वित्यादि। यथा जागरयतीत्यादावचो ञ्णितीति (७।२।११५) प्राप्तां वृद्धिं जागर्त्तेर्गुणो बाधते तथा सिचि वृद्धिमपि बाधिष्यते। वृद्ध्यपवादत्वाद् गुणशास्त्रस्य। गुणे कृत इत्यादि।

अक्कृते हि गुणे या सिचि वृद्धिः प्राप्नोति सापवादत्वाद् गुणेन बाध्यते। अक्कृतार्थत्वाद् गुणशास्त्रस्य। न च सानेन वचनेन बाधिष्यते। किं तर्हि? गुणे कृते रपरत्वे चातो ल्रान्तस्येत्युत्तरकालं (७।२।२) या वृद्धिः प्राप्नोति तस्याः प्रतिषेधो विधीयते। न च शक्या गुणेन बाधितुं सा। न हि जाग्रोऽविचिण्णल्ङित्स्विति ( ७।३।८५ ) शास्त्रं पुनः प्रवर्त्तितुमुत्सहते। कृतार्थत्वात्। नचान्यद् गुणलक्षणमस्त्युत्तरकालवृद्धेर्बाधकम्। तत्र यदि जागृग्रहणं न क्रियतेऽतो ल्रान्तस्येति ( ७।२।२ ) वृद्धिः स्यात्। अथेत्यादि चोदकः। यदि गुणेऽपि कृते पुनर्वृद्धिः स्याद् वृद्धिविषये गुणविधान मनर्थकं स्यात्। तस्मात् गुणविधानसामर्थ्याद् यापि गुणे कृते रपरत्वे च पश्चादतो ल्रान्तस्येति ( ७।२।२ ) वृद्धिः प्राप्नोति सा प्रतिषिध्यते यथा जागरयतीत्यत्र। गुणे कृते रपरत्वे च या प्राप्नोतीत्यत उपधाया ( ७।२।११६ ) इत्युत्तरकालभाविनी वृद्धिः सापि न भवति। गुणेन बाधितत्वात्। तथाचेत्यादि। गुणविधानसामर्थ्यादुत्तरकालभाविन्यपि वृद्धिर्गुणेन बाध्यत इति तदेव द्रढ़यति। एवञ्च चिण्णलोः प्रतिषेधोऽर्थवान् भवति यदुत्तरकालभाविन्यपि वृद्धिर्बाध्यते। अन्यथा हि गुणे कृते रपरत्वे चात उपधाया ( ७।२।११६ ) इति वृद्ध्या भवितव्यम्। चिण्णलो र्यः प्रतिषेधः क्रियते सोऽनर्थकः स्यात्। तस्मादुत्तरकालभाविन्यपि वृद्धि गुणेन बाध्यत इति स्थितमेतत्। ततश्च शक्यमेव जागृग्रहणमकर्त्तुम्। एवं प्रत्याख्याते जागृग्रहण इतर आह तत् क्रियत इत्यादि। य एवं प्रतिपत्तुं न शक्त स्तं प्रति विस्पष्टार्थं जागृग्रहणं क्रियते।

## ६। ऊर्णोति र्विभाषा।

नित्यं वृद्धिप्रसङ्गे प्राप्ते विकल्पार्थं वचनम्।

## ७। अतो हलादे र्लघोः।

नेटीति प्रतिषेधे प्राप्ते विकल्पार्थमिदमारभ्यते। अकणीदकाणीदिति। अण रण वण कण भण क्वणेति भ्वादौ पठ्यते। अरणीदराणीदिति। रणिरपि तत्रैव। न्यकुटीदिति। कुट कौटिल्ये। न्यपुटीदिति। पुट संश्लेषणे। ननु चात्र कुटादित्वान् ङित्त्वे सति क्ङिति ( १।१।५ ) चेति प्रतिषेधो भविष्यति। ततो नैतत् तन्निवृत्त्यर्थमत इत्येतत् कर्त्तव्यमित्यत आह अत इत्येतस्मिन्नसतीत्यादि। यद्यत

इति नोच्येत ततोऽवश्यं वदव्रजहलन्तस्याच ( ७।२।१ ) इत्यनुवर्त्तयितव्यम्। अन्यथा ह्यनिर्दिष्टस्थानिकत्वादिक एव लघो र्विकल्पेन वृद्धिः स्याददेवीदित्यादौ। अकाणीदित्यादौ त्वकारस्य न स्यात्। अजग्रहणानुवृत्तौ तु सत्यामज्लक्षणेयं वृद्धिः स्यात्। नेग्लक्षणा। निर्दिष्टस्थानिकत्वात्। यत्र हि स्थानी न निर्दिश्यते स इग्लक्षणाया वृद्धे र्विषयः। न तु यत्र स्थानी निर्दिश्यते सोऽपि। ततश्च क्ङिति ( १।१।५ ) चेति प्रतिषेधो न स्यात्। तत्रेक इत्यधिकारात्। तस्मान्न्य-कुटीन्यपुटीदित्यत्र विकल्पेन वृद्धि र्मा भूदित्येवमर्थमत इति वक्तव्यम्। अतक्षीद-रक्षीदिति। तक्ष त्वक्ष तनूकरणे। रक्ष पालने। इह सिचआनन्तर्य्येऽकारस्य वृद्धिरुच्यते। न क्वचिदनन्तरः सिच् सम्भवति। तत्र येन नाव्यवधानं तेन व्यव-हितेऽपि वचनप्रामाण्यादिति व्यवधानेऽपि वृद्ध्या भवितव्यम्। एवं यथाकाणी-दित्यत्र लघोरकारस्य भवति तथाचकासीदित्यत्रापि लघोरकारस्य वृद्ध्या भवितव्य-मेवेत्यनेनाभिप्रायेणाह अथेह कस्मान्नभवत्यचकासीदिति ? चकासृ दीप्तौ। येने-त्यादि परीहारः। हला व्यवधानमाश्रितमिति। हलन्तस्येत्यनुवृत्ते रित्यभिप्रायः। लघोरिति किमिति येनैवं पृष्टं स एवं लघुग्रहणं प्रत्याचिख्यासुराह अथ पुन-रित्यादि। यद्येवं परिकल्प्यते वचनप्रामाण्याद् हला व्यवधानमाश्रीयते नत्वचा-ऽतो लघोरिति वक्तव्यम्। अन्यथा ह्यतक्षीदित्यादावपि स्यात्। अत्र हि हला व्यवधानम्। नाचा। अथ पुनरिदं परिकल्प्यते येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यादित्येकेन वर्णेन व्यवधान माश्रीयते न पुनरनेकेनेति नार्थो लघोरित्य-नेनेति। नह्येवं परिकल्प्यमानेऽतक्षीदित्यादौ प्राप्नोति। यद्यनेकेन वर्णेन व्यवधानमित्यत आह तत् क्रियत इत्यादि।

## ८। नेड् वशि कृति।

आर्धधातुकस्येड् वलादे ( ७।२।७५ ) रितीटं वक्ष्यति। तस्य यत्र प्रकृतिलक्षणः प्रतिषेधो नास्ति तत्रानेन प्रतिषेधः क्रियते। पुरस्तात् प्रतिषेधकाण्डस्य प्रयोजनं क्रादिनियमसूत्रे ( ७।२।१३ ) वक्ष्यति। ईश्वरेत्यादिना प्रत्ययान्तरे लिटो भावेनेकाच उपदेशेऽनुदात्तादिति ( ७।२।१० ) यः प्रकृतिनिमित्तकः प्रतिषेध-स्तदभावमेवाचष्टे। ईश्वरइति। ईश ऐश्वर्य्ये। स्थेशभासेत्यादिना ( ३।२।१७५) वरच्। दीप्रइति। दीपी दीप्तौ। नमिकम्पीत्यादिना ( ३।२।१६७ ) रः। भस्मेति। भस भर्त्सनदीप्त्योः। अतो मनिन्क्वनिब्वनिपश्चेत्यादा-( ३।२।७४ )

वन्येभ्योऽपि दृश्यन्त ( ७।२।७५ ) इति मनिन्। याञ्चेति। टु याचृ याञ्चायाम्। यजयाचेत्यादिना ( ७।३।६६ ) नङ्। वरमनादौ प्रयोजनमिति यदुक्तं तत्र परिगणनत्वमवधार्य य एवं चोदयेद् यदि वरमनादाविति परिगणनं क्रियते तदा षणु दाने। अमन्ताड्डः (उण्, १।१११) षण्डः। शमेः खः (उण्, १।१०२) शङ्ख इत्यादौ प्रतिषेधो न प्राप्नोतीति तंप्रति नेदं परिगणन मिति दर्शयितु माह वरमनादावित्युदाहरणमिति। अथ तत्रेत्यादि। तत्रौणादिके डप्रत्यये समाधीयतेति परिगणनपक्षभावि चोद्यं परिक्रियत इत्यर्थः। सम्भवोदाहरणप्रदर्शनार्थमेतदिति। अत्रापि न परिगणनमेतदिति सम्बध्यते। प्रतिषेधस्य सम्भव उदाक्रियते। यत्र क्रति प्रतिषेधः सम्भवति तस्य प्रदर्शनार्थमेतदुक्तं भवति। यत्र वशादौ क्रतीट्-प्रतिषेधः सम्भवति तस्य प्रदर्शनार्थं वरमनादावित्युक्तम्। न पुनरेतत् परिगणनमिति। रुरुदिव रुरुदिमेत्यत्र क्रदग्रहणादार्धधातुकस्येटो न भवति प्रतिषेधः।

## ९। ति-तु-त्र-त-थ-सि-सु-सर-क-सेषु च।

अवशाद्यर्थोऽयमारम्भः। तन्तिरिति। तनु विस्तारे। क्तिच्क्तौ च संज्ञाया ( ३।३।१७४ ) मिति क्तिच्। अनुदात्तोपदेशवनतीत्यादिना ( ६।४।३७ ) ऽनुनासिकलोपः प्राप्नोति। अनुनासिकस्य क्विझलोः क्ङितीति (६।४।१५) दीर्घश्च। तदुभयमपि न क्तिचि दीर्घश्चेति ( ६।४।३९ ) प्रतिषेधान्न भवति। दीप्तिरिति। क्तिन्नाबादिभ्यश्चेति ( ३।३।९४, वा ) क्तिन्। रोदिति स्वपितीत्यत्र प्रतिषेधो न भवति। क्रतीत्यनुवृत्तेः। सक्तुरिति। सच समवाये। पत्रमिति। पत्लृ गतौ। तन्त्रमिति। तनु विस्तारे। हस्तइति। हस हसने। लोत इति। लूञ् छेदने। औणादिकस्येत्यादि। ऊर्णोतेर्विभाषेत्यतो (७।२।६) विभाषाग्रहण मनुवर्त्तते। सा च व्यवस्थितविभाषा। तेनौणादिक एव तशब्दे प्रतिषेधेन भवितव्यम्। नान्यत्र। यत्र प्रतिषेधेन भवितव्यं तस्यैव ग्रहणं युक्तमित्यौणादिकतशब्दस्य ग्रहणमिष्यते। नतु क्तस्य। तेन हसितमित्यत्रेड़ागमो भवत्येव। कुष्ठमिति। कुष निष्कर्षे। काष्ठ मिति। काश्रृ दीप्तौ। शकारस्य व्रश्चादिसूत्रेण ( ८।२।३६ ) षत्वम्। ष्टुना ष्टु ( ८।४।४१ ) रिति ष्टुत्वम्। कुक्षिरिति। कुषेः षढोः कः सीति ( ८।२।४१ ) कत्वम्। इण्को ( ८।३।५७ ) रिति षत्वम्। इक्षुरिति। इषु इच्छायाम्। पूर्ववत् कत्वषत्वे। अक्षरमिति। अशू व्याप्तौ। व्रश्चादिसूत्रेण (८।२।३६) षत्वम्।

पूर्ववत् कत्वम्। अल्कमिति। अल गतौ। वत्स इति। वद व्यक्तायां वाचि। चर्त्वं तकारः। तितुत्रतथेष्वग्रहादीनां वक्तव्यमिति। तितुत्रतथेत्यादिसूत्रमुपलक्षयति। तितुत्रतथेत्यादौ ग्रहादीनां प्रतिषेधो न भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्। इहापि विभाषेत्यनुवर्त्तते। सा च व्यवस्थितविभाषा। तेन ग्रहादीनां प्रतिषेधो न भवति। ग्रहादयो ग्रहप्रकारा इति। अनेनादिशब्दस्य प्रकारार्थतामाचष्टे। के पुनर्ग्रहप्रकारा इत्याह येषामित्यादि। निगृहीतिरिति। स्त्रियां ( ३।३।९४ ) क्तिन्। ग्रहोऽलिटि दीर्घ इति (७।२।३७) दीर्घः। ग्रह्यादिना ( ६।१।१६ ) सूत्रेण संप्रसारणम्। उपस्निहितिरिति। ष्णिह प्रीतौ। निकुचितिरिति। कुच सङ्कोचे। अत्र त्वौणादिकानां ग्रहणं शक्यमकर्त्तुम्। यथैव ह्युणादयो बहुल (३।३।१) मिति बहुलवचनात् अमन्ताड् ड (उण् १।१११) इत्येवमादाविण् न भवति तथा तेष्वपि न भवितव्यम्। प्रपञ्चार्थं तेषां ग्रहणं वेदितव्यम्।

## १० । एकाच उपदेशेऽनुदात्तात् ।

अनुदात्तादिति। बहुव्रीहिरयम्। नास्योदात्तोऽस्तीत्यनुदात्तः। अन्वर्थशब्दोऽयमनुदात्तशब्दः। शास्त्रीये ह्यनुदात्ते गृह्यमाण एकवर्णा एव धातवो गृह्येरन्। तथा चान्येषां धातूनामनुदात्तप्रतिज्ञानमनर्थकं स्यात्। इह चेकाज्ग्रहणमुपदेशविशेषणम्। उपदेशइति। प्रकृतिपाठ इत्यर्थः। अनुदात्तस्वेत्युपदेश इत्यपेक्षते। तेनोपदेशग्रहणमुभयविशेषणमिति दर्शयति। तस्य प्रयोजनं प्रत्युदाहरणेष्वाविष्करिष्यति। ये तथा गणे पठ्यन्तइति। एतेन गणपाठादेव ते वेदितव्या इति दर्शयति। त एवेत्यादिना द्वितीयं परिज्ञानहेतुमाह। काःपुनस्ता अनिट्कारिका इत्याह अनिट् स्वरान्त इत्यादि। यावान् कश्चित् स्वरान्तोऽजन्तो धातुः स सर्वोऽनिड् भवतीत्येतद् दृश्यतामवगम्यताम्। अनिड़िति बहुव्रीहिः। नास्मादिड़स्तीति। अनिट् स्वरान्त इत्यस्योत्सर्गस्यापवादमाह इमांस्त्वित्यादि। इमांस्त्वदन्तादीन् वक्ष्यमाणान् सेटः प्रवदन्ति। इटा सह वर्त्तन्तइति सेटः। के वदन्ति ? तद्विदः सेड़निड्विदइत्यर्थः। अदन्तमिति बहुव्रीहिः। अकारस्तपरोऽन्तो यस्य स तथोक्तः। तपरकरणं दीर्घनिवृत्त्यर्थम्। ऋदन्तमित्ययमपि बहुव्रीहिः। तपरकरणमसन्देहार्थम्। रन्तमित्युच्यमाने किमयं रेफस्य निर्देश उत ऋकारस्येति सन्देहः स्यात्। ऋताञ्चेति। ऋतामिति

निर्धारणे षष्ठी। ऋकारान्तानां मध्ये वृङ्वृञौ सेटौ प्रवदन्ति। तपरकरणं पादपूरणार्थम्। पूर्वमृकारान्तग्रहणादेव हि ऋस्वस्य ग्रहणमिहावसीयते। श्विडीङिवर्णेष्विति। निर्धारणे सप्तमी। इवर्णान्तेषु मध्ये श्विडीङौ सेटौ प्रवदन्ति। टुओश्वि गतिवृद्ध्योः। डीङ् विहायसा गतौ। अथ शीङ्श्रिया-वपीति। अथेत्यानन्तर्य्ये। अनयोः पूर्व्वोक्तयो रनन्तरं शीङ्श्रियावपि सेटौ प्रवदन्ति। शीङ् स्वप्ने। श्रिञ् सेवायाम्। गणस्थमिति। स्वरूपाख्यान-मेतत्। नतु विशेषणं गणनिवृत्त्यर्थमिति। तस्यासम्भवात्। ऊदन्तमिति। लूञ् छेदने। पूञ् पवन इत्येवमादयः। उताञ्चेति। निर्धारणषष्ठी। रु शब्दे। स्नु प्रस्रवणे। क्षुवं तथोर्णोतिमित्यादि। टुक्षु शब्दे। ऊर्णुञ् आच्छादने। यु मिश्रणे। नु स्तुतौ। क्ष्णु तेजने। आवधिष्टेति। आङ् पूर्वाद्धन्ते-र्लुङ्। आङो यमहन (१।३।२८) इत्यात्मनेपदम्। आत्मनेपदेष्वन्यतरस्या-मिति (२।४।४४) वधादेशः। स चावधोदित्यत्र वृत्ति र्मा भूदित्येवमर्थमदन्तः पठ्यते। इट्। अतो लोप (६।४।४८) इत्यकारलोपः। अथ किमर्थं मूर्णोति रुदात्त उपदिश्यते? इट्प्रतिषेधो मा भूदिति चेत्? नेतदस्ति। एकाचो ह्रीट्प्रतिषेध उच्यते। नचास्यैकाच्त्वमस्तीत्यतआह वाच्य ऊर्णो र्णुवद्भाव इत्येकाच्त्वमिति। पदान्तस्यापि कुत्वाभावः। कुत्वस्यानित्यत्वात्। अनित्यत्वन्तु बह्वच्पूर्वपदाट्-( ४।४।६४ ) त्याच्तरमिति ( २।२।३४ )। निर्द्देशाद् वेदितव्यम्। इतीत्येवमर्थः। निपुणमिति। सम्यगविपरीतमित्यर्थः। क्रियाविशेषणञ्चैतत्। समुच्चिताइति। उदात्तानुदात्तसंकीर्णाद्धातुराशेः पृथग् व्यवस्थिता इत्यर्थः। तत इति। स्वरान्तधातुसमुच्चयनादुत्तरकालम्। हलन्तानपि निबोधतावगच्छतेत्यर्थः। शकिस्त्वित्यादि। शक्लृ शक्तौ। घसिश्चे-त्यादि। ननु चादिं हदिमित्यादेः स्वरूपग्रहणे सति तस्य स्थाने लुङ्सनोर् घस्लृति विहितस्य घस्लादेशस्यापि स्थानिवद्भावेनानिट्त्वं सिध्यत्येव। तत् किमर्थं घसिः पृथगुपादीयत इत्याह घसिः प्रकृत्यन्तरमस्तीति। अन्यदेव ह्रीदं धात्व-न्तरं घस्लृ अदनइत्यदादौ पठ्यते। तस्येदं ग्रहणम्। नत्वादेशस्य। प्रसारणीति। प्रसारणं सम्प्रसारणम्। तदस्यास्तीति प्रसारणी। वसितेति। वस आच्छादने। वस निवासइत्यस्य संप्रसारणं विहितमिति। वच्यादिसूत्रेण (६।१।१५)। एतेन निवासार्थो वसिः प्रसारणी। नत्वाच्छादनार्थ इति दर्शयति। रभिसेत्यादि। रभ राभस्ये। यभ मैथुने। डुलभष् प्राप्तौ। यमि

ञमन्तेष्वित्यादि। अमिति (A) ञकारादारभ्य ञमो मकारेण प्रत्याहारग्रहणम्। यम उपरमे। रमु क्रीड़ायाम्। मन ज्ञाने। णम प्रह्वत्वे शब्दे च। हन हिंसागत्योः। गम्लृ सृप्लृ गतौ। श्यनि पठ्यत इति। श्यन्ग्रहणेन साहचर्य्याद् दिवादिर् लक्ष्यते। दिवादौ पठ्यत इत्यर्थः। प्रतिषेधवाचिनामिति। प्रतिषेधं वक्तुं शीलं येषां ते तथोक्ताः। धातव एव ह्यनुदात्तलिङ्गानुषक्ताः प्रतिषेधं प्रतिपादयन्तीति प्रतिषेधवाचिन उच्यन्ते। अथवेट् प्रतिषेधमात्मविषय माचार्य्येण वाचयन्त्यभिधापयन्तीति प्रतिषेधवाचिन इत्युच्यन्ते। एवञ्चात्र सम्बन्धः कर्त्तव्यः। अमन्तेषु मध्ये ये प्रतिषेधवाचिनो धातव स्तेषां मध्ये यमिरनिड़िष्यते। रमिश्चेत्यादि। अथवा प्रतिषेधवाचिनामित्यत्र मतेनेत्याध्याहार्य्यम्। तत्रैवं सम्बन्धः कर्त्तव्यः। इट्प्रतिषेधवाचिनामाचार्य्याणां मतेन यमिर् अमन्तेष्वनिड़ेक इष्यत इति। मनुतेरिति। मनु अवबोधन इत्येतस्य तानादिकस्य। दिहिरित्यादि। दिह उपचये। दुह प्रपूरणे। मिह सेचने। रुह जन्मनि प्रादुर्भावे। वह प्रापणे। नह बन्धने। दह भस्मीकरणे। लिह आस्वादने। मुक्तसंशया इति। मुक्त स्त्यक्तः संशयो येषु ये वा ते तथोक्ताः। प्रविभज्य कीर्त्तिता इति। सेड़निड्विभागेन व्यवस्थाप्य कीर्त्तिता इत्यर्थः। देग्धा दोग्धाइति। दादेर्धातोर्घ इति (८।२।३२) घत्वम्। झष स्तथोर्धोऽध इति (८।२।४०) धत्वम्। झलाञ्जश् झशीति (८।४।५३) जश्त्वमितिरेते विधयः कर्त्तव्याः। मेढ़ा। आरोढ़ेति। हो ढइति (८।२।३१) ढत्वम्। पूर्व्ववद्धत्वम्। ष्टुना ष्टुरिति (८।४।४१) ष्टुत्वम्। ढो ढे लोप इति (८।३।१३) ढलोपः। वोढ़ेति। पूर्व्ववड्ढत्वादि। सहिवहो रोदवर्णस्येत्योत्त्वम् (६।३।११२)। नद्धेति। नहो ध इति (८।२।३४) धत्वम्। पूर्व्ववज्जश्त्वम्। तन्त्रान्तर इति। आपिशले व्याकरणे। सहे विकल्प स्तकारादाविति। तीष (७।२।४८) सहेत्यादिना तकारादौ सहे र्विकल्प उक्तः। मुहि रपि रधादौ पठ्यत इति। एतेन मुहेरपि रधादिभ्यश्चेति (७।२।४५) विकल्पं दर्शयति। तेन तौ ससंशयौ सविकल्पाविति। एतेन विकल्पात्मकेन संशयेन तौ ससंशयौ। नतु सन्देहात्मकेनेति दर्शयति। इतराविति। रिहि लुहो केश्चिदभ्युपगम्येते इति। आपिशलिप्रभृतिभिः। स्वरूपेणैव ससंशयाविति।

(A) अमिति व्याघ्रभूतिनानिट्कारिकाकृता गृहीतः प्रत्याहारः। तदर्थमाचष्टे अमितीति। मुद्रित-काशिकायां तु यमि र्यमन्तेष्विति पाठः। तत्र यमिति प्रत्याहार एतच्छास्त्रोक्तः। यथा हलो यमां यमि लोप (८।४।६४) इति।

स्वरूपेणेति स्वभावेन। ससंशयौ ससन्देहौ। संशयो ह्यत्र सन्देहे वर्त्तते। सन्देहस्तु धातुष्वपाठात्। अथच कैश्चिदभ्युपगमाच्च। तयोश्चैको हिंसायां (B) वर्त्तमानोऽभ्युपगम्यते। अपरस्तु गार्द्ध्ये। दिशिं दृशिमित्यादि। दिश अतिसर्जने। दृशिर् प्रेक्षणे। दन्श दशने। अथोशब्दः पादपूरणे। मृश आमर्द्दने। स्पृश संस्पर्शे। रुश रिश हिंसायाम्। क्रुश आह्वाने रोदने च। विश प्रवेशने। लिश अल्पीभावे। पुराणगा इति। पुराणं व्याकरणम्। चिरन्तनत्वात्। तद् गायन्त्यधीयते ये ते पुराणगाः। पाठेष्विति। अनिट्-कारिकापाठेषु धातुपाठेषु वा। नेतरानिति। स्पश बाधनस्पर्शनयोरित्येव-मादीनिति। देष्टेति। व्रश्चादिसूत्रेण ( ८।२।३६ ) षत्वम्। अनुदात्तस्येत्यादिना ( ६।१।५९ ) मृशिप्रभृतीनामनुदात्तेट्प्रतिषेधादधिकं फलं दर्शयति। रुधिः सराधिरित्यादि। सह राधिना वर्त्तत इति सराधिः। रुधिर् आवरणे। राध साध संसिद्धौ। राधोऽकर्मकाद्वृद्धावेति द्वयोरपि ग्रहणमिष्यते विशेषाभावात्। युध संप्रहारे। बन्ध बन्धने। क्रुध कोपे। क्षुध बुभुक्षायाम्। शुध शौचे। बुध अवगमने। व्यध ताड़ने। सिधु संराद्धौ। नेतर इति। इन्धिप्रभृतयः। न्यायश्विकरणयोरिति। शब्विकरणयोरित्यर्थः। बुध बोधने सिधु गत्यामित्येतयोर् निष्ठायामपीत्यादि। अथ कथं बुधि भौवादिकस्य प्रतिषेध आशङ्कितः? सिधेरुदित्त्वेन प्रतिषिद्धत्वात्। उदितो वेति ( ७।२।५६ ) क्त्वाप्रत्यये विकल्प-विधानाद् यस्य विभाषेति ( ७।२।१५ ) निष्ठायां प्रतिषेधेन भवितव्य मिति युक्ता प्रतिषेधाशङ्का। बुधेस्तु न किञ्चिन्निष्ठायां प्रतिषेधाशङ्काकारणमस्ति। तस्याप्यस्ति। इह भौवादिकदैवादिकयो र्बुध्योरर्थरूपे समाने। अतस्तार्थ-रूपसाम्यादुपजातभ्रान्तिः प्रतिपत्ता। एक एवायं धातुः। विकरणद्वयार्थमुभयो र्गणयोः पाठस्तस्य चार्द्धधातुकइड़भ्युक्तः। अनेन सूत्रेणेट्प्रतिषेधोऽपीत्येकविषय-त्वाद् विधिप्रतिषेधयोः पर्य्यायप्रतिपत्तौ विभाषेट्त्वम्। अतो यस्य विभाषेति ( ७।२।१५ ) निष्ठायां प्रतिषेधेन भवितव्यमिति कैश्चिन्मन्यते। तस्मात् तन्मतमा-

---

(B) तथाच शिशुं न विप्रा मतिभी रिहन्तीति ऋग्वेदे ( ८।७।७।१ ) प्रयोगः। रिहन्तीति लिहन्ति स्तुवन्ति वर्द्धयन्ति पूजयन्तीति वेति यास्कः ( निरुक्ते दैवतकाण्डे ५।४।२४ )। नेति पदं वेदे इवार्थे बहुशः प्रयुक्तम्। वेनदेवताके सूक्तेऽयमुद्धृतांशो वर्त्तते। तत्रेमं वेनमित्यर्थः। शिशुमित्युपमानम्। तस्य वेनः कान्तिकर्मा इव उपमेयम्। अन्येतु लौकिके प्रयोगे रिहन्ति हिंसन्तीत्यर्थं माहुः। वैदिके विषये तु लिहे र्धातो रिहिरुत्पन्नः। रलयोरैक्यादिति केचित्।

शङ्क्येदमुक्तं निष्ठायामपीत्यादि। एवम्मन्यते। अन्यएव भौवादिको बुधि र्यस्येड्-विधिः। अन्यश्च दैवादिको यस्येट्प्रतिषेधः। तस्माद् भिन्नविषयत्वाद्विधि-प्रतिषेधयो र्विभाषेट्त्वं नोपपद्यत इति। अथ सिधेर्निष्ठायां प्रतिषेधाभावः कथमुक्तः? यावतोदित्त्वात् तस्योदितो वेति (७।२।५६) विभाषेट्त्वाद् यस्य विभाषेति (७।२।१५) निष्ठायां भवितव्यमेव प्रतिषेधेन। एवम्मन्यते। सिधेरुदित्त्वमनार्षमेव। यदि तस्योदित्त्वं स्याद् भ्वादौ पाठोऽनर्थकः स्यात्। यदनेन साध्यं रूपं तस्य षिधू शास्त्र इत्यनेनैव सिद्धत्वात्। अनुदित्त्वे तु तस्य सिधित मित्येतत्सिद्धयेऽर्थवान् पाठो भवति। नह्येतत् षिधू शास्त्र इत्यनेन सिध्यति। ऊदित्त्वे नास्य स्वरतीत्यादिना (७।२।४४) विभाषितेटो यस्य विभाषेति (७।२।१५) निष्ठायामिट्प्रतिषेधात्। तस्माद् भ्वादिपाठादेव सिधेरुदित्त्वमनार्षमेव। शिषिं पिषिमित्यादि। शिष्लृ विशरणे। पिष्लृ सञ्चूर्णने। शुष शोषणे। पुष पुष्टौ। त्विष दीप्तौ। जिषु विषु मिषु सेचने। विष्लृ व्याप्तौ। द्वयोरपि ग्रहणम्। श्लिष आलिङ्गने। श्रिषु श्लिषु प्रुषु प्लुषु दाहे। द्वयोरपि ग्रहणम्। तुष तुष्टौ। दुष वैकृत्ये। द्विष अप्रीतौ। कृष विलेखने। भौवादिकतौदादिकौ। पुष्यतीति। श्यना निर्देशो भौवादिकक्रैयादिकयो र्निवृत्त्यर्थः। शुष्यतिप्रभृतीनां तु वृत्तभङ्गपरिहारार्थः (C)। क्रष्टा कर्ष्टेति। पूर्ववद् विकल्पेनामागमः। तपिं तिपिमित्यादि। तप सन्तापे। तप ऐश्वर्य्ये। द्वयोरपि ग्रहणम्। तिपृ तेपृ ष्टेपृ क्षरणार्थाः। आप्लृ व्याप्तौ। टुवप वीजतन्तुसन्ताने। ञिष्वप् शये। लिप उपदाहे। लुप्लृ छेदने। तृप प्रीणने। दृप हर्षणमोचनयोः। गम्लृ सृप्लृ गतौ। स्वरेण नोचेनेति। अनुदात्तेनेत्यर्थः। शप आक्रोशे। शप उपलम्भे। उभयोरपि ग्रहणम्। क्षुप स्पर्शे। क्षिप प्रेरणे। तृप्यतिदृप्यतो रनुदात्तेत्वममागमार्थ मनुदात्तस्ये-त्यादिना (६।१।५९) पचेऽमागमो यथा स्यात्। इट्प्रतिषेधार्थं कस्मान्न भवतीत्याह इट् त्वनयोरित्यादि। तुदादिषु यौ तृपिदृपी इति। तृप तृम्प तृप्तौ दृप उपक्लेशइत्येतौ। अदिं हदिमित्यादि। अद भक्षणे। हद पुरीषोत्-सर्गे। स्कन्दिर् गतिशोषणयोः। भिदिर् विदारणे। छिदिर् द्वैधीकरणे। क्षुदिर् सम्पेषणे। शदॢ शातने। षदॢ विशरणगत्यवसादनेषु। ञिष्विदा गात्रप्रक्षरणे। पद गतौ। खिद दैन्ये। खिद परिघाते। उभयोरपि

(C) अनिट्स्वरान्त इत्यादिषु सर्वेषु श्लोकेषु वंशस्थविलं वृत्तम्। केवलम् पचिं विचिमित्यादावन्यश्लोके रुचिरावृत्तम्।

ग्रहणम्। तुद व्यथने। णुद प्रेरणे। विद सत्तायाम्। विद विचारणे। ञिष्विदेत्यस्य ग्रहणं मा भूदिति। ञिष्विदा स्नेहनमोचनयोरित्यस्य। अन्यविकरणनिवृत्त्यर्थ इति। विद ज्ञान इति लुग्विकरणस्य विद्लृ लाभ इत्यस्य शविकरणस्य च निवृत्त्यर्थः। विद वेदनाख्याननिवासेष्वित्यस्य चौरादिकस्यानेकाच्त्वादेवाप्रसङ्गः। पचिं वचिमित्यादि। डुपचष् पाके। वच परिभाषणे। ब्रुवो वचि (२।४।५३) रिति च द्वयोरपि ग्रहणम्। सौत्रोऽप्युपदेशो भवत्येव। विचिर् पृथग्भावे। विचिर् विवेचने। रञ्ज रागे। प्रच्छ ज्ञीप्सायाम्। णिजिर् शौचपोषणयोः। षिचिर् क्षरणे। मुच्लृ मोक्षणे। भज सेवायाम्। भञ्जो आमर्दने। भ्रस्ज पाके। त्यज हानौ। यज देवपूजासङ्गतिकरणदानेषु। युजिर् योगे। युज समाधौ। द्वयोरपि ग्रहणम्। रुजो भङ्गे। षन्ज सङ्गे। टुमस्जो शुद्धौ। भुज पालनाभ्यवहारयोः। भुजो कौटिल्ये। द्वयोरपि ग्रहणम्। ष्वञ्ज परिष्वङ्गे। कृतानुनासिकलोपस्य निर्देशो वृत्तभङ्गपरीहारार्थः। सृज विसर्गे। मृजू शुद्धौ। आदादिकः। मृज शौचालङ्कारयोरिति चौरादिकोऽप्यस्ति। सोऽपि यदाऽदृष्टपाठ इति (ग, सू) णिच् नास्ति तदा शक्य एव ग्रहीतुम्। यदा त्वस्ति तदानेकाच्त्वादेवेट्प्रतिषेधाप्रसङ्गः। मृजिरय मित्यादिनेट्प्रतिषेधार्थतां मृजेरिह निरस्यति। अमागमोऽप्यस्येत्यादि। अनेनामागमार्थताम्। तदिद्धेत्यादि। यत एव हि प्रयोजनद्वयं न सम्भवति तस्मादिहास्य पाठे प्रयोजनं चिन्त्यम्। तत्र केचिदाहुः—यद्यप्यमागमो न दृश्यते तथाप्यसौ कर्त्तव्य एव। अन्यथा ह्यस्य पाठोऽनर्थकः स्यात्। नहि यन्न दृश्यते तेन न भवितव्यमेव? अन्यथा हि यथालक्षणमप्रयुक्तेष्वित्येतद् वचनमप्रयुज्यमानं स्यात्। अन्ये तु वर्णयन्ति मृजे निरुपपदात् क्विबन्ताद् विकारावयवविवक्षायां मार्ज इत्यनुदात्तादेरञित्यञ् (४।२।४४) यथा स्यादित्येतत् प्रयोजनामिति। एतच्चायुक्तम्। एकाच्त्वाद्धि नित्यं मयटा भवितव्यम्। तथाहि नित्यं वृद्धशरादिभ्य (४।३।१४४) इत्यत्र नित्यग्रहणं किमर्थं यावतारम्भसामर्थ्यादेव नित्यं भविष्यतीति चोदित इदमुक्तमेकाचो नित्यं मयटमिच्छन्तीति तदर्थमेतत् क्रियते त्वङ्मयं वाङ्मयमिति। केचिदित्यादि। केचित् प्रयोजनमपश्यन्तो मृजेःस्थाने विजिं पठन्ति। किं कारणमित्याह निजादिषु हीत्यादि। विजिर् पृथग्भावइति निजादिषु विजिः पठ्यते। स यस्मादनिड्भिष्यते तस्मान्मृजि मपनीय तस्य स्थाने विजिं पठन्ति। कथं ज्ञायतेऽसावनिड्ष्यत इत्याह तथाचेत्यादि। तन्त्रान्तरइति। आपिशलिव्याकरणे। अथ मृजिविजी इत्यस्मिन् पाठे ओविजी

भयचलनयोरित्यस्य ग्रहणं कस्मान्न भवति? ईदित्त्वात्। तद्धेवमर्थं क्रियते श्वीदितो निष्ठाया (७।२।१४) मितीट्प्रतिषेधो यथा स्यात्। यदि च तस्यापीह ग्रहणं स्यादनेनैव सिद्धत्वादीदित्त्वमनर्थकं स्यात्। अवधीदिति। लुङि चेति (२।४।४३) वधादेशोऽदन्तः। स चानुदात्तस्यादेशः स्थानिवद्भावेनैव भवति। उपदेशेऽनुदात्त एकाच उपदेशो न भवतीति न भवति प्रतिषेधः। कथं पुनरयमेकाज् भवतीत्याह वृद्धिनिवृत्त्यर्थमित्यादि। यदि ह्यदन्तो वधिर्नोपदिश्येतातो हलादेर्लघोरिति (७।२।७) विकल्पेन वृद्धिः स्यात्। अदन्ते तु सति न भवति। तत्र येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यादित्येकेन वर्णेन व्यवधान माश्रीयते। नत्वनेकेनेति हला व्यवधानमाश्रितम्। अदन्तत्वे तु सति वधेरकारलोपस्य पूर्वविधौ स्थानिवद्भावेनापि व्यवधानं भवति। न केवलं हलेव। यापि हलन्तलक्षणा वृद्धिः साप्यदन्तत्वे सति न भवत्येव। अकार-लोपस्य स्थानिवद्भावादहलन्तत्वात्। तस्माद्वृद्धिनिवृत्त्यर्थमदन्तो वधिरुपदिश्यते। ननु यद्यप्यदन्त उपदिश्यते तथापि स्थानिवद्भावेनैकाजिति व्यपदेशे सति भवितव्यमेव प्रतिषेधेन। नैतदस्ति। एवं ह्येकाज् ग्रहणमनर्थकं स्यात्। तथाहि जागृदरिद्राचकास्प्रभृतीनामुदात्तत्वान् नेकाज्ग्रहणं ते प्रयोजयन्ति। सनाद्यन्तानां धातूनामुपदेशत्वं नास्ति। लाक्षणिकत्वात् समुदायस्य। नचान्योऽनेकाज् धातु रुपदेशेऽनुदात्तोऽस्ति य एकाज् ग्रहणं प्रयोजयति। नचास्मिन् व्यपदेशे कर्त्तव्ये स्थानिवद्भावोऽस्ति। अल्विधित्वात्। इह च यथा स्यादिति। असत्युपदेशग्रहण एकाचो धातोरनुदात्तादिड़ागमो न भवतीत्येष सूत्रार्थः। एवञ्च लविष्यति पविष्यतीत्यत्रेड़ागमो न स्यात्। भवत्यत्र प्रत्ययस्वरे कृते शेषानुदात्तत्वे धातुरनुदात्तः। तथाच कर्त्ता कटान् कर्त्तुमिच्छतीत्यत्र त्विड़ागमः स्यादेव। तृणि तुमुनि च कृते नित्स्वरेण धातोरुदात्तत्वात्। उपदेशग्रहणे तु सति तेनाद्यावस्था विशिष्यत इति न भवत्येष दोषप्रसङ्गः। यद्यप्युत्तरकालं लुनातिपुनाती अनुदात्तौ तथाप्युपदेशावस्थायामुदात्तावेव। तथा यद्युत्तरकालं करोतिरुदात्त स्तथाप्युपदेशावस्थायामनुदात्त एव। अथ बिभित्सतीत्यत्र कथं प्रतिषेधः? यावता बिभिच्छब्दस्य प्रकृतिपाठो नास्ति। उपदेशेनाप्येकाच्त्वम्। नैष दोषः। यद्यपि बिभिच्छब्दस्य प्रकृतिपाठो नास्ति नाप्येकाच्त्वं तथापि भिदेस्तूभयमिदमस्ति। द्विष्प्रयोगो

द्विर्वचनमित्ययमपि तत्र पक्ष आश्रितः। तेन भिदिरेव तत्र द्विरुच्यते। तस्य चोभयविशेषणविशिष्टत्वात् सिध्यत्येव प्रतिषेधः।

## ११। श्र्युकः किति।

उदात्तार्थं आरम्भः। लूनइति। ल्वादिभ्यश्चेति नत्वम् (८।२।४४)। तीर्णइति। अत्रापि रदाभ्या (८।२।४२) मिति। केचिदित्यादि। ग्लाजिस्थश्च क्स्नुरिति (३।२।१०६)। भुवश्चेति वक्तव्य (३।२।१३८) मित्यत्र भवतेः क्स्नुप्रत्यये गिति कृते सति विधीयमानत्वाद् गितीट् प्रतिषेधो न प्राप्नोति। ततश्च भूष्णुरिति न सिध्येत्। तस्माद् भूष्णुरित्यत्रेट्प्रतिषेधार्थं केचित् स्वभूति (D) व्याड़िप्रभृतयः श्र्युकः कितीत्यत्र द्विककारनिर्देशेन हेतुना चर्त्वभूतो गकारः प्रश्लिष्ट इत्येवमाचक्षते। यदि चर्त्वभूतो गकारः प्रश्लिष्ट एवं सति ससजुषो रुरिति (८।२।६६) रुत्वे कृते चर्त्वस्यासिद्धत्वाद् हशि चेति (६।१।११४) रोरुत्वेन भवितव्यम्। ननु विसर्जनीयेन। ततश्च श्र्युकः कितीति निर्देशो न युज्यत इत्येतच्चोद्यन्निराकर्त्तुमाह सौत्रत्वान्निर्देशस्येत्यादि। चर्त्वभूतस्यासिद्धत्वमनाश्रित्य रोरुत्वं न कृतम्। विसर्जनीयश्च कृतइति वर्णयन्ति। किमर्थं पुनस्ते क्स्नुप्रत्यये गित्त्वं प्रतिजानते? यस्मिन् सतीदं व्याख्यानं कर्त्तव्यं जायते? स्थास्नुशब्दस्य सिद्धार्थम्। एवं हि ते मन्यन्ते। क्स्नोः कित्त्वे सति घुमास्थागादि-(६।४।६४) सूत्रेण तिष्ठतेरीत्त्वं स्यात्। ततश्च स्थास्नुरिति न सिध्येदिति। ग्लाजिस्थश्च क्स्नुरित्यत्रेत्यादि। गित्त्वे हि सति क्स्नोरिट्प्रतिषेधार्थमेवं व्याख्यायते। नच तस्य गित्त्वम्। किं तर्हि? कित्त्वमेव। नच कित्त्वे सतीत्त्वं प्रसज्यते यस्माद् ग्लाजिस्थश्च क्स्नु (३।२।१३९) रित्यत्र स्था आ इत्यकारप्रश्लेषः कृतः। तिष्ठतेः क्स्नुप्रत्ययान्तस्याकारान्तस्याकारान्ततैव यथा स्यात्। ईकारान्तता मा भूदित्येवमर्थः। आकारप्रश्लेषे हि सतीत्त्वापवादस् तिष्ठते राकारादेशो भवति। अतस्तेन बाधितत्वादीत्त्वन्न प्रवर्त्तते। तदेवं कित्त्वे सत्याकारप्रश्लेषात् स्थास्नुशब्दस्य सिद्धत्वान्न किञ्चिदेतत्। एतद् व्याख्यानमसार-

(D) सुभूतिव्याड़िप्रभृतय इति पाठान्तरम्। Taking the name as सुभूति, he is an ancient grammarian. He appears to have been prior to व्याड़ि; otherwise the statement should have probably been व्याड़िसुभूति—In fact he cannot be identical with that सुभूतिचन्द्र who is connected with the सारस्वतव्याकरण।

मित्यर्थः । तीर्णमित्यत्रापि किं पुनः कारणमसत्युपदेशग्रहणेऽत्र न स्यात्? यावता तरतिरयमुगन्तः पठ्यत इत्याह इत्त्वे होत्यादि । ऋत इद्धातो-( ७।१।१०० ) रितीत्त्वे रपरत्वे च कृत उगन्तता विहतेत्यसत्युपदेशग्रहणे न स्यात् । तस्मिंस्तु सति भवति । यद्यप्युत्तरकालं तरतिरुगन्तो न भवति तथाप्युपदेश एव । मा भूदेवमित्यादि चोदकः । कस्य पुनरित्यादीतरः । कृत इति चोदकः । यद्येव मित्यादीतरः । स्थानिवद्भावादिति चोदकः । अनल्विधाविती तरः । तत्रैतत् स्यात् । अयमप्यल्विधिरित्यत आह अल्विधिश्चायमिति । अल्विधित्वं पुनरुगिति प्रत्याहारग्रहणात् । तस्मादित्याह यस्मादेवमसत्युपदेशग्रहणे तीर्णं इत्यत्र प्रतिषेधो न प्राप्नोति तस्मादुपदेश इत्यनुवर्त्तनीयम् । तथाच सतीत्यादि । उपदेशेऽनुवर्त्तमाने सतीत्यर्थः । जागरित इत्यत्रापि प्राप्नोतीति जागर्त्तेरुपदेशा-वस्थायामुगन्तत्वात् । तदर्थमिति । जागरित इत्यादाविट्प्रतिषेधप्राप्ति-निवृत्त्यर्थम् । अर्थशब्दस्य निवृत्तिवाचित्वात् । यदि तर्ह्येकाच इत्यनुवर्त्तते प्रोर्णुतः प्रोर्णुतवानित्यत्रेट् प्रतिषेधो न प्राप्नोति । ऊर्णोतेरनेकाच्त्वादित्यत आह वाच्य ऊर्णोर्णुवदित्यादि ( ३।१।२२, वा ) । अस्याः कारिकायाः पूर्व-मेवार्थो व्याख्यात इति न पुन र्व्याख्यायते ।

## १२ । सनि ग्रहगुहोश्च ।

ग्रहेः सनि नित्यमिटि प्राप्ते गुहेरप्यूदित्त्वात् स्वरतीत्यादि-( ७।२।४४ ) सूत्रेण विकल्पे प्राप्तेऽस्यारम्भः । चकार उक इत्यनुकर्षणार्थः । ननुचेको झल्-( १।२।९ ) त्युगन्तानां किदेव सन् । तत्र पूर्वेणैव प्रतिषेधः सिद्धः । किमुक इत्यनुकर्षणार्थेन चकारेण? नैतदस्ति । नह्यिट्प्रतिषेधमन्तरेण सनो झलादित्व मुपपद्यते । कुतः कित्त्वम्? अनेन त्विटि प्रतिषिद्धे झलादित्वं सनो जायते । पश्चाद् गुणप्रतिषेधार्थं कित्त्वमिति क्रमः? जिघृक्षतीति । रुदविदेत्यादिना ( १ २।८ ) सनः कित्त्वे सति ग्रह्यादिसूत्रेण ( ६।१।१६ ) संप्रसारणम् । हो ढइति ( ८।२।३१ ) ढत्वम् । षढो कः सीति ( ८।२।४१ ) कत्वम् । इण्कोरिति ( ८।३।५७ ) षत्वम् । एकाचो बशो भषित्यादिना ( ८।२।३७ ) भष्भावेन गकारस्य घकारः । द्विर्वचनमभ्यासकार्य्यम् । जुघुक्षत इति । गुहू संवरणे । पूर्ववत् सन ( १।३।६२ ) इत्यात्मनेपदम् ।

करूषतीति। अज्झनगमां सनीति ( ६।४।१६ ) दीर्घः। अथ चकारेण यथोगन्तमनुकृष्यते तथाचैकयोगनिर्द्दिष्टः श्रयतिरप्यनुकृष्यतेत्यत आह श्रिस्व्- यूर्णुभरज्ञपीत्यादि। श्रयतेः सनीवन्तर्द्धतीटी ( ७।२।४९ ) विकल्पं विधास्यतो- ऽतस्तस्येहानुवृत्तिरपार्थिकेति नानुकृष्यते।

## १३। कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि।

चकृव चकृमेति। परस्मैपदानामित्यादिना ( ३।४।८२ ) वस्मसोर्वमा- देशौ। क्रादय एवेति नियमस्य स्वरूपं दर्शयति। लिट्येव क्रादयोऽनिट इत्येष तु विपरीतनियमो नाशङ्कनीयः। कृतलब्धक्रीतकुशला इति (४।३।३८) तमधीष्टो भृतो भूतो भावी (५।१।८०) वेतयादि निर्द्देशात्। केन पुनस्तेषामिट्- प्रतिषेधः सिद्धो यतः सिद्धे सत्यारम्भो नियमार्थ उच्यत इत्यत आह अनुदात्तो- पदेशानामित्यादि। अनुदात्तोपदेशा वृङ्वृञ्भ्यामन्ये करोतयादयः। तेषामिवाच इत्यादिना ( ७।२।१० ) प्रकृत्याश्रयः प्रतिषेधः सिद्धः। वृङ्वृञोस्तु श्र्युकःकितीति ( ७।२।११ ) प्रत्ययाश्रयः। नतु प्रकृत्याश्रयः। तयोरुदात्त- त्वात्। तदित्यादि। यतएव तेषां यथायोगं प्रकृत्याश्रयः प्रत्ययाश्रयश्च प्रतिषेधः सिद्धस्तस्मादुभयस्यापि प्रतिषेधस्य प्रयुक्तस्यायं नियम इत्यर्थः। धात्वन्तरेभ्यो व्यवच्छिद्य करोत्यादीनां प्रतिषेधस्येह नियमो वेदितव्यः। कथं पुनरेतद् वृञं प्रति थलि नियमार्थमुपपद्यते? सति हि प्रतिषेधे नियमो भवति। नास्ति वृञस्थलीट्प्रतिषेधः। तस्य हि नात्र प्रकृत्याश्रयः प्रतिषेधः सिद्धः। उदात्तत्वात्। नापि प्रत्ययाश्रयः। थलः कित्त्वाभावात्। तस्मात् वृञं प्रति थलीट्प्रतिषेधार्थतैव युक्ता। न नियमार्थतेत्यत आह वृञो हीत्यादि। व्यवस्था नियमः। बभूथाततन्थजगृभ्मववर्थेति ( ७।२।६४ ) निगमइति निपात- नाद् वृञो निगमएव थलीट्प्रतिषेधेन भवितव्यम्। न भाषायाम्। यत एवं व्यवस्था तस्मान्नायं वृञ स्थलीट्प्रतिषेधः। अन्यथा ववर्थेति निपातनस्य वैयर्थ्यं स्यात्। तस्यात् प्रतिषेधाभावात् वृञोऽप्येतत् सूत्रं नियमार्थमेव विज्ञायत इत्येकान्त एषः। स्तुद्रुस्रुश्रुवान्वित्यादि। अपिशब्द आर्धधातुक- लक्षणोऽपि य इट् प्राप्नोति सोऽपि नेष्यत इति दर्शनार्थः। कथं पुनरिष्यमाणोऽपि लभ्यते। पुरस्तात् प्रतिषेधकाण्डस्य बलीयस्त्वात्। इह च न वृङ्गश्चतुर्भ्य

( ७।२।५८ ) इत्यस्यानन्तरमिदं प्रतिषेधकाण्डं कर्त्तुं युक्तम्। एवं द्विष्प्रतिषेधाश्रयणं न कर्त्तव्यं स्यात्। यदयं पुरस्तात् प्रतिषेधं करोति तस्यैतत् प्रयोजनम्। इण्मात्रस्यानाश्रितविशेषविधानस्य प्रतिषेधो विज्ञायते। पुरस्तात् प्रतिषेधे क्रियमाणे सति विशेष मनाश्रित्येण्मात्रस्यायमपवादो भवति। तेन यावानिट् प्राप्तस्तस्य सर्व्वस्य प्रतिषेधो भवति सिद्धः। अन्यस्त्वाह नेटीत्यनुवर्त्तमाने पुनरिड्ग्रहणसामर्थ्यात् पुनः प्रतिषेधसामर्थ्याच्चेण्मात्रस्य प्रतिषेधो विज्ञायते। कृञोऽसुट्कस्येति वक्तव्यमिति। करोते रविद्यमानसुटः प्रतिषेधो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। किमर्थम्? ससुट्कस्येड़ागमो यथा स्यात्। तत्रेदं व्याख्यानम्। द्वन्द्वे घीत्यनेन ( २।२।३२ ) स्तुप्रभृतीनामन्यतमस्य घिसंज्ञकस्य पूर्वनिपातमकृत्वैतत् सूचितं यथेह पूर्वनिपातलक्षणं व्यभिचरति स्वविषये न प्रवर्त्तते तथेदमपीति। तेन यदा करोतिः ससुट्कस्तत्र न प्रवर्त्तत इति। सञ्चस्करिव सञ्चस्करिमेति। संपर्य्युपेभ्यः करोतौ भूषण इति ( ६।१।१३७ ) सुड़ित्यनुवर्त्तमानेऽड़भ्यासव्यवायेऽपीति ( ६।१।१३६ ) सुट् क्रियते। ऋतो भारद्वाजस्ये ( ७।२।६३ ) त्येतदप्यसुट्कस्यैवेष्यतइति। थलि इति सम्बध्यते। कथं पुनरसुट्कस्यैव भवतीति लभ्यते? यथा लभ्यते तच्च श्रूयताम्। तत्र स्व्रुदितो ( ७।२।४४ ) वेत्यतो वेत्यनुवर्त्तते मण्डूकप्लुतिन्यायेन। सा च व्यवस्थितविभाषा। तेनासुट्कस्यैव भवतीति॥

## १४। श्वीदितो निष्ठायाम्।

शून इति। वच्यादिसूत्रेण ( ६।१।१५ ) सम्प्रसारणम्। हलइति ( ८।२।७७ ) दीर्घः। लग्नइति। नत्वस्यासिद्धत्वाच्चोः कुरिति ( ८।२।३० ) कुत्वम्। उड्डीनइति। डीङ् विहायसा गतौ। ननु डीङ उदात्तत्वान्निष्ठायामिट् प्राप्नोति। तस्य प्रतिषेधो वक्तव्यः। अन्यथा ह्युड्डयित इत्यनिष्टं रूपं स्यादिति यो मन्येत तं प्रत्याह डीङ इत्यादि। ओदितामिति स्वादीनामित्यर्थः। स्वादय ओदित इति (ग,सू) वचनात्। स्वादयः षूङ् प्राणिगर्भविमोचन इत्यादयः। कथं कृत्वा ज्ञापक इत्याह स हीत्यादि। स्वादीनां ह्योदितां मध्ये तस्यैवमर्थः पाठो निष्ठातकारस्यौदित उत्तरस्य नत्वं यथा स्यात्। स्यादेतत्। इटयपि कृते नत्वं भविष्यतीत्याह नत्वञ्चेत्यादि। तस्मादितुत्तरस्ये-( १।१।६७ )

त्यत्र निर्दिष्टग्रहणस्यानन्तर्यार्थस्यानुवृत्तेरोदितो धातोरनन्तरस्य निष्ठातकारस्य नत्वं विधीयते। तत्र यदि डीङः परस्या निष्ठाया इट् स्यात् तदा सत्यप्योदित्त्व इटा व्यवहितत्वान्नत्वेन न भवितव्यम्। निर्त्योदितां मध्ये तस्य पाठोऽनर्थकत्वान्न कृतः स्यात्। स चास्ति। तस्मात् स एव पाठो ज्ञापको डीङ उत्तरस्या निष्ठाया इण् न भवतीति। ननु स्वादिषु पाठसामर्थ्याद् व्यवधानेऽपि स्यात्। कथमसौ ज्ञापकः? नैतदस्ति। एवं ह्यानन्तर्यपरिभाषा (प,६२) बाधिता भवति। शास्त्रञ्चानिष्टं स्यात्। एतच्चायुक्तम्। नह्यनिष्टार्था शास्त्रे प्रक्लृप्तिरस्ति। तस्माद् यथानन्तर्यपरिभाषा न बाध्यते शास्त्रञ्च नानिष्टं भवत्योदितां मध्ये डीङः पाठश्च सफलो भवति स प्रकारोऽभ्युपगन्तव्यः। ततश्चौदितां मध्ये डीङः पाठो ज्ञापकएव। अपरः प्रकारः। ओदितश्च- (८।२।४४) त्यत्रौदित इत्यतद्द्विरावर्त्तयिष्यते। तस्मादित्युत्तरस्येत्य-(१।१।६७) स्याः परिभाषाया द्विरुपस्थानार्थम्। तत्रास्या यद्द्वितीय मुपस्थानं तस्यैतत् प्रयोजनम्। डीङोऽप्यनन्तरस्यैव निष्ठातकारस्य नत्वं यथा स्यादिति। यदि च डीङो निष्ठाया मिट् स्यादिटा व्यवहितत्वान्नत्वं न स्यात्। न च शक्यते वक्तुं व्यवधानेऽपि पाठसामर्थ्याद् भविष्यतीति! एवं हि परिभाषाया द्विरुपस्थानमनर्थकं स्यात्। एतच्चायुक्तम्। तस्मादोदितां मध्ये डीङः पाठो ज्ञापक एव। श्विग्रहणं शक्यमकर्त्तुम्। ओदित्करणादेव निष्ठायामिण् न भविष्यति। ओदित्त्वं हि नत्वार्थं क्रियते। नत्वञ्च निष्ठातोऽनन्तरस्य विधीयते। यदि च ततः परस्या निष्ठाया इट् स्यादोदित्त्वमनर्थकं स्यात्। वैचित्र्यार्थं श्विग्रहणं वेदितव्यम्।

## १५। यस्य विभाषा।

विधूतइति। धूञ् कम्पने। गूढ़इति। गुहू संवरणे। ढत्वादिषु कृतेषु ढ्रलोप इत्यादिना (६।३।१११) दीर्घः। अथेह कस्मात् प्रतिषेधो न भवति पतित इति? भवति हि पति विभाषितेट्। सनीवन्तर्ध्येत्यत्र (७।२।४९) तनिपतिदरिद्राणामुपसंख्यानमिति विकल्पेनोपसंख्यानादित्यत-आह द्वितीया श्रितेत्यादि।

## १६ । आदितश्च ।

भावादिकर्म्मणोरनन्तरं विभाषां वक्ष्यति । ततोऽन्यत्र कर्त्तरि कर्म्मणि चायं प्रतिषेधो विज्ञायते । आश्वस्तइति । श्वस प्राणने । वान्तइति । टुवम उद्गिरणे । अनुनासिकस्य क्विझलोः क्ङितीति (६।४।१५) दोर्घः । योगविभागकरणं किमर्थमिति पृष्टस्यादितश्च विभाषा भावादिकर्म्मणोरिति यद्येकयोगः क्रियते ततो भावादिकर्म्मभ्यामन्यत्र प्रतिषेधो न स्यादिति प्रतिवचनमाशङ्क्याह आदितश्चेत्यादि । आदितश्च विभाषा भावादिकर्म्मणोरित्येकयोगे भावादिकर्मणोर् विभाषायां विहितायां ततोऽन्यत्र कर्त्रादौ यस्य विभाषेति (७।२।१५) प्रतिषेधो भविष्यति । तस्मादपार्थकं योगविभागकरणम् । ज्ञापनार्थमित्यादिनाऽपार्थकत्वं परिहरति । यदुपाधे विभाषा तदुपाधेरिति । उभयत्रापि बहुव्रीहिः । उपाधि विशेषणम् । स चैतदर्थ उपाधि विज्ञेयः । यदि यदुपाधे विभाषा तदन्योपाधेरपि प्रतिषेधः स्यात् तदा योगविभागं न कुर्य्यात् । एकयोगेनापि भावादिकर्म्मणो विहिते विकल्पे ततोऽन्यत्र यस्य विभाषेति (७।२।१५) प्रतिषेधो लभ्यत एव । कृतश्च योगविभागः । तस्मादेतेन योगविभागकरणेन सूचितं यदुपाधेर्विभाषा तदुपाधे निषेधइति । तेनेत्यादिना ज्ञापकस्य प्रयोजनं दर्शयति । अत्र विदेर्लाभार्थस्य विभाषेति विशिना तौदादिकेन साहचर्य्याल्लाभार्थस्य तौदादिकस्य ग्रहणम् । यस्य विभाषेति (७।२।१५) च तस्यैव प्रतिषेधो भवति । नान्यस्य । यदि यदुपाधे विभाषा तदुपाधेर्निषेध इति ज्ञाप्यते जृव्रश्चोः क्त्वि (७।२।५५) उदितो वेति (७।२।५६) क्त्वाप्रत्यये भावविषये विभाषिते यस्य विभाषेति भावविषय एव निष्ठायामिट् प्रतिषेधः स्यात् । न कर्त्तृकर्मणोः । नैष दोषः । आश्रीयमाणो हि धर्म्मो भेदको भवति । न च क्त्वाप्रत्यये निष्ठायां वा भिन्न मभिधेयं निमित्तत्वेनाश्रितम् । तस्माद् भवत्येवात्र प्रतिषेधः । अत्र लिङ्गं तेन निर्वृत्त (४।२।६८) मिति निर्द्देशः ।

## १७ । विभाषा भावादिकर्म्मणोः ।

मिन्नमनेनेति । नपुंसके भावे क्तः । मेदितमिति । निष्ठा शीङित्यादिना (१।२।१९) कित्त्वप्रतिषेधे गुणः । प्रमिन्न इति । प्रशब्द आदिकर्म द्योतयति । आदिकर्म्मेति आदिभूतक्रियाक्षण इति । तस्मिन् भूतत्वेन विवक्षिते यः क्तः स

पुनरादिकर्मणि क्तः कर्त्तरि चेत्यनेन ( ३।४।७१ ) कर्त्तरि कारके भवति। शक्तो घटः कर्त्तुं शकितो घटः कर्त्तुमित्यस्य सिद्धये विभाषेति योगविभागोऽत्र कर्त्तव्यः। तत्रादित इति नानुवर्त्तनीयम्। भावादिकर्मणोरित्यत्र द्वितीये योगेऽनुवर्त्तनीयमेव।

## १८। क्षुब्ध-स्वान्त-ध्वान्तलग्न-म्लिष्ट-विरिब्ध-फाण्टबाढ़ानि मन्थमनस्तमः-सक्ताविस्पष्टस्वरानायास-भृशेषु।

क्षुब्ध इति। क्षुभ सञ्चलन इत्यस्येडभावो निपात्यते। मन्थाभिधानञ्चेदिति। समुदायेन चेन् मन्थोऽभिधीयते। मन्थ इति द्रवद्रव्यसम्पृक्ताः सक्तव उच्यन्ते। क्षुब्धो मन्थइति। चलितो मन्थ इत्यर्थः। क्षुभितं मन्थेनेति। नात्र मन्थोऽभिधीयते। किं तर्हि ? तत्साधनं चलनम्। अथ मन्थाभिधाने क्षुब्धशब्दो निपात्यते क्षुब्धा गिरिनदी क्षुब्धा सेना क्षुब्धः समुद्र इत्यादि नोपपद्यत इत्यत आह क्षुब्धा गिरिनदीत्यादि। (E) चलितमन्थसाधर्म्याद् गिरिनद्यादिषु तथा व्यपदेश इति दर्शयति। यथा क्षुब्धस्य मन्थस्य चलनं प्रति साधनभाव स्तथा गिरिनद्यादेरर्थस्य चलनं प्रति साधनभावः क्षुब्धमन्थसाधर्म्यात् क्षुब्धशब्देन व्यपदिश्यते यथा गोसाधर्म्याद् गोशब्देन वाहीक उच्यते। स्वान्तं ध्वान्तमिति। स्वन ध्वन शब्दे। इडभावो निपात्यते। एवमुत्तरेष्वप्युदाहरणेषु वेदितव्यम्। बाह्येषु विषयेष्वविक्षिप्तमनाकुलं मनः स्वान्तमुच्यते। अनुनासिकस्य क्विझलोः क्ङितीति ( ६।४।१५ ) दीर्घः। स्वनितं मनसेति। मनः कर्त्तृकं स्वननमुच्यते। नतु मनः। ध्वनितं तमसेति। अत्रापि तमः कर्त्तृकं ध्वननमुच्यते। न तमः। लग्न इति। लगे सङ्गे। निष्ठानत्वं निपात्यते। म्लिष्टमिति। म्लेच्छ अव्यक्तायां वाचि। व्रश्चादिसूत्रेण ( ८।२।३६ ) षत्वम्। ष्टुत्वञ्च। म्लेच्छितमिति। अर्थस्याविस्पष्टत्वेऽपि स्वरूपस्य विस्पष्टत्वाद्भवति प्रत्युदाहरणम्। विरिब्धमिति। अत्राप्येकारस्येत्त्वमपि निपात्यते। स्वरश्चेदिति। स्वरशब्दोऽत्र ध्वनौ वर्त्तते। फाण्टमिति। फण गतौ। पूर्व्ववद्दीर्घः। ष्टुत्वञ्च। कः पुनरयमनायासो नामेत्याह यदशृतमित्यादि। अशृतमित्यपक्वम्। अपिष्टमित्यचूर्णितम्। उदकसम्पर्क उदकसंयोगः। मात्र-

(E) मुद्रितकाशिकायां तु क्षुब्धो गिरिः, नदीत्येवमादावुपमानाद् भविष्यतीति पाठः। तत्र नदीत्यस्य क्षुब्धेत्यध्याहृतेन पदेनान्वयः। वस्तुतस्तु न्यासारूढ़एव मूलपाठ इति प्रतीयते।

शब्देन निष्पीड़नादेर्य्यैवच्छेदः। विभक्तरसमिति। पृथग्भूतरसमित्यर्थः। ईषदुष्णां कोष्णाम्। तदल्पप्रयत्नसाध्यत्वादनायासेन लच्यत इति। आयासः प्रयत्नाधिक्यम्। तद् यस्मिन्न विद्यते सोऽल्पप्रयत्नसाध्योऽनायासः। तेनेह यदसृतत्वादिविशिष्टं वस्तु तदल्पप्रयत्नसाध्यत्वादनायासेन लच्यते। तदनेनानायासोपलचितो यो वस्तु-विशेष स्तत्र फाण्टमिति निपात्यते। नत्वनायास एव। नान्यत्रापि सर्वत्रानाया-सोपलचित इति दर्शयति। अयञ्चार्थो निपातनसामर्थ्याल्लभ्यते। यथैव ह्यन्यत् किञ्चिदिड़भावादिकं निपातनसामर्थ्याल्लभ्यते तथार्थविशेषोऽपि। बाढ़मिति। अत्र पूर्व्ववड् ढत्वादिकार्य्यम्।

## १९। धृषिशसी वैयात्ये।

वियातस्य भावो वैयात्यमिति। यातं यातिः प्राप्तिः। विरूपं यातं यस्या-सन्मार्गविषयत्वात् स वियातोऽविनीत इत्युच्यते। तद्भावो वैयात्यम्। ब्राह्मणादि-त्वात् ष्यञ्। धृष्टइति। ञिधृषा प्रागल्भ्ये। विशस्तइति। शसु हिंसायाम्। शसेरप्युदितो वेति (७।३।५६) विकल्पविधानाद् यस्य विभाषेतीट्-(७।२।१५) प्रतिषेधः सिद्ध एवेति सम्बध्यते। यदि तर्हि सिद्धएव प्रतिषेधस्तत् किमर्थं वचनमित्याह नियमार्थमित्यादि। वैयात्य एव वर्त्तमानयो र्यथा स्यादन्यत्र मा भूत्। अथ धृषेर्विभाषा भावादिकर्म्मणो (७।२।१७) रिति विकल्पे प्राप्ते नित्यार्थं वचनमिति कस्मान्न भवतीत्याह भावादिकर्म्मणोरपीत्यादि। अत्र चाभिधानशक्तिस्वाभाव्यं हेतुः। धर्षित इति। पूर्व्ववत् किच्चे प्रतिषिद्धे गुणः।

## २०। दृढ़ स्थूलबलयोः।

बलवतीति मतुबन्तनिर्द्देशेनाशं आदित्वात् सूत्रे मत्वर्थीयाकारान्तो बलशब्दो निर्द्दिष्ट इति दर्शयति। दृंहेरिति। दृहि वृद्धावित्यस्य। अथवा दृंहिः प्रकृत्यन्तर-मस्तीति। दृह दृहि वृद्धाविति कैश्चित् पाठात्। नकारस्याभावादिति। नकारस्योप-देशाभावादनिदित्वाच्च नकारस्याभावादिति। अथ हकारलोपः किमर्थं निपात्यते? न ढकारएव निपात्यताम्? परस्य च धत्वे ष्टुत्वे च कृते ढो ढे लोपे च (८।३।१३) कृते सिद्धं दृढ़इति। अत्राप्ययमर्थः। परस्य ढत्वं निपातयितव्यं न भवति।

ष्टुत्वेनैव सिद्धत्वादित्यतआह ह्लोपनिपातनमित्यादि। यदि हकारस्य ढकारो निपात्यते तदा ढो ढे लोपः। तस्य पूर्वत्रासिद्ध (८।२।१) मित्यसिद्धत्वं स्यात्। सिद्धश्चासाविष्यते। तस्मात् पूर्वत्रासिद्धत्वनिवृत्तये ह्लोपो निपात्यते। न ढकारइति। कः पुनरसिद्धत्वे दोषो यत्परिहाराय पूर्वत्रासिद्धत्वनिवृत्त्यर्थं हकारलोपो निपात्यते। न ढकार इत्यत आह ढलोपइत्यादि। यदि हि ढकारो निपात्यते तदा ढो ढे लोपः (८।३।१३) कर्त्तव्यः। तस्मिंस्तु सति लोपे द्रढिमेत्यादौ र ऋतो हलादेर्लघो (६।४।१६१) रिति रेफो न स्यात्। ढलोपस्यासिद्धत्वे संयोगे गुर्व्विति (१।४।११) गुरुसंज्ञायामुपजातायां लघुसंज्ञाया बाधितत्वात्। द्रढिमेति वर्णदृढादिभ्यः (५।१।१२३) ष्यञ्चेतीमनिच्। तुरिष्ठेमेयःस्विति (६।४।१५४) टिलोपः। द्रढीयानिति। द्विवचनविभज्योपपदे तरबीयसुनावितीयसुन् प्रत्ययः (५।३।५७)। द्रढयतीति। दृढमाचष्ट इति तत् करोति तदाचष्ट इति णिच्। णाविष्ठवत् कार्य्यं प्रातिपदिकस्येतीष्ठवद्भावेन रेफटिलोपौ। परिद्रढय्य गत इति। दृढमाचष्टइति णिच्। रभावे कृते ण्यन्तस्य परिणा योगः। ततः क्त्वा। ततः प्रादिसमासः। समासेऽनञ्पूर्व्वे क्त्वो ल्यबिति (७।१।३७) ल्यप्। पारिद्रढी कन्येति। परिदृढशब्दादिञ्। इतो मनुष्यजाते (४।१।६५) रिति ङीष्। ष्यङ् प्रसज्येतेति। अणिञोरनार्षयो गुरूपोत्तमयो (४।१।७८) रित्यादिना। दृंहितमिति। दृंहेः प्रत्युदाहरणम्। दृहितमिति दृहेः।

## २१। प्रभौ परिवृढः।

पूर्वेण समानमिति। निपातनस्येड़भावादेस्तुल्यत्वात्। यथैव हि पूर्व्वस्मिन् सूत्रे क्तप्रत्यये कृते हकारनकारयो र्लोप इड़भावश्च परस्य ढत्वं निपातितं तथेहापि तत् सर्व्वं निपात्यते। वृंहेर्निपातनमिति। वृहि वृद्धावित्यस्य। वृहिश्च यदि प्रकृत्यन्तरमस्ति ततस्तस्यापीति निपातनमेतदिति प्रकृतेन सम्बन्धः। प्रकृत्यन्तरास्तित्वन्तु वृह वृहि वृद्धाविति कैश्चिदुक्तम्। तदेव प्रयोजनमिति। पूर्वत्रासिद्धत्वनिवृत्तिः। परिव्रढयतीति। अत्र ढलोपे सति पूर्व्ववद्रेफो न स्यात्। परिव्रढय्य गत इति। अत्रायादेशश्च। पारिव्रढी कन्येति। अत्रापि ष्यङ् प्रसज्येत। ह्लोपनिपातने तु न भवन्त्येते दोषाः। परिव्रढमाचष्ट इत्यादि।

कथं पुनः परिवृढ़शब्देन विग्रहे कृते णिचो वृढ़शब्दादेवोत्पत्ति र्लभ्यत इत्याह संग्रामयतेरित्यादि । प्रातिपदिकाद्धात्वर्थे बहुलमिष्टवच्चेत्यनेनैव (ग,सू) णिचि सिद्धे संग्रामइत्यस्य सोपसर्गस्य गणे यः पाठः स नियमार्थः । संग्रामयतेरेव सोपसर्गाण्णिजुत्पत्ति र्यथा स्यात् । अन्यत्र मा भूदिति । तदेवं संग्रामयतेरेव यस्मात् सोपसर्गाण्णिजुत्पत्तिरिष्यते नान्यस्मात् तस्माद् यद्यपि परिवृढ़ माचष्टइति विग्रहः क्रियते तथापि वृढ़शब्दाण्णिजुत्पद्यते । नच परिवृढ़शब्दात् । किमेवं सतीष्टं सिद्धं भवतीत्यत आह तथाच सतीत्यादि । वृढ़शब्दाण्णिजुत्पत्तौ सत्यां लकारो भवन्नयं णिज् यतो विहित स्तदादेरेव भवति प्रत्ययग्रहणपरिभाषया । सनाद्यन्ता धातवइति ( ३।१।३२ ) तदादेरेव धातुसंज्ञाविधानात् । तेन परेस्तिङन्तग्रहणेनाग्रहणात् ततोऽतिङन्तात् पदात् परस्य तिङन्तस्य पदस्य परिव्रढ़यतीत्यत्र तिङ्ङतिङइति (८।१।२८) निघातस्वरः सिद्धो भवति । यदि पुनः परिवृढ़शब्दाण्णिजुत्पद्यते तदा लकारोऽपि ततएव णिजन्तात् स्यात् । एवञ्च परिशब्दस्य तिङ एवान्तर्भावादतिङन्तात् पदात् परमत्र तिङन्तं न भवतीति निघातो न स्यात् । किञ्च यदा वृढ़शब्दाण्णिजुत्पद्यते न परिवृढ़शब्दात् तदा क्त्वाप्रत्ययोऽपि वृढ़शब्दाण्णिजन्ताद्भवति । तेन परिशब्दस्य क्त्वान्तेन समर्थेन शब्दान्तरेण कुगतिप्रादयइति ( २।२।१८ ) समासे कृते परिव्रढ़य्येत्यत्र ल्यबादेशः सिद्धो भवति । परिवृढ़शब्दाण्णिजुत्पत्तौ क्त्वाप्रत्ययोऽपि परिवृढ़शब्दादेव णिजन्तादुत्पद्यते । ततः समासो न स्यात् । कुगतिप्रादयः समर्थेन शब्दान्तरेण समस्यन्ते । न चात्र परेः परं क्त्वान्तं शब्दान्तरमस्ति । एकमेव ह्येदं क्त्वान्तं परिणा सह शब्दरूपम् । तत्रैव परिशब्दस्यान्तर्भावात् । असति च समासे समासेऽनञ्पूर्व्वेत्यादिना ( ७।१।३७ ) ल्यबादेशो न स्यात् । परिवृंहितमिति । वृंहेः प्रत्युदाहरणम् । परिवृंहितमिति वृहेः ।

## २२ कृच्छ्रगहनयोः कषः ।

कष्ट इति । कषशिषेत्यादिर्हिंसार्थधातुवर्गे कषिः पठ्यते । किं पुनः कृच्छ्रं नामेत्याह कृच्छ्रं दुःखमिति । यद्येवं दुःखे प्राणिधर्म्मे प्रतिषेध उच्यमानोऽग्न्यादौ न सिध्यतीत्याह तत्कारणमप्यग्न्यादिकं कृच्छ्रमुच्यत इति । कारणे कार्य्योपचारात् । यथा नड्वलोदकं पादरोगइति । चिन्त्यं पुनरेतत् किं मुख्ये

मति गौणस्य ग्रहणं युक्तमुत नेति। यदि तु कृच्छ्रशब्दाण्णिजन्तात् पचाद्यच-मुत्पाद्य कृच्छ्रयतीति कृच्छ्र इत्येवं व्युत्पाद्यते तदा कृच्छ्रशब्दोऽपि मुख्येऽग्न्यादा-वपीति न किञ्चिच्चिन्त्यम्। न चास्यां व्युत्पत्तौ तत्कारणमप्यग्न्यादिकं कृच्छ्रमित्यु-च्यत इत्येतद्विरुध्यते। यद्धि कृच्छ्रयति तन्नियोगत एव दुःखस्य कारणं भवति।

## २३। घुषिरविशब्दने।

विशब्दनं प्रतिज्ञानमिति। स्वाभिप्रायस्य शब्देनाविष्करणमित्यर्थः। सामान्येन ग्रहणमिति। विशेषानुपादानात्। यदि घुषिरविशब्दन इति चुरादौ पठ्यत एवं सति णिचा भवितव्यम्। नच णिजन्तस्येटि सत्यसति वा कश्चिद्विशेषोऽस्ति। तथाहीटि सति निष्ठायां सेटीति (६।४।५२) णिलोपे कृते घोषितमिति यद्रूपं भवत्यसत्यपीटि णिलोपाभावात् तदेव। नच तदन्तादिट्-प्रतिषेधस्य प्राप्तिरस्ति। एकाच इत्यधिकारात्। भौवादिकस्य घुषे विशब्दने वृत्तिरेव नास्ति। शब्दशक्तिस्वाभाव्यात्। तत् किं विशब्दनप्रतिषेधेनेत्यत आह विशब्दनप्रतिषेध इत्यादि। यदि च नित्यो णिच् स्यात् तदा यथोक्तया रीत्या प्रतिषेधोऽनर्थकः स्यात्। ततश्च न कर्त्तव्य एव स्यात्। कृतश्च। तस्मादय-मेव प्रतिषेधो ज्ञापयति चुरादिणिज् विशब्दनार्थस्यानित्य इति। जुघुषुरिति। अनित्यप्रतिज्ञाप्रयोजनम्। असति ह्यनित्यत्वे घोषयाञ्चक्रुरिति स्यात्।

## २४। अर्द्दः सन्निविभ्यः

अर्द्दिरिति। अर्द्द गतौ याचने च।

## २५। अभेश्चाविदूर्य्ये।

विदूरं विप्रकृष्टमिति। विशेषेणातिशयेन दूरं विदूरमिति कृत्वा। ततोऽन्य-दविदूरम्। तत् पुनर्यदासन्नं यच्चादूरं न त्वतिविप्रकृष्टं तदिति वेदितव्यम्। तस्य भाव आविदूर्य्यमिति। ब्राह्मणादित्वात् ष्यञ्। ननुच न नञ्पूर्वात् तत्पुरुषादित्युत्तरस्य (५।१।१२१) भावप्रत्ययस्य प्रतिषिद्धत्वात् ष्यञा न भवितव्यमित्यत आह एतस्मादेवेत्यादि। उत्तरत्वं तु भावप्रत्ययस्य त्वतलापेक्षया वेदितव्यम्।

## २६। णेरध्ययने वृत्तम्।

अध्ययनमिति। कृत्यल्युटो बहुलमिति (३।३।११३) ल्युट्। अधीयत इत्यध्ययनम्। कर्मसाधनोऽध्ययनशब्दः। भावसाधने हि वृत्तो गुणो देवदत्तेनेति न स्यात्। वृत्तं गुणस्य देवदत्तेनेति स्यात्। निष्ठाविशेषणञ्चैतत्। अध्येतव्याभिधायिन्यां निष्ठायामित्यर्थः। णिलुक् चेति। णिलुग्निपातनं प्रत्ययलक्षणप्रतिषेधार्थम्। लोपे हि प्रत्ययलक्षणेन गुणः स्यात्। लुकि सति न लुमताङ्गस्येति (१।१।६३) प्रत्ययलक्षणप्रतिषेधाद् गुणो न स्यात्। वृत्तो गुणइति। गुणः कश्चिदेवाध्ययनविशेष इहोच्यते (F)। वृत्तिरयमकर्म्मकइति। वृत्तं गुणस्य वृत्तं पारायणस्येति भावे निष्ठादर्शनात्। अकर्मकाणां हि भावे निष्ठा भवति। न सकर्मकाणाम्। स ण्यर्थइत्यादि। सोऽन्तर्भावितण्यर्थो यदा भवति तदा प्रकृत्यन्तो ण्यर्थे वर्त्तमानः सकर्मको भवति। यथा वर्द्धन्तु त्वां सुष्टुतय इत्यत्र वृधिः। कथमेतद् विज्ञायत इत्याह तेन निर्वृत्त इत्यादि। न चैतद्वक्तव्यमकर्म्मकादिति। धातवः सोपसर्गाः सकर्मका भवन्तीति सोपसर्गत्वादिह वृतेः सकर्मकत्वम्। ननु ण्यर्थवृत्तित्वादिति कुतो ण्यर्थावगतिः? यदि सोपसर्गत्वादिह वृतेः सकर्म्मकत्वं स्यान्न ण्यर्थवृत्तित्वात् ततो यथानुभूतः कम्बलो देवदत्तेनेत्यत्र ण्यर्थो न गम्यते तथा तेन निर्वृत्त इत्यत्रापि न गम्येत। गम्यते च। तस्माण्ण्यर्थवृत्तित्वादेव वृतेः सकर्मकत्वम्। यदा च ण्यर्थवृत्ति र्भवति तदा प्रयोजकव्यापारापेक्षयास्य कर्त्ता कर्मभाव मापद्यतइति। तेन प्रयोज्येन कर्म्मणा सकर्मको भवति। तदिहापीत्यादि। यस्मादेवाकर्मकोऽपि स न प्रकृत्यन्त एव ण्यर्थे वर्त्तमानः सकर्मको भवति तस्माद्वृत्तो गुणो देवदत्तेनेत्यत्रापि ण्यर्थवृत्तेरेव कर्मणि क्तप्रत्ययो भविष्यति। ततश्च निपातन मनर्थकं स्यात्। विनापि तेन सिद्धत्वात्। कथमिति चेत्? वृतेः क्तप्रत्यय उदितो वेतीड्विकल्पे (७।२।५६) कृते निष्ठायां यस्य विभाषेति (७।२।१५) प्रतिषेधात्। यद्येवं किमर्थमित्याह तत् क्रियत इत्यादि। कदाचिण्ण्यर्थोऽन्तर्भावितण्यर्थतया प्रकृत्यैवाभिधीयते। कदाचिण्णिचा। तत्र यदा प्रकृत्यैवाभिधीयते तदा निरर्थकत्वान्निपातनं न कर्त्तव्यमेव। यदा तु णिचा ण्यर्थोऽभिधीयते तत्र

(F) गुणः पाठः पदक्रमसंहितारूपोऽध्ययनविशेषः। स वृत्तः सम्पादित इत्यर्थ इति मिश्रः।

यदि निपातनं न क्रियेत तदाध्ययनेऽपि वर्त्तितमिति स्यात्। तस्मादेतन्निवृत्त्यर्थं तदित्येके प्रतिपन्नाः। अपरे त्वित्यादि। अन्ये तु वर्त्तितो गुण इत्यपीच्छन्ति। ण्यन्तस्याण्यन्तस्य च वृत्तौ गुण इति। तन्मतेन निपातनं न कर्त्तव्यमेव। क्रियमाणं वैचित्र्यार्थं वेदितव्यम्।

## २७। वा दान्त-शान्त-पूर्ण-दस्त-स्पष्ट-च्छन्न-ज्ञप्ताः।

दान्तःशान्त इति। शमु दमु उपशमे। हेतुमति च्। णिलुगिट्प्रतिषेधयोः कृतयो रनुनासिकस्य क्विझलोः क्ङितीति ( ६।४।१५ ) दीर्घः। ननु च णिलोपस्य स्थानिवद्भावाद् व्यवधाने सति न प्राप्नोति। नैतदस्ति। नहि निपातनेन लोपे सति तस्य परनिमित्तत्वव्यपदेशो विद्यते। तत् कुतः स्थानिवद्भावः ? न पदान्तेत्यादिना ( १।१।५८ ) दीर्घविधौ स्थानिवद्भावप्रतिषेधाच्च। दमितः शमितइति। मितां ह्रस्व ( ६।४।९२ ) इति ह्रस्वत्वम्। पूर्ण इति। पुरी आप्यायने। दिवादिश्चुरादिश्च। दस्त इति। तसुउत्क्षेपे दसु च। अत्रोपधाह्रस्वत्वमपि निपात्यते। स्पष्टश्छन्न इति। स्पश बाधनस्पर्शनयोः। छद अपवारणे। अत्राप्युपधाह्रस्वत्वमपि निपात्यते। ज्ञप्त इति। ज्ञप मारणतोषणनिशामनेष्विति चुरादिः। मारणतोषणनिशामनेषु ज्ञा मिच्चेति घटादिश्च। ततो णिच्। इट्प्रतिषेधो णिलुक् चेति चकारात् क्वचिदुपधाह्रस्वत्वमपि निपात्यते।

## २८। रुषामत्वरसंघुषास्वनाम्।

रुष रोषे। अम गत्यादिषु। अम रोग इत्येतस्य चौरादिकस्य ग्रहणं न भविष्यति। एकाच इत्यधिकारात्। ञित्वरा सम्भ्रमे। संपूर्व्वः पूर्वोक्तो घुषिः। आङ्पूर्वः पूर्व्वोक्त एव स्वनिः। आस्वान्त इति। पूर्व्ववद् दीर्घः। तूर्ण इति। ज्वरत्वरस्रिव्यविमवामुपधाया ( ६।४।२० ) इत्यूट्। संपूर्व्वे इत्यादि। घुषिर् अविशब्दन इत्यस्यावकाशोऽसंपूर्वत्वे सत्यविशब्दने घुष्टा रज्जुः। घुष्टौ पादाविति। अस्य च वचनस्यावकाशः संपूर्वत्वे सति विशब्दने संघुषितं वाक्यमाह संघुष्टं वाक्यमाहेति। संपूर्वत्वे सत्यविशब्दन उभयप्राप्तौ परत्वादनेन विकल्पो भवति संघुष्टौ दन्तौ संघुषितौ दन्ताविति। आङ्पूर्वस्येत्यादि। क्षुब्धस्वान्तेति स्वनेरिट्-(७।२।१८) प्रतिषेधस्यावकाशः। अनाङ्पूर्वत्वे सति मनोऽभिधाने स्वान्तं मन

इत्यस्यावकाशः। आङ्पूर्वत्वे सत्यमनोऽभिधानम्। आस्वान्तो देवदत्त आस्वनितो देवदत्त इति। आङ्पूर्वत्वे सति मनोऽभिधाने परत्वादयमेव विकल्पो भवति। आस्वान्तं मनः। आस्वनितं मनः।

## २९। हृषि र्लोमसु।

हृष्टानि लोमानीति। गत्यर्थाकर्मकादिनाकर्मकत्वात् (३।४।७२) कर्त्तरि क्तः। हृष्टं लोमभिरिति। नपुंसके भावे क्त इति (३।३।११४) क्तः। निष्ठायामनिड़िति। उदितो वेति (७।२।५६) क्त्वाप्रत्यय इटि विकल्पिते निष्ठायां यस्य विभाषेति (७।२।१५) प्रतिषेधात्। अयं सेड़िति। उदात्तत्वादिट्प्रतिषेधाभावात्। उभयत्र विभाषेयमिति। प्राप्ते चाप्राप्ते च। अलीकार्थस्य प्रतिषेधे प्राप्ते विकल्प स्तुष्ट्यर्थस्य चाप्राप्ते। लोमशब्दस्याङ्गजातेष्वेव रूढ़त्वात्। लोमस्विति उच्यमानेऽङ्ग-जेष्वेव न केशेषु भवितव्य मिति कस्यचिद् भ्रान्तिःस्यात्। अतस्तान्निराकर्त्तुमाह-लोमानीत्यादि। कथमित्याह यथा लोमनखमित्यादि। अत्र हि सामान्येन ग्रहणं तेषाम्। तथाहि केशानपि स्पृष्ट्वा शौचं क्रियत इति। कथं पुनः क्रियावचनस्य धातोर्द्रव्येषु लोमसु वृत्तिरुपपद्यत इत्याह तद्विषय इत्यादि। तानि लोमानि विषयो यस्य स तथोक्तः। हृषे र्योऽर्थः स लोमसाध्यत्वाल्लोमविषयः। तत्र वर्त्त-मानो हृषिरप्यर्थद्वारेण लोमसु वर्त्तत इत्युच्यते। तदेवमर्थद्वारेण लोम्नां हृषिं प्रति विशेषणत्वं दर्शितं भवति। विस्मितप्रतिघातयोश्चेति। निपातनमिति। विस्मितप्रतिघातयोर् निष्ठायामिण् न भवत्येवमर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्। हृषेरिति योगविभागः क्रियते। ततो विस्मितप्रतिघातयोरपि भविष्य-तीति। अथवा बहुवचननिर्देशोऽत्र क्रियते। आद्यर्थोऽयं विज्ञायते लोमादिषु लोमस्विति। तेन विस्मितप्रतिघातयोरपि भविष्यति।

## ३०। अपचितश्च।

चायतेरिति। चायृ पूजानिशामनयोरिति। अयं योगो यश्चिनोते रपपूर्वस्य पूजायां वृत्तिं न प्रतिपद्यते तं प्रत्यारभ्यते। यस्तु प्रतिपद्यते तं प्रति नारब्धव्य एव। तथाहि चिनोतेरपचित इति भविष्यतीति। चायतेस्त्वपचायित इति। वक्तव्य-मिति व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्। चकारोऽत्र क्रियते। स चानुक्त-

समुच्चयार्थः। तेनापचितिरित्येतदपि निपात्यत इति। एतच्च निपातयता चायतेः क्तिनि नित्यं चिभावो वक्तव्यः।

## ३१। ह्रु ह्वरेश्छन्दसि।

ह्वृ कौटिल्य इत्येतस्यानुदात्तत्वादिट्प्रतिषेधोऽस्त्येवेत्यादेशार्थं वचनम्।

## ३२। अपरिह्वृताश्च।

ह्रु इत्येतस्यादेशस्याभावो निपात्यत इति। पूर्वसूत्रेण प्राप्तस्य। बहुवचननिर्देशो बहुवचन एव निपातनं यथा स्यात्। तेन वचनान्तरे ह्यपरिह्रुतोऽपरिह्रुताविति भवति।

## ३३। सोमे ह्वरितः।

इडागमो गुणश्च निपात्यत इति। चकाराद् ह्रु इत्येतस्यादेशाभावश्च।

## ३४। ग्रसित-स्कभित-स्तभितोत्तभित-चत्त-विकस्ता-विशस्तृ-शंस्तृ-शास्तृ-तरुतृ-तरूतृ-वरुतृ-वरूतृ-वरूत्रीरुज्ज्वलिति-क्षरिति-क्षमिति-वमित्यमितीति च।

ग्रसु स्कन्भु स्तन्भु इत्येतेषामित्यादि। ग्रसु ग्लसु अदने। स्कन्भु स्तन्भु इत्येतौ सौत्रौ धातू। स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यः श्नुश्चेति (३।१।८२) सूत्रे पाठात्। स्कभितं स्तभितमिति। अनिदिताम् (६।४।२४) मित्यनुनासिकलोपः। स्कब्धं स्तब्धमिति। झषस्तथोर्धोऽध इति (८।२।४०) धत्वम्। झलां जश् झशीति (८।४।५३) जश्त्वम्। उत्तभितमिति। उदः स्थास्तम्भोः पूर्वस्येति (८।४।६१) पूर्वसवर्णः। अन्योपसर्गपूर्वः स्तभितशब्दो न भवतीति। यदि स्यादुत्पूर्वस्य निपातनमनर्थकं स्यात्। चतेः कसेश्चेति। चते चदे याचने। कस गतौ। ननु सूत्रे विकस्तशब्दाद्बहुवचनं श्रूयते। ततश्च कथममी वृत्तावेकवचनान्त उदाहृत इत्यत आह निपातनं बहुत्वापेक्षम्। विकस्तादिति बहुवचनमिति। सूत्रे ग्रसितादीनि निपातनानि कृतद्वन्द्वानि निर्दिष्टानि। अतस्तदपेक्षया बहुवचनं

क्रतम् । वृत्तौ त्वममम्स एक एवायं विकस्तशब्दः । नचैतदर्थस्य बहुवचनं विवक्षितम् । अत एकवचनान्त एवोदाहृतः । अपरेष्विति । विशस्तृप्रभृतिषु प्रत्येकं विभक्तिनिर्देशइति । बहुत्वाभावाद् बहुवचनं तेन तत्र न क्रतमित्यभिप्रायः । शमि विपूर्वस्य शंसेः शामितेति । शसु हिंसायाम् । शन्सु स्तुतौ । शासु अनुशिष्टौ । तरीतारं वरीतारमिति । वृतो वेति ( ७।२।३८ ) दीर्घः । वरूत्रीरिति । ऋन्नेभ्यो ङीबिति ( ४।१।५ ) ङीप् । तदन्ताज्जस् । वा छन्दसीति ( ६।१।१०६ ) पूर्वसवर्णदीर्घः । जसि पूर्वसवर्णोच्चारणाद् यदा पूर्वसवर्णः स्तत्रैवं तन्निपातनमिति कस्यचिद् भ्रान्तिः स्यात् । अतस्तान्निराकर्त्तुमाह जसि पूर्वसवर्णोच्चारणमित्यादि । ननु यणादेशे क्रते वरूत्र्यइति भवितव्यम् । कथं वरूत्रय इति भवतीत्याह च्छान्दसमित्यादि । छान्दसत्वेन हि ह्रस्वत्वे क्रते जसि चेति ( ७।३।१०९ ) यणादेशापवादो गुणो विधीयते । प्रपञ्चार्थमिति । विस्तरेणान्वाख्यानमित्यर्थः । तथाहि पचि विस्तारवचन इति तस्यैवाजन्तस्य प्रपञ्च इति भवति । प्रपञ्चस्तु विस्पष्टार्थः । विस्तरेण ह्यन्वाख्यानं स्पष्टं भवति । अथ वरूत्रीशब्दस्य सिद्धार्थं निपातनं कस्मान्न भवतीत्याह वरूत्शब्दो हीत्यादि । ज्वलितिरिति । ज्वल दीप्तौ । चर सञ्चलने । टुवम उद्गिरणे । अम गत्यादिषु । इतिकरणं प्रदर्शनार्थमिति । एवंप्रकारस्यान्यस्यापि प्रदर्शनार्थमितिकरणम् । तेन किं सिद्धम्भवतीत्याह तेन क्वचिदित्यादि । चकारश्छन्दसीत्यनुकर्षणार्थः । तेन चानुकृष्टत्वान्नोत्तरत्राभिसम्बध्यते । तेनोत्तरत्र विधानमविशेषेण भवति ।

## ३५ आर्धधातुकस्येड् वलादेः ।

आस्ते शेते वस्तइति । आस उपवेशने । शीङ् स्वप्ने । वस आच्छादने । अदादित्वाच् छपो लुक् । शीङः सार्वधातुके ( ७।४।२१ ) गुणः । आर्धधातुकग्रहणादिह सार्वधातुकस्येण् न भवतीति । ननु च रुदादिभ्यः सार्वधातुक ( ७।२।७६ ) इत्येतन्नियमार्थं विज्ञायते । रुदादिभ्यएव सार्वधातुकस्य नान्येभ्य इति । रुदादिभ्यः सार्वधातुकस्यैवेत्येषा तु विपरीतनियमाशङ्का न कर्त्तव्या । यदि ह्येवंविधो नियमः स्यात् तदा रुदादेः परस्य सन इड़ागमो न स्यात् । नियमेन व्यावर्त्तितत्वात् । ततश्च रुदविदेत्यत्र ( १।२।८ ) रुदिग्रहणमनर्थकं

स्यात्। हलन्ताच्चेति (१।२।१०) कित्त्वस्य सिद्धत्वात्। तस्मान्नात्र विपरीतनियमाशङ्का। रुदादिभ्यएव सार्वधातुकस्य नान्येभ्य इत्येष एव नियमो भविष्यति। ततो नार्थः सार्वधातुकनिवृत्त्यर्थेनार्द्धधातुकग्रहणेनेत्यत आह रुदादिभ्य इत्यादि। रुदादिभ्यः सार्वधातुक इत्येतस्मिन्नियमार्थे विज्ञायमाने कश्चिन्मन्दबुद्धिः प्रतिपत्ता विपरीतनियमं सम्भावयेत्। तत्रानन्तरोक्तया नीत्याऽभिमतनियमे प्रतिपद्यमाने प्रतिपत्तिगौरवं भवतीति। इतिकरणो हेतौ। यतएव रुदादिभ्यः सार्वधातुक इत्येतस्मिन्नियमार्थे विज्ञायमाने प्रतिपत्तिगौरवं भवत्यतो हेतोरार्द्धधातुकग्रहणं क्रियते। प्रतिपत्तिगौरवपरीहारार्थमित्यभिप्रायः। अथाङ्गाधिकारादङ्गस्य मा भूदित्येवमर्थमार्धधातुकग्रहणं कस्मान्न भवति? नार्हतीत्येवमर्थं भवितुम्। यदि ह्यङ्गस्य स्यादेकाच उपदेशेऽनुदात्तादिति (७।२।१०) प्रत्ययस्येट्प्रतिषेधोऽनर्थकः स्यात्। प्राप्त्यभावात्। न क्त्वा सेट् (१।२।१८) निष्ठा शीङिति (१।२।१९) वचनाच्च। नह्यङ्गस्येडागमे सति क्त्वानिष्ठयोः सेट्त्वमुपपद्यते। इह तर्हि वृत्तत्वं वृत्तेति प्रातिपदिकप्रत्ययस्य मा भूदित्येवमर्थं कस्मान्न भवति? एवमर्थमपि नार्हति भवितुम्। ऋत इद्धातो (७।१।१००) रित्यतो धातोरित्यनुवर्त्तते। नन्वेवमपि लूभ्यां लूभिरित्यत्र प्राप्नोतीत्येव। नह्यत्र प्रकृतेः प्रातिपदिकत्वेन धातुत्वं विहन्यते क्विबन्ता धातुत्वं न जहतीति कृत्वा। तस्मादिह मा भूदित्येवमर्थमार्धधातुकग्रहणं युक्तम्। नैतदस्ति। ऋत इद्धातोरित्यत्र (७।१।१००) हि स्वरूपपदात्मकस्य धातुशब्दस्य ग्रहणम्। अत इहापि धातोरित्यनुवर्त्तमानं तथाभूतमेवानुवर्त्तते। तेन धातोरित्येवं यो विहितस्तस्यायमिडागमो विज्ञायते। नच लूभ्यां लूभिरित्यत्र धातोरित्येवं प्रत्ययो विहितः। किं तर्हि? प्रातिपदिकादित्येवम्। कुतः? ङ्याप्प्रातिपदिकादित्यधिकारात् (४।१।१)। तथाच धातोरित्येवं विहितस्येड्विधानाल्लूभ्यां लूभिरित्यत्रासत्यार्द्धधातुकग्रहण इटः प्रसङ्गो न भवति। तथा जुगुप्सत इत्येवमादावपि। नह्यत्र धातोरित्येवं सन् विहितः। किन्तर्हि? गुपादीन् धातून् स्वरूपेणोपादाय। तस्मादेतन्निवृत्त्यर्थमप्यार्द्धधातुकग्रहणं न भवतीति वेदितव्यम्। ऋत इद्धातो (७।१।१००) रित्यत्र स्वरूपपदात्मकस्य धातुशब्दस्य ग्रहणं स्यात्। तदा तस्यापि ऋत इति विशेषणं न परिकल्प्येत। तस्य धातुशब्देऽसम्भवात् तदर्थस्य विशेषणं विज्ञायत इत्यदोषः। अथवा तत्र तन्त्रेण द्वे धातुग्रहणे उपात्ते। तत्रैकमर्थपदात्मकम्। अपरं स्वरूपपदात्मकम्।

तत्र यदर्थपदात्मकं तत्र तस्योपयोगः। अपरस्य त्वत्रेति न कश्चिद्दोषः। तस्मात् प्रतिपत्तिगौरवपरीहारार्थमेवार्द्धधातुकग्रहणम्। अथेड्ग्रहणं किमर्थम्? यावता नेड्वशि कृतीत्यत (७।२।८) इड्ग्रहणमनुवर्त्ततइत्याह इडिति वर्त्तमान इत्यादि। तद्धीड्ग्रहणं प्रतिषेधेन सम्बन्धम्। अतस्तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यात्। तन्निवृत्त्यर्थं पुनरिड्ग्रहणं क्रियते। ननुच प्राप्तौ सत्यां प्रतिषेधः स्यात्। नच वलादेरार्धधातुकस्य केनचिदिट् प्राप्नोति। अतः प्राप्त्यभावादेव विधिरयं विज्ञास्यते। न प्रतिषेधः। नैतदस्ति। एतस्मादेव प्रतिषेधवचनाद्विधिरप्यनुमीयते। नूनमार्धधातुकस्येड्विधिरस्तीति येन वलादेः प्रतिषेधं शास्ति। पुनरिड्ग्रहणात् तु विधिरेव विज्ञास्यते।

## ३६। स्नुक्रमोरनात्मनेपदनिमित्ते।

स्नु प्रस्रवणे। क्रमु पादविक्षेपे। अनयोरुदात्तत्वादिटि सिद्धे नियमार्थं वचनम्। अनात्मनेपदविषय एवानयोर्यथा स्यात्। अन्यत्र मा भूदिति। ननुच स्नौतेः रुगन्तत्वात् किति सनि च प्रतिषेधविधानात् तस्य वचनं विध्यर्थमपि सम्भवति। नैतदस्ति। आर्धधातुकस्येड् वलादेरितानुवर्त्तते। तेनास्याः प्राप्तेर् विषये योगोऽयमिति विज्ञायते। नचास्याः प्राप्तेः सन्किती विषयौ। तयोरपवादविषयत्वात्। अनात्मनेपदनिमित्ते इति प्रथमाद्विवचनान्तम्। स्नुक्रमोरेतद् विशेषणमिति दर्शयितुमाह नचेत्यादि। क्व च तावात्मनेपदनिमित्ते इति? किं यत्रात्मनेपदं प्रति योग्यतामात्रमपि तयोरस्ति तत्रापि तावात्मनेपदनिमित्ते उत यत्र तदाश्रयमात्मनेपदं भवति तत्रैवमथं पृच्छति यत्रेत्यादि। अत्रैव व्याख्यानम्। यत्र तदाश्रयमात्मनेपदं सम्भवति तत्र तावात्मनेपदनिमित्ते। किं पुनस्तद् यत्र तदाश्रयमात्मनेपदं भवतीत्याह भावकर्म-कर्तृकर्म-कर्मव्यतीहाराः। क्रमे वृत्त्यादय श्चेति। एषु हि स्नुक्रम्याश्रयमात्मनेपदं भवति। आदिशब्देन सर्गादिपरिग्रहः (G)। निमित्तं कारणम्। नचाकुर्वन् कार्यं कारणं भवति। यत्र त्वकुर्वत्यपि कार्यं कुसूलस्थबीजादौ कारणमपि व्यपदेश स्तत्रासौ योग्यतयौपचारिकः। तस्माद् यत्र स्नुक्रमावाश्रित्यात्मनेपदं भवति तत्रैव भावकर्मादौ तयोरात्मनेपदनिमित्तं मुख्यं विज्ञायते। तेनेत्यादि। यस्मादेवं यत्र तावाश्रित्यात्मनेपदं

---

(G) वृत्तिसर्गतायनेषु क्रमः (१।३।३८) इत्यतः।

भवति तत्र तयोरात्मनेपदनिमित्तत्वम्। तेन सत्यात्मनेपदे प्रतिषेधोऽयं भवति। नासति न ह्यसत्यात्मनेपदे तयोर्मुख्यमात्मनेपदनिमित्तत्वमुपपद्यते। ततश्च प्रस्नविता प्रस्नवितुं प्रस्नवितव्यं प्रक्रमिता प्रक्रमितुं प्रक्रमितव्यमित्यत्र यद्यप्यात्मनेपदयोग्यत्वात् स्नुक्रमावात्मनेपदस्य निमित्तव्यपदेशमासादयत स्तथापि प्रतिषेधो न भवति। नह्यत्र मुख्यमात्मनेपदनिमित्तत्वम्। आत्मनेपदाभावात्। प्रस्नोषीष्टेति। आशिषि लिङ्। सीयुट्। भावकर्मणोरित्यात्मनेपदम् (१।३।१३)। सुट्तिथोरिति (३।४।१०७) सुट्। षत्वं ष्टुत्वम्। प्रक्रंसीष्टेति। अत्र प्रोपाभ्यां समर्थाभ्यामिति (१।३।४२) कर्त्तर्यात्मनेपदम्। प्रस्नोष्यतइति। लृट् शेषे चेति (३।३।१३) लृट्। प्रचिक्रंसतइति। सन्। पूर्ववत् सन इत्यात्मनेपदम् (१।३।६२)। सर्वत्रैवेत्यादि। युक्तं प्रक्रंसीष्ट प्रस्नोषीष्टेत्यादौ स्नुक्रमोरात्मनेपदस्य निमित्तत्वम्। तस्मादात्मनेपदस्य विधानात्। प्रचिक्रंसत इत्यत्र तु कथं क्रमिरात्मनेपदस्य निमित्तम्? नह्यत्र क्रमिमाश्रित्यात्मनेपदं भवति। किं तर्हि? सन्नन्तं धात्वन्तरमित्याह सन्नन्तादपीत्यादि। सन्नन्तादपि हि यदात्मनेपदं विधीयते तत् पूर्ववत् सन (१।३।६२) इत्यनेन। तेन तत्रापि पूर्ववदिति वचनात् पूर्वं धातुस्वरूप मात्मनेपदस्य निमित्तमाश्रीयत इति यद्यपि सन्नन्तादात्मनेपदं विधीयते तथापि क्रमि स्तत्र निमित्ताभावोऽस्त्येवेत्यभिप्रायः। अथ निमित्तग्रहणं किमर्थमुपादीयते? आत्मनेपद इत्येवोच्यतइत्यत आह निमित्तग्रहणमित्यादि। सीयुट् आदि र्यस्य स सीयुडादिः। तदात्मनेपदं परं यस्मात् स तत्परः स्यप्रत्ययः। स परो यस्मात् स तत्परपरः सन्प्रत्ययः। तयोः प्रतिषेधो यथा स्यादित्येवमर्थं निमित्तग्रहणम्। तत्र सीयुडादेः प्रतिषेधार्थं प्रस्नोषीष्ट प्रक्रंसीष्टेति। तत्परपरस्य च प्रतिषेधार्थं प्रचिक्रंमिष्यतइति। अत्र हि स्यप्रत्यय आत्मनेपदपरः तत्परपरः सः। किं पुनः कारण मसति निमित्तग्रहणे न सिध्यति? तदुच्यते। यदि हि निमित्तग्रहणं न क्रियते तदात्मनेपद इत्येषा परसप्तमी विज्ञायेत। नच प्रस्नोषीष्ट प्रक्रंसीष्टेत्यात्मनेपदे परत आर्धधातुक मस्ति। तथाह्यात्मनेपदस्यागमः सीयुट्। तदेकदेशत्वादात्मनेपदे परत इति न शक्यते वक्तुम्। यथा तदवयव स्तकार स्तथा सीयुट् च। ततश्चात्मनेपदे परत उच्चार्य्यमाणः प्रतिषेधो न स्यात्। प्रचिक्रंसिष्यत इत्यत्रात्मनेपद इत्येतस्यां परसप्तम्यां विज्ञायमानायां तस्मिन्निति निर्दिष्टे पूर्वस्येति (१।१।६६) निर्दिष्टग्रहणस्यानन्तर्य्यार्थत्वात् स्येन व्यवधाने सति सन इट्प्रतिषेधो न स्यात्। निमित्तग्रहणे तु सति भवति।

अस्ति ह्यत्र सर्वत्र स्नुक्रमो यथायोगमात्मनेपदं प्रति निमित्तभावः। तस्मान्निमित्त-ग्रहणं कर्त्तव्यम्। प्रस्नविलीयत इत्यत स्नौतेरात्मनेपदं परस्त्रोपलब्धम्। अतः स्नौतिरात्मनेपदस्य निमित्तमिति प्रतिषेधेन भवितव्यमिति कस्यचिद् भ्रान्तिः स्यात्। अत स्तान्निराकर्त्तुमाह इह प्रस्नवितेवाचरतीत्यादि। क्वचित् प्रस्नविता-रमिवाचरतीति पाठः। स तु नोपपद्यते। नहि कर्मणः क्यङ् विधीयते। किं तर्हि? सुबन्तात् कर्त्तुः। तस्मात् प्रमादकृतोऽयं पाठः। प्रस्नवितेवाचरतीति तृजन्तात् कर्त्तुः क्यङ् सलोपश्चेति (३।१।११) क्यङ्। रीङृत इति (७।४।२७) रीङ्। काङन्तादात्मनेपदं विधीयमानं ङित इत्येवं विधीयते। नच स्नौति ङित्। किं तर्हि? काङन्तः। तस्मात् काङन्तमेवात्मनेपदनिमित्तं न स्नौतिरिति न भवति प्रतिषेधः। क्रमेस्त्वित्यादि। निमित्तग्रहणात् सत्येवात्मने-पदे प्रतिषेधेन भवितव्यम्। नामतीति। कर्त्तरि कृति प्रतिषेधो न प्राप्नोतीत्युप संख्यायते। प्रक्रन्ता। उपक्रन्तेति। प्रोपाभ्यां समर्थाभ्यामिति (१।३।४२) प्रोपाभ्यामुपसृष्टात् क्रमेरात्मनेपदविधानादिह क्रमेरात्मनेपदस्य विषयः। आत्मने-पदविषयइति। आत्मनेपदं विषयो यस्य स आत्मनेपदविषयः। प्रक्रमितव्य-मुपक्रमितव्यमिति। तयोरेव कृत्यक्तखलर्था इति (३।४।७०) भावे कर्मणि कृत्यः। निष्क्रमितेति। इदुदुपधस्येति (८।३।४१) विसर्जनीयस्य षत्वम्। निष्पूर्वात् क्रमेरात्मनेपदस्याभावादिहात्मनेपदस्य विषयो न भवति। अथ प्रस्नुष्षति प्रस्नुतः प्रस्नुतवानित्यत्र कस्मान्न भवति। नह्यत्र स्नौतिरात्मनेपदविषय इत्यत आह स्नौतेरित्यादि। ननु श्र्युकः किंतीति (७।२।११) सनि ग्रहगुहोश्चेतीट्प्रति-षेधस्य (७।२।१२) धात्वन्तरमुगन्तमवकाशइति परत्वादिटैवात्र भवितव्यम्। न प्रतिषेधेन। नैतदस्ति। उक्तं हि पुरस्तात् प्रतिषेधकाण्डस्य बलीयस्त्वात्। प्रयोजनमिणमात्रस्यानाश्रितविशेषविधानस्य प्रतिषेधो यथा स्यादिति।

## ३७। ग्रहोऽलिटि दीर्घः।

ग्रहउत्तरस्येतत्यादिना ग्रहइति पञ्चमीं दर्शयति। यद्येवं तदेड्ग्रहणं कर्त्तव्यम्। न कर्त्तव्यम्। प्रकृतमेव तदनुवर्त्तते। तद्धि प्रथमान्तनिर्दिष्टम्। षष्ठीनिर्देशेन चेहार्थः। नैष दोषः। ग्रहइत्येषा पञ्चमीति प्रथमायाः षष्ठीत्वं प्रकल्पयिष्यति। तस्मादितुत्तरस्येति वचनात् (१।१।६७)। जग्टह्वि

जग्टह्निमेति। ग्रह्यादिसूत्रेण ( ६।१।१६ ) संप्रसारणम्। तथा ग्राहिता ग्राहिष्यत इत्यत्र कथं चिण्वदिटो न भवतीत्याह प्रकृतस्यैवेत्यादि। आर्धधातुकस्येति यः प्रकृत इट् तस्येदं दीर्घत्वं भवति। न चिण्वदिटः। तस्याप्रकृतत्वात्। चिण्वदितग्नेन चिण्वद्भाव उपलक्ष्यते। तत्सहचरित इट् चिण्वदितुग्च्यते। ग्राहितेति। अनद्यतने लुट् ( ३।३।१५ )। स्यतासी ल्टलुटोरिति ( ३।१।३३ ) तासिः। भावकर्म्मणो ( १।३।१३ ) रितग्रात्मनेपदम्। लुटः प्रथमस्येतग्रादिना ( २।४।८५ ) डादेशः। टिलोपः। स्यसिच्सीयुट्तासिष्वितग्रादिनेट् ( ६।४।६२ )। चिण्वद्भावाद्वृद्धिः। अथ जरीग्टहिता जरीग्टहितुमितग्रत्र यङन्तात् तृचि तुमुनि च यलोपाल्लोपयोः कृतयोर्दीर्घः कस्मान्न भवति? उत्तरसूत्रे वाग्रहणस्योभयोरपि योगयोः शेषभूतत्वाद्व्यवस्थितविभाषाविज्ञानात्। अथवा विहितविशेषणपचोऽत्र व्याख्यायते। ग्रहे र्यो विहित इट् तस्य दीर्घो भवति। न चात्र ग्रहे विहित इट्। कुतस्तर्हि? यङन्तात्। तस्मान्नेह दीर्घस्य प्रसङ्गः। अथ ग्रहईडन्निटीतिग्रवं कस्मान्नोक्तम्? किं दीर्घग्रहणेन? नेवं शक्यम्। एवं सतीट्कार्य्यमीटो न स्यात्। ततश्चाग्रहीदितग्रत्रेट ईटीति ( ८।२।२८ ) सिचो लोपो न स्यात्। नेटीति ( ७।१।४ ) प्रतिषेधश्च। इह चाग्रहीढ्वमग्रहीध्वमितग्रत्रेटो विभाषेट इति (८।३।७६) मूर्धन्यश्च। दीर्घ इट आदेशे सति तस्य स्थानिवद्भावादिट्कार्य्यमुपपद्यत इति दीर्घ एव विधीयते।

## ३८। वृतो वा।

वॄ वरण इतग्स्येदं ग्रहणं वा स्यादथवास्यान्येषाञ्च ऋकारान्तानाम्? उत तस्यान्येषाञ्च ऋकारान्तानाम्? आहोस्विद्वृङ्वृञो श्चान्येषाञ्च ऋकारान्तानाम्? अथवा तयोश्च ऋकारान्तानाम्। तत्र यदि प्रथमः पच आश्रितः स्यात् तदा यणादेशं कृत्वा व्रइति निर्देशं कुर्य्याद् यथा ग्रो यङीति ( ८।२।२० )। अथ यदि द्वितीयः पच स्तदा वृइत्येतस्य ग्रहणं न कुर्य्यात्। ऋकारान्तग्रहणेनेव तद्ग्रहणस्य सिद्धत्वात्। अथ तृतीयः पच ऋतस्य संयोगादे ( ७।२।४३ ) रित्यत्र ऋतग्रब्देन कृत्स्नस्य ग्रहणं न कुर्य्यात्। इदमेव हि तत्र ऋकारग्रहणमनुवर्त्तिष्यते। अथ चतुर्थः पचो वृङ्वृञोः पृथग् ग्रहणं न कुर्य्यात्। ऋकारान्तग्रहणेनैतद्ग्रहणस्य सिद्धत्वात्। तस्मात् पारिशेष्यात् पञ्चमोऽत्र पचोऽभिमत

इति मत्वाह वृङ्वृञोः सामान्येन ग्रहणमित्यादि। सामान्येन ग्रहणमिति विशेषानुपादानात्। वृतइति किमिति? एवम्मन्यते। उर्वत्येव वक्तव्यम्। एवमप्युच्यमाने वृङ्वृञो ऋकारान्तयोः सवर्णग्रहणादृकारान्तानाञ्च ग्रहणं भविष्यति। एवमप्युच्यमाने सत्यतिप्रसङ्गो भवतीति दर्शयन्नाह करिष्यति हरिष्यतीति। अत्र ऋद्धनोः स्य इतीट् (७।२।७०)।

## ३९। न लिङि।

वरिषीष्टेत्यादौ लिङ्सिचोरात्मनेपदेष्वितीट् (७।२।४२)। विशरिषीष्टेति। कर्मण्यात्मनेपदम्।

## ४०। सिचि च परस्मैपदेषु।

प्रावारिष्टामिति। तस्थस्थमिपां तान्तन्ताम (३।४।१०१) इति तसस्ताम्। सामान्यविहित इट्। सिचि वृद्धिः। प्रावारिषुरिति। सिजभ्यस्तविदिभ्यश्चेति (३।४।१०९) झेर्जुस्। वृङ उदाहरणं नोपन्यस्तम्। तस्य परस्मैपदासम्भवात्। प्रावरिष्ट प्रावरीष्टेति। लिङ्सिचोरात्मनेपदेष्वितीट् (७।२।४२)।

## ४१। इट् सनि वा।

वुवूर्षतइति। इको झलिति (१।२।९) सनः कित्त्वम्। अजझनगमां सनीति (६।४।१६) दीर्घः। उदोष्ठ्यपूर्वस्येत्युत्त्वम् (७।१।१०२)। रपरत्वम्। अथेह कस्मान्न भवति चिकीर्षति जिहीर्षतीति। अस्ति दीर्घत्वे कृते प्राप्तिरित्यत आह चिकीर्षति जिहीर्षतीति। गतार्थम्।

## ४२। लिङ्सिचोरात्मनेपदेषु।

वृत उदात्तत्वादिटि प्राप्ते विकल्पार्थ आरम्भः। आत्मनेपदेष्विति परसप्तमीयम्। सिचश्चैतद् विशेषणम्। यद्येवं लिङ् विशेषितो न स्यात्। ततश्च लिङ् परस्मैपदेष्वपि प्रसज्येत। नैतदस्ति। वलादेरित्यधिकारात्। लिङश्च परस्मैपदेषु यासुडादित्वेन वलादित्वाभावात्। आत्मनेपदपर इति। आत्मनेपदं परं यस्मात् स तथोक्तः। एतच्च सिजित्यनेनैव सम्बध्यते। न लिङ्-

ङित्यनेन। सिचमेव प्रत्यात्मनेपदग्रहणस्य विशेषणभावात्। वृषीष्टेति। उश्वेति किच्चाद् ( १।१।१२ ) गुणाभावः। आस्तीर्षीष्टेति। पूर्व्ववत् किच्चे त्वदीर्घत्वादिः। अवृतेति। ह्रस्वादङ्गादिति ( ८।२।२७ ) सिचो लोपः।

## ४३। ऋतश्च संयोगादेः।

ऋकारान्तानामनुदात्तत्वात् प्रतिषेधे प्राप्ते विकल्पार्थं वचनम्। ध्वृषीष्टेति। ध्वृ हूर्च्छने। भावकर्मणोरित्यात्मनेपदम् ( १।३।१३ )। एवमन्यत्राप्यात्मनेपदं वेदितव्यम्। पूर्ववत् किच्चाद् गुणाभावः। स्मृषीष्टेति। स्मृ चिन्तायाम्। च्योषीष्टेति। च्युङ् कुङ् जुङित्यादि गतौ। अत्र ङित्त्वात् कर्त्तर्य्यात्मनेप्रदम्। अक्षर्षतेति। आत्मनेपदेष्वनत ( ७।१।५ ) इत्यदादेशः। अथ संस्कृषीष्ट समस्कृतेत्यत्र कस्मान्न भवति। भवति हि करोतिरत्र संपर्य्युपेभ्यः करोतौ भूषण ( ६।१।१३७ ) इति सुटि कृते संयोगादिरित्याह संस्कृषीष्टेत्यादि। एकाच उपदेशेऽनुदात्तादित्यत ( ७।२।१० ) उपदेशग्रहणमनुवर्त्तते। तेनोपदेशावस्थायां यः संयोगादिस्तत एवैतेन भाव्यम्। न च करोति रुपदेशावस्थायां संयोगादिः। किं तर्हि ? तत उत्तरम्। अतो न भवति। अभक्तत्वाचेत्यादि। संस्कृषीष्टेत्यत्रायं परीहारः। न समस्कृतेत्यत्र। अत्र ह्यड़ागम स्तद्भक्तस्तद्ग्रहणेन गृह्यत इति (प,८०)। अटोऽप्यङ्गग्रहणेन ग्रहणादिति तन्मध्यपतित स्तद्ग्रहणेन गृह्यत इति (प, ८०) सुटोऽप्यङ्गग्रहणेन ग्रहणात् करोतिरपि संयोगादि र्भवत्येव। अङ्गाधिकाराच्चाङ्गावयवोऽत्र संयोगोऽपि गृह्यते। प्रत्यासत्तेः। नच संस्कृषीष्टेत्यत्राङ्गावयवः संयोगादिः। यश्चाङ्गावयवो नासौ संयोगी भवति। तदिह न भवतीट् प्रसङ्गः। अत्र संपुंकानां सत्वमिति वचनात् ( ८।३।५, वा ) समो मकारस्य सकारः। पूर्वस्यानुनासिकः। समस्कृतेत्यत्र पूर्ववत् सिचो लोपः। चकार आत्मनेपदानुकर्षणार्थः। तेनोत्तरत्र विधिरविशेषेण भवति। चानुकृष्टस्योत्तरत्रानुवृत्तेः (प, ७८)।

## ४४। स्वरतिसूतिसूयतिधूञूदितो वा।

स्वृ शब्दोपतापयोः। षूङ् प्राणिगर्भविमोचन इत्यादादिकः। षूङ् प्राणिप्रसव इति दैवादिकः। धूञ् कम्पन इति स्वादिः क्र्यादि श्चुरादिश्च।

तत्रैकाच इत्यधिकारादाद्ययोर् ग्रहणम्। नेतरस्य। ऊदितो गाहू विलोड़ने गुपू रक्षण इत्यादयः। एतेषां स्वरतेश्चानुदात्तत्वात् प्रतिषेधे प्राप्त इतरेषामुदात्तत्वान्नित्यमिटि प्राप्ते विकल्पार्थं वचनम्। विगाढेति। पूर्ववड् ढत्वादि विधेयम्। अथ वावचनं किमर्थम्? यावतेट् सनि वेत्यतो (७।२।४१) वाग्रहणमनुवर्त्तत इत्याह वेत्यनुवर्त्तमानइत्यादि। तद्धि वाग्रहणं लिङ्सिज्भ्यां सम्बद्धमिति तदनुवृत्तौ तयोरप्यनुवृत्तिः स्यात्। तस्मात् पूर्वं वाग्रहणसम्बद्धयो लिंङ्सिचो निवृत्त्यर्थं मन्यदिदं वाग्रहणमिति। ननु च लिङ्सिचोरनुवृत्तौ स्वरतिग्रहणमनर्थकमापद्यते। पूर्वेणैव विकल्पस्य सिद्धत्वात्। नैतदस्ति। वचनप्रामाण्यात् स्वरतिग्रहणं नित्यार्थं विज्ञायते। अथवा स्वरितग्रहणाद् वेतेरतन्निवर्त्तते। अथ सूतिसूयत्यो र्विकरणनिर्द्देशः किमर्थः? न सू इतेवोच्येतेतात आह सूतिसूयतयो रित्यादि। सू इत्युच्यमाने निरनुबन्धकग्रहणेन सानुबन्धकस्येति (प, ८२) सू प्रेरण इत्यस्यैव ग्रहणं स्यात्। अतस्तन्निवृत्त्यर्थो विकरणनिर्देशः करणीयः। यद्येतत् प्रयोजनं सूङिति निर्द्देशः कर्त्तव्यः। नैवं शक्यम्। एवं हि सति निर्द्देशे क्रियमाणे लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव (प, ८१) ग्रहणमिति सूयतेरेव ग्रहणं स्यात्। न सूतेः। अत स्तन्निवृत्तये विकरणनिर्द्देशः। अस्याः परिभाषाया अस्तित्वेऽयमेव निर्द्देशो ज्ञापकः। अस्यां ह्यसत्यां सूङ् इति निर्द्देशं कुर्य्यात्। अथ धूञिति सानुबन्धकस्य ग्रहणं न क्रियेत ततो निरनुबन्धकपरिभाषया (प,८२) धू विधूनन इत्यस्यैव ग्रहणं स्यात्। एतच्चानिष्टम्। अतो विधूननार्थस्य निवृत्त्यर्थः सानुबन्धकनिर्द्देशः। स्वरतेरित्यादि। अस्य विकल्पस्यावकाशः स्वरिता स्वर्त्तेति। ऋद्धनोः स्य (७।२।७०) इत्यस्यावकाशः करिष्यति हरिष्यतीति। स्वरतेरस्योभयप्रसङ्ग ऋद्धनोःस्य (७।२।७०) इत्येतद् भवति विप्रतिषेधेन स्वरिष्यतीति। किति तु प्रत्ययइत्यादि। श्र्युकः कितीत्य (७।२।११) स्यावकाशः सृतः सूतवानिति। अस्य विकल्पस्यावकाशः स्वर्त्ता स्वरितेति। सोता सविता धोता धवितेति। इहोभयप्रसङ्गे श्र्युकः कितीति (७।२।११) नित्यं प्रतिषेधो भवति पूर्वविप्रतिषेधेन स्वृत्वा सूत्वा धूत्वा। एतच्च पुरस्तात् प्रतिषेधकाण्डविधानादेव सिद्धम्। उक्तं हि प्राक्, पुरस्तात् प्रतिषेधविधानस्य प्रयोजन मिण्मात्रस्यानाश्रितविधानविशेषस्य प्रतिषेधो यथा स्यादिति। तदेतत् पुरस्तात् प्रतिषेधविधानं पूर्वविप्रतिषेधेन समानफलकत्वादिह पूर्व्वविप्रतिषेधशब्देनोक्तम्।

## ४५। रधादिभ्यश्च।

रध हिंसासंराध्योः। णश अदर्शने। तृप प्रीणने। दृप हर्षणमोहनयोः। द्रुह जिघांसायाम्। मुह वैचित्त्ये। ष्णुह उद्गिरणे। ष्णिह प्रीताविति रधादयः। एषु तृप्यतिदृप्यत्योरनुदात्तत्वादिट्प्रतिषेधे प्राप्ते शेषाणामुदात्तत्वान्नित्यमिटि प्राप्ते विकल्पार्थं वचनम्। नंष्टेति मस्जिनशो र्झलीति (७।१।६०) नुम्। व्रश्चादिसूत्रेण (८।२।३६) षत्वम्। ष्टुत्वम्। त्रप्तेति। अनुदात्तस्य चर्दुपधस्यान्यतरस्यामिति अम् (६।१।५९)। यणादेशः। तर्पितेति। लघूपधगुणः। द्रोग्धा मोग्धा स्नोग्धा स्नेग्धेतीडभावपक्षे वा द्रुहमुहष्णुहष्णिहामिति (८।२।३३) घत्वम्। झषस्तथोर्धोऽध इति (८।२।४०) धत्वम्। झलाञ्जश् झशीति (८।४।५३) जश्त्वं गकारः। द्रोढा मोढा स्नोढा स्नेढेति। पूर्ववद् ढत्वादि विधेयम्। क्रादिनियमान्नित्यमिटि रधादिभ्यः परत्वाद्विकल्पं केचिदिच्छन्तीति। पक्षे ररध्व ररध्मेत्याद्यपि यथा स्यात्। अपरे पुनरित्यादि। एतदेव हि पूर्वविधेरिट्प्रतिषेधविधानस्य प्रयोजनम् प्रतिषेधस्य बलीयस्त्वं यथा स्यादिति। तस्मात् प्रतिषेधनियमस्य बलीयस्त्वाद् नित्यमिटा भवितव्यम्। तत्र पूर्वेषामयमभिप्रायः। पूर्वविधेरिट्प्रतिषेधविधानसामर्थ्यात् प्रतिषेधस्य बलीयस्त्वम्भवति। न तु प्रतिषेधनियमस्येति। इतरेषा मयमभिप्रायः प्रतिषेधस्य बलीयस्त्वात् तद्वंश्यस्य नियमस्यापि बलीयस्त्वम्भवति। न तु प्रतिषेधस्यैवेति। तस्य बलीयस्त्वे सति तत्प्राप्तिः। तेन नित्यमिटा भवितुं युक्तमिति। प्रतिषेधनियमस्तु स एव क्रादिनियमः। ररन्धिव ररन्धिमेति। रधिजभोरचीति (७।१।६१) नुम्।

## ४६। निरः कुषः।

कुष निष्कर्षे। अस्योदात्तत्वान्नित्यमिटि प्राप्ते विकल्पार्थं वचनम्। निष्कोष्टेति। अपरे विसर्जनीय (८।३।३५) इत्यस्यानुवृत्ते रिदुदुपधस्य चाप्रत्ययस्येति (८।३।४१) विसर्जनीयस्य षत्वम्। ननु च सकारान्तोऽयमुपसर्ग स्तथा प्रादिषु निसिति पठ्यते। न तु निरिति। तस्मान्निसइति वक्तुं युक्तम्। न निरइति यथा निसस्तपतावनासेवन (८।३।१०२) इति। तत् किमर्थं निर इति निर्देश इत्याह निस इति। वक्तव्य इत्यादिना

रेफान्तस्यास्तित्वज्ञापने प्रयोजनमाह तेनेत्यादि। स्यादेतत्। निस इति रुत्वे कृते णत्वं भविष्यतीत्याह निसो हीत्यादि। निलयनमिति। अयतेर्ल्युटि रूपम्।

## ४७। इण् निष्ठायाम्।

किमर्थमिड़िति वर्त्तमाने पुनरिड्ग्रहणं क्रियत इत्याह इड्ग्रहणं नित्यार्थमिति। असतीड्ग्रहणे हि विकल्पस्य प्रकृतत्वात् पाक्षिक इड्विधिः स्यात्। तस्मान्नित्यार्थमिड्ग्रहणं कर्त्तव्यम्। ननु च सिद्धा विभाषा पूर्वसूत्रेण। आरम्भसामर्थ्यादेव नित्योऽयं विधिर्भविष्यतीत्याह आरम्भो हीत्यादि। पूर्व्वसूत्रेणेटो विकल्पितत्वान्निष्ठायां यस्य विभाषेति (७।२।१५) प्रतिषेधे प्राप्ते नित्योऽयमारम्भः। तत्र यदीड्ग्रहणं न क्रियेत तदा तस्यैव प्रतिषेधस्यायमारम्भो बाधकः स्यात्। ततश्च विकल्प एव स्यात्। न नित्यो विधिः। तस्मान्नित्यार्थमिड्ग्रहणं कर्त्तव्यम्। यदि हि नित्यार्थमिड्ग्रहणं क्रियते तदा तेन विकल्पस्य निवर्त्तितत्वादुत्तरत्रापि नित्यएव विधिः स्यादित्यत आह तत्रेवेत्यादि। न चानेनेड्ग्रहणेन विकल्पः शक्यते निवर्त्तयितुं तस्य स्वरितत्वादिड्ग्रहणसामर्थ्यात्। अनुवर्त्तमानेऽपि वाग्रहणे नित्योऽयं विधि र्भवति। या तु तस्यैव विकल्पस्यानुवृत्तिः सोत्तरार्था। तेनोत्तरत्र विकल्प एव।

## ४८। तीषसहलुभरुषरिषः।

इषु इच्छायाम्। षह मर्षणे। लुभ गार्द्ध्ये। लुभ विमोहने। द्वयोरपि ग्रहणम्। विशेषानुपादानात्। रुष रोषे। रुष रिष हिंसायाम्। सर्व एवैत उदात्ता इति नित्यमिटि प्राप्ते विकल्पार्थोऽयमारम्भः। तदर्थमिति। इच्छार्थस्यैव विकल्पो यथा स्यादितरयोर्मा भूदित्येवमर्थम्। ये तूदितं न पठन्ति ते वेति प्रकृतस्य व्यवस्थितविभाषाविज्ञानात् सहिना भौवादिकेन साहचर्य्यादिच्छार्थस्यैव विकल्पेन भविष्यति नेतरयोरिति वर्णयन्ति। सोढ़ेति। ढत्वष्टुत्वढलोपेषु कृतेषु सहिवहोरोदवर्णस्येत्योत्त्वम् (६।३।११२)।

## ४८ । सतीवन्तर्द्ध-भ्रस्ज-दम्भु-श्रि-स्वृ-यूर्णु-भर-ज्ञपि-सनाम् ।

इवन्तानामिति। दिवु सिवुइत्येवमादीनाम्। ऋधु वृद्धौ। भ्रस्ज पाके। दन्भु दम्भे। श्रिञ् सेवायाम्। स्वृ शब्दोपतापयोः। यु मिश्रणे। ऊर्णुञ् आच्छादने। भृञ् भरणे। मारणतोषणनिशामनेषु ज्ञपि र्गरन्तः। षणु दाने। वन षण सम्भक्तौ। द्वयोरपि ग्रहणम्। विशेषानुपादानात्। अत्र भ्रस्जेरनुदात्तत्वात् स्वृयूर्णुभृञाच्चोगन्तात् सनि ग्रहगुहोश्चेति ( ७।२।१२ ) प्रतिषेधे प्राप्ते शेषाणामुदात्तत्वान्नित्यमिटि प्राप्ते विकल्पोऽयमारभ्यते। दुद्यूषतीति। दिवेः सन्। हलन्ताच्चेति ( १।२।१० ) सनः कित्त्वम्। च्छ्वोः शूड़नुनासिके इत्यूठि ( ३।४।१८ ) यणादेशः। द्विर्वचनं द्यूष इत्येतस्य। हलादिः शेषः ( ७।४।६० )। ह्रस्वत्वम्। अर्दिधिषतीति। इटि पुगन्त-( ७।३।८६ ) लघूपधस्य गुणे कृतेऽजादे द्वितीयस्येति ( ६।१।२ ) धिसइत्येतस्य द्विर्वचनम्। हलादिः शेषः ( ७।४।६० )। रेफस्य नन्द्राः संयोगादय (६।१।३) इति निषेधान्न द्विर्वचनम्। अभ्यासे चर्चेति ( ८।४।५४ ) धकारस्य दकारः। ईर्त्सतीति। अजादेर्द्वितीयस्येति ( ६।१।२ ) धस इत्यस्य द्विर्वचनम्। हलादिःशेषः। अभ्यासे चर्चेति ( ८।४।५४ ) धकारस्य दकारः। सन्यत ( ७।४।७८ ) इतीत्त्वम्। ऋदिधसइति स्थिते आप्ज्ञप्यृधामीदितीत्त्वम् ( ७।४।५५ )। रपरत्वम्। अत्र लोपोऽभ्यासस्येत्यभ्यासलोपः ( ७।४।५८ )। खरि (८।४।५५) चेति चर्त्वं धकारस्य तकारः। बिभ्रज्जिषतीति। झलाञ्जश् झशीति ( ८।४।५३ ) सकारस्य दकारः। स्तोःश्चुना श्चुरिति ( ८।४।४० ) श्चुत्वं दकारस्य जकारः। बिभर्क्षतीति। भ्रस्जो रोपधयोरमन्यतरस्या-( ६।४।४७ ) मित्यकारात् परो रमागमो रोपधयोरिति षष्ठीनिर्द्देशाद्रेफस्यो-पधायाश्च सकारस्य निवर्त्तकः। चोः कुरिति ( ८।२।३० ) कुत्वम्। इण्को-( ८।३।५७ ) रित्यादेशप्रत्यययोरिति ( ८।३।५९ ) षत्वम्। धिप्सति धीप्सतीति। दम्भइच्चेतीत्त्वमीत्त्वञ्च ( ७।४।५६ )। खरि चेति ( ८।४।५५ ) चर्त्वं भकारस्य पकारः। पूर्ववदभ्यासलोपः। हलन्ताच्चेति ( १।२।१० ) कित्त्वादनुनासिकलोपः। उच्छिश्रीषतीति। इको झलिति ( १।२।९ )

कित्त्वम्। अज्झनगमां सनीति (६।४।१६) दीर्घत्वम्। द्विर्वचनमभ्यासकार्य्यम्। आदेशप्रत्यययोरिति (८।३।५९) षत्वम्। दकारस्य चुत्वम्। चकारः। अभ्यासचर्त्वम्। अस्फोटोति (८।४।६२) अकारस्य ककारः। सिस्वरिषतीति। द्विर्वचनं स्वृ इत्येतस्य। उरदित्यत्त्वम् (७।४।६६)। रपरत्वञ्च। सुस्वूर्षतीति। पूर्ववद्दीर्घः। उदोष्ठ्यपूर्वस्येत्युत्त्वम् (७।१।१०२)। रपरत्वम्। हलि (८।२।७७) चेति दीर्घः। द्विर्वचनं स्वूर्षइत्येतस्य। अभ्यासकार्य्यम्। आदेशप्रत्यययोरिति (८।३।५९) षत्वम्। यियविषतीति। ओः पुयण्ज्यपरइत्यभ्यासस्येत्त्वम् (७।४।८०)। प्रोर्णुनूषतीति। अजादेर्द्वितीयस्येति (६।१।२) वचनाद्द्वितीयस्यैकाचो नुसइत्येतस्य द्विरुक्तिः। रेफस्य पूर्वस्य द्विर्वचनम्। प्रोर्णुनविषतीति। इट्। पक्षे विभाषोर्णोरिति (१।२।३) यदा ङित्त्वं तदोवङ्। अन्यदा तु गुणः। भृञित्येतस्य भौवादिकस्य ग्रहणमिति। अथ डुभृञित्यतस्य जौहोत्यादिकस्य ग्रहणं कस्मान्न भवतीत्याह श्रपा निर्द्देशादित्यादि। यदि जौहोत्यादिकस्य भृञो धारणपोषणार्थस्य ग्रहणमभिमतं स्यात् तदा भृ इत्येवं निर्द्देशं कुर्य्यात्। नतु भरइति श्रपा निर्द्देशम्। कृतश्च श्रपानिर्द्देशः। तस्माद् भौवादिकस्य ग्रहणमिति गम्यते। बुभूर्षतीति। पूर्ववदुत्त्वदीर्घत्वे। ज्ञीप्सतीति। ज्ञा इत्येतस्माण्णिच्। अर्त्तिह्रीत्यादिना (७।३।३६) पुक्। पूर्ववदीत्त्वाभ्यासलोपौ। सिषासतीति जनसनखनां सञ्झलो (६।४।४२) रित्यात्त्वम्। केचिदत्रेत्यादि। केचिदिति वचनात् केचिन्न पठन्तीत्युक्तं भवति। ये तु न पठन्ति तेऽत्र तनिपतिदरिद्राणामुपसंख्यानं कुर्वन्ति। तितंसति। तितांसतीति। तनोतेर्विभाषेति पक्षे (६।४।१७) दीर्घः। पित्सतीति। सनिमीमेत्यादिनेसादेशः (७।४।५४) अभ्यासलोपः। स्कोरित्यादिना (८।२।२९) सलोपः। दिदरिद्रिषति। दिदरिद्रासतीति। दरिद्रातेरार्धधातुकइत्यादिना (६।४।११४, वा) विकल्पेनाकारलोपः।

## ५०। क्लिशः क्त्वानिष्ठयोः।

क्लिष्टेति। व्रश्चादिसूत्रेण (८।२।३६) षत्वम्। ष्टुत्वम्। क्लिशित्वेति। रलो व्युपधाद्धलादेः संश्चेति (१।२।२६) कित्त्वम्। क्त्वाप्रत्यये विकल्पः सिद्ध एवेति। ऊदित्त्वात् स्वरतीत्यादिना (७।२।४४) यदि क्त्वाप्रत्यये विकल्पः

सिद्धएव तत् किमर्थं क्त्वाग्रहणमित्याह क्लिश उपतापइत्यस्य त्वित्यादि। नित्यमिड़ागमः प्राप्नोतीति। उपतापार्थस्य क्लिशेरुदात्तत्वात्। तदर्थमिति। उपतापार्थो यः क्लिशि स्तदर्थम्। सोऽर्थः प्रयोजनं यस्य तत् तथोक्तम्। अथवो-पतापार्थस्य क्लिशे र्यो नित्यमिडागमः प्राप्नोति तदर्थं तन्निवृत्त्यर्थमित्यर्थः। अर्थ-शब्दस्य निवृत्तिवचनत्वात्।

## ५१। पूङश्च।

उगन्तत्वाच्छ्रयुकः कितीतीट् प्रतिषेधे ( ७।२।११ ) प्राप्ते क्त्वानिष्ठयोः पक्षे प्राप्त्यर्थं वचनम्। पवित्वा पवितः पवितवानिति। पूङः क्त्वा चेति (१।२।२२) कित्त्वप्रतिषेधाद् गुणो भवत्येव। पूङिति सानुबन्धकस्य ग्रहणं पूञो निवृत्त्यर्थम्।

## ५२। वसतिक्षुधोरिट्।

वस निवासे। क्षुध बुभुक्षायाम्। अनयोरनुदात्तत्वादिट्प्रतिषेधे प्राप्ते क्त्वानिष्ठयोरिड् विधानार्थं वचनम्। उषित्वेति। क्त्वा। इट्। न क्त्वा सेड़िति ( १।२।१८ ) कित्त्वप्रतिषेधे प्राप्ते मृड़मृदेत्यादिना ( १।२।७ ) कित्त्वम्। वच्यादिसूत्रेण ( ६।१।१५ ) यजादित्वात् संप्रसारणम्। शासिवसिघसीना-ञ्चेति ( ८।३।६० ) षत्वम्। क्षुधित्वेति। अत्रापि रलो व्युपधाद्धलादेः संश्चेति ( १।२।२६ ) पक्षे कित्त्वम्। वसतीति विकरणनिर्देशइत्यादि। विकरण-निर्देशो धातुनिर्देशार्थ एवेत्युक्तम्। अथ वस आच्छादन इत्यस्य निवृत्त्यर्थः कस्मान्न विज्ञायत इति यश्चोदयेत् तं प्रत्याह वस्तेरित्यादि। अथ वावस्तः वावस्तवानित्यत्र यङ्लुङ् निवृत्त्यर्थः कस्मान्न विज्ञायते ? विहितविशेषणपक्ष-विज्ञानादपि यङ्लुङ्निवृत्तिः शक्यते कर्त्तुमित्यभिप्रायः। अर्थेड़ित्यनु-वर्त्तमाने पुनरिड्ग्रहणं किमर्थमित्याह पुनरिड्ग्रहणं नित्यार्थमिति। पूर्वक-मिड्ग्रहणं विकल्पेन सम्बद्धम्। अतस्तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यात्। तस्मात् तन्निवृत्त्यर्थं पुनरिड्ग्रहणं कृतम्।

## ५३। अञ्चेः पूजायाम्।

अञ्चिता इति। पूजिताइत्यर्थः। मतिबुद्धिपूजार्थेभ्यश्चेति ( ३।२।१८८ )

क्त्वाप्रत्ययः। अनिदितामित्यनुनासिकलोपो (६।४।२४) न भवति। नाञ्चेः पूजायामिति (६।४।३०) प्रतिषेधात्। अस्येति। क्तस्य च वर्त्तमान इति (२।३।६७) षष्ठी।

## ५४। लुभो विमोहने।

लोभित्वा लुभित्वेति। रलो व्युपधादित्यादिना (१।२।२६) पक्षे किन्त्वाद् गुणाभावो भवत्येव। गार्द्ध्ये यथाप्राप्तमेवेति। क्त्वाप्रत्यये विकल्पः। निष्ठायां यस्य विभाषेति (७।२।१५) नित्यः प्रतिषेध इति।

## ५५। जॄव्रश्च्योः क्त्वि।

जरीत्वा जरित्वेति। जॄ वयोहानौ। क्र्यादिकः। वॄतो वेति (७।२।३८) पक्षे दीर्घः। यस्तु जॄष वयोहानाविति दिवादौ पठ्यते तस्य सानुबन्धकत्वादिह ग्रहणं नास्तीति तस्य जीर्त्वेत्येव भवति। व्रश्चित्वेति। ओव्रश्चू छेदने। न क्त्वा सेडिति (१।२।१८) प्रतिषेधाद् ग्रहिज्येत्यादि- (६।१।१६) सूत्रेण संप्रसारणं न भवति। किति तस्य विधानात्। अथ क्त्वा-ग्रहणं किमर्थम्? यावता क्लिशः क्त्वानिष्ठयो (७।२।५०) रित्यत एव क्त्वा-ग्रहणमनुवर्त्तत एवेत्याह क्त्वाग्रहणमित्यादि। तद्धि क्त्वाग्रहणं निष्ठया सह सम्बन्धम्। अतस्तदनुवृत्तौ तस्या अप्यनुवृत्तिः स्यात्। एवञ्च सति निष्ठाया-मपि स्यात्। तस्मान् निष्ठा-निवृत्त्यर्थं मन्यदिह क्त्वाग्रहणं क्रियते।

## ५६। उदितो वा।

शान्त्वेति। शमु उपशमे। तमु काङ्क्षायाम्। दमु उपशमे। भ्रमु चलने। क्रमु पादविक्षेपे। अनिट्पक्षेऽनुनासिकस्य क्विझलोः क्ङितीति (६।४।१५) दीर्घः। वाग्रहणं विस्पष्टार्थम्। उदितां ह्युदात्तत्वादिट् सिद्ध एव। तत्रारम्भसामर्थ्यादेव विकल्पेन विधिं विज्ञास्यते। उत्तरार्थञ्चावश्यं वा-ग्रहणं कर्त्तव्यम्। तद्विस्पष्टार्थमिहैव क्रियते।

## ५७। सेऽसिचि कृत-चृतच्छृद-तृद-नृतः।

कृती छेदन इति तौदादिकः। कृती वेष्टन इति रौधादिकः। विशेषानु-

पादानाद्द्वयोरपि ग्रहणम्। चृती हिंसाग्रन्थयोः। उछृदिर् दीप्तिदेवनयोः। उतृदिर् हिंसादानयोः। उकारावुदितो वेति (७।२।५६) विशेषणार्थौ। इकार-रेफावपीरितो वेति ( ३।१।५७ ) विशेषणार्थावेव। नृती गात्रविक्षेपे। सर्वेषा मेषामुदात्तत्वान्नित्यमिटि प्राप्ते सिचोऽन्यत्र सकारादौ विकल्पार्थं वचनम्। स इत्यत्र तस्याकारोच्चारणमतन्त्रम्। अविवक्षितत्वात्। तेन स्येऽपि विकल्पो भवति। अतन्त्रत्वं तु पुनरस्यामिचीति सिचः प्रतिषेधाद्विज्ञेयम्। यदि ह्यतन्त्रमकारोच्चारणमेवं सति स्यसिचोरित्येवं कस्मान्नोक्तम्? सन्देहभयात्। एवं ह्युच्यमाने स्ये सिचि चेत्येषोऽप्यर्थ आशङ्क्येत। सेऽसिचीत्युच्यमाने तु सप्तमीद्वयोरुपादानात् सिज्वर्जिते सकारादावित्ययमिष्टोऽर्थो विज्ञायते। नन्वत्रापि सन्देहः स्यात्। एवमुच्यमाने किमयं सिचि न वेति। यदि हि सिच्यपि स्यात् तदुपादानमनर्थकं स्यात्। सेत्येवं ब्रूयात्। कर्त्स्यतीति। लृट्। अकर्त्स्यदिति लृङ्। चिकृत्सतीति। सन्। हलन्ताच्चेति ( १।२।१० ) कित्त्वाद् गुणाभावः।

## ५८। गमेरिट् परस्मैपदेषु।

गम्लृ गतौ। गमिरयमनुदात्तत्वादनिट्। योऽपि सनि चेतीण् (२।४।४७) गताविति तस्य गमिरादेशो यश्चेण्वदिक (२।४।४५,वा) इति वक्तव्यमितीक् स्मरण इत्येतस्य यश्च ङ्श्चेतीङ् ( ३।४।४८ ) अध्ययन इत्येतस्य सोऽपि स्थानिवद्भावाद-निड़ेव स्यात्। तेभ्यः परस्य सकारादेरार्द्धधातुकस्य सिज्वर्जितस्येड़ागमो यथा स्यादित्येवमर्थं वचनम्। गमिष्यत्यगमिष्यदित्यनादेशस्य गमेरुदाहरणम्। जिगमिषतीत्येतत् तस्येणादेशस्येगादेशस्य वा। अर्थेड़िति वर्त्तमाने पुनरिड्-ग्रहणं किमर्थमित्याह इड्ग्रहणं नियमार्थमिति। तर्हि पूर्वकमिड्ग्रहणम्। उदितो वेति ( ७।२।५६ ) वाग्रहणेन प्रकृतमिड्ग्रहणं सम्बद्धम्। अतस्तदनु-वृत्तौ तस्याप्यनुवृत्तिः स्यात्। तथाच विकल्पेनेट् प्रसज्येत। तस्मात् तन्निवृत्त्यर्थं पुनरिड्ग्रहणं क्रियते। संगंसीष्टेति। सम्पूर्वाद् गमेराशिषि लिङ्। सीयुट्। समो गम्यृच्छीत्यादिनात्मनेपदम् ( १।३।२९ )। सुट्तिथोरिति ( ३।४।१०७ ) सुट्। षत्वम्। ष्टुत्वम्। सञ्जिगंसत इति। पूर्ववत् सन ( १।३।६२ ) इत्यात्म-नेपदम्। अधिजिगांसत इति। गमेरिङादेशस्य प्रत्युदाहरणम्। अथ सञ्जिगं-सत इत्यत्राज्झनगमां सनीति ( ६।४।१६ ) दीर्घत्वं कस्मान्न भवतीत्याह

गमेरिडादेशस्येत्यादि । तद्धि दीर्घत्वमिडादेशस्य गमेरिष्यते । नान्यस्य । तथाहि तत्रोक्तम् । गमेरिडादेशस्येति वक्तव्यमिति । यदि परस्मैपदेष्वित्युच्यते तदा क्तति परस्मैपदलुकि च न प्राप्नोतीत्याह आत्मनेपदेनेत्यादि । समानपदस्थस्येति । एकपदस्थस्येत्यर्थः । अन्यत्र सर्वत्रैवेष्यतइति । एतच्च क्तत्यपि हीत्यादिना विस्पष्टीकरोति । सञ्जिगमिषिता । अधिजिगमिषितेति । क्तत्युदाहरणे द्वे । जिगमिष त्वमितीति । एतत् परस्मैपदलुकि सन्नन्तत्वाद् गमेर्लोट् । सिप् । सेर्ह्यपिच्चेति ( ३।४।८७ ) से र्हिरादेशः । अतो हेरिति ( ६।४।१०५ ) लुक् । कथं पुनः परस्मैपदेष्वित्युच्यमाने क्तति परस्मैपदलुकि च लभ्यते ? एवं मन्यते । योगविभागः कर्त्तव्यः । गमेरिड़ित्येको योगः । तत्र स इत्यनुवर्त्तते । सकारादावार्धधातुके गमेरिड़ागमो भवति । ततः परस्मैपदेष्विति द्वितीयो योगो नियमार्थः । स चायन्नियमो यद्यविशेषेण स्यात् तदा पूर्वयोगोऽनर्थकः स्यात् । तस्मात् तुल्यजातीयापेक्षया नियमः । तुल्यजातीयश्च निङ् निङ्विषये यदि भवति तदा परस्मैपदेष्वेव । नात्मनेपदेष्विति । तेन क्तति परस्मैपदलुकि च पूर्वयोग न भवत्येव । नियमेनाव्यावर्त्तितत्वादिति । पदशेषकारस्य पुनरित्यादि । पदशेषकारः पुनरेवं मन्यते । परस्मैपदेष्विति नेयं परसप्तमी । किं तर्हि ? विषयसप्तमी । परस्मैपदविषये यो गमिरुपलक्षितः उपलब्धस्तस्य सकारादावार्धधातुक इड् भवतीति । एवञ्च सति योगविभाग मन्तरेणापि तन्मतेन परस्मैपदेषु यो गमिरुपलक्षित स्तस्मादसत्यपि परस्मैपदे सर्वत्र क्तति परस्मैपदलुकि चेड् भवत्येव । परस्मैपदपरत्वेन सकारादेरार्धधातुकस्याविशेषितत्वात् । तन्मतेन सञ्जिगंसितोऽधिजिगंसिता व्याकरणस्येति भवितव्यमिति । संपूर्वस्याधिपूर्वस्य च गमेः परस्मैपदेष्वनुपलक्षितत्वात् । तथाहि सम्पूर्वाद् गमेः समो गम्यृच्छीत्यादिनात्मनेपदं ( १।३।२९ ) विहितम् । अधिपूर्वादपि स्थानिवद्भावादनुदात्तङित ( १।३।१२ ) इत्यात्मनेपदमिति ।

## ५९ । न वृद्भ्यश्चतुर्भ्यः ।

वृद्भ्यइति बहुवचननिर्देशादाद्यर्थो गम्यते । अतएवाह वृदादिभ्यइति । वृतु वर्त्तने । वृधु वृद्धौ । शृधु शब्दकुत्सायाम् । स्यन्दू स्रवण इत्येते वृदादयश्चत्वार उदात्ताः । तत्राद्यानां त्रयाणां नित्यमिटि प्राप्ते स्यन्देरूदित्त्वात् पाक्षिके प्राप्ते प्रतिषेधोऽयमुच्यते । वर्त्स्यतीति । लृट् शेषे चेति ( ३।३।१३ )

लृट्। वृद्भ्यः स्यसनोरिति विकल्पेन ( १।३।९२ ) परस्मैपदम्। विवृत्सतीति। हलन्ताच्चेति ( १।२।१० ) सनः कित्त्वाद् गुणाभावः। दधिस्पृध्योर्धकारस्य खरि चेति ( ८।४।५५ ) चर्त्वं तकारः। चतुर्ग्रहणं न वक्तव्यमिति। अत्र कारणमाह वृत्करणं ह्येत्यादि। तदेव यदि वृतादिपरिसमाप्त्यर्थमपि विज्ञायत इति तत्त्वेनानेकशक्तितो वा शब्दानां न किञ्चिदनिष्टं प्राप्नोति। एवमपि विज्ञायमान इष्टस्यैव सिद्धेरित्यभिप्रायः। एवं प्रत्याख्याते चतुर्ग्रहणे प्रयोजन माह तत् क्रियत इत्यादि। यदि चतुर्ग्रहणं न क्रियेत तदा स्यन्दे रूदिल्लक्षणोऽन्तरङ्गत्वा-द्विकल्पः स्यात्। अन्तरङ्गत्वं तु तस्य वलाद्यार्धधातुकमात्राश्रयत्वात्। अस्य तु प्रतिषेधस्यार्द्धधातुकविशेषाश्रयत्वाद् बहिरङ्गत्वम्। तस्मादन्तरङ्गमपि स्यन्दे-रूदिल्लक्षणं विकल्पमयं प्रतिषेधो यथा बाधेतेत्येवमर्थञ्च चतुर्ग्रहणं क्रियते। कथं पुनः क्रियमाणेऽपि चतुर्ग्रहणेऽयमर्थो लभ्यत इत्यत आह चतुर्ग्रहणइत्यादि। स स्यन्दिः परः प्रधानो यस्य तत् तत्परम्। तद्भाव स्तात्पर्य्यम्। तेन तात्-पर्य्येण तत्प्रधानतयेत्यर्थः। सन्निधापितइति। उपस्थापित इत्यर्थः। तस्य चैवं सन्निधापितस्य विकल्पोऽनेन प्रतिषेधेन कथन्नाम बाध्येतेत्येतदेव प्रयोजनम्। ततश्चतुर्ग्रहणादन्तरङ्गमपि विकल्पं प्रतिषेधो बाधते। अत्रापीत्यादि। कथं पुनः परस्मैपदेष्वित्यनुवर्त्तमानेऽन्यत्र सर्वत्र प्रतिषेधो लभ्यते? एवं मन्यते। गमेरित्यनुवर्त्तते। तत्रैवमभिसम्बन्धः करिष्यते। गमेः सकारादौ येन प्रकारेण इट् तेनैव प्रकारेण वृतादिभ्यो नेड़िति। तेन यथा गमेरात्मनेपदवर्जन मन्यत्र सर्वत्रैवेड् भवति तथा वृतादिभ्योऽपि प्रतिषेधइति।

## ६० । तासि च क्लृपः ।

क्लृपू सामर्थ्ये। तस्मादूदित्त्वाद्विकल्पेनेटि प्राप्ते प्रतिषेधोऽयमारभ्यते। कल्प्तेति। लुट्। लुटि च क्लृप इति ( १।३।९३ ) परस्मैपदं विकल्पेन। क्लृपो रो ल इति लत्वम् ( ८।२।१८ )। चिक्लृप्सतीति। पूर्ववत् कित्त्वम्। क्लृपेरपीत्यादि। अयमर्थो वृतादीनामनुवृत्ते र्लभ्यते। तदनुवृत्तौ सत्यामेवमभि-सम्बन्धः करिष्यते। यथा वृतादीनां प्रतिषेधो भवति तथायमपि क्लृपेरिति। यदि तर्हि वृतादीनां ग्रहणमिहानुवर्त्तते तदा वृतादीनामपि तासौ प्रतिषेधः प्राप्नोति। योगविभागकरणसामर्थ्यान्न भविष्यति। यदि वृतादीनामपि तासौ प्रतिषेधः स्यात् तदा न वृद्भ्यः चतुर्भ्य स्तासि चेत्येकयोगं कुर्य्यात्।

## ६१। अच स्तास्वत् थल्यनिटो नित्यम्।

क्रादिनियमादिटि प्राप्तेऽजन्तानां तासौ नित्यानिटां थलि प्रतिषेधो विधीयते। पातेत्यादि। लुङ्पन्याम स्तासौ नित्यानिट्त्वप्रदर्शनार्थः। अनिट्त्वञ्चैकाच (७।२।१०) इत्यादिनेट्प्रतिषेधात्। लूत्वा लुलविथेति। तास्वदिति वचनादिह न भवति प्रतिषेधः। तस्मिंस्त्वनुच्यमान इहापि प्रतिषेधः स्यात्। भवति लूनातिः किति नित्यमनिट्। श्युकः कितीति (७।२।११) प्रतिषेधात्। पपिव पपिमेति। आतो लोप इटि (६।४।६४) चेत्याकार लोपः। अनिड्ग्रहणं नित्यमित्यनेनेत्यादि। नित्यमित्यनेनानिट्त्वं धातोः कथं नाम विशिष्येतेत्येवमर्थमनिड्ग्रहणमित्यर्थः। अथ लविता लुलविथेति तासौ सेट स्थलोट्प्रतिषेधो मा भूदित्येवमर्थमनिड्ग्रहणं कस्मान्न भवति? नार्हत्येवमर्थं भवितुम्। तथाहि तास्वत् थलोण् न भवतीत्युच्यते। नच यस्तासौ सेट् तस्य प्रतिषेधो भवंस्तास्वदिति व्यपदेष्टुं शक्यते। यो ह्ययमिड्भावस्थलि विधीयते तस्य तासाविड्भावेनैव सादृश्यं वतिराचष्टे। एवन्तु वतिग्रहणादेव तासौ सेटस्थलि प्रतिषेधो न भविष्यति। अन्यथा वतिना यत् सादृश्यं समाख्यायते तन्न स्यात्। तस्माद् युक्तमुक्तमेवानिड्ग्रहणस्य प्रयोजनम्। अथाक्रियमाणेऽनिड्ग्रहणे नित्यमिति कस्य विशेषणं विज्ञायते? प्रतिषेधस्य। ननु च नित्य एव प्रतिषेधः प्रकृतः। तत्र यदि नित्यग्रहणेन प्रतिषेधो विशिष्येत तदा नित्यग्रहण मनर्थकं स्यात्। नैतदस्ति। पूर्वसूत्रे प्रतिषेधस्यानित्यत्वं यथा स्यादित्येवमर्थं स्यात्। एवञ्च पूर्वसूत्रेण पक्ष इड़ागमः स्यादेव। तस्मात् पूर्वोक्तमेवानिड्ग्रहणस्य प्रयोजनम्। तासौ विभाषितेड़िति। स्वरत्यादिसूत्रेण (७।२।४४) धूञ इड् विकल्पितः। तस्य नित्यग्रहणाद् विभाषितेटस्थलि नित्यमिड़ागमो भवति। असति च नित्यग्रहणे प्रतिषेधः स्यादेव। पाक्षिकेणापीड़भावे नानिड्व्यपदेशो भवत्येव। तथाहि गुहे विभाषितेटोऽपि शल इगुपधादनिटःक्स इति (३।१।४५) क्सो भवत्येवाघुक्षदिति। अथ वतिना निर्देशः किमर्थः। न तासावित्येवोच्येतेत्यत आह तास्वदित्यादि। असति वतिना निर्देशे योऽपि तासावसन्नसत्त्वाच्च नित्यमनिट् तस्यापि थलि प्रतिषेधः स्यात्। वतिना निर्देशे तु सति वतेः सर्वसादृश्यार्थत्वाद् यथाभूतस्य तासाविण् न भवति तथाभूतस्यैव थल्यपीटा न भवितव्यमिति न भवत्येष दोषप्रसङ्गः।

यदि हि यस्तासावसन्नसत्त्वाच्च नित्यमनिट् तस्यापि थलि प्रतिषेधः स्यादेवञ्च सति तासावसत इड्भाव इतरत्र तु सतइति यथाभूतस्य तासाविड्भाव स्तथाभूतस्यापि थलि न स्यात्। यो हि तासावसन्नसत्त्वाच्च नित्यमनिट् तस्य थलि प्रतिषेधो न भवति। जन्नसिथेति। उत्तरसूत्रेणेत्यभिप्राय इत्यत आह—उत्तरसूत्रेऽपीत्यादि। तदेवमुत्तरार्थो वतिना निर्द्देशोऽयं भवति। इह तु नार्थो वतिनिर्द्देशेन। अनजन्तत्वादेव घसिर्वयेश्च प्रतिषेधो न भवतीति। जघसिथेति। लिट्यन्यतरस्या (२।४।४०) मित्यदेर्घस्लादेशः। उवयिथेति। वेञो वयिरिति ( २।४।४१ ) वयिरादेशः। लिट्यभ्यासस्योभयेषामिति ( ६।१।१७ ) संप्रसारणम्। कस्मात् पुनर्घसे र्वयेश्च तासावसत्त्वान्नित्यानिट्त्वमित्याह—अदादेशो हीत्यादि। नास्तित्वं तयोः पुनस्तासावविधानादेदितव्यम्।

## ६२। उपदेशेऽत्वतः।

अनजन्तार्थोऽयमारम्भः। इयष्ठेति। पूर्ववदभ्यासस्य संप्रसारणम्। व्रश्चादिसूत्रेण ( ८।२।३६ ) षत्वम्। ष्टुत्वम्। चकर्षिथेति। कृष विलेखने। भवत्ययमकारवान्। नतूपदेशे। किं तर्हि? पश्चाद् गुणे कृते। उपदेशग्रहणमिह शक्यमकर्त्तुम्। शक्यतएव ह्येकाच उपदेशइत्यत (७।२।१०) उपदेशग्रहणमनुवर्त्तयितुम्। तत् क्रियते विस्पष्टार्थम्। असति तस्मिन् पूर्व्वसूत्रे तस्यानुपयोगान्निवृत्तिं मन्यमान स्तासावत्वत इत्येवमपि कश्चित् प्रतिपद्येत। रराधिथेति। राध साध संसिद्धौ। जिघृक्षतीति। सनि ग्रहगुहोश्चेतीट्प्रतिषेधाद् ( ७।२।१२ ) भवति नित्यानिट्। नतु तासौ। किं तर्हि? सनि। आनञ्जिथेति। अन्जू व्यक्तिम्रक्षणादिषु। अत आदे ( ७।४।७० ) रित्यभ्यासस्य दीर्घः। तस्मान्नुड् द्विहल इति ( ७।४।७१ ) नुट्। भवत्ययं धातुरुपदेशेऽकारवान्। नतु तासौ नित्यानिट्। स्वरत्यादि-(७।२।४४) सूत्रेण विकल्पितेट्त्वात्।

## ६३। ऋतो भारद्वाजस्य।

सस्मर्थेति। स्मृ चिन्तायाम्। दध्वर्थेति। ध्वृ हूर्च्छने। ननु यद्यप्यकारान्तानां मध्ये वृङ्वृञावुदात्तौ तत्रापि वृङस्थल् न सम्भवत्येव। आत्मनेपदित्वात्। वृञस्तु ववर्थेति निगमे ( ७।२।६४ ) निपातनाद् भाषायामिटा भवितव्यमेव। तस्मात् तयोरिट्प्रतिषेधार्थमेतन्नोपपद्यते। ये त्वन्ये ऋकारान्ता स्तेषामनुदात्तत्वात्

तासौ नित्यमनिट्त्वमित्यच स्तास्वत् थल्यनिटो ( ७।२।६१ ) नित्यमितीट्प्रतिषेधः सिद्ध एव। परत्वाद् गुणे कृते रपरत्वे चानजन्तत्वान्न सिध्यतीत्येवमेतन्नाशङ्कनीयम्। उपदेशग्रहणस्य पुरस्तादनुकृष्टस्याच इत्यनेनाभिसम्बन्धात्। अथवाच इति विहितविशेषणा पञ्चमी। तत्रैवं विज्ञास्यामः। अजन्ताद् यो विहित स्थलिति। तस्मादचस्तास्वदित्यनेनैव ऋकारान्तेभ्यः प्रतिषेधः सिद्धः। तत् किमर्थोऽयमारम्भ इत्याह सिद्धे सत्यारम्भो नियमार्थ इति। नान्येभ्य इति। के पुनस्ते ? य ऋकारान्तादन्येऽजन्ता अनजन्ताश्चोपदेशेऽत्वन्तः। अथैवं कस्मान्नियमो न विज्ञायत ऋतो भारद्वाजस्यैव। नान्येषामाचार्य्याणामिति ? एवं मन्यते। पूर्वसूत्राद्-चोऽत्वत इति चानुवर्त्तते। तदनुवृत्तेरेतदेव प्रयोजनम्। अनेन नियमेन सन्निधानात् तस्यैवाजन्तस्यानुवृत्तस्यात्वतश्च प्रकृतस्य धातो र्निवृत्तिर्यथा स्यादिति। यदि विपरीतोऽत्र नियमः स्यादाचार्य्यान्तराणां निवृत्तिः स्यात्। न प्रकृतस्य धातोः। तथाच तदनुवृत्तिरपार्थिका स्यात्। तस्मादृत एव भारद्वाजस्येत्ययमेव नियमो विज्ञायत इत्याह तदित्यादि। तदिति हेतौ। यस्मादेवंविधोऽत्र नियम स्तस्मादृतएव भारद्वाजस्य प्रतिषेधो भवति नान्येभ्यो धातुभ्य इति। तेन यद्यपि पूर्वयोगाभ्यां नित्यमिट्प्रतिषेधः कृतस्तथाच सामर्थ्यात् पूर्वयोगयोरयं विकल्पो भवति। यद्यपि तत्र वाग्रहण माचार्य्यग्रहणं च न क्रियते तथाप्यर्थाल्लभ्यते। अथ तपरकरणं किमर्थम् ? न उर्भारद्वाजस्येत्येवोच्येतेत्याह तपरकरणमित्यादि। यदि ऋुरित्येवोच्येत ततोऽण् सवर्णान् गृह्णातीति ॠकारान्तानामपि ग्रहणं स्यात्। ततस्तन्निवृत्त्यर्थं तपरकरणम्। किं पुनः स्याद् यद्यॄकारान्तानां ग्रहणं स्यादित्यत आह तथाहीत्यादि। तथेत्येवमर्थे। हि शब्दो यस्मादर्थे। एवं यस्मात् तपरकरणमन्तरेणापि ॠकारान्ताणां ग्रहणे सति विध्यर्थमेतत् सम्भाव्येत। असति हि विधेये नियमो भवति। ॠकारान्ताणां ग्रहणे सति तेषामेव प्रतिषेधो विधेयः स्यात्। नहि तेषां पूर्वेण प्रतिषेधः सिद्धः। सर्वेषामॄकारान्तानां तासौ नित्यं सेट्त्वात्। तपरकरणे तु सति तकारेण दीर्घनिवृत्तौ कृतायां विधेयताभावान्नियमोऽयं सम्पद्यते।

## ६४। बभूथाततन्थ-जगृभ्म-ववर्थेति निगमे।

बभूथेत्यादौ सर्वत्र क्रादिनियमादिटः प्राप्तस्याभावो निपात्यते। बभूथेति। भवतेर ( ७।४।७३ ) इत्यभ्यासस्याकारस्यात्वम्। बभूविथेति। भुवो वुग् लुङ्-

लिटीरिति ( ६।४।८८ ) वुक्। आततन्थेति। तनु विस्तारे। आङ्पूर्वः। आतेनिथेति। थलि च सेटीत्येत्त्वाभ्यासलोपौ ( ६।४।१२१ )। जग्रभ्मेति। (H) ग्रहेर्लिट्। परस्मैपदानामित्यादिना ( ३।४।८२ ) मसो मादेशः। ग्रहिज्येति ( ६।१।१६ ) सूत्रेण संप्रसारणम्। ववर्थेति। वृञ् वरणे।

## ६५। विभाषा सृजिदृशोः।

सृज विसर्गे। दृशिर् प्रेक्षणे। अनयोः क्रादिनियमादिटि नित्यं प्राप्ते विकल्पार्थं वचनम्। ससृष्ठ ददृष्ठेति। व्रश्चादिना ( ८।२।३६ ) षत्वम्। सृजिदृशोर्झल्यमकितीत्यम् ( ३।१।५८ )।

## ६६। इडत्त्यर्तिव्ययतीनाम्।

आदिथ। आरिथेति। अद भक्षणे। ऋ गतौ। अत आदे ( ७।४।७० ) रित्यभ्यासस्य दीर्घः। संविव्ययिथेति। व्येञ् संवरणे। लिट्यभ्यासस्योभयेषामिति (६।१।१७) संप्रसारणम्। कस्मात् पुनरत्र व्येञ आदेच उपदेश इत्यात्त्वं ( ६।१।४५ ) न भवतीत्याह व्येञो न व्यो ( ६।१।४६ ) लिटीत्यादि। अर्त्तेरपि नित्यं प्रतिषेध इति। ऋतो भारद्वाजस्येत्यनेन ( ७।२।६३ )। अत्तेडग्रहणं विस्पष्टार्थमिति। ननुच नित्यमिडागमो यथा स्यादित्येवमर्थमिड्ग्रहणं स्यात्। नह्यड्ग्रहणमन्तरेणायं शक्यत इड्विधि र्नित्यो विज्ञातुमित्याह विकल्पविधाने ह्रीत्यादि। अनेन हि विकल्पस्यानन्तरस्य वा विधानं क्रियते पूर्वप्रकृतस्य वा नित्यप्रतिषेधस्य ? शक्यते ह्यसा अपि मण्डूकप्लुतिन्यायेनानुवर्त्तयितुम्। तत्र यदि पूर्वको विकल्प स्तदार्त्तिव्ययतिग्रहणमनर्थकं स्यात्। उपदेशेऽत्वत ( ७।२।६२ ) इत्यनेनैव विकल्पस्य सिद्धत्वात्। अथेतर एवं मत्यर्त्तिग्रहणमनर्थकं स्यात्। ऋतो भारद्वाजस्यैवेत्यनेनैव ( ७।२।६३ ) प्रतिषेधस्य सिद्धत्वात्। यत एवं न विकल्पस्य विधानमुपपद्यते तेन नापि प्रतिषेधस्य। अस्मादन्तरेणापीड्ग्रहणं नित्योऽयमिड्विधिरिति शक्यते विज्ञातुम्। प्रतिपत्तिगौरवं पुनरेवं विज्ञायमाने स्यादिति विस्पष्टार्थमिड्ग्रहणं क्रियते।

---

(H) जग्रभ्मेति। हृग्रहोर्भश्छन्दसि हस्येति ( ८।२।३२,वा ) वचनाद् ग्रहेर्हकारस्य भत्वम्। काशिकायामिदमाहस्य ( ८।२।३५ ) इत्यत्र पठ्यते।

## ६७। वस्वेकाजाद्घसाम्।

कृतद्विर्वचनानां धातूनामेकाचामिति। कुत एतदवसितम्? एकाज्ग्रहणसामर्थ्यात्। नहि कश्चिदकृते द्विर्वचनेऽनेकाजस्ति यन्निवृत्त्यर्थमेकाज्ग्रहणं क्रियते। ननुच जागर्त्तिरस्ति। अतस्तन्निवृत्त्यर्थं तत् स्यात्। नैतदस्ति। न ह्येकमुदाहरणं प्रति योगारम्भं प्रयोजयति। यद्येतत् प्रयोजनं स्याज् जाग्रो नेत्येवं ब्रूयात्। तदाप्ययमर्थः। प्रतिपत्तिगौरवं परिहृतं भवति। ननु चोर्णोतिर् निवृत्त्यर्थमपि स्यात्। नैतत्। उक्तं हि प्राग् वाच्य ऊर्णोर्णुवद्भाव इति। तस्माद् युक्तमुक्तं कृतद्विर्वचनानां धातूनामेकाचामिति। आदिवान्। आशिवानिति। अद भक्षणे। अश भोजने। लिटः क्वसुश्चेति (३।२।१०७) क्वसुः। द्विर्वचनम्। अभ्यासकार्य्यञ्च। अत आदेरिति (७।४।७०) दीर्घत्वम्। सवर्णदीर्घत्वम्। इट्। उगिदचामिति (७।१।७०) नुम्। सान्तमहत इत्यादिना दीर्घः। हल्ङ्यादि-(६।१।६८) संयोगान्तलोपौ (८।२।२३)। पेचिवान्। शेकिवानिति। अतएकहल्(६।४।१२०) मध्यइत्यादिनैत्त्वाभ्यासलोपौ। धात्वभ्यासयोरेकादेशे कृत इत्यादि। ननु च पाक्षिके द्विर्वचनविधौ द्विष्प्रयोगो द्विर्वचन मित्येष पक्षो वृत्तिकारेणाश्रितः। एवञ्चाकृते धात्वभ्यासयोरेकादेशेऽकृतयोरपि चैत्वाभ्यासलोपयोः कृतद्विर्वचना अप्येत एकाचो भवन्ति। स्थाने द्विर्वचने हि शब्दान्तर मनेकाजतिदिश्यत इति स्यादेषां कृतद्विर्वचनानामनेकाच्त्वम्। नतु द्विष्प्रयोगे द्विर्वचने। तत्र हि स एव धातु र्द्विरुच्यते। न चासौ शतकृत्वोऽप्युच्चार्य्यमाण एकाच्त्वं जहाति। किं पुनर्द्विरुच्यमानः। तत् किमुच्यते धात्वभ्यासयोरेकादेश एत्वाभ्यासलोपयोश्च कृतयोः कृतद्विर्वचना एत एकाचो भवन्तीति? आवृत्तिकृतमेकाचो भेदमाश्रित्यैवमुक्तमित्यदोषः। भवति हि धर्मभेदादपि धर्मिणो भेदव्यवहारः। तथाहि वक्तारो वदन्ति परुद् भवान् पटुरासीत् पटुतरश्चैषमः। पटुतमः परारि। सोऽन्य एवासि संवृत्तइति। अथवा स्थाने द्विर्वचनपक्षोऽपि तत्राश्रितः। द्विष्प्रयोगश्च द्विर्वचनमिति कृत्वा। चकारात् स्थाने द्विर्वचनमपीति स्थाने द्विर्वचनपक्षस्यापि तत्र सूचनात्। ये तु तत्पक्षभाविनो दोषास्ते तत्र प्रतिविहिताएव। तस्थिवानिति। शर्पूर्वाः खय इति (७।४।६१) खयः शेषः। आतो लोप (६।४।६४) इटि चेत्याकारलोपः। जक्षिवानिति। पूर्ववदेर्घस्लादेशः। इट्। गमहनेत्यादिनोपधालोपः (६।४।९८)। कुहो

झुरिति ( ७।४।६२ ) चुत्वं घकारस्य झकारः। अभ्यासे चर्चेति ( ८।४।५४ ) झकारस्य जकारः। परस्य घकारस्य खरि चेति ( ८।४।५५ ) चर्त्वं ककारः। शासिवसीत्यादिना ( ८।३।६० ) षत्वम्। ननु चात्र क्रादिनियमादिडागमः सिद्ध एव। तत् किमर्थोऽयमारम्भ इत्याह सिद्ध इत्यादि। क्रादिनियमात् प्रसक्तइत्यादिना सिद्धे सत्यारम्भो नियमार्थ इत्येतदेव विस्पष्टीकरोति। प्रसक्तइति। प्राप्तइत्यर्थः। नियम्यत इति धात्वन्तरेभ्यो व्यावर्त्त्यैकाजादिष्वेव व्यवस्थाप्यत इत्यर्थः। अथाद्-ग्रहणं किमर्थम्? यावताऽकारान्ता अप्यातो लोपे कृते कृतद्विर्वचना एकाचो भवन्त्येव। तत्रैकाजग्रहणेनैव सिद्धमित्याह आद्ग्रहण मनेकाज्ग्रहणार्थमिति। कथं पुनस्तेषामनेकाच्त्वमित्यत आह द्विर्वचनइत्यादि। इण्-निमित्तत्वादाकारलोपस्येटि सति तेषामाकारलोपेन भवितव्यम्। नासत्यतो यावदिण् न क्रियते तावदाकारलोपाभावात् कृतद्विर्वचना एतेऽनेकाच इतरमत्यादि-ग्रहणे तेषां ग्रहणं न स्यात्। तस्मादनेकाजर्थमाद्ग्रहणं कर्त्तव्यम्। यद्येवं दरिद्रातेरपीट् प्रसज्येतेत्यतआह दरिद्रातेस्त्वित्यादि। दरिद्रातेः क्वसोः सम्भवएव नास्ति। यतः कास्यनेकाज्ग्रहणमिति ( ३।१।३५ ) वचनाद् दरिद्रातेराम भवितव्यम्। तस्मिंश्च सत्याम इति ( २।४।८१ ) लेर्लुका भवितव्यम्। तत् कुतोऽयमिट् प्रसङ्गः? दरिद्राञ्चकारेति। कृञ्चानुप्रयुज्यतइति ( ३।१।४० ) लिट् परस्य कृञोऽनुप्रयोगः। अभ्युपगम्यापि दरिद्रातेरामोऽभावं परीहारान्तर-माह अथाप्याम्न क्रियत इत्यादि। आकारान्तानां धातूनामिहेड् विधीयते। दरिद्रातेरार्धधातुके लोपः सिद्धश्च प्रत्ययविधाविति वचनात् प्रागेव प्रत्ययोत्-पत्तेराकारो लुप्त इतीडागमोऽस्मान्निमित्ताभावान्न भवति (I)। क्रियतान्नामाद्-ग्रहणं घसिग्रहणं न कर्त्तव्यमिति। अस्य द्विर्वचने कृते घसिभसोर् हलि (६।४।१००) चेत्युपधालोपे कृते चेकाच इत्येवं सिद्ध इडागम इत्याह घसेरपीत्यादि। अनच्कत्वादिति द्विर्वचनाभावहेतुः। एकाचो द्विर्वचनमुच्यते। एकाच इत्यधिकारात् ( ६।१।१ )। तस्मादुपधालोपे कृतेऽनच्कत्वान्न द्विर्वचनं स्यात्। ततश्च जक्षिवानिति न सिध्यतीत्यभिप्रायः। अथ क्रियमाणेऽपि घसिग्रहणे कस्मादेष दोषो न भवतीत्याह क्रियमाण इत्यादि। सुबोधम्।

---

(I) इति नासाविडागमस्य निमित्तमेव भवतीति च क्वचित् पाठः।

## ६८ । विभाषा गमहनविदविशाम् ।

पूर्वस्मान्नियमाद् गमादीनामिड् न भवतीति विभाषेयमारभ्यते। जग्मिवानिति। परत्वादिट्। ततो गमहनेत्यादिनोपधालोपः (६।४।९८)। ततो द्विर्वचनम्। जघन्वानिति। जघ्निवानिति। अभ्यासाच्चेति (७।३।५५) कुत्वं हकारस्य घकारः। लाभार्थस्येति। विद्लृ लाभ इत्यस्य। न ज्ञानार्थस्येति। विद ज्ञान इत्यस्य। विद सत्तायां विद विचारण इत्येतयोश्चात्मनेपदित्वादात्मनेपदेषु क्वसुर्न भवतीत्यनुपन्यासः। दृशेश्चेत्यादि। दृशिर् प्रेक्षण इत्यस्माच्च परे क्वसोरिडागमो भवतीत्येतदर्थरूपं व्याख्येय मित्यर्थः। तत्रेदं व्याख्यानम्। विभाषेति योगविभागः क्रियते। तेन दृशेरपि भविष्यतीति। नचैवं सति गमहनविदविशामित्यस्यानर्थक्यम्। पूर्वयोगस्यासर्व्वविषयत्वसूचनात्। एवं ह्यतिप्रसङ्गपरिहृतो भवति।

## ६९ । सनिंससनिवांसम् ।

सनोतेरिति। षणु दान इत्यस्य सनिंपूर्वस्य द्वितीयान्तस्योच्चारणेन नियतामानुपूर्वीमुपलक्षयति। यत्रैषानुपूर्वी नियता तत्रैव यथा स्यात्। इयञ्चानुपूर्वी छन्दस्येव नियतेति। तद्विषयमेवैतन्निपातनं विज्ञायते। अतएव वृत्तिकृता छान्दसप्रयोगो दर्शितः। सेनिवांसमिति। पूर्व्ववदेत्त्वाभ्यासलोपौ। वस्वेकाजाद्घसामितीट् (७।२।६७)।

## ७० । ऋद्धनोः स्ये ।

विभाषेति निवृत्तम्। ऋकारान्तानां हन्तेश्चानुदात्तत्वादेकाच इत्यादिना (७।२।१०) प्रतिषिद्धस्येटः स्ये विधानार्थमेतत्। अथ स्वरतेः स्वरत्यादि-(७।२।४४) सूत्रेण पक्षइट्। अथानेन नित्यमित्याह स्वरतेरित्यादि। स्वरतेर्धातो र्यत् स्वरत्यादिसूत्रेण वेट्त्वं विहितं तस्मादनेन स्ये ऋकारान्तेभ्यो विधीयमानं नित्येट्त्वं भवति विप्रतिषेधेन। अयञ्चार्थः स्वरत्यादिसूत्र उक्तोऽपि विस्मरणशीलानामनुग्रहाय पुनरिहोच्यते। अथ तपरकरणं किमर्थम्? दीर्घाणां मा भूदिति चेत्? नैतदस्ति। उदात्तत्वाद्धि तेषां भवितव्यमेवेटा। एवं तर्ह्यसति तपरकरणे यथा स्मिपूङ्रञ्ज्वशां सनीत्यत्र (७।२।७४) स्वरत्यादिसाहचर्य्यात्‌ इत्येतस्य धातोर्

ग्रहणं तथेहापि हन्तिना साहचर्य्याद्दइत्येतस्य धातोर्ग्रहणं स्यात्। तपरत्वे तु सति वर्णग्रहणमेतद्विज्ञायते। वर्णनिर्देशे हि तपरत्वं प्रसिद्धम्। वर्णग्रहणे च वर्णग्रहणानि सर्वत्र तदन्तविधिं प्रयोजयन्तीत्यकारान्तानामिट् सिद्धो भवति।

## ७१। अञ्जेः सिचि।

अन्जू व्यक्तिम्रक्षणकान्तिगतिषु। ऊदित्त्वादत्र (७।२।४४) स्वरत्यादिसूत्रेण विकल्पे प्राप्ते नित्यार्थं वचनम्। आञ्जीदिति। इत-(३।४।१००) श्चेतीकारलोपः। अस्तिसिचोऽपृक्तइतीट् (७।३।९६)। इट ईटीति (८।२।२८) सिचो लोपः। आड़जादीना (६।४।७२) मित्याट्। आटश्चेति (६।१।९०) वृद्धिः। आञ्जिष्टामिति। तस्थस्थमिपामित्यादिना (३।४।१०१) तसस्थाने तामादेशः। आञ्जिषुरिति। सिजभ्यस्तविदिभ्यश्चेति (३।४।१०९) झेर्जुस।

## ७२। स्तुसुधूञ्भ्यः परस्मैपदेषु।

ष्टुञ् स्तुतौ। षुञ् अभिषवे। अनयोरनुदात्तत्वात् प्रतिषेधे प्राप्ते धूञस्तु स्वरत्यादिसूत्रेण (७।२।४४) विकल्पे प्राप्ते सतीदमारभ्यते।

## ७३। यमरमनमातां सक् च।

यम उपरमे। रमु क्रीड़ायाम्। णम प्रह्वत्वे शब्दे च। आकारान्ता या प्रापण इत्येवमादयः। सर्वेषामनुदात्तत्वादिट्प्रतिषेधे प्राप्तेऽयमारम्भः। अत्र षष्ठीनिर्देशाद् यमादीनां सग् भवति। इट् पुनरार्द्धधातुकाधिकारात् सिचएव। व्यरंसीदिति। व्याङ्परिभ्यो रम (१।३।८३) इति परस्मैपदम्। द्विवचनबहुवचनयोर्युक्त मुदाहरणम्। अस्ति हि तत्र सगिटोः श्रुतौ विशेषः। एकवचनस्य त्वयुक्तम्। विशेषाभावादिति यो देशयेत् तं प्रति तत्रापि वृद्धिप्रतिषेधो विशेषोऽस्तीति दर्शयितुमाह यमादीनामित्यादि। आयंस्तेति। आङो यमहन (१।३।२८) इत्यात्मनेपदम्। अरंस्तेति। अत्राप्यनुदात्तेत्यादिना (१।३।१२)।

## ७४। स्मिपूङ्रञ्ज्वशां सनि।

ष्मिङ् ईषद्धसने। पूङ् पवने। अनुबन्धोच्चारणं पूञ्निवृत्त्यर्थम्। ऋट

गतिप्रापणयोरिति भ्वादिः। ऋ गताविति जुहोत्यादिः। उभयोरपि ग्रहणम्। विशेषानुपादानात्। ॠकारान्तानां त्वेतद् ग्रहणं न भवति। उत्तरत्र किरत्यादीनामिटो विधानात्। अञ्जू म्रक्षणे। अशू व्याप्तौ। अश भोजन इत्यस्य ग्रहणं न भवति। उदात्तत्वादेवेट् सिद्धइति। तत्राञ्जेरशेश्चोदित्त्वाद् विकल्पे प्राप्ते शेषाणान्तृगन्तत्वात् सनि ग्रहगुहोश्चेति (७।२।१२) प्रतिषेधे प्राप्त इद-मारभ्यते। सिस्मयिषतइति। पूर्ववत् सन (१।३।६२) इत्यात्मनेपदम्। पिपविषतइति। ओः पुयण्ज्यपरे इत्यभ्यासस्येत्त्वम् (७।४।८०)। अरिरिषतीति। इटि सति गुणे कृतेऽजादेर्द्वितीयस्येकाचो द्विर्वचनम्। अञ्जिजिषतीति। अशिशिष-तीति। अञ्जेर्नकारो न द्विरुच्यते। नन्द्राः संयोगादय (६।१।३) इति निषेधात्।

## ७५। किरश्च पञ्चभ्यः।

कॄ विक्षेपे। गॄ निगरणे। दृङ् अनादरे। धृङ् अनवस्थाने। प्रच्छ ज्ञीप्सायाम्। अत्रान्त्यस्यानुदात्तत्वादिट्प्रतिषेधे प्राप्ते दृङ्धृङो ऋगन्तत्वात् सनि ग्रहगुहोश्चेति (७।२।१२) निषेधे प्राप्त इतरयोस्तु वृत्तिकारप्रदर्शित-विकल्पे प्राप्ते सतीद मारभ्यते। पिपृच्छिषतीति। रुदविदेत्यादिना (१।२।८) सनः कित्त्वम्। ग्रहिज्येत्यादिना (६।१।१६) सम्प्रसारणम्। छे चेति (६।१।७३) तुक्। उरदित्यभ्यासस्यात्त्वम् (७।४।६६)। पूर्ववदित्त्वम्। सिसृक्षतीति। सृज विसर्गे। पञ्चग्रहणादस्येण् न भवति। सामान्यलक्षणोऽपीण् न भवत्येव। एकाचइति (७।२।१०) प्रतिषेधात्। हलन्ताच्चेति कित्त्वम् (१।२।१०)। चोः कुरिति (८।२।३०) कुत्वम्। व्रश्चादिसूत्रेण षत्वम् (८।२।३६)। षढोः कः सीति (८।२।४१) कत्वम्। वृतो वेत्यस्य (७।२।३८) दीर्घत्वं नेच्छन्तीति। कथं पुनरिष्यमाणमपि न भवति ? व्यवस्थितविभाषाविज्ञानात्। अस्येति। एतत्-सूत्रविहितस्येटः।

## ७६। रुदादिभ्यः सार्वधातुके।

रुदिर् अश्रुविमोचने। जिष्वप् शये। श्वस प्राणने। अन च। जक्ष अदने। रुदादयोऽदादिषु पठ्यन्ते। उभयनिर्देशे पञ्चमीनिर्देशो बलीयानिति रुदादिभ्य इत्येषा पञ्चमी सार्वधातुक इत्यस्याः सप्तम्याः षष्ठीत्वं प्रकल्पयति। सप्तमीनिर्देशस्तूत्तरार्थः। तेन सार्वधातुकस्य वलादेरिड् विज्ञायत इत्यत

आह रुदादिभ्यः पञ्चभ्यः इत्यादि। प्राणितीति। अनिते ( ८।४।२९ ) रिति णत्वम्। स्वप्तेति। सार्वधातुकग्रहणादार्धधातुकस्येण् न भवति। सामान्य-लक्षण इण् न भवत्येव। एकाच इति ( ७।२।१० ) प्रतिषेधात्। अन्येभ्यस्तु रुदादिभ्य उदात्तत्वादार्धधातुकस्यापीटा भवितव्यमेवेति स्वपेरेव प्रत्युदाहरणम्।

## ७७। ईशः से।

सेइति। सुपां सुलुगिति ( ७।१।३९ ) षष्ठ्या लुकं कृत्वाऽविभक्तिकोऽयं निर्देशः। ईशिषइति। ईश ऐश्वर्य्ये। लट्। अनुदात्तेत्त्वादात्मनेपदम्। थासः से ( ३।४।८० )। अदादित्वाच्छपो लुक्। ईशिष्वेति। लोट्। से। सवाभ्यां वामाविति ( ४।९।१ ) वादेशे कृत एकदेशविकृतमनन्यवद्भवतीतीहापि भवति।

## ७८। ईड्जनोर्ध्वे च।

ध्वे इति। पूर्ववदेवाविभक्तिकोऽयन् निर्देशः। ईडिध्वइति। ईड स्तुतौ। पूर्ववदात्मनेपदम्। पूर्ववच्छपो लुक्। ईडिध्वमिति। लोट्। सवाभ्यां वामावित्यमादेशः ( ६।४।९१ )। जनिध्वमिति। पूर्ववदात्मनेपदम्। छान्दसत्वाच्छ्यनो लुग् बहुलञ्छन्दसीत्यनेन ( ३।२।८८ )। उपधालोपाभावश्चेति। गमहनेत्यादिनोपधालोपः ( ६।४।९८ ) प्राप्नोति। तदभावश्छान्दसत्वादेव। सर्वे विधयश्छन्दसि विकल्प्यन्तइति। जन जननइत्यस्येत्यादि। ननु चानुबन्धकत्वादस्यैव ग्रहणेन भवितव्यम्। न पूर्वस्य। उच्चारणार्थोऽकारः। नानुबन्धः। नैष दोषः। इह हि लघ्वक्षरत्वाज्जनशब्दस्य पूर्वनिपाते प्राप्ते परनिपातो लक्षणव्यभिचाराय। तेन निरनुबन्धकपरिभाषाया (प,८२) इहानपस्थानादुभयोरपि ग्रहणं भवति। व्यतिजज्ञिध्वमिति। कर्त्तरि कर्मव्यतीहार ( १।३।१४ ) इत्यात्मनेपदम्। तत्रेत्यादि। तत्रैव सूत्रपाठे यस्मिन् विधिस्तदादावल्ग्रहण इति ( प,३४ ) सकारग्रहणे सकारादेः सेशब्दस्य ग्रहणम्। स च सकारादिशब्दः सार्वधातुकसंज्ञकः सेशब्दएव सम्भवति। अन्यस्याऽसम्भवात्। ननु च स्वशब्दोऽपि सम्भवति। नैतदेवम्। एकदेशविकृतस्यानन्यत्वात् सोऽपि सेशब्दएव। अतस्तद्ग्रहणेनापि भवितव्यम्। ये त्वीड्जनोर्ध्वे चेति सूत्रं पठन्ति त ईशः स इत्यस्यैव ( ७।२।७७ ) योगस्यानुकर्षणार्थं चकारं कुर्व्वन्ति। तेनेशेरपि ध्वेशब्दइडागमो

भवति। यदि तर्हीशेरपि ध्व इड़ागम इष्यते तदेशोऽजनां सेध्वयोरित्येकमेव सूत्रं कस्मान्न पठन्ति? एवं पृथग् विभक्तिर्नोच्चारयितव्या। चकारश्च न कर्त्तव्यो भवतीत्याह विचित्रा सूत्रस्येत्यादि। ध्वइति कृतटेरेत्त्व इत्यादि। कृतटेरेत्त्वस्यैतदेव प्रयोजनं यत्र टेरेत्त्वं कृतं तत्रैव यथा स्यात्। नच लङि टेरेत्त्वमस्ति। अतस्तत्रेटा न भवितव्यम्। यद्येवं लोटाऽपि न भवितव्यम्। अमादेशे कृते टेरेत्त्वस्याभावादित्याह लोटि पुनरित्यादि।

## ७९। लिङः सलोपोऽनन्त्यस्य।

सार्व्वधातुके यो लिङिति। सार्वधातुकइत्येषात्र निर्धारणे सप्तमी। जातावेकवचनम्। यथा कारकइति (१।२।२७)। अथवा सुब्व्यत्ययेन बहुवचनस्य प्रसङ्ग एकवचनम्। परसप्तमीत्येषा न भवति सार्वधातुके परतः। पूर्वस्य लिङोऽसम्भवात्। कुर्य्यादिति। विध्यादिसूत्रेण (३।३।१६१) लिङ्। यासुट्। इतश्चेतीकार-(६।४।१००) लोपः। धातोर् गुणः। रपरत्वेऽत उत् सार्वधातुक (६।४।११०) इत्युत्त्वम्। ये चेत्युकारलोपः (६।४।१०९)। कुर्य्यातामिति। तसस्ताम्। कुर्य्युरिति। झेर्जुस् (३।४।१०८)। उस्यपदान्तादिति (६।१।९६) पररूपत्वम्। कुर्वीतेति। उकारस्य यणादेशः। कुर्व्वीरन्निति। झस्य रन् (३।४।१०५)। कुर्य्युः कुर्य्यादित्यत्रानन्त्यग्रहणाज् जुसः सिपश्च न भवति। क्रियास्तां क्रियासुरिति। आशिषि लिङ्। रिङ्शयग्लिङ्क्ष्विति (७।४।२८) रिङादेशः। सार्वधातुकग्रहणादार्धधातुके न भवति। आर्धधातुकत्वञ्च लिङाशिषीत्यार्धधातुकसंज्ञाविधानात्। कृषीष्ट हृषीष्टेति। उश्चेति (२।२।१२) कित्त्वम्। गुणाभावः।

## ८०। अतो येयः।

सार्वधातुकं यत् प्रकृतं तदर्थादिह विभक्तिविपरिणामेन षष्ठ्यन्तं प्रतिपद्यते। अत एवाह अकारान्तादङ्गादुत्तरस्य सार्वधातुकस्येति। पठेदिति। इयादेशे कृतेऽकारेण सहाद् गुणः (६।१।८८)। लोपो व्योर्वलीति (६।१।६६) यकारलोपः। चिनुयादिति। स्वादिभ्यः श्नु (३।१।७३)। यायादिति। अदादित्वाच्छपो लुक्। चिकीर्षादिति। सन्नन्तादाशिषि लिङ्। ननु चातो लोपेनात्र (६।४।४८) भवितव्यमिति नार्थोऽनुवृत्तेन सार्वधातुकग्रहणेनेत्यभिप्रायः। पचेदित्य-

त्रापीतरादि। यद्यपि पचेदितीदमस्योदाहरणमभिमतं तत्राप्यतो दीर्घो यञीति (७।३।१०१) दीर्घत्वेन भवितव्यमिति। ततश्च सर्वविषयस्य विध्यन्तरेणावष्टब्धत्वाद-नवकाशोऽयमियादेशः। तस्मादवश्यमनेन विध्यन्तरं बाधितव्यम्। एवञ्च यथा दीर्घस्यायं बाधक स्तथातो लोपस्यापि स्यात्। तस्मात् सार्वधातुकग्रहण मनुवर्त्तयितव्यमिति भावः। स्यादेतदेवमित्यादि। यदि च दीर्घत्वं तुरुस्तुशम्यमः (७।३।९५) सार्वधातुक इत्यतः सार्वधातुकग्रहणमनुवर्त्त्य विधीयते ततश्च स्यादेतदेवं यदुक्तवानसि। इयादेशस्यानवकाशत्वात्। अथ भूसुवो स्तिङीति (७।३।८८) तिङ्ग्रहणमनुवर्त्त्य विधीयते तदा तिङ्मात्रभावि दीर्घत्वमिति लिङ् विधीयमान इयादेशे नाप्राप्ते तस्मिन्नयमारभ्यते। ततश्च येन नाप्राप्तिन्यायेन (प,५८) तस्यैव बाधको भवति। नत्वतो लोपस्य। इयोऽतो लोपे प्राप्ते चाप्राप्तेऽय-मारभ्यते। आर्धधातुके हि प्राप्ते सार्वधातुके त्वप्राप्ते। अथ येय इति कोयं निर्द्देशः। अत्र हि या इत्येष यः स्थानी तत्र षष्ठ्यां कृताया सतो या अस् इयइति स्थितेऽतो लोपइत्यातो (६।४।४८) धातो (६।४।१३०) रिति योगविभागाद्वा आकारलोपे कृते ससजुषोरिति (८।२।६६) षष्ठीसकारस्य रुत्वे कृते तस्य भोभगो-अघोअपूर्वस्य योऽशीति (८।३।१७) यकारः। तस्यापि लोपः शाकल्यस्येति (८।३।१९) लोपे च यइय इति निर्द्देशेन भवितव्यमिति। ननु येय इति। नह्यत्राद् गुणो भवितु मुत्सहते। पूर्वत्रासिद्धमिति (८।२।१) यल्लोपस्या-सिद्धत्वादित्यत आह येय इत्यविभक्तिकोऽयं निर्द्देश इति। येय इत्यस्मिन् स्थान्या-देशसमुदायेन याइति योऽयं निर्द्देशः सोऽविभक्तिकः। सुपां सुलुगिति (७।१।३९) विभक्ते र्लुप्तत्वात्। अङ्गीकृत्य च सविभक्तिकत्वं निर्देशस्य परीहारान्तरमाह यद्वेति। वेत्यादि। कथं पुनर्यलोपस्यासिद्धत्वं शक्यमनाश्रयितुमित्यत्राह सौत्रोऽयं निर्द्देश इति। इतिकरणो हेतौ। यस्मात् सर्वे विधय श्छन्दसि विकल्प्यन्तइति च्छन्दोवत् सूत्राणि भवन्तीति तस्मात् सौत्रत्वादस्य निर्द्देशस्यासिद्धत्वमनाश्रित्याद् गुणः कृतः। इयादेशेऽकार उच्चारणार्थः।

## ८१। आतो ङितः।

आतो ङित इति व्यधिकरणे षष्ठ्यौ। आतइयादेशापेक्षया स्थाने षष्ठीति। ङित इति आकारापेक्षयावयवषष्ठी। ङितो ह्याकारमात्रस्यासम्भवात्। ङित

इत्येषाऽवयवयोगे षष्ठी विज्ञायते । ङिदवयवस्येति । ङकार इद् यस्य स ङित् । तस्यावयवो ङिदवयवः । पचेते पचेथे इति । लट् । स्वरितेत्त्वादात्मनेपदम् । आतामाथाम् । सार्वधातुकमपिदिति (१।२।४) ङित्त्वम् । पचेतां पचेथामिति । लोट् । टेरेत्त्वे (३।४।७९) कृत आमेत (३।४।९०) इत्याम् । ननु च ङिदवयवोऽत्राकारो न भवति । यस्माद् गाङ्कुटादिसूत्रे (१।२।१) ङितीव ङिद्वदित्येवमर्थोऽङ्गीक्रियते । तथा सार्वधातुकमपिदित्यत्राप्ययमर्थः (१।२।४) । तथाह्यस्मिन्नपि योगे तदेव ङिद्ग्रहणमनुवर्त्तते । तस्मिंश्चार्थेऽङ्गीक्रियमाणे ङिति यत् कार्य्यं तदपि हि सार्वधातुके परतः पूर्वस्य लभ्यते । ननु तस्यैवापित्सार्वधातुकस्य ङित्त्वमित्याह सार्वधातुकमपिदित्यत्रेत्यादि । पूर्वसूत्रएवेति । गाङ्कुटादिसूत्रे (१।२।१) । यद्येवमङ्गीक्रियते गाङ्कुटादिभ्यः परो योऽञ्णित्प्रत्ययोऽसौ ङिद्वद्भवतीति तदा कुटादिभ्यः परस्य सनो ङित्त्वं भवति । ङित्त्वे सत्यनुदात्तङित (१।३।१२) इत्यादिनात्मनेपदं स्यात् । ततश्चोच्चुकुटिषतीति न सिध्येत् । तस्मादेतत्सिद्ध्यर्थं ङितीव ङिद्वदित्यङ्गीक्रियते । सार्व्वधातुकमपिदित्यत्र (१।२।४) तु तत् सार्वधातुकं ङिद् भवतीत्येषोऽर्थोऽङ्गीक्रियते । तस्माद् युक्तमेवाकारस्य ङिदवयवत्वम् । पचन्ते यजन्तइति । भवत्यत्र ङिदवयवोऽन्तादेशस्याकार स्तथाप्यतेइति वचनान्न भवति । पचावहे पचामहे इति । लोट् । वहिमहिङौ । आडुत्तमस्य पिच्चेत्याट् (३।४।९२) उत्तमश्च पिद्भवतीति । अत्र पित्त्वान् ङित्त्वं न भवतीति । आतो ङिदवयवाकारो न भवति । मिमाते मिमाथे इति । माङ् माने । जुहोत्यादित्वाच्छपः श्लुः । श्लाविति (६।१।१०) द्विर्वचनम् । भृञामिदित्यभ्यासस्येत्त्वम् (७।४।७६) । श्नाभ्यस्तयोरात (६।४।११२) इत्याकारलोपः ।

## ८२ । आने मुक ।

अङ्गस्यातइति व्यधिकरणे षष्ठ्यौ । अङ्गस्य योऽत् तस्य मुगागमो भवतीति । तदिहाद्ग्रहणं तर्हि क्रियताम् । न कर्त्तव्यम् । अतो येय इत्यतोऽत (७।२।८०) इत्यनुवर्त्तिष्यते । ननु च पञ्चमीनिर्दिष्टं तत्र । षष्ठीनिर्दिष्टेन चेहार्थः । नैतदस्ति । अत इत्येषा तु पञ्चमी तत्रेयादेशे चरितार्था । आनइत्येषा तु सप्तम्य कृतार्था । तस्मादानइत्येषा सप्तम्यत इत्यस्याः पञ्चम्याः षष्ठीत्वं

परिकल्पयिष्यति। तस्मिन्निर्दिष्टे पूर्वस्येति ( १।१।६६ ) नियमात्। ननु चाकारो वर्णो मकारोऽपि वर्ण एव। मुगयन्त्वन्तलिङ्गः (J)। अन्तश्चावयवः। नच वर्णो वर्णस्यावयवो युज्यते। तेनानारब्धत्वात्। तस्मादयुक्त मुक्तमतो मुगागमो भवतीति। नैष दोषः। सर्वत्रैव हि यस्यागमो विधीयते यश्चागमो विधीयते तत्समुदायापेक्षयादित्वमन्तत्वं वा विधीयते। तस्मादतो मुगागमो भवतीत्यस्यार्थोऽयं विवक्षितः। अकारादिरयं समुदायो मकारान्तश्च भवतीति। पचमानइति। लट्। तस्य शानच्। आने परतोऽङ्गस्याऽतो मुगागमो भवतीत्युक्ते समानाधिकरणे एते षष्ठ्याविति मन्यमानोऽकारान्तस्य आने परतो मुगागमो भवतीतीदं सूत्रार्थं गृहीत्वा यएवं देशयेद् यद्यकारान्त मङ्गमागमि पचमान इत्यत्रादुपदेशाल्लसार्वधातुकमनुदात्त-( ६।१।१८६ ) मित्यनुदात्तत्वं न स्यात्। अकारस्य मुका व्यवहितत्त्वात्। अकारो य उपदेश इत्येवं हि तत्र व्यवस्थितम्। नत्वकारान्तोऽयमुपदेश इति। नच शक्यते वक्तुमङ्गभक्तोऽयं मुक्। अतो नास्ति व्यवधानमिति। अङ्गभक्तो ह्ययमङ्गमेव न व्यवदध्यात्। अकारन्तु व्यवदधात्येव। अवयवो हि समुदायस्य व्यवधायको न भवति। अवयवान्तरस्य तु व्यवधायको भवत्येवेत्यत आह अकारमात्रभक्तो ह्ययमित्यादि। मात्रशब्दोऽयमङ्गभक्तत्वव्यवच्छेदाय। अङ्गस्यात्राकारविशेषणम्। अकार एवागमी। नाङ्गम्। तस्मात् तद्भक्तत्वात् तद्ग्रहणेनैव मुग् गृह्यत इति व्यवधानाभावाल्ल-सार्वधातुकमनुदात्तं भवति। ननु चाकारान्तभक्तेऽपि मुकि भवितव्यमेव लसार्वधातुकमनुदात्तमह्न्विङोरित्यनुदात्तत्वेन ( ६।१।१८६ )। स्वरविधौ व्यञ्जनमविद्यमानवदिति ( प, ८० ) मुकोऽविद्यमानवत्त्वाद् व्यवधानाभावात्। एवं मन्यते। नैषा परिभाषा भाष्यकारस्य सम्मता। तथाहि तेनेमां परिभाषां प्रत्याख्यायेयमन्या परिभाषा गृहीता हलः स्वरप्राप्तौ व्यञ्जनमविद्यमानवदिति ( प, ८१ )। न चात्र हलः स्वरप्राप्तिरस्ति। किं तर्हि ? अचः। यद्येवमित्यादि। यद्यकारभक्तोऽयं मुक् तद्ग्रहणेन गृह्यतइत्येवं सत्यव्यवधायकत्वादेव तस्य पचमान इत्यत्राकारादनन्तरस्यान इति तस्यातो ङित (७।२।८१) इतीयादेशः प्राप्नोतीत्यतआह तपरकरणनिर्देशान्न भवतीति। अकारो ह्यत्र मात्राकालस्तपरो निर्दिष्टो मुकि सत्यध्यर्द्धमात्रो भवति। अतः

(J) आद्यन्तौ टकितावित्यनेन ( १।१।४७ ) मिदन्तावयवः स्यात्। अतोऽयं मुङ् मित्त्वादन्तलिङ्ग उक्तः।

कालभेदान्न भविष्यति। अधिकमर्द्धं यस्याः साध्यर्द्धा। अध्यर्द्धा मात्रा यस्य सोऽध्यर्द्धमात्रः। लसार्वधातुकमनुदात्तमपि तर्हि न प्राप्नोतीति तद्विधावपि तपरनिर्द्देशात्। उपदेशग्रहणमित्यादि। उपदेशग्रहणं तत्र क्रियते प्रागवस्थोपलक्षणार्थम्। तेन य उपदेशावस्थायां मात्राकाल स्तस्य यद्यप्युत्तरकालम् मुकि कृते कालभेदोऽस्ति तथाप्युपदेशावस्थायां मात्राकालत्वाद् भवत्येवात्रानुदात्तत्वम्। तथाचेत्यादि। यत स्तत्रोपदेशादूर्ध्वं मत्यपि कालभेदेऽनुदात्तत्वेन भवितव्यमेवञ्च कृत्वा यत्राप्यतो दीर्घो (७।३।१०१) यञीति दीर्घत्वे कृते कालभेदोऽस्ति पचाव इत्यादौ तत्रापि भवति।

## ८३। ईदासः।

आम इति। पञ्चम्यकृतार्था आनइति पूर्वत्र कृतार्थायाः सप्तम्याः षष्ठीत्वं प्रकल्पयिष्यति। तस्मादित्युत्तरस्येति (१।१।६७) वचनात्। तेनानस्यैवायमादेशो विधीयत इत्याह आम उत्तरस्यानशब्दस्येति। आसीन इति। आस उपवेशने। अनुदात्तेत्त्वादात्मनेपदम्। आदेः (१।१।५४) परस्येत्याकारस्येकारः। अदादित्त्वाच्छपो लुक्। तपरकरणं मुखसुखार्थम्।

## ८४। अष्टन आ विभक्तौ।

आइति व्यक्तिनिर्द्देशोऽयमिति। शुद्धाया निरनुनासिकाया आकारस्य व्यक्तेरेव निर्द्देश इत्यर्थः। अथाकृतिनिर्द्देशे को दोषः स्यात्? यतस्तत्परीहारार्थो व्यक्तिनिर्द्देशोऽयमाश्रित इत्यत आह आकृतिनिर्द्देशे हीत्यादि। जातिरिहाकृति र्विवक्षिता। नतु संस्थानम्। जातिनिर्द्देशे सति शुद्धाया जाते र्निर्द्देष्टुमशक्यत्वात् तदाधारभूतासु व्यक्तिषु कार्य्यं विज्ञायते। तत्र यदीह जातिनिर्द्देश आश्रीयेत तदा सर्व्वास्वाकारव्यक्तिषु जात्याधारत्वमुपगतास्वलोऽन्त्यस्येति (१।१।५२) नकारस्य विधीयमान आकार आन्तरतम्यादनुनासिकस्य स्थानेऽनुनासिकएव स्यात्। व्यक्तिनिर्द्देशे त्वेष दोषो न भवति। शुद्धाया आकारव्यक्तेरुच्चारणात्। अनण्त्वादतपरत्वाच्च। यद्यष्टन आकारो विधीयते तदाष्टभिरष्टभ्यइत्यादि न सिध्यति। नह्यत्र विकल्पाभिधायिवचनमस्ति। नापि प्रकृतमित्यतआह विकल्पेनेत्यादि। अष्टनो दीर्घात् (६।१।१७२)

दित्यनेनाष्टनो दीर्घादसर्वनामस्थानविभक्तेरुदात्तत्वं विधीयते। यदि च नित्यमात्त्वं स्याद् दीर्घादिति विशेषणं निरर्थकं स्यात्। अष्टाभ्य औशित्यत्र (७।१।२१) च कृतात्त्वस्य निर्देशोऽनर्थकः स्यात् व्यवच्छेद्याभावादष्टन इत्येवं ब्रूयात्। तस्माद् दीर्घग्रहणेन कृतात्त्वनिर्देशेन विकल्पेनेदमात्त्वं भवतीति ज्ञापितम्। तेनाष्टभिरित्याद्यपि पक्षे भवतीति। तदन्तविधिश्चात्रेष्यतइति। कथं स लभ्यते ? इहाङ्गस्येति प्रकृतम्। अष्टन्शब्दश्चेह स्वरूपप्रधान उपात्तः। एकवचननिर्देशात्। अन्यथा हि बह्वर्थत्वादष्टानामित्येवं ब्रूयात्। तस्मात् स्वरूपप्रधानोऽयम्। तत्राङ्गे प्रकृतेऽनेन विशेष्यमाणे तदन्तविधि लभ्यते। विशेषणेन हि तदन्तविधि भवतीत्युक्तम्। प्रियाष्टेति। सर्वनामस्थानेत्यादिना (६।४।८) दीर्घः।

## ८५। रायो हलि।

## ८६। युष्मदस्मदोरनादेशे।

युष्मदस्मदिति। पञ्चम्या अदिति पञ्चमो भ्यसोऽदादेशः (७।१।३२)। शेषे लोप (७।२।९०) इत्यन्त्यलोपे कृतेऽतो गुणे (६।१।९७) पररूपत्वम्। यदि च हलीत्यधिकारादत्राप्यात्त्वं न स्यात् तत् किमर्थमनादेशग्रहणमित्याह उत्तरत्र त्वितयादि। उत्तरत्र योऽचीति (७।२।८९) सूत्रेऽनादेशस्य प्रयोजनमिति। यद्येवं तत्रैव कर्त्तव्यम्। इह किमर्थं क्रियते ? विस्पष्टार्थमित्यभिप्रायः।

## ८७। द्वितीयायाञ्च।

त्वाम् मामिति। त्वमावेकवचन (७।२।९७) इति त्वमादेशौ। युवामावामिति। युवावौ द्विवचन (७।२।९२) इति युवावादेशौ। सर्वत्र ङे प्रथमयोरमित्यम्भावे (७।१।२८) विभक्तेः कृतेऽमि पूर्वत्वम् (६।१।१०७)।

## ८८। प्रथमायाश्च द्विवचने भाषायाम्।

इदमप्यादेशार्थं वचनम्। युवयोरावयोरिति। ननु च योऽचीति (७।२।८९) यत्वमत्र बाधकं भविष्यति। प्रथमाद्विवचनेऽपि तर्हि शेषे लोपो (७।२।९०) बाधकः स्यात्। तत्र यथा वचनसामर्थ्याच्छेषे लोपोऽनेन

बाध्यते तथा यत्वमपि बाध्येत। पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरानिति ( प, ६० ) यत्वमपि बाध्येत। तस्मात् प्रथमाया इति वक्तव्यम्। त्वमहमिति। त्वाहौ साविति ( ७।२।९४ ) त्वाहावादेशौ। आविति वक्तव्ये प्रथमाया द्विवचनं वैचित्र्यार्थम्।

## ८९। योऽचि।

युष्मदस्मदोरनादेश इत्यतेत्यादि। युष्मदस्मदोरनादेश इत्यत ( ७।२।८६ ) यदि पूर्वसूत्राद् हल्ग्रहणमनुवर्त्तते तदाऽविशेषेण विधीयमानं यत्वमुत्सर्गो स्याप्यते। आत्वं तु विभक्तिविशेषे हलादौ विधीयमानमस्याप्यपवादः। एवञ्चाप्यन्तरेणाप्यज्ग्रहणं यकारोऽजादावेवावतिष्ठते। तस्मादचीत्येतच्छक्यमकर्त्तुम्। तत् क्रियते विस्पष्टार्थम्। त्वद् गच्छति मद् गच्छतीति। एकवचनस्य चेति ( ७।१।३२ ) ङसेरशादेशः।

## ९०। शेषे लोपः।

यान्यद्विवचनानीति। एकवचनबहुवचनानीत्यर्थः। अत्रेति। पञ्चम्यादिषु विभक्तिषु। तेषु लोपो विधीयत इति। तेषामेव शेषत्वात्। तुभ्यं मह्यमिति। तुभ्यमह्यौ ङयीति ( ७।२।९५ ) तुभ्यमह्यावादेशौ भवतः। युष्मभ्यमस्मभ्यमिति। भ्यसो भ्यमिति ( ७।१।३० ) भ्यमादेशः। तव ममेति। तवममौ ङसीति ( ७।२।९६ ) तवममादेशौ। युष्माकमस्माकमिति। साम आकमिति ( ७।१।३३ )। अथ शेषग्रहणं किमर्थम्? न लोप इत्येवोच्येत। एवमुच्यमाने सत्यविशेषेण लोपः स्यादित्येतच्च नाशङ्कनीयम्। अविशेषेण हि लोपो विधीयमान उत्सर्गो भविष्यति। तस्यानादेशे विभक्तिविशेषे यकाराकारापवादौ। एवञ्चान्तरेणापि शेषग्रहणं शेष एव लोपोऽवस्थाप्यत इत्यत आह शेषग्रहणं विस्पष्टार्थमिति। शेषे लोपे कृते स्त्रियां टाप् कस्मान्न भवतीति। अन्त्यलोपे कृते सत्यदन्तत्वादजाद्यतष्टाबिति ( ४।१।४ ) टापा भवितव्यमिति भावः। सन्निपात इत्यादि। विभक्त्यानन्तर्ये हि सति युष्मदस्मदो अकारान्ते समुपजाते। तत्र यदि टापमुत्पादयेतां तदा विभक्तेरानन्तर्यं ताभ्यां विहतं स्यात्। नच यो यत्सन्निपातलक्षणः स तद्विघातस्य निमित्तं भवतीति न

भवति टाप्। यद्येवं त्यदादिभ्योऽपि न स्यात्। नैष दोषः। यदयं न यासयो (७।३।४५) रिति निर्देशं करोति तज् ज्ञापयति भवति तदादिभ्यष्टाबिति। अयञ्च स्त्रीलिङ्गत्वं युष्मदस्मदोरभ्युपेत्य परीहार उक्तः। इदानीं स्त्रीलिङ्गाभावादेव टाम् न भवतीति दर्शयितुमाह अलिङ्गेइत्यादि। केचित्तु शेषे लोपं टिलोपमिच्छन्तीति। त्वं ब्राह्मण्यहं ब्राह्मणीत्यत्र टाम् मा भूदित्येवमर्थम्। युष्मभ्यमस्मभ्यमित्यत्र भ्यमादेशे कृते बहुवचने झल्येदित्येत्त्वं (७।३।१०३) मा भूदित्येवमर्थञ्च। कथमिति? एवं मन्यते। यत्र विभक्तावाकारो यकारश्च न विहितः स शेषः। तत्र शेषे लोप उच्यमान ष्टिलोपो न लभ्यते। अलोऽन्त्यस्येति (१।१।५२) परिभाषयाऽन्त्यस्यैव प्राप्नोतीति वक्ष्यमाणादेशापेक्षया शेष इत्यस्यार्थं ते चेत्यादिना स्पष्टीकरोति। मपर्य्यन्ताद् योऽन्यः स शेषइति। स पुन ष्टिरेव। अत्रायं शेषे लोपष्टिलोपो भवतीति लोपं प्रति शेषस्याधिकरणविवक्षायां सप्तमी। किमर्थं पुनर्लोप इत्युच्यते? यावता त्यदाद्यत्वेनैव सिद्धम्। न सिध्यति। अत्यदादित्वात्। त्यदादित्वं हि द्विपर्य्यन्तास्त्यदादयइति। तत्र चैतदेव शेषे लोपवचनं ज्ञापकम्। तेन भवच्छब्दस्य त्यदाद्यत्वं न भवति। भवानिति।

## ६१। मपर्य्यन्तस्य।

युवकामावकामिति। अव्ययसर्वनाम्नामकच् प्राक् टेरित्यकच् (५।३।७१)। अत्र यदि मपर्य्यन्तस्येति नोच्येत ततोऽवधेरनुपादानात् साकच्कस्यापि स्यादित्यत आह साकच्कस्य सर्वस्य मा भूदिति। असति मपर्य्यन्तग्रहणेऽवधेरनुपादानादनेकाल्त्वाच्चादेशस्य सर्वस्यैव स्यात्। कः पुनः सर्वादेशे दोषः स्यादित्यत आह तथाचेत्यादि। अनिष्टं रूपं स्यादिति। अकारस्य योऽचीति (७।२।८९) यकारे कृते त्वया म्या इति स्यात्। मपर्य्यन्तग्रहणे तु सति युष्मदस्मदो मपर्य्यन्तस्य स्थानित्वेनाधिकृतत्वादस्यैव वक्ष्यमाणा आदेशा भवन्तीति न कश्चिद् दोष इति। अथ परि-ग्रहणं किमर्थम्? न मान्तस्यैवोच्येत? एवमपि ह्युच्यमानेऽन्तशब्दस्य समीपवचनत्वात् तद्गुणसंविज्ञानस्य बहुव्रीहेराश्रयणात् मित्त्वमिष्टमित्यत आह मान्तस्येत्यादि। एतस्मिन् साकच्कस्यादेशाभावेऽथवैतस्मिन् युवकामावकामित्यादिके शब्दरूपे मान्तस्येत्येवं सिद्धे यत् परि-ग्रहणं कृतं तदवधिद्योतनार्थम्। युष्मदस्मदोरवय-

वस्य स्थानिनोऽवधिद्योतनार्थम्। तस्मात् मान्ते युष्मच्छब्देऽस्मच्छब्दे च वक्ष्यमाणं कार्यं मा भूदित्येवमर्थम्। कदेत्याह यदा णयन्तयोरित्यादि। तदाचष्टइति। युष्मदस्मद्भ्यां णिचि कृते णाविष्ठवत् कार्यं प्रातिपदिकस्येतोष्ठवद्भावाट्टिलोपः (६।४।१५५,वा)। ततः क्विप्। तत्र णेरनिटीति (६।४।५१) णिचो लोपे कृते यदा मान्तत्वं विद्यते युष्मदस्मदो स्तदा मा भूदिति। असत्यपि परि-ग्रहणे मान्तस्येतरेन युष्मदस्मदोरितयवयवावस्थानं लभ्यते। ततश्च यत्र मान्ते युष्मदस्मदो तत्रैव वक्ष्यमाणा आदेशा भवेयुः। परि-ग्रहणे त्ववधिद्योतनार्थे सति नियोगतो वर्जयमानेन भवितव्यम्। नहि तेन विनावधिः सम्भवति। तत्र समुदायावयवस्थानो निर्दिश्यते। तत्रैव यत्राच्छब्दो वर्जनीयोऽस्ति तत्रैव भविष्यति। नतु मान्तयो र्युष्मदस्मदोरेव। ननु च विभक्तिपरयो र्युष्मदस्मदोरादेशा विधास्यन्ते। नच मान्तावस्थायां विभक्तिपरतास्ति। णिलोपस्य स्थानिवद्भावात्। तत् किं मान्तस्य निवृत्त्यर्थेन परि-ग्रहणेनेत्यत आह स्थानिवत्त्वश्चेत्यादि। क्वौ लुप्ते (१।१।५८, वा) न स्थानिवदिति वचनात् स्थानिवद्भावोऽत्र नास्ति। तस्माद् विद्यतएव विभक्तिपरत्वमित्यभिप्रायः।

## ६२। युवावौ द्विवचने।

द्विवचन इति। यदीदं पारिभाषिकस्य द्विवचनस्य ग्रहणं स्यात् तदा तस्मिन् परतएव तावादेशौ भवेताम्। तथाच यदा समासे द्व्यर्थे युष्मदस्मदो भवतः समासार्थस्य त्वन्यसंख्यत्वादेकवचनं बहुवचनं वा समासाद् भवति तदा न स्यातामिति। यदा युष्मदस्मदो एकत्वे वा बहुत्वे वा वर्त्तेते समासार्थस्य द्वित्वे सति समासाद्द्विवचनं भवति तदा युवावौ स्यातामेव। एतच्चानिष्टम्। अर्थग्रहणे सतीष्टं सिध्यति। नचानिष्टं किञ्चिदापद्यत इत्यालोच्याह द्विवचन इत्यर्थग्रहणमिति। द्वयोरर्थयोर्वचनमुक्तिर्द्विवचनम्। द्विवचने ये युष्मदस्मदो इति। द्विवचन इति विषयसप्तमीयम्। तदेव विषयसप्तमीत्वमस्या व्यक्तीकर्त्तुमाह द्व्यर्थाभिधानविषय इति। द्वयोरर्थयोरभिधानं द्व्यर्थाभिधानम्। तद्विषये ये युष्मदस्मदो ते तथोक्ते। तयोरित्यादि। तयोर्युष्मदस्मदोर्मपर्यन्तावयवः स्थानी। तस्य युवावौ भवतः। यदेत्यादिनार्थग्रहणे सति यदिष्टं सिध्यति तद् दर्शयति। यदि तर्हि समासादेकवचनबहुवचनयोरुपजातयोर्द्व्यर्थाभिधानविषयत्वाद् युष्मद-

स्मदो युवावौ भवत एवं सति त्वाहौ सौ-यूयवयौ जसि-तुभ्यमह्यौ ङयि-तवममौ ङसौत्येषामपि विषये स्यातामित्यत आह यदि त्वाहौ सावित्यादि। अति-युवामत्यावामिति। अत्यादयः क्रान्ताद्यर्थे इति ( २।१।१८, वा ) प्रादिसमासः। तत्र योऽसौ युष्मदस्मदर्थंश्चातिक्रान्तः स एकसंख्यावच्छिन्नोऽर्थ इति। तत्र यद्यप्येकवचनं भवति तथापि द्व्यर्थाभिधानविषयत्वाद् युष्मदस्मदो युवावौ भवत एव। अत्र हि द्वितीयायाञ्चेत्यात्त्वम् ( ७।२।८७ )। अतियुवानत्यावानिति। शसो न इति (७।१।२९) नत्वम्। अतियुवयाऽत्यावयेति। योऽचीति (७।२।८९) यत्वम्। अतियुवाभिरत्यावाभिरिति। युष्मदस्मदोरनादेश (७।२।८६) इत्यात्त्वम्। अतियुवभ्यमत्यावभ्यमिति। भ्यसोभ्यम् ( ७।१।३० )। अतियुवदत्यावदिति। एकवचनस्येति ( ७।१।३२ ) ङसेरदादेशः। बहुवचनस्य तु पञ्चम्या अदित्यनेन ( ७।१।३१ )। अतियुवाकमत्यावाकमिति। साम आकम् (७।१।३३)। अति-युवयोरत्यावयोरि.। पूर्ववद् यत्वम्। अतियुवास्वत्यवास्विति। पूर्ववदात्त्वम्। त्वाहादीनां विषय इत्यादिना यदुक्तं यदि त्वाहौ सावित्यादिना ( ७।२।९४ ) देशान्तरेण न बाध्येते इति तद् विस्पष्टीकरोति यदा त्वत्यादिना। अर्थ-ग्रहणे सति यदिष्टमुपपद्यते तद्दर्शयति। अतित्वामतिमामिति। अत्र यौ युष्मदस्मदर्थावतिक्रान्तौ तौ द्विसंख्यौ समासार्थाविति। समासाद् यद्यपि द्विवचनं भवति तथापि युष्मदस्मदो द्व्यर्थता नास्तीति युवावौ न भवतः। त्वमावेव भवतः। प्रथमायाश्च द्विवचने भाषायामित्यात्त्वम् ( ७।२।८८ )। अथवा द्वितीया-द्विवचनमेतत्। ततो द्वितीयायाञ्चेति ( ७।२।८७ )। एवमुन्नेयमिति। वचनान्तरेष्वप्यादेशाभावं दर्शयति। युष्मानतिक्रान्तौ पश्यातियुष्मानत्यस्मान्। अतिक्रान्ताभ्यां त्वां कृतमतित्वाभ्याम्। अतिमाभ्याम्। अतिक्रान्ताभ्यां युष्मान् कृत मतियुष्माभ्यां कृतम्। अत्यस्माभ्यां कृतम्। त्वामतिक्रान्ताभ्यां देह्यति-त्वाभ्यां देहि। अतिमाभ्यां देहि। अतिक्रान्ताभ्यां युष्मान् देह्यतियुष्माभ्या-मत्यस्माभ्यां देहि। अतिक्रान्ताभ्यां त्वामागतोऽतित्वाभ्यामागतः। अति-माभ्यामागतः। अतिक्रान्ताभ्यां युष्मानागतोऽतियुस्माभ्यामागतः। अत्यस्माभ्या-मागतः। अतिक्रान्तयोस्त्वां स्व मतित्वयोः स्वमतिमयोः स्वम्। युष्मानति क्रान्तयोः स्वमतियुष्मयोः स्वमत्यस्मयोः स्वम्। अतिक्रान्तयो स्त्वां निधेह्यतित्वयो र्निधेहि। अतिमयोर्निधेहि। अतिक्रान्तयो र्युष्मान्निधेह्यतियुष्मयोर्निधेहि। अत्यस्मयोर्निधेहि।

## ९३। युयवयौ जसि।

परमयूयमिति। अङ्गाधिकारे तस्य च तदुत्तरपदस्य चेति (प ३०) वचना-दुत्तरपदयोरपि भवतः। अथवा जसीति परसप्तमीयम्। तेन समस्तयोरपि जसि परत इति भवतः। परमयूयमित्यादावपि युष्मदस्मद्भ्यां जसः परत्वमस्त्येव।

## ९४। त्वाहौ सौ।

(७।२।९७) त्वमावेकवचन इति वक्ष्यति। तस्यायमपवादः। अथ त्व-ग्रहणं किमर्थम्? नाहः सावित्येवोच्येत? त्वादेशो हि त्वमावेकवचन (७।२।९७) इत्येवं भविष्यति। अशक्यमेवं वक्तुम्। असति त्वग्रहणे युष्मदोऽप्य-हादेशः स्यात्। अथवात्रास्मदो हः सावित्येवोच्येत? एवमपि गौरवं स्यात्। तस्माद् यथान्यासमेवास्तु।

## ९५। तुभ्यमह्यौ ङयि।

## ९६। तवममौ ङसि।

अनन्तरं वक्ष्यमाणयो स्त्वमयोः प्राप्तयोरिदं वचनम्।

## ९७। त्वमावेकवचने।

एकवचनइत्यर्थनिर्देश इति। एतेनार्थस्येदं ग्रहणं न तु पारिभाषिकस्यैक-वचनस्येति दर्शयति। पारिभाषिकस्य तु ग्रहणे यो दोषः स युवावौ द्विवचन (७।२।९२) इत्यत्र उक्तइत्यभिप्रायः। अर्थग्रहणं त्विह वचनग्रहणाल्लभ्यते। यदीह प्रत्ययग्रहणमभिमतं स्यादेकत्व इत्येवं ब्रूयात्। विभक्ताविति वर्त्तते। तत्रैव सम्भिसम्बन्धः करिष्यते। एकत्वे या विभक्तिरिति। अथवै तदिति न ब्रूयात्। एकवचने हि प्रत्ययोत्तर-(७।२।९८) पदयोश्चेत्यनेनैवादेशयोः सिद्धत्वात्। त्वाम्मामिति। द्वितीयायाञ्चे त्यात्त्वम् (७।२।८७)। यदा समास एकार्थ इत्यादि-नार्थग्रहणे सति यदिष्टं सिध्यति तद्दर्शयति। यदापि समासात् संख्यान्तरयुक्ताद् द्विवचनं बहुवचनं वा भवति तदाप्येकार्थयो र्युष्मदस्मदोरेतावादेशौ भवतः। एवं सति त्वाहौ सौ-यूयवयौ जसि-तुभ्यमह्यौ ङयि-तवममौ ङसीत्येषामप्या-

देशान्तराणां विषये स्यातामित्यत आह आदेशान्तराणां त्वित्यादि। पूर्वविप्रतिषेधस्येति वचनं परस्य विप्रतिषेधस्यासम्भवात्। असम्भवस्त्वनयोरेव परत्वात्। पूर्वविप्रतिषेधस्तु परशब्दस्येष्टवाचित्वाल्लभ्यते। तत्र त्वाहौ सावित्यस्मा-(७।२।९४) वकाशो यत्रैकार्थे युष्मदस्मदी न भवतः। अतिक्रान्तो युष्मानित्यतित्वमत्यहमिति। त्वमावेकवचनस्यावकाशो यत्रैकार्थाभ्यां विभक्त्यन्तरं भवति त्वां मामिति। अतिक्रान्त स्त्वामतित्वमतिक्रान्तो मामत्यहमित्यत्रोभयप्रसङ्गे प्राप्ते त्वाहौ सौ भवतः पूर्वविप्रतिषेधेन। अनया दिशाऽदेशान्तरेषु प्राप्तेषु पूर्वविप्रतिषेधो वक्तव्यः। अतिक्रान्तौ त्वामतित्वाम्। अतिमामिति। अत्र यद्यपि समासाद् द्विवचनं भवति तथाप्येकार्थे युष्मदस्मदी इति भवत एव त्वमादेशौ। पारिभाषिकस्य त्वेकवचनस्य ग्रहणे न स्याताम्। तस्येहाविद्यमानत्वात्। एवमाद्युदाहर्त्तव्यमिति। अतिक्रान्तौ त्वां पश्यातित्वा मतिमां पश्य। अतिक्रान्तांस्त्वां पश्यातित्वानतिमान् पश्य। अतिक्रान्ताभ्यां त्वामतित्वाभ्यामतिमाभ्याम्। अतिक्रान्तैस्त्वामतित्वाभिरतिमाभिः कृतम्। अतिक्रान्ताभ्यां त्वां देह्यतित्वाभ्यामतिमाभ्यां देहि। अतिक्रान्तेभ्यस्त्वां देह्यतित्वभ्यमतिमभ्यं देहि। अतिक्रान्ताभ्यां त्वामागतोऽतित्वाभ्यामतिमाभ्यामागतः। अतिक्रान्तेभ्यस्त्वामागतोऽतित्वदागतोऽतिमदागतः। अतिक्रान्तयो स्त्वां स्वमतित्वयोः स्वम्। अतिमयोःस्वम्। अतिक्रान्तानां त्वां स्वमतित्वाकं स्वमतिमाकं स्वम्। अतिक्रान्तयो स्त्वां निधेह्यतित्वयोर्निधेह्यतिमयोर्निधेहि। अतिक्रान्तेषु त्वां निधेह्यतित्वासु निधेहि। अतिमासु निधेहि॥

## ९८। प्रत्ययोत्तरपदयोश्च।

एकवचने वर्त्तमानयोरिति। एकार्थाभिधानविषययोरित्यर्थः। त्वदीयो मदीयइति। त्यदादीनि (१।१।७४) चेति वृद्धसंज्ञकत्वाद् वृद्धाच्छइति (४।२।११४) च्छप्रत्ययः। त्वत्तरो मत्तरइति। द्विवचनविभज्योपपदे ( ५।३।५७ ) तरबीयसुनाविति तरप्। त्वद्यति मद्यतीति। सुप आत्मनः क्यच् ( ३।१।८ )। त्वद्यते मद्यतइति। कर्त्तुः क्यङ् सलोपश्चेति ( ३।१।११ ) क्यङ्। ननु च पूर्वेणैवादेशौ सिद्धौ। तत् किमर्थोऽयमारम्भ इत्यत आह विभक्तावित्यधिकारादित्यादि। ननु चेत्यादि देशकः। प्रकृतिप्रत्यययोः पूर्व्वोत्तरपदयोश्च या मध्ये

वर्त्तते मान्तवर्त्तिनी विभक्तिः। नैवं शक्यमितीतरः। लुका तस्या भवितव्यमिति अशक्यतायां हेतुः। सुपो धातुप्रातिपदिकयोरिति ( २।४।७१ ) प्रागेवादेशाभ्यां लुका भवितव्यमिति। ततश्च तन्निमित्तावादेशौ न स्यातामित्यभिप्रायः। बहिरङ्गो लुगित्यादि देशकः। विभक्तिमात्रं ह्यादेशयोराश्रयः। लुकस्तु धातुत्वं प्रातिपदिकत्वञ्चापरम्। तदेवं धातुप्रातिपदिकत्वे यथायोगं बाह्यप्रत्ययापेक्षत्वात् समासापेक्षत्वाच्च बहिरङ्गे किं पुनस्तदपेक्षया लुको बहिरङ्गता ? असिद्धं बहिरङ्गमन्तरङ्गे (प,५१) इत्यादेशाविव प्रथमं भविष्यतः। एतदेवेत्यादीतरोऽपि। अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् न बाधत इति पूर्वेणैव सिद्धत्वादादेशवचनं न कुर्यात्। कृतञ्च। तदेव ज्ञापयति। अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधत इति। किमेतस्य ज्ञापकस्य प्रयोजनमित्यत आह तेनेत्यादि। यद्ययमर्थो न ज्ञाप्यते तदा गोमान् प्रियोऽस्येति गोमत्प्रिय इत्यन्तरङ्गत्वाल्लुकः प्रागुगिदचामिति (७।१।७०) नुम् स्यात्। अत्वसन्तस्य चाधातोरिति ( ६।४।१४ ) दीर्घत्वम्। ततश्च संयोगान्तलोपे कृते गोमान्प्रिय इत्यनिष्टं रूपं प्रसज्येत। अस्मिन् ह्यर्थे ज्ञापितेऽन्तरङ्गमपि नुमादिकं बहिरङ्गेण लुका बाध्यत इति न भवत्येष दोषप्रसङ्गः। एकेनादिशब्देन गोमन्तमिच्छति गोमत्यति गोमानिवाचरति गोमत्यत इत्यादेर्ग्रहणम्। द्वितीयेन दीर्घत्वस्य हल्ङ्यादिलोपस्य। यद्यन्तरङ्गत्वाद् हल्ङ्यादिलोपः ( ६।१।६६ ) स्यात् प्रत्ययलक्षणेन नुमादिकं स्यात्। ततश्च तदेवानिष्टं रूपं स्यात्। लुकि च सति न लुमताङ्गस्येति ( १।१।६३ ) प्रत्ययलक्षणप्रतिषेधान्न भवति। एवञ्चेत्यादि। यत एवं बहिरङ्गोऽपि लुगन्तरङ्गानपि विधीन् बाधत एवञ्च कृत्वा त्वाहौ सौ यूयवयौ जसि तुभ्यमह्यौ ङयि तवममौ ङसीत्येत आदेशाः प्रत्यय उत्तरपदे च परतो न भवन्तीति। अथेत्यादि। असति प्रयोजने ज्ञापकं भवति। अस्ति चान्यत् प्रयोजनमेषां त्वाहादीनामादेशान्तराणां बाधनम्। सत्येतस्मिन् प्रयोजन एतदर्थमेवेदं युक्तं विज्ञातुम्। ननु ज्ञापनार्थमिति भावः। लक्ष्यस्थित्यपेक्षयेति। लक्ष्यस्य व्युत्पाद्यस्य स्थितिः स्थानं लक्ष्यस्थितिः। तद्विषयेऽपेक्षा लक्ष्यस्थित्यपेक्षा। तया हेतुभूतया। नेदमादेशान्तराणां बाधनार्थं विज्ञायते गोमत्प्रियो गोमत्यतीत्येवमादिकं लक्ष्यं लोके साधुभावेनावस्थितम्। आदेशान्तरबाधनार्थे ह्येतस्मिन् विज्ञायमाने न संगृहीतं स्यात्। ज्ञापनार्थे त्वेतदपि संगृहीतं भवतीत्येतद् दर्शयति ज्ञापनार्थे ह्येतस्मिन्नित्यादि। कथं पुनः सत्येवं प्रयोजने सत्यामपि लक्ष्यस्थित्यपेक्षायां ज्ञापकार्थमेतच् शक्यं विज्ञातुम् ? एवं मन्यते। प्रयोजनमेवैतन्न

भवति। सपर्य्यन्तग्रहणस्य चकारेणानुकर्षणार्थत्वात्। तदनुकर्षणस्यै तदेव प्रयोजनम् सपर्य्यन्तयोरादेशौ यथा स्यातामिति। यदि चादेशान्तराणां बाधनार्थ मेतत् स्यादनुकर्षणं तस्यापार्थकं स्यात्। यद्बाधनार्थमेतत् सूत्रं प्रकल्प्यते तान्यादेशान्तराणि सपर्य्यन्तस्यैव प्रयुक्तानि। नान्यस्य। ततश्चान्तरेणापि सपर्य्यन्तग्रहणानुवृत्तिमुत्सर्गसमानदेशत्वादपवादानां सपर्य्यन्तस्यैव भविष्यत इति किं सपर्य्यन्तस्येत्यनुवर्त्तनेन ? आदेशान्तराणामबाधनार्थं ह्येतस्मिन् सर्वादेशनिवृत्त्यर्थं सपर्य्यन्तग्रहणमनुवर्त्तयितुं युक्तम्। तस्मादेतस्मात्सपर्य्यन्तग्रहणानुवर्त्तनान्नादेशान्तरबाधनमस्य प्रयोजनम्। अतो ज्ञापकं विज्ञायते। ननु च किमर्थ मेषां त्वाहादीनां बाधनार्थमेतन्न विज्ञायत इति परेण दर्शितम्। तस्यायमभिप्रायः। सपर्य्यन्तस्ये त्येतन्निवर्त्त्यादेशान्तरबाधनार्थमेतत् कस्मान्न भवतीति ? तत्रायमर्थः। सपर्य्यन्तग्रहणस्यानुकर्षणार्थश्चकारो न कर्त्तव्यो भवति। सपर्य्यन्तग्रहणानुवृत्तावेतदादेशान्तरबाधनार्थं नोपपद्यते। तस्मिन्निवृत्ते तूपपद्यत एव।

## ९९। त्रिचतुरोः स्त्रियां तिसृचतसृ।

त्रय इति। जसि चेति (७।३।१०९) गुणः। चत्वार इति। चतुरनडुहोरामुदात्तइत्याम् (७।१।९८)। त्रीणीति। जश्शसोः (७।१।२०) शिरिति शिभावः। नपुंसकस्य झलचः इति (७।१।७२) नुम्। नोपधायाः (६।४।७)। सर्वनामस्थाने चासम्बुद्धाविति (६।४।८) दीर्घः। स्त्रियामिति चैतत् त्रिचतुरो विशेषणमिति। तयोरेव श्रुतत्वात्। नाङ्गस्येति। एवकारस्य व्यवच्छेद्यं दर्शयति तेनेति विशेषणविशेष्यभावेन। यदि हि स्त्रियामित्यनेनाङ्गमेव विशेष्यते ततो यदा त्रिचतुःशब्दौ पुंसि नपुंसके वा वर्त्तेते अङ्गन्तु स्त्रियां तदाप्येतावादेशौ स्याताम्। त्रिचतुरोः स्त्रियामित्यनेन विशेष्यमानयोर्न भवतः। प्रियत्रिरित्यादि। स्त्रियाअन्यपदार्थत्वादङ्गं स्त्रियां वर्त्तते। त्रिचतुःशब्दौ लिङ्गान्तरे। यदा त्वङ्गं पुंसि नपुंसके वा वर्त्तते त्रिचतुःशब्दौ तु स्त्रियां तदा भवत एव। प्रियास्तिस्रो ब्राह्मण्योऽस्येति प्रियतिसा। प्रियतिस्रौ। प्रियतिस्रः। प्रिया श्चतस्रो ब्राह्मण्योऽस्येति प्रियचतसा। प्रियचतस्रौ। प्रियचतस्रः। प्रियतिसृ ब्राह्मणकुलम्। प्रियतिसृणी। प्रियतिसृणि। प्रियचतसृ ब्राह्मणकुलम्। प्रियचतसृणी। प्रियचतसृणि। तिसृभाव इत्यादि। त्रिशब्दात् संज्ञायां कन्निति कनि कृते विभक्त्यभावान्न प्राप्नोतीतीदमारभ्यते। उप-

संख्यानशब्दस्य प्रतिपादनमर्थः। तत्रेदं प्रतिपादनम्। पूर्व्वसूत्रादिह चकारोऽनुवर्त्तते। स चानुक्तसमुच्चयार्थः। तेन संज्ञायां कन्यपि भविष्यति। तिस्रकेति। ग्रामस्यैषा संज्ञा। चतसर्थ्याद्युदात्तत्वनिपातनमिति। चतस्रः पश्येत्यत्र चतुरः शसी- (६।१।१६७) त्यन्तोदात्तत्वं प्राप्नोति। आद्युदात्तञ्चेष्यते। तदर्थमाद्युदात्तत्व- निपातनं कर्त्तव्यम्। निपातनस्वरेण बाधितत्वादन्तोदात्तत्वं मा भूदित्येवमर्थम्। यथैवं तर्हि निपातनस्वरः शसिस्वरं बाधते तथा षट्त्रिचतुर्भ्यो हलादि (६।१।१७९) रित्यनेन यद्विभक्तेराद्युदात्तत्वं विधीयते तदपि बाधेत। ततश्चतसृणामित्यत्राम उदात्तत्वं न स्यादित्यत आह चतसृणामित्यत्र त्वित्यादि। हलादिग्रहणसामर्थ्या- दिति। तत्रैवायं हेतुः। हलादिग्रहणं हि तत्राजादिनिवृत्त्यर्थं क्रियते। चतुः- शब्दश्चायं बहुवचनविषयः। सर्वाणि बहुवचनानि प्रथमाद्वितीयाषष्ठीबहुवचने- भ्योऽन्यानि हलादीनि। तत्रामो नुमचिरतृज्वद्भावेभ्यः पूर्वविप्रतिषेधेन नुटि कृते भवितव्यमाद्युदात्तत्वेन। हलादित्वात्। जसस्त्वञ्जेश्छन्दस्यसर्वनामस्थान (६।१।१७०) मित्यतोऽसर्वनामस्थानग्रहणानुवर्त्तमानत्वादाद्युदात्तत्वं न भवति। तस्माच्छसो मा भूदित्येवमर्थं तत्र हलादिग्रहणं कृतम्। यदि च निपातनस्वरो विभक्तिस्वरं बाधेत तदा हलादिग्रहणमनर्थकं स्यात्। निपातनस्वरेणैव बाधि- तत्वाद्विभक्तिस्वरो न भविष्यति। तस्मान्मा भूद् हलादिग्रहणस्य वैयर्थ्यम्। इह हलादिग्रहणसामर्थ्याद्विभक्तिस्वरेण निपातनस्वरो बाध्यत इति। तेन चतसृणामि- त्यत्रान्तोदात्तत्वं भवति।

## १०० । अचि र ऋतः ।

किमर्थं पुनरचि रादेश उच्यते। न यणादेशेन सिद्धत्वादित्यतआह पूर्वसवर्ण इत्यादि। असति ह्येतस्मिन् सूत्रे शसि प्रथमयोः पूर्व्वसवर्ण इति (६।१।१०२) पूर्व्वसवर्णः स्यात्। ङसिङसोश्च ऋत उदित्युत्त्वञ्च (६।१।१११)। सर्वनाम- स्थाने ङौ च ऋतो ङिसर्वनामस्थानयोर् (७।३।११०) गुणः। तस्मादेतेषामपवा दोऽयं रेफादेश आरभ्यते। ननु युक्तः पूर्व्वसवर्णस्योत्वस्य चेत्ययमपवादो रेफादेशः। गुणस्य त्वयुक्तः। यस्मान् मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरानित्यत (प,६१) आह परमपीत्यादि। गुणस्यावकाशः कर्त्तारौ हर्त्तारौ कर्त्तरीति। रेफस्या- वकाशस्तिस्रः पश्येति तिस्रस्तिष्ठन्तीति। प्रियतिस्रि निधेहीति। अत्रोभयप्रसङ्गे

पूर्व्वविप्रतिषेधेन रेफो भवन् परमपि ङिसर्वनामस्थानगुणं बाधते। ऋत इति किमिति ? एवं मन्यते। तिसृचतसृशब्दाविह्वानुवर्त्तिष्येते। तौ च ऋकारान्तावेवेत्यलोऽन्त्यपरिभाषया ( १।१।५२ ) ऋत एव भविष्यति। तिसृचतस्रोः प्रतिपत्त्यर्थमिति। तिसृचतसृ इत्येतयोरत्यपि परत स्त्रिचतुरोः स्थाने प्रतिपत्तिः प्राप्तिर्यथा स्यादित्येवमर्थमृत इत्युक्तम्। अन्यथा ह्लोत्यादि। यद्यृतइति नोच्येत तदा तयोरेव तिसृचतस्रोरयमपवादो विज्ञायेत। ततश्चाजादौ तौ न स्याताम्।

## १०१। जराया जरसन्यतरस्याम्।

नुमो विधानाज्जरसादेशो भवति विप्रतिषेधेनेति। नुमोऽवकाशः स्वपूंगि जतूनि। जरसादेशस्यावकाशो जरसौ। अतिजरांसि ब्राह्मणकुलानीत्यत्रोभयप्रसङ्गे विप्रतिषेधेन परो जरसादेशो भवति। यदि हि पूर्व्वं नुम् स्यात् ततो नुमा व्यवहितत्वाज्जरसादेशो न लभ्यते। तथापि विहितविशेषणपत्ताश्रयणेन लभ्यते। एवमपि निर्दिश्यमानस्यादेशा भवन्तीति (प,१३) जराशब्दस्यादेशे कृते सकारात् परो नुम् श्रूयेत। अथापि सनुम्कस्यादेशः स्यात्। एवमपि कृतकार्य्यत्वान्नुम्शास्त्रस्य पुनरप्रवृत्तेरादेशे कृते पुनर्नुम् न स्यात्। तथानिष्टं रूपं प्रसज्येत। अथेहातिजरसं ब्राह्मणकुलं पश्येति जरसादेशे कृते स्वमोर्नपुंसकादिति ( ७।१।२३ ) लुक् कस्मान्न भवतीत्यत आह इहेत्यादि। जरामतिक्रान्तमिति प्रादिसमासः। ह्रस्वो नपुंसके प्रातिपदिकस्येति ( १।२।४७ ) ह्रस्वः। द्वितीयैकवचनमम् इति स्थित एकदेशविकृतस्यानन्यत्वात् कृतेऽपि ह्रस्वत्वे लुगम्भावो जरस्भावइत्येतानि त्रीणि कार्य्याणि युगपत् प्राप्नुवन्ति। तत्र लुगपवादत्वादतोऽमित्यम्भावेन बाध्यते ( ७।१।२४ )। अम्भावोऽपि परत्वाज्जरसादेशेन। अथ कृते जरसादेशे लुक् पुनः कस्मान्न भवतीत्यत आह पुनर्लुक्शास्त्रमित्यादि। न च लुक्शास्त्रं पुनः प्रवर्त्तते। भ्रष्टावसरत्वादन्यत्र कृतकार्य्यत्वाच्च। तेन लुगभावादतिजरसमित्येवं भवति। अथ प्रथमैकवचने किमतिजरं ब्राह्मणकुलं तृतीयाबहुवचने किमतिजरै ब्राह्मणकुलैरित्येवं भवितव्य माहोस्विदतिजरसमतिजरसैरित्येवमित्यत आह अतिजरमित्यादि। गोनर्दीयमतेनेति। तथाहि भाष्य उक्तं गोनर्दीय आह इष्टमेवैतत् संगृहीतं भवतीति। अतिजरमतिजरैरिति भवितव्यमिति। का पुनरस्य युक्तिरित्यत आह सन्निपातलक्षणेत्यादि। यद्यम्भाव ऐस्भावश्च जरसादेशस्य

निमित्तमात्रं स्यादकारान्तताऽङ्गस्य ताभ्यां विहता स्यात्। एतच्चायुक्तम्। तत् सन्निपातेन हि तावभिनिर्वृत्तौ नोत्सहेते तां विहन्तुम्। अन्यइति। सूत्रकार-मतानुसारिणः। कस्मात् पुनस्त एवं मन्यन्तइत्यत आह अनित्यत्वादस्या इत्यादि। अनित्यत्वं पुनरस्या अतो भिस ऐसित्यत्र ( ७।१।९ ) प्रतिपादितम्।

## १०२। त्यदादीनामः।

स्यइति। तदोः सः सावनन्त्ययोरिति ( ७।२।१०६ ) तकारस्य सकारः। त्यइति। जसः शीति ( ७।१।१७ ) शीभावः। आद् ( ६।१।८७ ) गुणः। इमाविति। दश्चेति ( ७।२।१०९ ) मत्वम्। असाविति। अदस औ सुलोपश्च ( ७।२।१०७ )। अमू इति। अदसोऽसेर्दादु दो म इति ( ८।२।८० ) मत्वोत्वे। प्रथमयोः पूर्वसवर्णइति ( ६।१।१०२ ) दीर्घः। अमीइति। एत ईद् बहुवचन इतीत्त्वम् ( ८।२।८१ )। अथेह कस्मान्न भवति भवानिति। अत आह द्विपर्य्य-न्तानामित्यादि। एतच्च शेषे लोप ( ७।२।९० ) इत्यत्र प्रागेव ज्ञापितम्। भवानिति। उगिदचामिति ( ७।१।७० ) नुम्। अत्वसन्तस्य ( ६।४।१४ ) चाधातोरिति दीर्घः। अथेह संज्ञोपसर्जनीभूतानामपि कस्मान्न भवति त्यदादौ त्यदतित्यदतित्यदइत्यत आह संज्ञोपसर्जनीभूता इत्यादि। सर्व्वाद्यन्तःपातिन स्त्यदादयः। सर्वादयश्चासंज्ञीभूता अनुपसर्जनीभूताश्च पठ्यन्ते। तथाहि तेषां सर्वनामानीति महत्याः संज्ञायाः करणस्यैतत् प्रयोजनं सर्वेषां नामभूतानां संज्ञा यथा स्यात्। ये तु कस्यचिदेव संज्ञाभूता उपसर्जनीभूताश्च तेषां मा भूदिति। तस्मात् संज्ञोपसर्जनीभूतास्त्यदादयः पाठादेव पर्य्युदस्ता स्त्यदादिभ्यो बहिष्कृता इत्यर्थः। तस्मादत्यदादित्वात् तेषां न भवति त्यदादिकार्य्यम्। त्यदादि-प्रधाने तु भवत्येवेति। त्यदादयः प्रधाना यस्मिञ्छब्दे स त्यदादिप्रधानः। तत्र भवत्येवात्त्वम्। तस्य पाठादपर्य्युदस्तत्वात्। अपर्य्युदस्तत्वं तु सर्वनामसंज्ञाया स्तदन्तविधेः सर्व्वादेरभ्युपगमात्।

## १०३। किमः कः।

अथाकार एव किमः कस्मान्न विधीयते ? एवं हि लघु सूत्रम्भवति। अकारो हि प्रकृतोऽनुवर्त्ततइति। तत्रैवं सूत्रं कर्त्तव्यं किमोऽदित्यत आह साकच्-कस्यादेशो भवतीति। तेनाकारः किमो न विधीयत इति। अयं ह्यादेशस्तन्मध्य-

पतित स्तद्ग्रहणेन गृह्यते। अकचश्च किम्ग्रहणेन ग्रहणात् साकच्क-स्यापि भवति। तेनाकारएव किमः स्थाने न विधीयते। यदि हि विधीयेत तदाऽनकच्कस्यादेशे कृते पश्चादकचि कक इत्यनिष्टं रूपं स्यादित्यभिप्रायः। कथं पुनः किमोऽत्त्वे कृते कइति भवति? यावतामकारस्यात्त्वे कृते सतीकारस्य यणादेशे कृते क्यइति स्यात्। नैष दोषः। इकारस्यापि ह्यत्त्वं विधीयते यदिह पूर्वसूत्रादत इत्यनुवर्त्तते। नालोऽन्त्यस्यात्वं भवति यत् पुनरिहाकारग्रहणं क्रियते। तेनानन्त्यविकारेऽन्त्यसदेशस्येतीकारस्य (प,१०४)। तत्र द्वयोरकारयोः पररूपत्वे कइति सिद्धम्। क्वचित् पाठ इमइति (K)। तत्रायं पूर्वपक्षः। अथाकार एवेमः कस्मान्न विधीयते? लघु ह्येवं सूत्रं भवति। प्रकृतस्याकारस्येहानुवृत्तेः। तत्रैवं तावत् सूत्रं कर्त्तव्यमिमइति। नचैवं सति तिम ष्टिम आर्द्रीभावइत्यस्य क्विबन्तस्य तीन् (L) तिमौ तिम इत्यत्रापि प्रसज्येत। त्यदादिभिरिमो विशेषणात् त्यदादीनां य इमिति। न। दश्चेति (७।२।१०९) सत्वे कृत इदम इमाविम इत्यत्रापि प्रसज्येत। लक्षणप्रतिपदोक्तपरिभाषया (प,११४) नापीम इत्यत्रचमा-नेऽलोऽन्त्यस्येति (१।१।५२) प्रसज्येतेत्याशङ्कनीयम्। यस्मान्नानर्थकेऽलोऽन्त्य-विधिरित्यत (प, १०५) आह साकच्कस्यापीत्यादि। पूर्वएव पाठः साधुतरः। इतरत्र तु पाठ उत्तरसूत्रेण क्वादेश इमः कृते द्वयोः ककारयोश्च संयुक्तयोः श्रवणं प्रसज्येत। तच्चानिष्टम्।

## १०४। कु तिहोः।

पूर्वस्यायमपवादः। तिशब्दस्य विभक्तेरभावादिकार उच्चारणार्थः। तकारस्यैव प्रयोजनम्। तत्र यस्मिन् विधि स्तदादावल्ग्रहणे (प, ३४) तकारादेशो विभक्तौ कार्य्यं विधीयते। अत आह तकारादावित्यादि। कुतइति। पञ्चम्यास्तसिल् (५।३।७)। कुत्रेति। किमोऽदित्यत्र (५।३।१२) परसूत्राद्वाग्रहणं म्पुरस्तादनुकृष्यते। तेन पक्षे सप्तम्या स्त्रलिति (५।३।१०) त्रल्यपि भवति। कुह इति। वा ह च छन्दसीति (५।३।१३) हः। एषाञ्च तमिलादीनां प्राग्दिशो विभक्ति (५।३।१) रिति विभक्तिसंज्ञा।

---

(K) केचिदिम इति सूत्रं पठन्तीत्यर्थः।

(L) सौ नौ धातोरिति (८।२।६४) मकारस्य पदान्ते नत्वम्। अनुनासिकस्य क्विझलोः क्ङिति उपधादीर्घः (६।४।१५)।

## १०५ । क्वाति ।

कादेशस्यायमपवादः । क्वेति । किमोऽदित्यत् (५।३।१२)। अथ किमर्थमादेशान्तरं विधीयते ? न प्रकृतः कु एव विधीयताम् । तत्रापि यणादेशे क्वेति सिद्ध्यत्येव । योगविभागश्च न कर्त्तव्यो भवति । कुकुतिहात्स्वित्येको योगः करिष्यतइत्यत आह आदेशान्तरवचनमित्यादि । कुशब्दे ह्यादेशे सति यणादेशं बाधित्वोर्गुण इति (६।४।१४६) गुणः स्यात् । तस्मात् तन्निवृत्त्यर्थं क्वादेशइत्युच्यते । एवमपि प्रत्ययविधावेव किमो ड्वदिति ड्वत्प्रत्ययो विधेयः । तत्रापि टिलोपे कृते क्वेति रूपं सिध्यत्येव । पदसंज्ञायां सत्यां झलाञ्जशोऽन्तइति ( ८।२।३९ ) ककारस्य गकारः प्राप्नोतीत्यतो न सिध्यतीति चेत् ? नैतदस्ति । असिद्धं बहिरङ्ग मन्तरङ्ग इति (प,५१) टिलोपस्यासिद्धत्वाज्जश्त्वं न भवति । टिलोपो हि डिति विधीयते । तेन डितमपेक्षमाणो बहिरङ्गो भवति । जश्त्वं तु पदान्ते विधीयमानं नापरनिमित्तमपेक्षत इत्यन्तरङ्गमित्यत आह किमो ड्वदिति प्रत्ययान्तरमित्यादि । यदि ड्वदिति प्रत्ययान्तरं विधीयेत साकच्कस्य क्वेति रूपं न सिध्यति । अकचि हि कृते ककिमिति स्थिते ड्वत्प्रत्यये परतष्टिलोपे सति कक्वेत्यनिष्टं रूपं स्यात् । अत्प्रत्यये तु क्वादेशो विधीयमानोऽनेकाल्त्वात् साकच्कस्य सर्व्वादेश एव भवतीति न भवत्यनिष्टरूपप्रसङ्गः । तस्मात् साकच्कार्थं ड्वदिति न प्रत्ययान्तरं विधीयते । साकच्कोऽर्थः प्रयोजनं यस्य तत् साकच्कार्थम् ।

## १०६ । तदोः सः सावनन्त्ययोः ।

साविति । किमिदं प्रथमैकवचनस्य ग्रहणमुत सप्तमीबहुवचनस्याहोस्विदुभयोरपि ? तत्र प्रथमैकवचनस्य ग्रहणम् । तथाहि द्वयोरपि सामान्येन ग्रहणं न भवति । यदि स्यात् सोत्येवं ब्रूयात् । एवं हि सकारादौ कार्य्यं विधीयमानं तयोर्द्वयोरपि भविष्यति । तस्मादन्यतरस्य ग्रहणम् । तथाहिसम्छन्दसि बहुलम् (६।१।१३३) सोऽचि ( ६।१।१३४ ) लोपे चेदित्येवमादेर्निर्देशात् प्रथमैकवचनस्यैव ग्रहणं युक्तम् । हे स सेति । हेशब्दो निपातसमुदायोऽवधारणार्थे वर्त्तते । ननुच त्यदाद्यत्वमत्र बाधकं भविष्यति । नैतदस्ति । अनवकाशा हि विधयो बाधका भवन्ति । सावकाशश्चात्वम् । कोऽवकाशः ? द्विशब्दो द्वाविति । सत्यपि तस्मिन्नवकाशे यद्यपि सकारस्याप्यनन्त्योऽवकाश स्तथाप्यन्तस्य परत्वात् सत्वं स्यात् । ततश्च हे स इत्येङ् ह्रस्वात्

सम्बुद्धेरिति ( ६।१।६९ ) सोर्लोपो न स्यात्। तत्र हल्ङ्यादिलोपे कृते रुत्वविसर्जनीययोः कृतयोरनिष्टं रूपं स्यात्। सेतात्र त्यजाद्यतष्टाबितात्र (४।१।४) स्त्रियां टाम् न स्यात्। तस्मादनन्त्ययोरिति वक्तव्यम्।

## १०७। अदस औ सुलोपश्च।

सावित्येव। त्यदाद्यत्वापवादोऽदसश्चौत्वं विधीयते। असाविति। पूर्वसूत्रेण दकारस्य सकारः। वृद्धिरेचीति ( ६।१।८८ ) वृद्धिः। यदा चेत्यादि। मादुत्वश्चेति चकारः सन्नियोगार्थः। तेन यस्मिन् पक्ष औत्वप्रतिषेध स्तस्मिन्नेव पक्षे सादुत्तरस्याकारस्योत्वं विधीयते। उत्तरपदभूतानामित्यादि। इह परमाहं परमायं परमानेनेति त्याहौ मावि ( ७।२।९७ ) दोऽय् पुं-( ७।२।१११ ) स्यान्नाप्यकइति ( ७।२।११२ ) मा मा स्याद्या विभक्तिः। तस्यामित आदेशा भवन्तो बहिरङ्गा भवन्ति। प्रागेव तु विभक्त्युत्पत्तेः। अकः सवर्णे दीर्घत्वं प्राप्नुवदन्तरङ्गम्। तस्मात् पूर्वं तदेव स्यात्। पश्चादादेशाः स्युः। ततश्च परमहं परमयं परमनेनेत्यनिष्टानि रूपाणि स्युः। तस्मादुत्तरपदभूतानामकृतस्वरसन्धीनां त्यदादीनामादेशा वक्तव्या व्याख्येया इत्यर्थः। आचार्य्यप्रवृत्ति र्ज्ञापयति। पूर्वोत्तरयोः पदयोस्तावत् कार्य्यं प्रथमं भवति। पश्चादेकादेश इति यदयं नेन्द्रस्य परस्येति ( ७।३।२२ ) प्रतिषेधं शास्ति। कथं कृत्वा ज्ञापकम्? इन्द्रे द्वावचौ। तत्रैको यस्येति चेति ( ६।४।१४८ ) लोपेनापह्रियते। अपर एकादेशेनेत्यनच्क इन्द्रशब्दः सम्पन्नः। तत्र को वृद्धिप्रसङ्गः? पश्यति त्वाचार्य्यः पूर्वोत्तरयोः पदयो स्तावत् कार्य्यं भवति। पश्चादेकादेश इति। यतो नेन्द्रस्य परस्येति ( ७।३।२२ ) वृद्धिप्रतिषेधं शास्ति। तदेतस्माज् ज्ञापकादकृतस्वरसन्धीनामुत्तरपदभूतानां त्यदादीनामादेशा भवन्तीति। अदसः सोर्भवेदौत्वमित्यादि। अवधारणमत्र द्रष्टव्यम्। अदःशब्दात् परस्य सोरेवौत्वं भवेत्। भवतु वा मा भूत्। अदस्शब्दस्य त्यदाद्यत्वे कृते वृद्धिरेचीति (६।१।८८) वृद्धौ कृतायामसाविति सिध्यत्येव। तत् किमर्थं सुलोपो विधीयते? निरर्थकत्वान्नैवं सोर्लोपो विधेयः। औत्वमेव विधेयम्। अत्र दोषमाह ह्रस्वाल्लुप्येत सम्बुद्धिरिति। हेऽसावित्यत्रैङ् ह्रस्वात् सम्बुद्धेरिति सोर्लोपः प्रसज्येत। ततश्च सम्बुद्धौ हे ऽसाविति न सिद्ध्येत्। न हलः प्रकृतं हि तदिति। नायं दोषः। हलः सम्बुद्धे र्लोप औत्वे कृतेऽज्

भवति। न हलिति। तत् कुतो लोपप्रसङ्गस्तत्र ? तर्हि हल्ग्रहणं कर्त्तव्यम्। न कर्त्तव्यम्। यस्मात् प्रकृतं तत्। हल्ङ्याब्भ्यः सुतिस्यपृक्तं हलित्यतो (६।१।६८) हल्ग्रहणं प्रकृतमेव। यद्यपि तत्र प्रथमानिर्दिष्टं षष्ठीनिर्देशेन चेहार्थ स्तथाप्येङ्ह्रस्वादिति पञ्चमी हलित्यस्याः प्रथमायाः षष्ठीत्वं प्रकल्पयिष्यति। तस्मादित्युत्तरस्येति (१।१।६७) वचनात्। अयं तर्हि दोषः। आप एत्वं भवेत् तस्मिन्नित्यादि। तस्मिन्नौकारे परतस्त्यदाद्यत्वे कृते स्त्रियां टापि हे अमी ब्राह्मणीत्यत्र सम्बुद्धौ चेत्येत्वं (७।३।१०६) स्याद् यथा हि हे खट्वे इत्यत्र। न झलीत्यनुवर्त्तनादिति। नायं दोषः। सम्बुद्धौ चेत्यत्र (७।३।१०६) बहुवचने (७।३।१०३) झल्येदित्यनुवर्त्तते। तेन झलादौ सम्बुद्धावेत्वेन भवितव्यम्। न चौकारे कृते झलादिः सम्बुद्धि र्भवति। किं तर्हि ? अजादिः। प्रत्ययस्थाच्च कादित्त्वं शीभावश्च प्रसज्येतेति। पूर्व्वकश्चकार स्तदर्थं। इतरः समुच्चये। अयं तर्हि दोषः। अमकी ब्राह्मणीत्यत्राज्ञाताद्यर्थविवक्षायामकचि कृते टापि च प्रत्ययस्थात् कादित्यादिना (७।३।४४) कात् पूर्व्वस्येत्त्वं प्राप्नोति। अमी ब्राह्मणीत्यत्रौङआप (७।१।१८) इत्यनेन शीभावोऽदमस्त्ववयव औकारे कृते टाबेव नास्तीति नैतद्दोषद्वयं सम्भवति। शीभावदोषश्च पाक्षिको वेदितव्यः। यस्मिन् पक्षे सामान्यग्रहणार्थो ङकारः प्रत्ययस्यासज्यते। यदा तु पूर्वसूत्रनिर्देश स्तदा द्विवचनयोरेव शीभावः। तयोरेव पूर्वाचार्य्यैर्ङित्त्वस्य कृतत्वादन्यस्य प्राप्तिरेव नास्ति। अङित्त्वात्।

## १०८। इदमो मः।

अलोऽन्त्यपरिभाषया (१।१।५२) मकारस्यैवानेन मकारेण भवितव्यम्। नच मकारस्य मकारादेशे कृते विशेषोऽस्ति। तत् किमर्थं मकारस्य मकार इत्युच्यत इत्येतच्चोद्यं निराकर्त्तुमाह मकारस्येत्यादि। गतार्थम्।

## १०९। दश्च।

इदमइति वर्त्तते। साविति निवृत्तम्। उत्तरसूत्रे पुनः साविति वचनात् तेनायं विभक्तिमात्रे दकारस्य मकारो भवति।

## ११० । यः सौ ।

उत्तरसूत्रे पुंसीति वचनात् स्त्रियामयं यकारः। अथ नपुंसके कस्मान्न विज्ञायते ? अशक्यमिदं विज्ञातुम्। नपुंसके हि स्वमोर्नपुंसकादिति (७।१।२३) सोर्लुका भवितव्यम्। अत्र सावुच्यमानः कथं तस्मिंल्लुप्ते यकारः स्यात्। प्रत्ययलक्षणेनेति चेत् ? न। न लुमताङ्गस्येति ( १।१।६३ ) प्रत्ययलक्षण-प्रतिषेधात्। तस्माद् युक्तमुक्तं स्त्रियामयं यकारइति।

## १११ । इदोऽय् पुंसि

## ११२ । अन्नाप्यकः ।

अनेनेति। त्यदाद्यत्वे पररूपत्वे च कृत इद्रूपस्यानादेशः। टाङसिङसामिनात्स्या इतीनादेशः ( ७।१।१२ )। आद् गुणः ( ६।१।८७ )। अनयोरिति। ओसि चेत्येत्वम् ( ७।३।१०४ )। अनादेशः। सुलोपः। पकारेणेति। अथ कपः पकारेण कस्मान्न भवति ? प्रयोजनाभावात्। ननु चेहेत्यत्र प्राग्-दिशीयायां विभक्तौ हलि लोपो ( ७।२।११३ ) यथा स्यादितीदमस्ति प्रयोजनम्। इदम इशितीशात्र ( ५।३।३ ) बाधकेन भवितव्यम्। अत्र चामिहकतमित्रेभ्य ( ४।२।१०४,वा ) इहेतग्रकृतेद्रूपलोपस्य हकारान्तस्येदमो निर्देशो लिङ्गम्।

## ११३ । हलि लोपः ।

पूर्वेणानादेशे प्राप्ते हलादाविद्रूपस्य लोपो विधीयते। आभ्यामिति। त्वदाद्यत्वम्। अतो गुणे ( ६।१।८७ ) पररूपत्वम्। सुपि चेति दीर्घत्वञ्च ( ७।३।१०२ )। अथालोऽन्त्यपरिभाषयान्त्यस्यायं ( १।१।५२ ) लोपः कस्मान्न भवतीत्याह नानर्थक इत्यादि। अभ्युपेत्यानर्थकेऽलोऽन्त्यविधिं परिहारान्तरमाह अथवेत्यादि। नचाल्-ग्रहणं कर्त्तव्यम्। यतस्तदनुवर्त्ततइत्यतआह अन्नाप्यक इत्यादि। यद्यपि तत्र प्रथमानिर्दिष्टं षष्ठीनिर्देशेन चेहार्थ स्तथापि हलीति सप्तम्यन्निति षष्ठीत्वं प्रकल्पयिष्यति। तस्मिन्निति निर्दिष्टे पूर्वस्येति ( १।१।६६ ) वचनात्। एष परिहारो भाष्यकारमतेन बोद्धव्यः। अस्याः परिभाषाया अनङ्गीकरणात्। अत्र दर्शने तु त्रयाणामकाराणां पररूपमेकादेशं कृत्वा दीर्घत्वादि विधेयम्।

## ११४ । मृजेर्वृद्धि ।

मार्ष्टेति । मृजू शुद्धौ । व्रश्चादिसूत्रेण (८।२।३६) षत्वम् । ष्टुत्वम् । मृजेः क्विबन्ताद् विभक्तावुत्पन्नायां कंसपरिमृड्भ्यां कंसपरिमृड्भिरित्यत्र वृद्धिः प्राप्नोति । नच क्विबाश्रयः क्ङिति चेति (१।१।५) वृद्धिप्रतिषेधो भवितु मुत्सहते । यस्मात् क्ङितीति निमित्तसप्तमी । नचात्र क्विम्निमित्ता वृद्धिः प्राप्नोति । किं तर्हि ? विभक्तिनिमित्ता । तस्मात् तस्याः प्रतिषेधो वक्तव्य इत्यत आह मृजेरिति धातुग्रहणमित्यादि । भ्रौणहत्यमिति (६।४।१७४) निपातनेन ज्ञापितोऽयमर्थो धातोः कार्य्यमुच्यमानं धातुप्रत्यय एव भवतीति । तेन कंसमृड्भ्यामित्यत्र न भवति । यो हि धातोरित्येवं विहितः स धातुप्रत्ययः । नच भ्यामादिकं धातोरित्येवं विहितम् । किं तर्हि ? प्रातिपदिकादित्येवम् । तस्मान्नासौ धातुप्रत्ययः । कंसपरिमृड्भ्यामित्यादि । पूर्व्ववत् षत्वे कृते षकारस्य जश्त्वं डकारः ।

## ११५ । अचो ञ्णिति ।

निश्चायनिष्पावाविति । निष्पूर्वाच्चिनोतेः पुनातेश्च परिमाणाख्यायां सर्वभ्य इति (३।३।२०) घञ् । इदुदुपधस्य चाप्रत्ययस्येति (८।३।४१) विसर्जनीयषत्वम् । कारो हार इति कृञो हृञश्च भावे घञ् । गौ गावौ गाव इति । गोतो णिदिति (७।१।९०) सर्वनामस्थानस्य णित्त्वम् । सखायौ सखाय इति । अत्रापि सख्युरसम्बुद्धाविति (७।१।९२) । जयतेर् यौतेश्चेति । जि जये । यु मिश्रणे । च्यवतेरिति । च्युङ् च्युङ् जुङ् प्रुङ् प्लुङ् गतौ । अज्ग्रहणमनिकोऽपि यथा स्याद् गौरिति । ननु णित्करणसामर्थ्यादेव तत्र भविष्यति । नैतदस्ति । अस्ति ह्यन्यत् णित्करणस्य प्रयोजनम् । किं तत् ? गावौ गाव इत्यवादेशे कृतेऽत उपधाया (७।२।११६) इति वृद्धिर् यथा स्यात् । यद्येवं गौरित्यत्रागुणविषये वृद्धिरियं कृतार्थेति कारयतीत्यादिषु परत्वाद् गुणेन बाध्येत । णित्करणसामर्थ्यान्न भविष्यतीति । एतच्चानुत्तरम् । णेरनिटीत्येव माटौ (६।३।५१) णित्करणस्य चरितार्थत्वात् । नैष दोषः । आचार्य्यप्रवृत्तिर् ज्ञापयति गुणविषयेऽपि वृद्धि र्भवतीति यदयं जागर्त्तेर् वृद्धिविषये प्रतिषेधविषये च जाग्रोऽविचिण्णल्ङित्स्विति (७।३।८५) पुनर्गुणं आरभते । यदि हि गुणविषये वृद्धि

नं स्यात् तदा जागरयतीत्यादिषु गुणोऽस्त्वेवेति तद्विषये गुणारम्भोऽनर्थकः स्यात्। वृद्धिविषयता चारम्भस्य चिण्णलोः प्रतिषेधाद् विज्ञायते। अथ योगविभागः किमर्थः? न ञ्णित्यत उपधाया इत्येवोच्येत? अशक्यमेवं वक्तुम्? एवं ह्युच्यमाने यद्यपि गावौ गाव इत्यत्रावादेशे कृते चायको लावक इत्यत्र गुणे कृतेऽयवादेशयोः कृतयोः सिध्यति गौः सखायौ जैत्रमित्यादौ तु न सिध्यति। अयवादेशयो गुणस्य च यथायोगमसम्भवात्। तस्माद् यथायोगं योगविभागः कर्त्तव्यः।

## ११६। अत उपाधायाः।

पाक इत्यादौ भावे घञ्। चजोः कुघिण्यतोरिति (७।३।५२) कुत्वम्। राग इति। घञि च भावकरणयो (६।४।२७) रित्यनुनासिकलोपः। पाचयतीति। हेतुमति चेति (३।१।२६) णिच्। चकासयतीति। उपधाग्रहणादिह चकारादकारस्य न भवति। तपरकरणं लाघवार्थम्। असति हि तस्मिन्नस्योपधाया इत्युच्यमाने गौरवं स्यात्। दीर्घनिवृत्त्यर्थं तु तपरकरणं न भवति। न दीर्घस्य कृतायां वृद्धौ कश्चिद् विशेषोऽस्ति।

## ११७। तद्धितेष्वचामादेः।

अचामिति निर्धारणे षष्ठी। अचामादेरचः स्थान इति। ननु चेक्परिभाषोपस्थानादिक एव स्थाने वृद्ध्या भवितव्यम्। तस्मादिकः स्थान इत्येवं वक्तव्यम्। न त्वचः स्थान इति। एवम्मन्यते। अचो ञ्णितीत्यतः स्थानिनिर्देशार्थं द्वितीयमज्ग्रहणमनुवर्त्तते। तेन यथाचो ञ्णितीत्यत्र (७।२।११५) स्थानिनिर्देशादिक्परिभाषा नोपतिष्ठते तथेहापीत्यदोषः। गार्ग्यो वात्स्य इति। गर्गादिभ्यो यञ् (४।१।१०५)। दाक्षिः प्लाक्षिरिति। अतइञ् (४।१।९५)। औपगवः कापटव इति। प्राग्दीव्यतीयोऽण् (४।१।८३)। अथ त्वाष्ट्रो जागत इत्यत्र त्वष्टृजगद्भ्यां तस्येदमित्यणि (४।३।१२०) कृते यथाक्रम मचो ञ्णितो-(७।२।११५) त्यज्लक्षणा वृद्धिः प्राप्नोति। अत उपाधाया (७।२।११६) इत्युपधालक्षणा वृद्धिः कस्मान्न भवतीत्याह अचामादेर्वृद्धिरन्त्योपधावृद्धिं बाधत इति। कथं पुनरन्यस्योच्यमानाऽन्यस्य बाधिका स्यात्? ज्ञापकात्। यदयमनुशतिकादिषु पुष्करसच्छब्दं पठति तज् ज्ञापयति यत्रादिवृद्धि स्तत्रान्या वृद्धि र्न भवतीति। तस्यानुशतिकादिषु पाठस्ये-

तत् प्रयोजनमुभयपदवृद्धिर्यथा स्यात् पुष्करसदोऽपत्यं पौष्करसादिरिति। बाह्वादिभ्यश्चेतीञ् (४।१।९६)। यदिचादिवृद्धिरन्यस्या वृद्धेर्बाधिका न स्यादुपधालक्षणेनैव वृद्धेः सिद्धत्वात् पौष्करसादिशब्दस्य पुष्करसच्छब्दोऽनुशतिकादिषु न पठ्येत। पश्यत्याचार्यो यत्रादिपदवृद्धि स्तत्रान्या वृद्धिर्न भवतीति यतोऽनुशतिकादिषु पुष्करसच्छब्दं पठति। ननु ठगर्थस्तत्र पाठः। तत्र ह्युपधालक्षणा वृद्धि र्न प्राप्नोतीति ठकोऽञ् णित्त्वात्। पुष्करसदा चरतीति पौष्करसादिक इति। नैतदस्ति। यदि पुष्करसच्छब्दाच्चरत्यर्थे ठगुत्पद्यते। कस्मात् पुनर्नोत्पद्यते? अनभिधानात्। अभिधानलक्षणा हि कृत्तद्धितसमासा भवन्तीति। तस्माज् ज्ञापक एवानुशतिकादिषु पाठः पुष्करसच्छब्दस्य।

## ११८। किति च।

यद्यपि तद्धितेष्विति बहुवचनान्तं प्रकृतं तथापीहैकवचननिर्देशादेकवचनविषयो बहुवचनस्य विपरिणामेन विज्ञायत इत्यत आह किति च तद्धिते परत इति। नाड़ायन श्चारायण इति। नड़ादिभ्यः (४।१।९९) फगिति फक्। आक्षिकः शालाकिक इति। अक्षिशलाकाशब्दाभ्यां तेन दीव्यति खनति जयति जितमितिठक् (४।४।२)। ठस्येकः (७।३।५०)।

इति बोधिसत्त्वदेशीयाचार्य्यश्रीजिनेन्द्रबुद्धिपादविरचितायां
काशिकाविवरणपञ्जिकायां सप्तमाध्यायस्य
द्वितीयः पादः समाप्तः ॥७।२॥

अथ

# काशिकाविवरणपञ्जिका ।

## सप्तमाध्यायस्य

## तृतीयः पादः ।

### १ । देविका-शिंशपा-दित्यवाड्-दीर्घसत्रश्रेयसामात् ।

तद्धितेष्वचामादेरित्यान्तरतम्यादैकारे वृद्धौ प्राप्तायां देविकादीनामाकारो विधीयते । अत्र पक्षत्रयं सम्भाव्यते । प्रकृतेनाङ्गेन देविकादयो विशिष्यन्ते । देविकादीनामङ्गानामिति । तैर्वाङ्गम् । देविकाद्यन्तस्याङ्गस्येति । अथवा तैराद्योऽच् । देविकादीनां सम्बन्धिनामचां मध्ये य आदिरजिति । तत्र यद्याद्यः पक्ष आश्रीयेत तदा देविकाकूले भवाः शालयो दाविकाकूलाः शालय इति न सिध्येत् । नह्यत्र देविकाशब्दोऽङ्गम् । किं तर्हि ? देविकाकूलशब्दः । ननु चाङ्गस्येत्यवयवषष्ठी । तत्रैवं विशेषणविशेष्यभावः करिष्यते । अङ्गस्य ये देविकादयोऽवयवभूता इति । भवति चेहावयवोऽङ्गस्य देविकाशब्दः । ततोऽयमदोष इति चेत् ? सत्यमेतत् । किन्त्वतिप्रसङ्गः स्यात् । सुदेविकायाम्भवः सौदेविक इत्यत्रापि स्यात् । अथ द्वितीयपक्ष आश्रीयेतैवमपि दाविकाकूलाः शालय इति न सिध्येत् । देविकादिभिः प्रकृतेऽङ्गे विशेष्यमाणे विशेषणे च तदन्तविधिरिति देविकाद्यन्तस्याङ्गस्येति भवितव्यम् । न तदादेः । तस्मात् तदादेरपि यथा स्यादिति यत्नान्तरमास्थेयमिति । तृतीये तु पक्ष आश्रीयमाणे विनापि यत्नान्तरेण केवलस्य तदादे स्तदन्तस्य भवति । सर्वत्राचामादेरचो देविकादिसम्बन्धित्वात् । अतस्तमेवाश्रित्याह देविकाशिंशपादित्यवाड्दीर्घसत्रश्रेयसइत्येषामित्यादि । एषां देविकादीनामचां मध्य आदिभूतो

योऽज् वृद्धेरैकारस्य प्रसङ्गे तस्याकारो विधीयते। पूर्वशांशपइति। पूर्ववदुत्तरपदस्य वृद्धिः। साप्यकारएव भवतीत्युत्तरपदाधिकारे देविकादीनामनुवृत्ते र्लभ्यते। वह्नीनरस्येद्वचनं कर्त्तव्यमिति। अकारस्य या वृद्धिः प्राप्नोति तद्बाधनार्थमेतत्। इकारे कृते या वृद्धिः प्राप्नोति सा तु भवत्येव। केचित्त्वित्यादि। कुण्डवाड्वादयः। विह्नीनो नरः कामक्रोधाभ्यामिति पृषोदरादित्वान्न लोपः। विह्नीनरस्यापत्यं वैह्नीनरिः। अतइञ् ( ४।१।९५ )।

## २। केकयमित्रयुप्रलयानां यादेरियः।

केकयमित्रयुप्रलयानामिति याद्यपेक्षयाऽवयवषष्ठी। यादेरित्येषापीयादेशापेक्षया स्थानषष्ठी। य आदि र्यस्य स यादिः। अकारसहितो यकार उकारसहितश्च। केकयादीनां योऽवयवो यादि स्तस्येयादेशो भवति। ननु च मित्रयुशब्दः परमप्रकृति र्न गोत्रम्। अपत्यं पौत्रप्रभृति गोत्र-( ४।१।१६२ ) मित्यपत्यविशेषस्य गोत्रसंज्ञाविधानात्। तत् कथं गोत्रादुच्यमानः प्रत्ययः परमप्रकृतेर्भवतीत्यत आह लौकिकं ह्येत्यादि। किं पुनर्लौकिकं गोत्रमित्यत आह लोके चेत्यादि। इह लौकिकं गोत्रं गृह्यते। लोके च ऋषिशब्दो गोत्रमित्यभिधीयते। मित्रयुशब्दश्चायमृषिवचनः। तस्मात् ततोऽपि गोत्रादुच्यमानः प्रत्ययो भवतीति। प्रालेयमिति। तत आगत इत्यण् ( ४।३।७४ )।

## ३। न य्वाभ्यां पदान्ताभ्यां पूर्व्वौ तु ताभ्यामैच्।

तद्धितेष्वचामादेरित्यादिना ञ्णिदादौ तद्धिते वृद्धौ प्राप्तायां प्रतिषेधोऽयमुच्यते। तत्सन्नियोगेनैजागमौ भवतः। यकारादैकार इत्यादिना यथासंख्येन सम्बन्धं दर्शयति। वैयसनमिति। असु क्षेपणे। विपूर्वाद् विशेषेणास्यते क्षिप्यते येनेति करणे ल्युट्। प्रादिसमासः। यणादेशः। ततस्तत्र भव इत्यण् (४।३।५३)। तत्र यकारात् पदान्तात् परस्याकारस्य वृद्धि र्न भवति। तस्मात् पूर्वमैजागमः। वैयाकरणइति। विशेषेणाक्रियन्ते व्युत्पाद्यन्ते शब्दा अनेनेति करणे ल्युट्। व्याकरणमिति। प्रादिसमासः। ततस्तदधीते तद्वेद ( ४।२।५९ ) इत्यण्। तत्र पर्जन्यवल्लक्षणप्रवृत्त्या पदान्ताद् यकारात् परस्य या वृद्धिः प्राप्नोति सा न भवति। तस्मात् पूर्वमैजागमः। सौवश्वइति। शोभनोऽश्वः स्वश्वः। पूर्ववत्

समासः। ततोऽपत्यार्थे शिवाद्यण् (४।१।११२)। अत्र वकारात् पदान्तात् परस्य वृद्धि र्न भवति। तस्मात् पूर्वमैजागमो भवति। न्यार्थिरिति। ना अर्थो यस्य स न्वर्थः। तस्यापत्यमतइञ् (४।१।९५) याष्टीकइति। शक्तियष्ट्योष्टीकक् (४।४।५९)। याताइति। इणः परस्य लटः शत्रादेशः। इणो यणिति (६।४।८१) यण्। ततस्तस्येदमित्यण् (४।३।१२०)। तत्रोभयत्रापि यकारस्य पदान्तता नास्ति। अथ प्रतिषेधवचनं किमर्थम्? उच्यते। यस्मात्र प्राप्तायां वृद्धावैचौ विधीयमानौ तस्या बाधकौ भविष्यतः। यथा ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्यायेति दधिदानस्य तक्रदानं बाधकम्। अथापि बाधकौ न स्यातां तथापि नित्यत्वादैचोः कृतयोः पश्चाद्वृद्धि र्भवन्ती तयोरेव भविष्यतीति। नचात्र शब्दान्तरप्राप्त्या तयोरप्यैचोरनित्यत्वमाशङ्कनीयम्। नहि तौ शब्दान्तरस्य विधीयेते। अपित्वभक्ताविव य्वाभ्यां पूर्वौ। यद्यपि शब्दान्तरस्य प्राप्तिः स्यात् तथापि द्वयोरनित्ययोः परत्वादैचोः कृतयोः सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति (प,४१) पुनर्वृद्धि र्न भवति। यद्यपि पुनः प्रसङ्गविज्ञानाद्वृद्धिः स्यात् तथापीष्टसिद्धिः स्यादेव। विशेषाभावादित्यत आह प्रतिषेधवचनमित्यादि। प्रकॢप्तिः प्रकल्पनं व्यवस्थेत्यर्थः। यत्र य्वाभ्यां परस्य वृद्धेः प्रतिषेधः स ऐचो र्विषयः कथन्नाम प्रकल्प्येत? व्यवतिष्ठेतेत्येवमर्थः। प्रतिषेध उच्यते? किमर्थं पुनरैचोर्विषयप्रकॢप्तिः क्रियत इत्यत आह इह मा भूदिति। यदि प्रतिषेधवचनेनैचो र्विषयव्यवस्था न क्रियेत तदा दाध्यश्वि र्माध्वश्विरित्यत्रापि स्यात्। अतो मा भूदेष दोष इति प्रतिषेधवचनेनैचोर्विषयव्यवस्था क्रियते। दधिप्रियोऽश्वो दध्यश्वः। मधुप्रियोऽश्वो मध्वश्वः। समानाधिकरणाधिकारे शाकपार्थिवादीनां समास उत्तरपदलोपश्चेति मध्यपदलोपी समासः (६।१।६०, वा)। अथ क्रियमाणे प्रतिषेधवचने कस्मादेवात्र न भवति? यावता य्वाभ्यां परस्य वृद्धि र्नास्तीत्यत आह न ह्यत्रेत्यादि। प्रसङ्गे हि सति वृद्धेः प्रतिषेधो भवति। नासति। नचात्र य्वाभ्यां परस्य वृद्धेः प्रसङ्गोऽस्ति। अतः प्रतिषेधो नास्त्यत्रेत्यभिप्रायः। ननु चाचामादेरित्यनुवर्त्तते। तेन य्वौ विशिष्येते। अचामादेरचः स्थाने यौ य्वाविति। नच दाध्यश्विरित्यादावेवंविधौ तौ स्त इति। नचात्रैचौ भविष्यतः। अतो नार्थः। नैतदस्ति। एकं ह्यचामादिग्रहणम्। तेन यदि य्वौ विशिष्येते तदा वृद्धिरविशेषिता स्यात्। ततश्चेहापि वृद्धेः प्रतिषेधः स्यात्। द्वे अशीती भृतो भूतो भावी वा। प्राग्वतेष्ठञ् (५।१।१८)। द्व्याशीतिक इति।

अथ वृद्धिर्विशिष्येत । अचामादेरित्येवं या वृद्धिस्ततो न भवत्येष दोषः । नह्यत्रा-चामादेरित्येवं वृद्धिः । किं तर्हि ? संख्यायाः संवत्सरसंख्यस्य चेत्येवम् (७।३।१५) । किन्तर्हि यौ न विशेषितौ स्यातां ? ततश्च दाण्ड्यश्विरित्यादावैचौ स्यातामेव । तस्मात् तयो विषयव्यवस्थार्थं नेति वक्तव्यम् । उत्तरपदवृद्धेरप्ययं प्रतिषेध इष्यत इति । स चोत्तरपदाधिकारेऽस्यानुवर्त्तमानात्लभ्यते । पूर्वैयलिन्द इति । अत्र दिशोऽ-मद्राणामित्युत्तरपदवृद्धौ (७।३।१३) प्राप्तायां प्रतिषेधः । यद्युत्तरपदवृद्धेरप्ययं प्रतिषेधस्तदा द्व्याशीतिक इत्यत्रापि संख्यायाः संवत्सरसंख्यस्य चेति (७।३।१५) या वृद्धिरुत्तरपदस्य प्राप्नोत्यस्या अपि प्रतिषेधः स्यादित्यत आह यत्र त्वित्यादि । कथं पुनरिष्यमाणोऽप्यत्र प्रतिषेधो न भवति ? उत्तरपदस्याचामाद्येनाचा हि यौ विशेषणत्वात् । उत्तरपदसम्बन्धी योऽचामादिरच् तस्य स्थाने यौ यौ ताभ्या मुत्तरपदस्य वृद्धि र्न भवति । न च द्व्याशीतिक इत्यत्रोत्तरपदस्याचामादेरचः स्थाने यकार इति नात्र वृद्धेः प्रतिषेधो भवतीति ।

## ४ । द्वारादीनाञ्च ।

दौवारिक इति । तत्र नियुक्त (४।४।६९) इति ठक् । द्वारपालस्येदं दौवारपालमिति । तस्येदमित्यण् (४।३।१२०) । प्रायेण तु पुस्तकेषु द्वार-पालस्येदं दौवारपालिकमिति पाठः । स चायुक्तः । नहि तस्येदमित्यत्रार्थे (४।३।१२०) द्वारपालशब्दात् लक्षणेन केनचिट् ठग् विहितः । क्वचित् पुनर्द्वारपालस्यापत्यं दौवारपालिकइति पाठः । तत्र रेवत्यादिभ्यष्ठगिति (४।१।१४६) ठक् । ननु तत्र द्वारपालीशब्दः पठ्यते । नतु द्वारपालशब्दः । एवं तर्हि मन्यते द्वारपालशब्द स्तत्र पठितव्यः । स द्वारपालीशब्दमपि ग्राह-यिष्यति । प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति (प,७१) न्यायात् । ये तु तत्र द्वारपालशब्दं न पठन्ति तेऽपत्यार्थे दौवारपालिरितीञन्तमुदा-हरन्ति । कथं पुनर्द्वारस्य गणे पाठे द्वारपालस्य भवति ? अत्रापि द्वारादिभि राद्यचो विशेषणात् । द्वारादीनां शब्दानामचां मध्ये य आदिरजिति । वक्ष्यमाणाद्वा तदादिविधे र्ज्ञापकात् । सौवर इति । स्वरमधिकृत्य कृतो ग्रन्थ इत्यधिकृत्य कृते ग्रन्थ इत्यण् (४।३।८७) । सौवर्य्ये इति । टिड्ढाण-ञिति (४।१।१५) ङीप् । वैयल्कश इति । तत्र भव (४।३।५३) इत्यण् ।

सौवस्तिकइति। तदाहेति मा शब्दादिभ्य उपसंख्यानमिति ठक् (४।४।१, वा)। सौवर्गमनिकइति। आहौ प्रभूतादिभ्य उपसंख्यानमिति ( ४।४।१,वा) ठक्। पूर्वणैव सिद्धमिति। वकारस्य पदान्तत्वात्। तत्रैतत् स्यात्। यद्येवं व्युत्पत्तिः क्रियते स्वोऽध्यायः स्वाध्याय स्तदाऽपदान्तत्वान्न प्राप्नोति। तस्यां व्युत्पत्तावर्थवान् स्वाध्यायशब्दस्य पाठ इत्यतआह अथाप्येवमित्यादि। कथं पुनः स्वशब्दात् स्वाध्यायशब्दस्य सिद्धतीत्याह तदादावपि हीत्यादि। (A) स्फेयकृतइति। ऋष्यन्धकवृष्णिकुरुभ्यश्चेत्यण् (४।१।११४)। सौवादुमृदव इति। अत्रापि तस्येदमित्यण् ( ४।३।१२० )। एवं शौवनमित्यत्रापि। शौवमिति। न स्वाङ्गित ( ६।४।११४ ) इति टिलोपः। शौवादंष्ट्र इति। अन्येषामपीति ( ६।३।१३७ ) दीर्घः।

## ५। न्यग्रोधस्य च केवलस्य।

नैयग्रोधइति। तस्य विकार इत्यण् ( ४।३।१३४ )। न्यग् रोहतीति न्यग्रोधइति। न्यञ्चतीति ऋत्विगादिनाऽञ्चतेः ( ३।२।५९ ) क्विन्। क्विन्-प्रत्ययस्य कुरिति ( ८।२।६२ ) कुत्वं ककारः। नैयग्रादेशः। न्यक्पूर्वाद्रुहेः पचाद्यच्। तत्र न्यङ्ग्वादीनाञ्चेति ( ७।३।५३ ) हकारस्य धकारः। झलाञ्जशोऽन्तइति ककारस्य गकारः। लघूपधगुणः। एवं यदा न्यग्रोधशब्दो व्युत्पाद्यते तदा पदान्तत्वाद् यकारस्य न य्वाभ्या ( ७।३।३ ) मित्यादिनैव सिद्धे नियमार्थमेतत् केवलस्यैव यथा स्यात्। तदादेर्मा भूदिति। अव्युत्पत्तिपक्षे विध्यर्थमेतदिति। अपदान्तत्वाद् यकारस्य।

## ६। न कर्मव्यतीहारे।

यदुक्तमिति। वृद्धिप्रतिषेध ऐजागमश्च। व्याक्रोशीत्यादि। क्रुश आह्वाने। लिख अक्षरविन्यासे। चर्च अध्ययने चुरादिः। हसे हसने। एभ्यो व्यवपूर्वेभ्यो णच्। तदन्तादञ्। अत्र यथोक्ते कार्ये प्रतिषिद्धे वृद्धिरेव भवति द्वौ प्रतिषेधौ प्रकृत्यर्थं गमयत इति कृत्वा। टिड्ढाणञिति ( ४।१।१५ ) ङीप्।

---

(A) स्वार्थिकस्वाभाविकादयस्तु भाष्यकारप्रयोगप्रामाण्यात् साधवः। अन्यच्च जगत् स्वास्थ्यमतीवापिति भ्स्वास्थ्य महर्दिवं दिव इत्यादि।

## ७ । स्वागतादीनाञ्च ।

स्वागतिकइति । शोभनमागतं स्वागतम् । तदाहेत्यादौ प्रभूतादिभ्य उपसंख्यानमिति ठक् ( ४।४।१,वा )। स्वाध्वरिक इति । अत्रापि चरतीति ( ४।४।८ ) ठक् । शोभनोऽध्वरः स्वध्वरः । स्वाङ्गिरित्यादि । स्वाङ्गिर्व्याङ्गिर्व्याड़िरिति । अत ( ४।१।९५ ) इञ् । शोभनान्यङ्गान्यस्य स्वङ्गः । विगतान्यङ्गान्यस्य व्यङ्गः । विगतोऽड़ोऽस्य व्यड़ः । व्यवहरणं व्यवहारः । भावे घञ् । ननु च व्यवहारशब्दोऽयं कर्मव्यतीहारे वर्त्तते । तत्र न कर्मव्यतीहार ( ७।३।६ ) इति प्रतिषेधः सिद्धः । तत् कस्मादिह पठ्यत इत्याह व्यवहारशब्दोऽयमिति । किं पुनर् लौकिकम् ? लौकिकं पुनर्वृत्तं येनाचारेण व्यवहरल्लोके व्यावहारिक इत्युच्यते तद्वेदितव्यम् । स्वापतेयमिति । पथ्यतिथिवसतिस्वपतेर्ढञ् ( ४।४।१०४ )। कथं पुनरत्र प्राप्तिर्यावता नास्य वकारः पदान्तइत्याह द्वारादिषु स्वशब्दपाठादस्य प्राप्तिरिति । तदादिविधिर्नेत्यभिप्रायः । यथा तदादिविधिर्भवति तथा तत्रैवोक्तम ।

## ८ । श्वादेरिञि ।

श्वाभस्त्रिः श्वादंष्ट्रिरिति । श्वेव भस्त्रा यस्य शुन इव दंष्ट्रा यस्येति बहुव्रीहिः । उपसर्जनह्रस्वत्वम् । केन पुनः श्वादेर्वृद्धिप्रतिषेधः प्राप्नोति ? यतोऽयं प्रतिषेध उच्यते । न ह्यस्य वकारः पदान्तइत्यत आह श्वशब्दो द्वारादिषु पठ्यतइति । ननु च केवलः श्वशब्दो द्वारादिषु पठ्यते तत्र कः प्रसङ्गो य स्तदादेः स्यात् ? यस्मिन् विधिस्तदादावल्ग्रहणइति (प, ३४) तदादिविधिरिति चेत् ? नैतदस्ति । सप्तमीनिर्द्दिष्टे ह्यल्ग्रहणे च सति तदादिविधिर्भवति । नचात्रैतदुभयमस्तीत्यत आह तत्र चेत्यादि । यदि तत्र तदादिविधिर्न स्यात् तदेतत् प्रतिषेधवचनमनर्थकं स्यात् । प्राप्त्यभावादित्यभिप्रायः । ज्ञापकस्य प्रयोजनं शौवादंष्ट्रो मणिरित्यादौ वृद्धिप्रतिषेधः । इकारादिग्रहणं कर्त्तव्यमिति । इकारादितद्धितो गृह्यते येन तदिकारादिग्रहणं व्याख्यानं कर्त्तव्यमित्यर्थः । किमर्थमित्याह श्वागणिकाद्यर्थमिति । श्वागणिकादीनामर्थः प्रयोजनं यस्मिंस्तत् तथोक्तम् । अर्थस्तु तेषामादिवृद्धिरेव । तत्रेदं व्याख्यानम् । इञ्ग्रहणमिहेकारादे स्तद्धितस्योपलक्षणार्थम् । तेनान्यत्रापि तद्धिते प्रतिषेधो भवतीति ।

ःदन्तस्येति। इञन्तस्यान्यत्रापीति। अणि। कथं पुनरिष्यमाणोऽन्यत्र लभ्यते? यावतान्यत्रापि तद्धित उत्पन्न इञो यस्येति चेति (६।४।१४८) लोपेन भवितव्यम्। नैष दोषः। इञीति नेयं निमित्तसप्तमी। किं तर्हि? परसप्तमी। निमित्तसप्तम्यामणनिमित्ताया वृद्धेः प्रतिषेधस्य प्रतिषेधो न स्यात्। परसप्तम्यां तु यद्यपि लोपः क्रियते तथापि स्थानिवद्भावात् प्रतिषेधः सिध्यति। श्वाभस्त्रमिति। इञश्चेत्यण् (४।२।११२)।

## ९। पदान्तस्यान्यतरस्याम्।

पूर्वेण नित्ये प्राप्ते प्रतिषेधे विकल्प उच्यते। पदान्तस्येति। पदशब्दान्तस्येत्यर्थः। श्वापदमिति। शुन इव पदमस्येति श्वपदः। तस्येदं श्वापदम्। शौवापदमिति। अन्येषामपि दृश्यत (६।३।१३७) इति दीर्घः।

## १०। उत्तरपदस्य।

अङ्गस्याचामादेरचो वृद्धौ प्राप्तायामिदमुच्यते। ननु चावयवादृतो (७।३।११) रित्यादौ पञ्चमीनिर्देशादन्तरेणाप्युत्तरपदाधिकारं तस्मादित्युत्तरस्ये-(१।१।६७) त्युत्तरपदस्यैव भविष्यति। तत् किमुत्तरपदाधिकारेणेत्यत आह यत्रेत्यादि। आदिशब्देन हृद्भगसिन्ध्वन्ते पूर्वपदस्य (७।३।१९) नुशतिकादीनाञ्च (७।३।२०) देवताद्वन्द्वे (७।३।२१) चेत्येवमादयो गृह्यन्ते। एषु पञ्चमीनिर्देशाभावादसत्युत्तरपदाधिकारेऽङ्गस्याचामादेरचएव वृद्धिः स्यात्। नोत्तरपदस्य। तस्मात् तदर्थमुत्तरपदाधिकारः क्रियते। यद्येवमिह्रावयवादृतो (७।३।११) रित्येतन्नोपन्यसनीयम्। अत्र पञ्चमीनिर्देशस्य विद्यमानत्वादिति चोद्यमाशङ्क्याह—यार्थं क्रियमाणस्य यत्रापि पञ्चमीनिर्देशोऽस्ति तत्रापि प्रासङ्गिकं कार्यमाह पञ्चमीनिर्देशेष्वपीत्यादि। प्रयोजनान्तरमप्याह वृद्धेश्चेत्यादि। उत्तरपदाधिकारे या विहिता वृद्धिरित्येष व्यपदेशो वृद्धेर्यथा स्यादित्येवमर्थञ्चोत्तरपदाधिकारः क्रियते। किं पुनः कारणमेवं वृद्धेर्व्यपदेशः प्रार्थ्यत इत्याह उत्तरपदवृद्धावित्यादि। उत्तरपदाधिकारे विहिते वृद्धिमत्युत्तरपदे पूर्वपदस्यान्तोदात्तत्वं यथा स्यादित्येवमर्थम्। उत्तरपदवृद्धौ सर्वञ्चेत्यत्रोत्तर-(६।२।१०५) पदाधिकारे या विहिता वृद्धिरित्येवं विज्ञायते। एतत् कथं शक्यते विज्ञातुम्? यदि व्यपदेशार्थ उत्तरपदाधिकारः क्रियते। नान्यथा। तस्माद् व्यपदेशार्थश्चोत्तरपदाधिकारः कर्तव्यः।

## ११ । अवयवादृतोः ।

ऋतोरिति। नेदं स्वरूपग्रहणम्? किं तर्हि? अर्थग्रहणम्। तथाह्य-वयवादित्युच्यते। ऋतोश्चार्थ एवावयवो भवति। अवयवित्वेनर्त्तौ विज्ञाय-मानेऽर्थनिर्द्देशोऽयं विज्ञायते। ततश्चावयववाचिनः पूर्वपदादुत्तरस्यर्त्तुवाचिनः कार्य्यं विज्ञायत इत्याह अवयववाचिन इत्यादि। एकदेशिसमासइति। पूर्वापरादि-सूत्रेण (२।२।१)। ननु ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते (प,३२)। तत् कथं वर्षाहेमन्ताभ्यां प्रत्ययो विधीयमानस्तदन्ताभ्यां लभ्यत इत्याह तत्र ऋतो वृद्धिमद्विधाववयवानामिति। पौर्ववर्षिक इति। पूर्वाश्च ता वर्षाश्चेति विशेषणसमासं कृत्वा भावार्थे तद्धितो विधेयः। पूर्वशब्दोऽत्र कालवाची। नत्ववयववाचीत्यङ्गस्यादिवृद्धिरेव भवतीति। अथात्रापि तदन्त-विधिना ठक् कस्मान्न भवतीत्याह अवयवपूर्वस्यैव हीत्यादि।

## १२ । सुसर्व्वार्द्धाज्जनपदस्य ।

जनपदस्येति। नेदं स्वरूपग्रहणम्। उत्तरसूत्रेऽमद्राणामिति निषेधात्। उत्तरसूत्रे हीदमेव जनपदग्रहणमनुवर्त्तते। ततोऽत्र यदि स्वरूपग्रहणं स्यान्मद्राणां प्रतिषेधोऽनर्थकः स्यात्। तस्मादर्थस्येदं ग्रहणम्। तेन जनपदवाचिनः कार्य्यं विज्ञायत इत्याह सुसर्वार्द्धेत्येतेभ्य उत्तरस्य जनपदवाचिन इत्यादि। सुपाञ्चा-लक इति। शोभनाः पञ्चालाइति प्रादिसमासः। सर्वपाञ्चालक इति। पूर्व्व-कालैकेत्यादिना (२।१।४९) कर्मधारयः। अर्द्धपाञ्चालकइति। अर्द्धं नपुंसक (२।२।२) मित्यर्द्धशब्देन तत्पुरुषः। सर्व्वत्र शैषिके जातादावर्थे तद्धितः। कथं जनपदाज्जनपदतदवध्योश्चेत्युच्यमानः (४।२।१२४) प्रत्ययस्तदन्ताद् भवतीत्याह सुसर्व्वार्द्धदिकशब्देभ्यइत्यादि।

## १३ । दिशोऽमद्राणाम् ।

पूर्वपाञ्चालक इति। पूर्वेषु पञ्चालेषु भव इति तद्धितार्थे समासः। ततो वुञ्। दिश इति किम्? पूर्व्वं पञ्चालानां पूर्व्वपञ्चालः (B)। पूर्वापरादि

(B) चिन्त्यमिदम्। एकाधिकरणस्याभावात्। जनपदत्वेन बहुत्वन्तु नानेकाधिकरणवदिति केचित्।

( २।२।१ ) सूत्रेणैकदेशिसमासः। तत्र भवः पौर्वपञ्चालः (C)। दिशि यो वर्त्तते स इह दिक्छब्दोऽभिप्रेतः। नचायं पूर्वशब्दो दिशि वर्त्तते। किं तर्हि? अवयवे। तेन पूर्वपदवृद्धिरेव भवति। योगविभाग उत्तरार्थः। प्राचां ग्रामनगराणां दिश एवोत्तरपदस्य यथा स्यात्। सुसर्वार्द्धाज्जा भृदिति।

## १४। प्राचां ग्रामनगराणाम्।

जनपदस्येत्यनुवर्त्तते। तेन प्राचामित्येतद् देशग्रहणं विज्ञायते। नत्वाचार्य्यग्रहणमिति मत्वाह प्राचां देशे ग्रामाणामित्यादि। पूर्वेषुकामशमइति। पूर्वा चासाविषुकामशमी चेति दिक्संख्ये संज्ञाया मिति ( २।१।५० ) समासः। ततो भवार्थे दिक्पूर्वपदादसंज्ञायां ञ इति ( ४।२।१०७ ) ञः। पूर्व्वपाटलिपुत्रकइति। पूर्वस्मिन् पाटलिपुत्रे भवइति पूर्ववत् तद्धितार्थे समासः। रोपधेतोः प्राचामिति ( ४।२।१२३ ) वुञ्। ननु चैकमेव पाटलिपुत्रम्। तत्र पाटलिपुत्रान्तरस्य व्यवच्छेद्यस्याभावात्। तत् कथं पूर्वशब्देन पाटलिपुत्रशब्दो विशिष्यते? पाटलिपुत्रैकदेशे पाटलिपुत्रशब्दो वर्त्तत इत्यदोषः। अथ नगरग्रहणं किमर्थम्? न ग्रामाणामित्येव सिद्धम्। नगरमपि हि ग्रामो भवत्येव। जननिकायनिवासे ग्रामो रूढ़ः। नगरञ्च जननिकायनिवास एव। अतश्च नगरमपि ग्रामः। यतो ये ग्रामे विधयो नेष्यन्ते नगरेऽपि ते न क्रियन्ते। तथाह्यभक्ष्यो ग्राम्यकुक्कुटः। अभक्ष्यो ग्राम्यशूकर इत्युक्ते नागरोऽपि न भक्ष्यते। ग्रामे नाध्येतव्यमित्युक्ते नगरेऽपि नाधीयते। तस्मान्नगरमपि ग्रामः। एवञ्च कल्वोदोच्यग्रामाच्च ( ४।२।१०८ ) बह्वचोऽन्तोदात्ताद् वाह्लीकग्रामेभ्यश्च (४।२।११७) दिक्छब्दा ग्रामजनपदाख्यान-चानराटेष्वित्यत्र ( ६।२।१०३ ) ग्रामग्रहणेन नगरग्रहणमपि भवतीत्याह ग्रामत्वादेवेत्यादि। यदि तर्हि नगरमपि ग्राम स्तदा विशिष्टलिङ्गो नदीदेशोऽग्रामा इत्यत्र ( २।४।७ ) नगरग्रहणं प्राप्नोति। सत्यमेतत्। तत्र तु नगराणां प्रतिषेधो वक्तव्यः। सएव च सम्बन्धभेदः कुतो हेतो र्भवति यस्य प्रतिपत्तये ग्रामनगरयोर्भेदेनोपादानं क्रियत इत्याह दिक्पूर्वपदो हीत्यादि। यदि हि यथा दिक्पूर्व्वपदः पूर्व्वोत्तर

(C) "पौर्वपञ्चालकः" with वुञ् is in my Ms. No. 19. But वुञ् is inapplicable. Says नागेश—"अत्र पूर्वशब्दो देशवाची। कालवाचीत्यपि कश्चित्। दिक्शब्दपदेन च दिग्वाचिशब्दस्यैव ग्रहणम्। अतोऽत्र तदन्तविधिविषयाभावान्न वुञ्"।

समुदायः पूर्व्वेषुकामशम्यादि ग्रामनामधेयं तथा नगरनामधेयमपि स्यात् ततः सम्बन्धो न भिद्येत। यथा च पाटलिपुत्रादि शब्दरूपमुत्तरपदभूतमेव नगरस्य वाचकं तथा यदि ग्रामनामधेयमपि ग्रामस्य स्यादेवमपि सम्बन्धो न भिद्येत। न चैवम्। अन्यादृश एव हि पूर्व्वोत्तरसमुदायात्मको ग्रामवाचो शब्दः। अन्यादृश श्चोत्तरपदात्मको नगरवाचो शब्दः। तस्माद् ग्रामनगरयो र्भेदात् सम्बन्धभेदो भवति। एवं सम्बन्धभेदहेतुं दर्शयित्वा सम्बन्धभेदं दर्शयन्नाह तत्रे त्यादि। ग्रामवाचिनामिति। पूर्वेषुकामशमीत्येवमादीनाम्। अवयवस्येति। इषुकामशमीकृष्णमृत्तिकेत्येवमादेः। दिक्शब्दादिति। पूर्व्वादेः। इतरत्र त्वित्यादि। नगरेषु। दिश उत्तरेषां नगराणामिति। अत्र वृद्धि र्भवतीत्यभिसम्बन्धः क्रियत इत्येतदपेक्षते। पूर्वेषुकामशमइत्येवमादिषु पूर्वोत्तरपदयोरन्तरङ्गत्वादाद् गुणे कृते दिक्शब्दो ग्रामशोत्तरपदं नास्तीति वृद्धि र्न प्राप्नोति। वृद्धि र्हि तद्धिते कृते तदाश्रयेण भवन्तीति बहिरङ्गा भवति। प्रागेव तद्धितोत्पत्ते र्गुणः प्राप्नुवन्नन्तरङ्गो भवति। नच वचनाद्वृद्धि र्भविष्यतीति शक्यते वक्तुम्। यत्र ह्येकादेशो नास्ति स च वचनस्यावकाशः पूर्वकार्ष्ण-मृत्तिकइत्येवमादौ। नचान्तादिवद्भावोऽस्ति। उभयत आश्रये नान्तादिवदिति प्रतिषेधात्। अत्र पूर्वपदमुत्तरपदञ्चाश्रीयत इति य श्चोदयेत् तं प्रत्याह पूर्वेषु-कामशमइत्येवमादिष्वित्यादि। यथा नेन्द्रस्य परस्येति (७।३।२२) निर्द्देशे नायमर्थो ज्ञापित स्तथाऽदस औ सुलोपश्चेत्यत्र (७।२।१०७) प्रतिपादितः। ग्रामनगराणामिति बहुवचनं स्वरूपविधिनिरासार्थम्।

## १५। संख्यायाः संवत्सरसंख्यस्य च।

द्विसांवत्सरिक इति। पूर्व्ववत् तद्धितार्थे समासः। ततः प्राग्वतीयष्ठञ्(D)। द्विषाष्टिकः द्विसाप्ततिक इति। ननु च तमधीष्टो भृतो भूतो भावीत्यत्र (५।१।८०) कालादिति (५।१।७८) वर्त्तते। न द्विषष्ट्यादिः कालशब्दः। किं तर्हि? संख्याशब्दः। तत् कथं कालाधिकारविहितं प्रत्ययमुत्-पादयतीत्याह द्विषष्ट्यादिशब्दइत्यादि। कालवाचिशब्दस्तत्र कालग्रहणेन गृह्यते। द्विषष्ट्यादिशब्दो हि यदा वर्षेषु संख्येयेषु वर्त्तते तदा कालवृत्तित्वात्

(D) क्वचिदार्हीय प्रागिति पाठः। स चायुक्तः। आर्हीये तु तस्याध्यर्धपूर्वेति (५।१।२८) लुक् स्यात्।

कालशब्दो भवति। ततः कालाधिकारीयं प्रत्यय मुत्पादयति। अथ संवत्सरग्रहणं किमर्थम्? यावता परिमाणान्तस्यासंज्ञाशाणयोरित्यत्र (७।३।१७) परिमाणशब्देन परिच्छेदहेतुमात्रं गृह्यते। ननु प्रस्थादिवदारोहपरिणाहपरिच्छेदहेतुः। अन्यथा हि शाणप्रतिषेधोऽनर्थकः स्यात्। नहि शाणः परिमाणमारोहपरिणाहपरिच्छेदहेतुः। अतः कालोऽपि परिच्छेदहेतु र्भवति। ततश्च सोऽपि परिमाणमिति संवत्सरशब्दस्य परिमाणस्यासंज्ञाशाणयोरित्येव सिद्धमिति चोद्यनिरासायाह संवत्सरग्रहणमित्यादि। परिमाणग्रहणेन कालपरिमाणस्य ग्रहणं मा भूदित्येवमर्थं संवत्सरग्रहणम्। संवत्सरग्रहणेनानावयवौ ज्ञाप्यते। परिमाणग्रहणे कालपरिमाणग्रहणं न भवतीति। ततश्च यत्र परिमाणग्रहणं तत्र कालपरिमाणं न गृह्यते। तेनेत्यादिना परिमाणग्रहणे कालपरिमाणस्याग्रहणे सति यदिष्टं सिध्यति तद्दर्शयति। उत्तरपदवृद्धि र्न भवतीति परिमाणान्तस्येत्यादिना। द्विवर्षेति। द्वे वर्षे भृतो भृतो भावी वा पूर्ववट् ठक्। तस्य वर्षाल्लुगित्यनु-( ५।१।८८ ) वर्त्तमाने चित्तवति नित्यमिति ( ५।१।८९ ) लुक्। पर्य्युदासो न भवतीति। ङीप्प्रतिषेधे कर्त्तव्ये तेन प्रतिषेधः प्रवर्त्तत एवेति। द्विगोरिति ( ४।१।२१ ) ङीप्न भवति।

## १६। वर्षस्याभविष्यति।

द्वे वर्षे अधीष्टो भृतो वा कर्म्म करिष्यतीति द्विवार्षिको मनुष्य इति। अत्राधीष्टभृतयो स्तद्धित उत्पन्ने भविष्यत्ता प्रतीयते। तस्मात् तयोरपि प्रतिषेधेन भवितव्यमिति कस्यचिद् भ्रान्तिः स्यात्। अतस्तान्निराकर्त्तुमाह अधीष्टभृतयोरित्यादि। किं पुनः कारणं न भवतीत्याह गम्यते हीत्यादि। तत्र यदि शब्दान्तरं द्वे वर्षे अधीष्टो भृतो वा कर्म करिष्यतीति प्रयुज्यते ततो भविष्यत्ता गम्यते। नान्यथा। तस्मान्नासौ तद्धितार्थ इत्यधीष्टभृतयोरभविष्यतीति प्रतिषेधो न भवति। ननु च मनुष्येऽभिधेये चित्तवति नित्यमिति ( ५।१।८९ ) ठञो लुका भवितव्यम्। तत् कथं द्विवार्षिको मनुष्य इति सिध्यति। नैष दोषः। नह्यामावविशेषेण लुक्। किं तर्हि? विशिष्टएव विषये। कथं तत्र नित्यग्रहणं कर्त्तव्यम्? पूर्वेणैव सिद्ध आरम्भसामर्थ्यादेव नित्यं लुग् भविष्यतीति। तत् कृतं विशिष्टे विषये भूते यथा स्याद-

धौष्टादौ मा भूदितीत्येवमर्थम् । तेनाधौष्टादौ वर्षाल्लुगिति ( ५।१।८८ ) विभाषैव लुग् भवति ।

## १७ । परिमाणान्तस्यासंज्ञाशाणयोः ।

संज्ञायाः परत्वं न सम्भवतीत्यतः संज्ञाशाणयोरिति विषयसप्तमीं दर्शयन्नाह संज्ञायां विषय इत्यादि । शाणे चोत्तरपद इति । विषय इत्यपेक्षते । यद्युत्तरपदस्य शाणस्य परत्वमुपपद्यते तथापि दुर्घटमेकस्याः सप्तम्या विषयसप्तमीत्वं परसप्तमीत्वञ्चेति । तेन शाणशब्दमप्युत्तरपदं प्रति विषयसप्तम्येषा युक्ता । द्विकौड़विकमिति । प्राग्वतेष्ठञ् (५।१।१८) । अनार्हीयत्वाच्च प्रत्ययस्याध्यर्द्धपूर्व्वद्विगोरिति ( ५।१।२८ ) लुग् न भवति । द्विसौवर्णिक इति । स एव प्रत्ययः । कथं पुनरत्र वृद्धिः ? यावता परिमाणान्तस्येत्युच्यते ? सुवर्णञ्च गुरुत्वमानादुन्मानम् । न परिमाणमिति । नैष दोषः । आचार्य्यप्रवृत्तिर्ज्ञापयति गुरुत्वपरिमाणमपीह परिच्छेदहेतुत्वात् परिमाणं गृह्यत इति यदयमसंज्ञाशाणयोरिति शाणप्रतिषेधमारभते । अथाध्यर्द्धपूर्वेति (५।१।२८) लुक् कस्मान्न भवतीत्याह विभाषेत्यादि । द्विनैष्किकमिति । असमासे निष्कादिभ्य इति (५।१।२०) ठक् । पाञ्चलोहितिक इति । तस्मिन्नेव ठकि कृते भस्याढे तद्धित इति ( ६।३।३५, वा ) पुंवद्भावेन वर्णादनुदात्तात् तोपधात् तो न इत्यनेन ( ४।१।३९ ) विहितयोर्ङीन्नकारयोर्निवृत्तिः । द्वैकुलिजिकमिति । प्राग्वतीयष्ठञ् ( ५।१।१८ ) च ।

## १८ । ञे प्रोष्ठपदानाम् ।

संख्याया इति निवृत्तम् । जइति जातार्थो निर्द्दिश्यत इति । जातशब्दैकदेशस्य जइति । तस्यायं प्रयोगः । भवति हि पदैकदेशस्यापि प्रयोगो यथा भीमो भीमसेनः सत्यभामा भामेति । तस्माज्जातशब्दस्यैकदेशस्य प्रयोगेण जातार्थो निर्द्दिश्यत इति विज्ञेयम् । प्रोष्ठपदास्विति । लुपि युक्तवद् व्यक्तिवचने इति ( १।२।५१ ) युक्तवद्भावः । भाद्रपाद इति । भद्रपदेन युक्तःकाल इति । अणादिकार्य्यं पूर्ववद्विधेयम् ।

## १९ । हृद्भगसिन्ध्वन्ते पूर्व्वपदस्य च ।

सौहार्दमिति । तस्येदमित्यण् ( ४।३।१२० ) । यदा सुहृदयशब्दादण् तदा

हृदयस्य हृल्लेखयदण्लासेष्विति ( ६।३।५० ) हृद्भावः। सौहार्द्यमिति। गुणवचनब्राह्मणादिभ्य इति (५।१।१२४) ष्यञ्। वा शोकष्यञ्रोगेष्विति (६।३।५१) हृद्भावः। सौभागिनेयो दौर्भागिनेय इति। कल्याण्यादीनामिनङ् चेति (४।१।१२६) ढकि कृत इनङादेशः। तत्रोत्तरपदवृद्धि र्नेष्यत इति। सुभगस्य भावः। प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञित्यञि कृते ( ५।१।१२९ ) महते सौभगाय वर्द्धन्तामित्येवं भवति। कथं पुनरिष्यमाणाप्युत्तरपदवृद्धि र्न प्राप्नोतीत्याह च्छन्दसीत्यादि। सक्तुसिन्धवइति। शाकपार्थिवादित्वान्मध्यपदलोपी समासः। साक्तुसैन्धव इति। ओर्देशे ठञि ( ४।२।११९ ) प्राप्ते कच्छादिभ्यश्चेत्यण् ( ४।२।१३३ )। ननु च केवलस्तत्र सिन्धुशब्दः पठ्यते। कथं तदन्ताद्भवतीत्याह तेनेत्यादि। कथं पुनस्तेन सिन्धुशब्देन तदन्तविधिर्लभ्यते ? यावता ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्तीति (प, ३२) तदन्तविधिः प्रतिषिध्यते। नैष दोषः। चकार स्तत्रानुक्तसमुच्चयार्थः। तेन सिन्धुशब्दात् तदन्तादपि भवति।

## २०। अनुशतिकादीनाञ्च।

अनुशतिक इति। शतेन क्रीतः। शताच्च ठन्यतावशतइति ( ५।१।२१ ) ठन्। शतिकः। अनुगतः शतिकेनानुशतिकः। ततस्तस्येदमित्यण् (४।३।१२०)। आनुशातिकम्। आनुहौडिकमिति। चरतीति ठक्। आनुसांवत्सरिकमिति। तत्र च दीयते कार्य्यं (५।१।९६) भववदित्यतिदेशाद् बह्वचोऽन्तोदात्तादिति ठक्। आङ्गारवेणव इति। तस्यापत्यमित्यण् (४।१।९२)। आसिहात्यमिति। तत्र भव (५।३।५३) इत्यण् (४।३।५३)। आस्यहात्यमिति। विमुक्तादिभ्योऽण् ( ५।२।६१ )। आस्यहैतिकमिति पाठे तदस्य प्रयोजनमिति प्राग्वतीयष्ठञ् (५।१।१८)। ननु च प्रातिपदिकादिति वर्त्तते। अस्यहत्यास्यहेतिश्च पदसमुदायोऽयम्। न प्रातिपदिकम्। तत् कथमतः प्रत्ययः ? सत्यपि वा प्रत्यये कथं विभक्तेरलुगित्याह अतएवेत्यादि। वाध्योग इति। अनृष्यानन्तर्य्ये बिदादिभ्योऽञ् (४।१।१०४)। पौष्करसादिरात्लर्हीतिरिति। बाह्वादिभ्यश्चेतीञ् (४।१।९६)। कौरुकात्यमिति। गर्गादित्वाद् यञ्। कौरुपाञ्चाल इति। तत्र भव इत्यण् ( ४।३।५३ )। ननु च जनपदशब्दाज्जनपदतदवध्योश्चेति ४।२।१२४) वुञा भवितव्यमित्यत आह जनपदसमुदायो जनपदग्रहणेनेत्यादि। कुरुपञ्चालशब्दो हि जनपदसमुदायवचनः। नच जनपदसमुदाया जनपदग्रहणेन गृह्यत इति कुतो वुञ्प्रसङ्गः ? औदकशौद्धिरिति। अत इञ् ( ४।५।९५ )। ऐह-

लौकिकः पारलौकिक इति । लोकोत्तरपदस्येति ( ४।३।६०, वा ) ठञ् । एतत् समासस्य तदादेशे तेनैवमादिकायां कारिकायामियमिष्टिरिति (४।२।११८,वा) पठ्यते । सार्वलौकिक इति । लोकसर्वलोकाट् ठञ् (५।१।४४) । सार्वपौरुषमिति । तस्येद (४।३।१२०) मित्यण् । सार्व्वभौम इति । सर्वभूमिपृथिवीभ्यामणञावित्यण् । अञ् वा (५।१।४१) । प्रायोगिक इति । अध्यात्मादित्वाट् ठञ् । पारस्त्रैणेय इति । कुलटाया वेतीनङ् ( ४।१।१२७ ) । तत्र स्त्रीभ्यो ढक् ( ४।१।१२० ) । कल्याण्यादीनामिनङ् (४।१।१२६) चेत्यनुवर्त्तते । राजपौरुष्यमिति । ब्राह्मणादित्वात् ष्यञ् ( ५।१।१२४ ) । सौत्रनाड़िरिति । अतइञ् ( ४।१।९५ ) । आभिगामिक इति । अभिगममर्हतीत्यार्हीयष्ठक् । आधिदैविकमाधिभौतिकमिति । भवार्थेऽध्यात्मादित्वाट् ठञ् । चातुर्वर्ण्यमिति । ष्यञ् । स्वार्थिको वक्तव्यश्चातुर्वर्ण्यादिसिद्ध्यर्थमिति स्वार्थएव ष्यञ् । (५।१।१२४, वा ) ।

## २१ । देवताद्वन्द्वे च ।

आग्निमारुतीमिति । अग्निश्च मरुच्चेति द्वन्द्वः । तौ देवते अस्याः । साऽस्य देवतेत्यण् ( ४।२।२४ ) । ततः पूर्वोत्तरयो र्वृद्धिः । इद् वृद्धावित्यग्निशब्दस्यानङ्विषय ( ६।३।२८ ) इकारादेशः । टिड्ढाणञिति ( ४।१।१५ ) ङीप् । यो देवताद्वन्द्वः सूक्तसम्बन्धीत्यादि । यः सूक्तं भजते स सूक्तसम्बन्धी । यस्मै हवि र्निरूप्यते स हविःसम्बन्धीति । अर्थद्वारकश्चेदं द्वन्द्वस्य विशेषणम् । वृद्ध च न भवतीत्यादि । कथं पुनः सामान्योक्तौ सत्यामयं विशेषो लभ्यते ? एवं मन्यते । नेन्द्रस्य परस्येत्यत्र ( ७।३।२२ ) नेति योगविभागः कर्त्तव्यः । तेन सूक्तसम्बन्धिनो हविःसम्बन्धिनश्चान्यत्र न भवतीति । स्कान्दविशाखइति । तस्येद ( ४।३।१२० ) मित्यण् । ब्राह्मप्रजापत्यमिति । दित्यदित्यादित्यपत्युत्तरपदाण्यः ( ४।१।८५ ) ।

## २२ । नेन्द्रस्य परस्य ।

सौमेन्द्र आग्नेन्द्र इति । साऽस्य देवतेत्यण् ( ४।२।२४ ) । देवताद्वन्द्वे चेत्यानङादेशः ( ६।३।२६ ) । पूर्वपदस्याद् गुणः ( ६।१।८७ ) । ऐन्द्राग्न इति । अत्रापि पूर्ववदणादि कार्य्यम् । इन्द्रशब्दे द्वावचावित्यादि । प्रागेवोक्तत्वात् सुबोधम् ।

## २३। दीर्घाच्च वरुणस्य।

इन्द्रावरुणं मैत्रावरुण मिति। देवताद्वन्द्वे चेत्यानङि (६।३।२६) कृते दीर्घात् परो वरुणशब्दः।

## २४। प्राचां नगरान्ते।

यद्यत्र प्राचामित्यत्राचार्य्यग्रहणं स्यात् ततश्चोत्तरसूत्रे विभाषितमिति न ब्रूयात्। एतदेव हि विकल्पार्थम्। प्राचांग्रहणं तत्रानुवर्त्तिष्यते। तस्माद् देशग्रहणं विज्ञायत इत्याह प्राचां देशइत्यादि। नगरग्रहणेनेह स्वरूपग्रहणम्। स्वं रूपं शब्दस्येति (१।१।६८) वचनात्।

## २५। जङ्गल-धेनु-वलजान्तस्य विभाषितमुत्तरम्।

उत्तरमित्यनेनोत्तरपदं लक्ष्यते। तस्य चोत्तरपदस्य नित्यं सन्निधानात्। विभाषितत्वं नोपपद्यते। तस्मात् तत्सम्बन्धिन्या वृद्धे विंभाषितत्वाद् विभाषित मित्युक्तम्। अत एवाह उत्तरपदस्य विभाषा भवतीति। वृद्धिरिति प्रकृतेन सम्बन्धः।

## २६। अर्द्धात् परिमाणस्य पूर्वस्य तु वा।

आर्द्धद्रौणिकमिति। अर्द्धं नपुंसकमिति समासः (२।२।२)। प्राग्वतेष्ठञ् (५।१।१८)। अथ वावचनं किमर्थम्? न विभाषितमिति पूर्वसूत्रादनुवर्तिष्यते? उत्तरमित्यनेन तत् सम्बद्धम्। अतस्तदनुवृत्तावुत्तरपदस्यैव विकल्पः स्यादिति चेत्? नैतदस्ति। उत्तरमित्येतन्न स्वरिष्यते। तुशब्दश्चेह क्रियते। स नियमार्थो भविष्यति। पूर्वस्यैव भवति नोत्तरस्येति। एवं तर्ह्येकयोगे स्वरितत्वकरणाकरणाद्धि वावचनमेव लघीय इति पुनर्वावचनं क्रियते।

## २७। नातः परस्य।

पूर्वेण परिमाणस्य वृद्धि रुच्यमाना अकारस्याचामादेः प्राप्नोतीति प्रतिषिध्यते। पूर्व्ववदस्य तु विकल्पो भवत्येव। पूर्वस्य त्वित्यनुवृत्तेः। आर्द्धप्रस्थिकइति।

अर्द्धं नपुंसकमिति (२।२।२) समासः। पूर्ववत् प्रत्ययः। किञ्च स्यादिति। एवं मन्यते। आकारो हि वृद्धिमानेव। तत्र नास्ति विशेषः सत्यसति वा वृद्धि-प्रतिषेधे। तदेव रूपम्। अतोऽसत्यपि तपरकरणे नैव किञ्चिदनिष्ट मापद्यत इति वृद्धिनिमित्तस्येत्यादि (६।३।३८)। असति तपरकरणे तत्कालार्थं यदनिष्ट मापद्यते तद्दर्शयति किं पुनः कारणं पुंवद्भावप्रतिषेधो न स्यादित्यत आह यत्र हीत्यादि वृद्धिं कुर्वन्नेव हि तद्धितो वृद्धिनिमित्तं भवति। तस्माद् यत्र तद्धिते वृद्धिप्रतिषेधः क्रियते स वृद्धेर्निमित्तं न भवति। तेन वृद्धिनिमित्तस्य तद्धितस्य पुंवद्भावो न प्रतिषिध्यतइति पुंवद्भावः स्यात्। क्व? यथेत्यादि। वैयाकरणी भार्य्यास्येति। वृद्धिप्रतिषेधः पुनरत्र न य्वाभ्यामित्यादिना (७।३।२)। अथ परस्येति किमर्थं पूर्वस्य मा भूदिति? नैतदस्ति। अत इति विशेषणो-पादानसामर्थ्यात् पूर्वस्य न भविष्यति। नहि पूर्वस्यार्द्धशब्दस्यातोऽन्यो वृद्धिभाक् सम्भवति। पूर्वस्य तु वेति च विकल्पशासनमनर्थकं स्याद् यदि तस्य प्रतिषेधः स्यात्। इदं तर्हि प्रयोजनम्। तदन्तविधि र्मा भूदिति। तदन्तविधौ सतोह्यापि प्रतिषेधः स्यादर्धद्रौणिकमिति। पूर्वस्तु विधिरर्द्धेन मुष्टिना क्रीतमर्द्धमौष्टिक माद्धमौष्टिकमित्येवमर्थः स्यात्। परग्रहणे तु सति यदर्द्धात् परमनन्तरं तदेवाश्रितं भवतीति नास्ति तदन्तविधिप्रसङ्गः।

## २८। प्रवाहणस्य ढे।

प्रवाहणशब्दस्य ढे प्रत्यये परत उत्तरपदस्येति व्यधिकरणे षष्ठ्यौ। प्रवाहण-शब्दस्य यदुत्तरपदमवयव स्तस्येत्यर्थः। प्रवाहणेय इति। वहेः प्रपूर्वाण्णिच्। प्रवाहयतीति प्रवाहणः। णिजन्तात् कृत्यल्युटो (३।३।११३) बहुलमिति कर्त्तरि ल्युट्। प्रादिसमासः। ण विभाषेति (८।४।३०) णत्वम्। ततोऽपत्यार्थे ढक्। किमर्थं पुनरुत्तरपदस्य वृद्धि र्विधीयते? यावता वृद्धिमदेव तत्। यद्यप्येवं तथापि वृद्धि र्विधातव्या। तद्धितस्य वृद्धिनिमित्तत्वाद्। वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारइति (६।३।३९) पुंवद्भावप्रतिषेधो यथा स्यात्। यदि ह्युत्तरपदवृद्धि र्न विधीयते ततो यस्मिन् पक्षे पूर्वपदे वृद्धि र्न विधीयते तस्मिन् पक्षे प्रवाहणेयो भार्य्यास्येति प्रवाहणेयीभार्य्य इत्यत्र पुंवद्भावप्रतिषेधो न स्यात्। वृद्धेर्निमित्तत्वात् तद्धितस्य। यथा वैयाकरणभार्य्यइत्यत्र। ननु चासत्यपि वृद्धिनिमित्तत्वे तद्धितस्य जातेश्चेति (६।३।४१) पुंवद्भावप्रतिषेधो भविष्यति।

अस्ति ह्यत्रापि गोत्रञ्च चरणैः सहेति जातित्वम्। एवं तर्हि तज् ज्ञापयति। अनित्योऽयं प्रतिषेध इति। तेन हस्तिनीनां समूहो हास्तिकमित्यत्र भस्याढ़े तद्धित इत्यौपसंख्यानिकस्य ( ६।३।६५, वा ) पुंवद्भावस्य प्रतिषेधो न भवति।

## २९। तत्प्रत्ययस्य च।

प्रावाहणेयिरिति। अतइञ् ( ४।१।९५ )। प्रावाहणेयकमिति। गोत्र-चरणाद् वुञ् ( ४।३।१२६ )। अथ किमर्थमिदमुच्यते? यावता ढप्रत्ययान्तस्य प्रवाहणेयशब्दस्योत्तरपदं नित्यं वृद्धिमदेवेति। तदर्थं स्तावदारम्भो न युक्तः। पूर्वपदस्य वृद्धे विकल्पो यथा स्यादित्येवमर्थोऽपि नैवास्यारम्भो युज्यते। इञादावपि तद्धिते तन्निमित्तां वृद्धिं बाधित्वा पूर्वसूत्रेण च निमित्तएव विकल्पो भविष्यति। नह्नीञादावुत्पन्ने तद्धिते तस्य परत्वमपेतीत्याह बाह्यतद्धितेत्यादि। बाह्यतद्धितो निमित्तं यस्याः सा तथोक्ता। बाह्यत्वं पुनरिञादेस्तद्धितस्य प्रावाहणेयशब्देऽनन्तर्भावात्। सेवं बाह्यं तद्धितं निमित्तमाश्रित्य भवन्ती बहिरङ्गा। प्रागेव तु बाह्यतद्धितोत्पत्ते र्ढाश्रयो विकल्पो भवन्नन्तरङ्ग स्तां बाधितुं न शक्नोति। ततश्च यदीदं नारभ्येत तदा स्यादेव। तस्माद्विकल्पार्थमिद-मारभ्यते।

## ३०। नञः शुचीश्वरक्षेत्रज्ञकुशलनिपुणानाम्।

उदाहरणान्युत्तरत्र व्युत्पादयिष्यन्ते। अत्र केचिदाहुरित्यादि ग्रहणक-वाक्यम्। अस्य न नञ्पूर्वात् ( ५।१।१२१ ) तत्पुरुषादिति विवरणम्। न नञ्पूर्वात् तत्पुरुषादिति। त्वतल्भ्यामन्यो भावप्रत्ययः प्रतिषिध्यते। तत्रोत्तरं भावप्रत्ययमिच्छता शुच्यादिभ्यएव नतु नञ्समासेभ्य उत्तरो भावप्रत्ययः कर्त्तव्यः। तस्मिन् कृते पश्चान्नञ्समासः। ततश्चाङ्गस्याचामादेरचो विधीय-माना वृद्धि र्न प्राप्नोति। नहि पूर्वं भावप्रत्यये कृते पश्चान्नञ्समासे नञ् अङ्गस्याचामादि र्भवति। उत्तरपदस्यैवाङ्गत्वात्। उच्यते चेदं वचनम्। तत्र वचनसामर्थ्यादङ्गस्यापि वृद्धि र्भवति। तदपर इत्यादि। यदुक्तमियं पूर्वपदस्य वृद्धिरप्राप्तैव विभाषा विधीयत इति तदपर आचार्य्या न क्षमन्ते। किं कारण-मित्याह भाववचनादन्योऽपि ह्येत्यादि। एवकारो भिन्नक्रमो विद्यत इत्यस्यानन्तरं

द्रष्टव्यः । यदि नञ्समासादपत्यादिष्वर्थेषु वृद्धिनिमित्तं भाववचनादपर स्तद्धितो न विद्येतैवं बहुव्रीहेश्च नञ्समासाद् भाववचनादन्योऽपि न विद्येत । ततो युज्यतेऽशुच्यादिशब्दानामनङ्गत्वादङ्गाधिकारोपमर्द्देन वृद्धिः । वचनस्याकृतार्थत्वात् । न त्वेतदेवम् । विद्यतएव ह्यन्योऽपत्यादिष्वर्थेषु नञ्समासाद्वृद्धिनिमित्तस्तद्धितः । अकुशलस्यापत्यमाकौशलिः । अकुशलस्येदमाकौशलमिति । बहुव्रीहेश्च नञ्-समासाद्भाववचनोऽपि विद्यत एव । नास्य शुचयो विद्यन्त इत्यशुचिः । तस्य भावः । इगन्ताच्च लघुपूर्वादित्यण् ( ५।१।१३१ ) । आशौचम् । यतएवमन्योऽपि भाववचनात् तद्धितो नञ्समासाद् विद्यते वृद्धिनिमित्तको बहुव्रीहेश्च नञ्-समासाद्भाववचनोऽपि विद्यते तस्मात् तत्र कृतार्थत्वाद्वचनस्याङ्गाधिकारबाधनं च युज्यते । यदप्युक्तं न नञ्पूर्वात् तत्पुरुषादित्युत्तरो भावप्रत्ययः प्रतिषिध्यतएव तदप्ययुक्तमिति दर्शयन्नाह अचेतज्ञोऽनीश्वर इत्यादि । एतौ हि द्वौ शब्दौ ब्राह्मणादिषु तत्पुरुषावेव पठ्येते । तेनाभ्यां तत्पुरुषाभ्यामेव ष्यञ् भवति । अन्यथा हि ब्राह्मणादिष्वनयोः पाठस्य वैयर्थ्यं स्यात् । तस्मादङ्गस्यैवेयं वृद्धि र्नित्यं प्राप्ता सती भावप्रत्ययेऽन्यत्र च तद्धिते विकल्पेन विधीयते । यथायोगं तत्राशौचमिति यदि तत्पुरुषः क्रियते न शुचिरशुचि स्तदा तस्येद ( ४।३।१२० ) मित्यणि कृते वृद्धिः । अथ बहुव्रीहि र्नास्ति शुचिरस्येत्यशुचि स्ततो यदि भावार्थो विवक्ष्यते तदेगन्ताच्च लघुपूर्वादित्यण् ( ५।१।१३१ ) । अथ तस्येद मित्यर्थो विवक्ष्यते तदा प्राग्दीव्यतोऽणित्यण् ( ४।१।८३ ) । आनैश्वर्य्यमाचैतज्ञ्य-मिति । तत्पुरुषाभ्यां ब्राह्मणादित्वात् ष्यञि कृते वृद्धिः । आकौशलमानैपुणमिति । यदि बहुव्रीहिरथापि तत्पुरुष उभयथापि तस्येद ( ४।३।१२० ) मित्यणेव । यद्यपि कुशलनिपुणशब्दौ ब्राह्मणादिषु युवादिषु च पठ्येते तथापि तदन्तात् तत्पुरुषाद् बहुव्रीहेरपि भावप्रत्ययो नोपपद्यते । तदन्तविधेरभावात् ।

## ३१ । यथातथ-यथापुरयोः पर्य्यायेण ।

ब्राह्मणादिषु नञ्समासावेतौ द्रष्टव्याविति । तेन नञ्समासाभ्यां ष्यञ् भवतीति भावः । एताविति । अयथातथा-यथापुरशब्दौ । यथाऽसादृश्यइत्य-( २।१।७ ) व्ययीभावसमासाविति । ननु चासादृश्यइति प्रतिषेधः प्राप्नोति । नैष दोषः । नह्यत्र सादृश्यं गम्यते । तथाहि यथातथमिति सत्यमुच्यते । यथापुर मिति पुरातनम् । कथं पुनर्ज्ञायतेऽव्ययीभावसमासावित्याह तथाहीत्यादि ।

अत्र हि ह्रस्वो नपुंसके प्रातिपदिकस्येति ( १।२।४७ ) नपुंसकाश्रयं ह्रस्वत्वं कृतम्। नपुंसकत्वञ्चाव्ययीभावस्य विहितम्। तस्मादव्ययीभावसमासाविति ज्ञायते। भाष्ये त्वित्यादि। अयथातथा भाव इति ह्रस्वत्वमकृत्वा वाक्यं यथा दर्शितं तथा सुप् सुपेति ( २।१।४ ) समासो लभ्यते। नाव्ययीभावः। अव्ययीभावे हि नपुंसकाश्रयं ह्रस्वत्वं स्यात्। अस्मिंस्तु पक्षे सौत्रत्वान्निर्देशस्य—छन्दोवत् सूत्राणि भवन्तीति—वर्णव्यत्ययेन दीर्घस्य स्थाने ह्रस्वो वेदितव्यः।

## ३२। हनस्तोऽचिण्णलोः।

तद्धितेष्विति निवृत्तमिति। अस्वरितत्वात्। तत्सम्बद्धं कितीत्यपीति। निवृत्तमित्यपेक्ष्यते। तत्सम्बद्धत्वं पुनस्तस्य किति चेत्यत्र ( ७।२।११८ ) तद्धितेष्वित्यनुवृत्तेः। यदि पुनः कितीत्यनुवर्त्तेत ततो लक्षणं जायापत्योष्टग-( ३।२।५२ ) मनुष्यकर्तृके ( ३।२।५३ ) चेति टकि कृते जायाघ्नस्तिलकालक इत्यत्रापि स्यात्। ञ्णिदग्रहणं तु प्रत्ययमात्रेण सम्बद्धम्। अत स्तद्धितेष्विति तस्मिन् निवृत्तेऽपि तदनुवर्त्तत एव। घातयतीति। हेतुमण्णिच्। हो हन्ते र्ञ्णिन्नेष्विति ( ७।३।५४ ) कुत्वम्। घातकइति। ण्वुल्। साधुघातीति। सुप्यजातौ णिनिस्ताच्छील्ये ( ३।२।७८ ) इति णिनिः। घातं घातमिति। आभीक्ष्ण्ये णमुल् च ( ३।४।२२ )। आभीक्ष्ण्ये द्वे भवत ( ८।१।१२, वा ) इति द्विर्वचनम्। घातइति। भावे घञ्। अघानीति। लुङ्। चिण् भावकर्मणो ( ३।१।६६ ) रिति चिणादेशश्च। भावकर्मणोरित्यात्मनेपदम् (१।३।१३)। चिणो लुगिति तकारस्य ( ६।४।१०४ ) लुक्। जघानेति। लिट्। तिप्। तस्य णल्। अभ्यासाच्चेति ( ७।३।५५ ) कुत्वं घकारः। अथेह कस्मान्न भवति? वृत्रं हतवानिति। ब्रह्मभ्रूणवृत्रेषु ( ३।२।८७ ) क्विप्। तदन्तात् तस्येदमित्यण् ( ४।३।१२० )। षपूर्वहन्धृतराज्ञामणीत्यल्लोपः ( ६।४।१३५ )। वार्त्रघ्नो भौणघ्न इत्याह धातोरित्यादि। धातोरित्येवमुच्चार्य यो विहितः प्रत्ययः स धातुप्रत्ययः। धातोः कार्य्य मुच्यमानं तत्रैव धातुप्रत्यये भवति। एतच्च भौणहत्यमिति निपातनेन (E) ज्ञापितम्। तेन वार्त्रघ्नो भौणघ्न इत्यादौ

(E) दाणिडनायनेत्यादि सूत्रे ( ६।४।१७४ )।

न भवति। नह्यत्र धातोरितित्रयं प्रत्ययो विहितः। किं तर्हि ? प्रातिपदिकादितित्रयम्।

## ३३। आतो युक् चिण्कृतोः।

चिणि कृति चेति। चिण्ग्रहणमकृदर्थम्। अकृत्त्वं तु तस्य द्वितीयधात्वधिकारेऽविहितत्वात्। अदायि अधायीति। ददातिदधात्योः पूर्ववल्लुङादि कार्य्यम्। दायो धाय इति घञ्। दायको धायकइति। ण्वुल्। ददौ दधाविति। आत औ णल इत्यौत्वम् (७।१।३४)। चौडिर्बालाकिरिति। चूडाबलाकाभ्यां बाह्वादीञ्। अचामादेरित्यनुवृत्तेरत्र न भविष्यतीति यो मन्येत तं प्रत्युदाहरणान्तरमाह ज्ञा देवतास्येति ज्ञः। सास्य देवतेत्यण् (४।२।२४)। अत्र व्यपदेशिवद्भावेनाचामादिराकार भवति। अतोऽसति चिण्कृद्ग्रहणे सत्यामप्यचामादेरित्यनुवृत्तौ स्यादेवात्र युक्। व्यपदेशिवद्भावोऽप्रातिपदिकेनेत्येतच्च (प, ३३) प्रत्ययविधिविषय एव ह्युक्तम्।

## ३४। नोदात्तोपदेशस्य मान्तस्यानाचमेः।

अशमि। अतमि। अदमीति। शमु उपशमे। तमु काङ्क्षायाम्। दमु उपशमे। लुङादि पूर्ववत्। शमक इत्यादौ ण्वुल्। शम इत्यादौ घञ्। यामको रामक इति। यम उपरमे। रमु क्रीडायाम्। अनुदात्तोपदेशावेतौ। अथ कथमुद्यमोपरमावित्याह उद्यमोपरमावित्यादि। अनुगन्तव्यावित्यादि। साधुत्वेनेतिशेषः। निपातनादेतौ साधुत्वेन वेदितव्यावित्यर्थः। शमी तमी दमीत्यत्र यथा स्यादिति। शमादिभ्यः शमित्यष्टाभ्यो घिनुण् (३।२।१४१)। असत्युपदेशग्रहणेऽत्र न स्यात्। प्रत्ययस्वरे कृते धातोरनुदात्तत्वात्। उपदेशग्रहणे तु सति तेनाद्यवस्था लक्ष्यतइति। यद्यप्युत्तरकालमनुदात्तत्वं भवति तथापि भवत्येव प्रतिषेधः। उपदेशावस्थाया मुदात्तत्वात्। इहेत्यादि। यद्युपदेशग्रहणं न क्रियेत ततो यामको रामक इत्यत्रापि स्यात्। लितीति (६।१।१९६) प्रत्ययात् पूर्वस्योदात्तत्वविधानात्। उपदेशग्रहणे तु न भवति। उपदेशेऽनुदात्तत्वात्। अनाचमिकमिवमीनामिति वक्तव्यमिति। कमु कान्तौ। टुवम उद्गिरणे। चमु छमु जमु झमु अदने। एषां त्रयाणां धातूनां प्रतिषेधो न भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्। चमेस्तावदनाचमेरिति

त्रएवोपादानात् प्रतिषेधो न भवतीति। इतरयोस्तु वामदेवाड् ड्यड्यौ (४।२।९) वनहिरण्यात् काम इति (५।२।६५) निपातनादिति। अथ कथमाम इत्याह आमइति चौरादिकस्येत्यादि। अम रोगइत्यस्य चौरादिकस्य णिचि वृद्धौ स एरजि-(३।३।५६) त्यचि कृत आमइति। नहि णिच्यपि वृद्धेः प्रतिषेधो भवति। तस्याचिण्कृत्त्वात्। अकृत्त्वं तु पूर्ववद्वेदितव्यम्। ननु जनिजृष्क्नसुरञ्जोऽमन्ताश्चेति (ग,सू) मित्संज्ञायां सत्यां मितां ह्रस्वत्वे नेह (६।४।९२) णौ भवितव्यमित्यत आह अत्र हि मित्त्वं नास्तीति। कथं नास्तीत्याह नान्यइत्यादि। यस्तु भ्वादिरम गत्यादिषु पठ्यतेऽमइत्येवं तस्य भवितव्यम्। अथ कथं विश्राम इति? नचायमसाधुरिति शक्यते वक्तुम्। यतः सूर्य्यविश्रामा भूमिरिति प्रयोगो दृश्यत इत्याह एवमादिकं प्रयोगमित्यादि।

## ३५। जनिवध्योश्च।

वधिरयं हनादेशोऽस्ति। तस्येदं ग्रहणमिति कस्यचिदाशङ्का स्यात्। अतस्तां निराकर्त्तुमाह वधिः प्रकृत्यन्तरमित्यादि। प्रकृत्यन्तरमपि भवन् यद्यकारान्तः स्यादनर्थकः प्रतिषेध स्यात्। धोपधत्वादेव न वृद्धि र्भवतीति मत्वाह व्यञ्जनान्तस्येत्यादि। कुतः पुनर्वधिः प्रकृत्यन्तरमस्तीत्येतदवसितमित्याह अचकश्चेत्यादि। अथ हनादेशस्यैव वधेरयं प्रतिषेधः कस्मान्न भवतीत्याह हनादेशस्येत्यादि। जजान गर्भमित्यादि। छान्दसः प्रयोगः।

## ३६। अर्त्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुग्णौ।

अर्त्तीति। श्तिपा निर्द्देशः। ऋकारान्तस्य ग्रहणं मा विज्ञायीति यथा ऋदृशोऽङि गुण (७।४।१६) इति। अर्पयतीति। हेतुमण्णिच्। पुगन्तलघूपधस्येति (७।३।८६) गुणः। ह्रेपयति व्लेपयतीति। ह्री लज्जायाम्। व्ली वरणे। क्नोपयति क्ष्मापयतीति। क्नूयी शब्दे। क्ष्मायी विधूनने। लोपो व्योर्वलीति (६।१।६६) यकारलोपः। द्वयोरपि धात्वोर् ग्रहण मिति। विशेषाभावात्। रीत्येतस्यापि री गतिरोषणयोः। रीङ् श्रवण इति द्वयोरपि ग्रहणमित्यपेक्षते। ननु च निरनुबन्धकग्रहणे न सानुबन्धकस्येति (प,८२) रीङो ग्रहणं न प्राप्नोति। नैष दोषः। अत्र ह्यल्पाच्तरत्वाद् ह्रीव्ल्यातामन्यतमस्य पूर्वनिपाते कर्त्तव्ये (२।२।३४)

ल्पाच्तरमित्येतदनपेक्ष्याच्शब्दस्य पूर्वं निपातं कुर्वताऽन्यदपि किञ्चिदिह शास्त्रवचनं नापेक्ष्यत इत्येतत् सूचितम्। तेन निरनुबन्धकपरिभाषा नापेक्ष्यत इति रीङोऽपि ग्रहणं भवति। अथ किमर्थं पुनः पुक् पूर्व्वान्तः क्रियते ? न परादिरेव पुङ् विधीयताम् ? पुटि सति गुणविधौ पुगन्तग्रहणं न कर्त्तव्यं भवति। सार्वधातुकार्द्धधातुकयोरित्येवं (७।३।८४)सिद्धत्वात् पुटि। अवश्यं पुङ्ग्रहणं कर्त्तव्यम्। अन्यथा ह्यचो ञ्णितीति (७।२।११६) वृद्धिः स्यादिति चेत् ? नैतदस्ति। नाप्राप्ते णिचो वृद्धिं प्रति निमित्तत्वे पुटं प्रत्यागमित्वमुच्यत इत्युत्तरस्य बाधकं भविष्यतीति नास्ति वृद्धेः प्रसङ्गः। अयं तर्हि परादौ दोषः। दाप्यत धाप्यत इति। अत्र णेर्लोपेनापहृतत्वात् पकारस्य श्रवणं न स्यादिति। एषोऽप्यदोषः। नहि णिलोपः सर्व्वापहारी भवति येन णे निवृत्तौ पुडागमोऽपि निवर्त्तेत। प्रत्ययलक्षणञ्चास्तीति निवृत्तोऽपि णौ पुटः श्रवणं भविष्यतीत्याह पुकः पूर्व्वान्तकरणमित्यादि। दापयते लुङ्। च्लिः। तस्य णिश्रिद्रुस्रुभ्यः कर्त्तरि चङि णिलोपः (३।१।४८)। णौ चङ्युपधाया ह्रस्वइति ह्रस्वत्वम् (७।४।१)। चङीति (६।१।११) द्विर्वचनम्। सन्वल्लघुनि चङ्परइतीत्त्वम् (७।४।९३) दीर्घो लघोरिति (७।४।९४) दीर्घत्वम्। अदीदपत्। अत्र यदि पुट् क्रियते तदा ह्रस्वत्वं न स्यात्। अनुपधत्वात्। पुकि तु सति भवति। अतो ह्रस्वार्थं पुकः पूर्वान्तकरणम्।

## ३७। शाच्छासाह्वाव्यावेपां युक्।

शो तनूकरणे। छो छेदने। षोऽन्तकर्मणि। ह्वेञ् स्पर्द्धायाम्। व्येञ् संवरणे। वेञ् तन्तुसन्ताने। पा पाने। पै ओवै शोषणइति द्वयोरपि। एषामाकारान्तत्वात् पुकि प्राप्ते युको विधानम्। निशाययतीत्यादि। आदेच उपदेशेऽशितीत्यात्त्वम् (६।१।४५)। पाग्रहणे पै ओवै शोषण इत्येतस्यापि ग्रहणमिच्छन्तीति। यत्र ह्यस्य ग्रहणं नेष्यते तत्र पिवतेरित्याह यथा लोपः पिवतेरीच्चेति (७।४।४) भावः। अथ पा रक्षण इत्यस्यापि ग्रहणं कस्मान्न भवतीत्याह पा रक्षण इत्यस्य त्वित्यादि। लुगागमस्तु तस्य वक्तव्यइति। ननु च पल रक्षण इति चुरादौ पठ्यते। तस्य पालयतीति भविष्यति। सत्यमेतत्। पुकस्तु निवृत्त्यर्थो लुगागम उपसंख्यायते। अन्यथा हि पातेः पाययतीति स्यात्। धूञ् प्रीञोर्नुग् वक्तव्यइति। धूञ् कम्पने। प्रीञ् तर्पणइति। एतयोर्नुग् वक्तव्यः।

व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्। धू विधूनने इति प्रीणनइति (F) निपातनादेतयो नुग् भविष्यतीति। एतेऽपीति। युगादयः। निशाययतीत्यादिष्वादेच उपदेशेऽशितीत्यात्त्वम् (६।१।४५)। न्यशीशयदित्यादीन्यदीदपदित्यनेन तुल्यानि। पूर्ववल्लुङादीनि विधाय व्युत्पाद्यानि। अदूधुनदिति। अनकारान्तत्वादिह सन्वद्भावोऽभ्यासस्य नास्तीति। अपिप्रिणदित्यत्राप्यलघुत्वाद् दीर्घत्वं नास्ति। ननु च शाच्छासाह्वाव्या इत्येत एजन्ता गणे पठ्यन्ते। तत् कथमेषां कृतात्त्वानां ग्रहणमित्याह शाह्वेत्यादि। कथं पुनः कृतात्त्वानां ग्रहणेन पुकः प्राप्ति र्व्याख्यायते? आकारान्तानां पुग्विधानात्। अध्यापयतीत्यादिना ज्ञापकस्य प्रयोजनं दर्शयति। अध्यापयतीति। क्रीङ्जीनां णावित्यात्त्वम् (६।१।४८)। आदिशब्देन जापयतीत्यादीनां ग्रहणम्। यदि पुकः प्राप्तिमाख्यातुं शाप्रभृतीनां कृतात्त्वानां ग्रहणं कृतं तदा वेञोऽपि कृतात्त्वस्यैव ग्रहणं युक्तम्। नैवं शक्यम्। वेतुच्यमाने पै ओवै शोषणे इत्यस्यापि ग्रहणं स्यात्। तस्मादकृतात्त्वस्यैव वेञो ग्रहणं युक्तम्।

## ३८। वा विधूनने जुक्।

पुकि प्राप्ते जुग् विधीयते। वा इत्येतस्येति। वा गतिगन्धनयोरित्येतस्य। विधूननेऽर्थेइति। कम्पनइत्यर्थः। ननु वज व्रज गतावित्यस्य धातोर्ण्यन्तस्योपवाजयतीति सिद्धम्। तत् किमर्थमेतत्? वातेः पुङ् मा भूदित्येवमर्थं जुको विधानम्। पै ओवै शोषणे इत्येतस्यैतद्रूपमिति। ननु च लाक्षणिकस्याकारान्तत्वम्। अतो जुका न भवितव्यम्। नैतदस्ति। इदानीमेव ह्युक्तमेतस्मिन् प्रकरणे लक्षणप्रतिपदोक्तपरिभाषा (प,१२४) नास्तीति।

## ३९। लीलोर्नुग्लुकावन्यतरस्यां स्नेहविपातने।

स्नेहविपातनेऽर्थे इति। किमिदं स्नेहविपातनं नाम? विगच्छतः स्नेहस्य पातनं व्यापारणम्। तथाहि पातेर्ण्यन्तस्य भावे ल्युटि कृते विपातनमिति। विलीनयतीति। गुणायादेशौ। अथ विभाषा लीयतेरित्यात्त्वे कृत एकदेशविकृत-

(F) सूत्रकारस्तु भूधात्वर्थं वर्मेव धातूनपदिदेश। भीमसेनादयस्त्वर्थान् निर्दिदिशुरिति मतम्। अतो न्यासकारस्य प्रीणनग्रहणेनात्र नुकः समर्थनमनार्षवन्न्यासएव। धूननस्य परसूत्रे प्रयोगात् तन्निर्देशस्तु ग्राह्यः।

स्यानन्यत्वाद् ( प, ३८ ) विलापयतीत्यत्र कस्मान्नुग् न भवतीत्याह ली इत्यादि । लोई इति ईकारोऽत्र प्रश्लिष्यते । ईकारान्तस्यैव यथा स्यात् । कृतात्त्वस्य न भवति । ली इति लीलीङो र्ग्रहणमिति । ननु च निरनुबन्धकपरिभाषया (प,८२) ली श्लेषण इत्येतस्यैव क्र्यादिकस्य ग्रहणं युक्तम् । नतु लीङ् श्लेषण इत्येतस्य देवादिकस्य । एवं मन्यते । एक एवायं धातु र्विकरणद्वयार्थमात्मनेपदार्थञ्च द्विरुपदिश्यते । एवञ्च कृत्वा लियः सम्माननशालीनीकरणयोश्चेत्युभाभ्यामात्मनेपदं ( १।३।७० ) भवतीति । ला इति । लातेः कृतात्त्वस्य च लीयतेरिति ग्रहणमिति प्रकृतेन सम्बन्धः ।

## ४० । भियो हेतुभये षुक् ।

हेतुः स्वतन्त्रस्य कर्तुः प्रयोजकः । बिभेत्यस्मादिति भयः (G) । हेतुश्चासौ भयश्चेति हेतुभयः । तस्मिन् हेतुभये । ञिभी भयइत्यस्य वृद्धौ प्राप्तायां बिभेतेर्हेतु-भयइत्यात्त्वे प्राप्ते च पक्षे णौ षुग् विधीयते । मुण्डो भीषयत इति । भीस्म्योर् हेतुभय इत्यात्मनेपदम् ( १।३।६८ ) । अथात्त्वे कृते मुण्डो भापयत इत्यत्र कस्मान्न भवतीत्याह अत्रापीत्यादि ।

## ४१ । स्फायो वः ।

स्फावयतीति । स्फायी ओप्यायी वृद्धौ ।

## ४२ । शदेरगतौ तः ।

किमर्थं पुनरिदमुच्यते ? यावता शद्लृ शातन इत्यस्मादेव (H) निपातनात् तकारो भविष्यतीति । गतेरन्यत्र यथा स्याद् गतौ मा भूदिति चेत् ? न । शातन-शब्दो हि गतेरन्यमर्थमाचष्टे । एवं तर्ह्येतज् ज्ञापयति । अबाधकान्यपि निपात-नानि भवन्तीति । तेन पुराशब्दात् सायंचिर ( ४।३।२३ ) मित्यादिना विधीय-मानयोष्ट्युट्युलोः पुराणप्रोक्तेष्विति ( ४।३।१०५ ) निपातनेन तुटो बाधनं न भवतीति । तेन पुरातनमित्यपि सिद्धं भवति ।

---

(G) अपादाने वाच्ये भयशब्दस्यानपुंसकत्वम् । अन्यथा भयलिङ्गभगपदानि नपुंसक इति ( लिङ्गानु-शासनसूत्र ३१ ) क्लीवत्वमस्य स्यात् ।

(H) शातनशब्दोऽपि धात्वर्थरूपेणैव लब्धः । नतु ऋषिप्रयुक्तः ।

## ४३ । रुहः पोऽन्यतरस्याम् ।

रोपयतीति। रुह जन्मनि प्रादुर्भावे च। किमर्थं पुनरिद मुच्यते ? यावता दिवादिषु रुप लुप विमोहन इति रुपिः पठ्यते। तस्य रोपयतीति भविष्यति। रुहेस्तु रोहयतीति। जन्मार्थेऽपि रोपयतीति प्रयोगो यथा स्यात्। अन्यथा हि विमोहनार्थस्यैव स्यात्। अनेकार्थत्वाद् धातूनां रुपिर् जन्मनि वर्त्तिष्यतइति चेत्। नैतदस्ति। अनेकार्था हि धातवो नतु सर्व्वार्थाः। नहि रुप्यतीत्युक्ते जन्मार्थः प्रतीयते। किं तर्हि ? विमोहनार्थ एव।

## ४४ । प्रत्ययस्थात् कात् पूर्वस्यात इदाप्यसुपः ।

सुपः परो न भवतीति। सुबन्तात् परो न भवतीत्यर्थः। एष चार्थः प्रत्ययग्रहणपरिभाषया (प,२४) वेदितव्यः। जटिलिका। मुण्डिकेति। अज्ञातादिष्वर्थेषु प्रागिवात् कः (५।३।७०)। कारिका हारिकेति। ण्वुल्। एतिकेति। एतदोऽव्ययसर्व्वनाम्नामित्यकच् (५।३।७१)। त्यदाद्यत्वम्। अतो गुणे (६।१।९७) पररूपत्वम्। टाप्। अकः सवर्णे दीर्घत्वम् (६।१।१०१)। शकेति। पचाद्यच्। टाप्। स्थग्रहणं विस्पष्टार्थमिति। अत्र यत्र ककारमात्रं हि प्रत्यय स्तत्र मा भूदित्येवमर्थं कस्मान्न भवतीत्याह ककारमात्रं हीत्यादि। कादिति वर्णग्रहणम्। अकारस्तूच्चारणार्थः। नतु केवलः ककारः प्रत्ययोऽस्ति यन्निवृत्त्यर्थं स्थग्रहणं स्यात्। कात् प्रत्ययादित्युच्यमाने प्रत्ययावयवे प्रत्ययशब्दो वर्त्तिष्यते। अतोऽन्तरेणापि स्थग्रहणं प्रत्ययस्थस्य ककारस्य ग्रहणं शक्यते विज्ञातुम्। तस्माद् विस्पष्टार्थं स्थग्रहणम्। मण्डना। रमणेति। नन्द्यादिभ्यो ल्युः (३।१।१३४)। पटुका मृदुका गोका नौकेति। पूर्ववत् कः। राका धाकेति। रा ला दानइत्यस्माद्दधातेश्च कृदाधाराचिंकलिभ्यः क (३।३२०) इत्यौणादिकः कप्रत्ययः। अथेत्यादि चोदकः। ककार इतीतरः। ककारस्य श्रुतत्वात् तस्यैवापोति विशेषणं युक्तमित्यभिप्रायः। येनाभिप्रायेण चोदकः पृष्टवांस्तमाविष्कर्त्तुमाह यद्येवमित्यादि। यद्यपीत्यनेन ककारो विशिष्यते। आपि परतो यः ककार इति। एवं सति कारिकेत्यत्र न प्राप्नोति। ककारस्याकारेणापो व्यवहितत्वात्। एकादेशे कृत इत्यादीतरः। व्यवसर्गे हि सति व्यवधानं भवति। नचैकादेशे कृते व्यवसर्गोऽस्तीत्यतो नास्ति व्यवधानम्। एकादेशः पूर्वेत्यादि चोदकः।

स्थानिवद्भावस्त्वच: परस्मिन् पूर्व्वविधावित्यनेन (१।१।५७)। वचनादितीतर:। उच्यते चेदं वचनम्। नचाप्यनन्तरं ककार: सम्भवतीति तत्र वचनसामर्थ्यात् स्थानिवद्भावे कृते नैकेन वर्णेन सर्व्वत्र व्यवधानमाश्रीयते। यदि तर्हि वचनसामर्थ्यात् कारिकेत्यादौ व्यवधानेऽपि भवति तदा रथकट्या पुत्रकाम्येत्यत्रापि स्यादित्यत आह रथकट्यादिष्वित्यादि। रथानां समूह इतित्रकट्यचश्चेति (४।२।५१) कट्यच्। ततष्टाप्। पुत्रमिच्छतीति काम्यच्चेति (३।१।९) काम्यच्प्रत्यय:। अ प्रत्ययादित्यकारप्रत्यय: (३।३।१०२)। ततष्टाप्। तत्र श्रुतिकृतमनेकेन वर्णेन व्यवधानमितीत्त्वं न भवति। येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यादित्येकेन वर्णेन व्यवधान माश्रीयते। येन नाव्यवधानमपि तु सर्व्वत्र व्यवधानम्। तेनैकेन वर्णेन व्यवहिते भवितुं युक्तम्। स्थानिवद्भावकृतमेकेन वर्णेन सर्वत्र व्यवधानमस्ति। संघातेन त्वस्ति नास्ति च। तस्मात् तदिह नाश्रीयते। सुबन्तादयमिति। परिव्राजकशब्दात् पर आबिति प्रत्ययलक्षणेन सुबन्तता वेदितव्या। प्रसज्यप्रतिषेधश्चायमिति। नचेत् सुबन्तादाप् परो भवति। क: पुन: पर्य्युदासे दोषो यत: स नाश्रीयत इतत्राह पर्य्युदासे हीतरादि। यद्ययं पर्य्युदास: स्यात् सुपोऽन्योऽसुप् ततश्चेदाप् परो भवतीति ततो बहुपरिव्राजकेत्यत्रापि स्यादेवेत्त्वम्। असुबन्तात् पूर्व्वोत्तरपदसमुदायात् पर आबिति कृत्वा। असुबन्तत्वं पुन: समुदायस्य। तस्मात् सुबन्तत्पत्ते रवयवाद्धि परिव्राजकशब्दादत्र सुबुत्पत्ति:। ननु समुदायात्। अविद्यमान: सुब् यस्मिन् सोऽयमसुबित्ययमपि नाश्रीयत इति। बहुव्रीहिरपि नाश्रीयत इत्यर्थ:। क: पुनस्तदाश्रयणे दोषो यत: स नाश्रीयत इत्याह तथाहीत्यादि। एवं तर्हीत्यर्थ:। बहुव्रीहौ पूर्व्वोत्तरपदयो: प्रत्ययलक्षणेन सुबन्तव्यपदेशोऽस्तीति नासावसुप्। अपितु विद्यमानसुबेव। तेन बहुचर्मिकेत्यत्र नासुप: पर आबितीत्त्वं न स्यात्। बहूनि चर्म्माण्यस्यां विद्यन्तइति बहुव्रीहि:। शेषाद्विभाषेति कप् (५।४।१४४)। टाप्। मामिकेति। ममेयमिति तस्येदमित्यण् (४।३।१२०)। तवकममकावितीति (४।३।३) ममकादेश:। नन्वस्मदो ममकशब्दात् टिड्ढाणञिति (४।१।१५) ङीपा भवितव्यम्। तत् कथं टाब् भवति ? केवलमामकेति (४।१।३०) नियमादित्यादि। नरिकेति। कै गै शब्दे। आदेच उपदेशेऽशितीति (६।१।४६) त्यात्त्वम्। आतोऽनुपसर्गे क: (३।२।३)। ततष्टाप्। दाक्षिणात्यिकेहत्यिकेति। दक्षिणस्यां दिशि भवेति दक्षिणापश्चात्पुरसस्त्यगिति (४।२।९८) त्यक्। इह भवेत्यव्ययात् (४।२।१०४) त्यप्। उभयत्राज्ञातादिष्वर्थेषु प्रागिवात्

कः ( ५।३।७० )। उपसंख्यानशब्दस्य प्रतिपादनमर्थः। तत्रेदं प्रतिपादनम्। उदीचामातः स्थाने इत्यत्र व्यवस्थितविभाषाविज्ञानात् तारकतारपो नित्यं भविष्यतीति।

## ४५। न यासयोः।

येत्येतस्योदीचामातः स्थाने इत्यादिना ( ७।३।४६ ) विकल्पे प्राप्ते सेत्यस्य पूर्वेण नित्ये प्राप्ते प्रतिषेधोऽयमारभ्यते। प्राप्तिपूर्वकत्वात् प्रतिषेधस्य। यदा तयोरकज् भवति तदायं प्रतिषेधो विज्ञायते। यका सकेति। यत्तदोः पूर्व्ववदकच्। सुः। त्यदाद्यत्वञ्च। यासेति निर्द्देशोऽतन्त्रमिति। अप्रधानमित्यर्थः। किं कारणमित्याह यत्तदोरुपलक्षणार्थमेतदिति। किं कारणमेवं व्याख्यायत इत्याह इहापीत्यादि। यासेति प्रथमैकवचनान्तरूपम्। तत्र यद्ययं निर्द्देशस्तन्त्रं स्यात् प्रथमैकवचनान्तयोर्ग्रहणाद् विभक्त्यन्तरे यकां तकामित्यत्र न स्यात्। इष्यते च तत्रापि। तस्मादतन्त्रमयं निर्देशो यत्तदोः प्रातिपदिकयोरुपलक्षणार्थमेतदित्युच्यते। यासयोरित्त्वप्रतिषेध इत्यादि। उपसंख्यानशब्दस्य प्रतिपादनमर्थः। तदेतदुक्तम्भवति। यत्तदोः प्रतिषेध इत्यस्मिन् क्रियमाणे त्यकन्प्रत्ययान्तस्य प्रतिषेधप्रतिपादनं कर्त्तव्यमिति। तत्रेदं प्रतिपादनम्। नेति योगविभागोऽत्र क्रियते। तेन त्यकन्प्रत्ययान्तस्य प्रतिषेधो भविष्यतीति। एवमुत्तरत्राप्युपसंख्यानशब्दस्य प्रतिपादनार्थो वेदितव्यः। प्रतिपादनमप्येतदेव योगविभागकरणमाश्रित्य कर्त्तव्यम्। उपत्यकाधित्यकेति। उपाधिभ्यां त्यकन्नासन्नारूढयोरिति ( ५।२।३४ ) त्यकन्। पावकेति। ण्वुल्। अलोमकेति। नास्या लोमानि सन्तीति बहुव्रीहिः। शेषाद्विभाषेति ( ५।४।१५४ ) कप्। जीवका नन्दकेति। आशिषि चेति ( ३।१।१५० ) वुन्। देवका यज्ञकेति। देवदत्तयज्ञदत्तशब्दाभ्यामनुकम्पायां कन्निति ( ५।३।७६ ) कनि कृतेऽनजादौ च विभाषा लोपो वक्तव्य ( ५।३।८३, वा ) इत्युत्तरपदलोपः। क्षिपका ध्रुवकेति। क्षिप प्रेरणे। ध्रुव स्थैर्य्ये। इगुपधज्ञाप्रीकिरः कः ( ३।१।१३५ )। तदन्तादज्ञाताद्यर्थे ( ५।३।७० ) प्रागिवात् कः। तारकेति। तरते ण्वुल्। वर्णका तान्तवइति। तन्तूनां विकार इत्योरञ् ( ४।३।१३९ )। ओर्गुणः (६।४।१४६)। तान्तवः प्रावरणविशेषः। तत्र वर्णकेत्युपसंख्यातव्या। वर्ण क्रियाविस्तारगुणवचनेष्विति चौरादिको धातुः। ततो ण्वुल् वर्णकेति। व्याख्यातेत्यर्थः।

वर्त्तकेति। वृतु वर्त्तने। ण्वुल्। वर्त्तिकेति। अध्येतीत्यर्थः। अष्टका पितृदैवत्यइति। पितृदैवत्यं वैदिककर्मविशेषः। तत्राष्टकेत्युपसंख्यायते। अशू व्याप्तावित्यस्मादिष्यशिभ्यां (उण, ३।४।२८) तकन्प्रत्ययः। व्रश्चादिसूत्रेण (८।२।३६) षत्वम्। ष्टुत्वम्। अष्टकेति। अष्टौ परिमाणमस्या इति तदस्य परिमाणमिति संख्याया अतिशदन्तायाः कन् (५।१।२२)। वा सूतकेत्यादि। उपसंख्यानशब्दस्य प्रतिपादनमर्थः। तत्रेदं प्रतिपादनम्। सूतका सूतिका इत्यादयः शब्दाः पृषोदराद्यन्तःपातिनः। तेन पृषोदरादित्वादेवायं विकल्पः सिद्धः।

## ४६। उदीचामातः स्थाने यकपूर्वायाः ॥

पूर्वेण नित्यमित्त्वे प्राप्ते विकल्पार्थं वचनम्। यकौ पूर्वौ यस्याः सा यकपूर्वा। कोऽन्यपदार्थः? समुदायः। तथाहि पूर्वशब्दोऽवयवे वर्त्तते। स चावयवः समुदायस्य भवति। नावयवान्तरस्य। नहि वर्णो वर्णस्यावयवो भवति। अवयवान्तरापेक्षस्तु तस्य पूर्वत्वव्यपदेशः। तत् पुनरवयवान्तरं प्रकृतत्वात् स्थान्यकारएव विज्ञायते। स्त्रीलिङ्गनिर्देशस्तु तस्य समुदायस्यार्थधर्मेण स्त्रीत्वेन वेदितव्यः। प्रयोजनं तु तस्य वक्ष्यते। आतः स्थानइति। योऽकारइति व्यवहितेन सम्बन्धः। इभ्यिकेत्यादि। इभ्यादिशब्देभ्यः प्रागिवात् कः (५।३।७१)। केऽणइति (७।४।१३) ह्रस्वः। सांकाश्यिकेति। धन्वयोपधाद्वुञ् (४।२।१२१)। नात्रातः स्थानेऽकारइति नित्यमेवेत्त्वम्। अथ स्थानग्रहणं किमर्थम्? यावतात इत्येषैव षष्ठी स्थाने योगं प्रतिपादयिष्यति। षष्ठी स्थाने योगेति (१।१।४९) वचनादित्यत आह स्थानग्रहणमित्यादि। आकारस्य स्थाने लक्षणान्तरेण विहितस्याकारस्य संकीर्त्तनमनुवादः। अत्रापि स्थाने सम्बन्धप्रतिपत्ति र्यथा स्यादित्येवमर्थं स्थानग्रहणम्। किं पुनः कारणम्। असति स्थानग्रहणेऽनुवादे स्थानसम्बन्धप्रतिपत्ति र्न स्यादित्याह आतइत्यनेनेत्यादि। आदेशविधावस्ते र्भूरित्येवमादौ (२।४।५२) षष्ठी स्थाने योगेत्येषा (१।१।४९) परिभाषोपतिष्ठते। नत्वनुवादे। विधिवाक्यशेषभूतत्वादस्याः। नचात्राकारस्य स्थानेऽकारोऽनेन विधीयते। किं तर्हि? लक्षणान्तरेणाभिनिर्वृत्तोऽनेन विशिष्यते। आतः स्थाने योऽकारइति। तेन नात्र तस्याः परिभाषाया उपस्थानमिति तत्र यदि स्थानग्रहणं न क्रियेत तदातः समीपो योऽकारइति

सामीप्यसम्बन्धप्रतिपत्तिः स्यात्। अथवा पूर्व्ववत् प्रश्ने कृतइत्याह अत इत्यनेनेत्यादि। इकारस्य यः स्थानित्वेनोपात्तोऽकारः स अात इत्यनेन विशिष्यते। एवञ्च विशेष्यत्वादकारस्य प्राधान्यम्। अाकारस्य विशेषणत्वादप्राधान्यम्। तत्रासति स्थानग्रहणे यद्यपि सा परिभाषानुवाद उपतिष्ठेत तथापि प्रधाने कार्य्यसंप्रत्ययादात इत्यस्याएव षष्ठ्याः स्थानसम्बन्धो विज्ञायेत। नत्वात इत्यस्याः। स्थानग्रहणे तु सत्यस्या अपि विज्ञायते। एतदर्थं स्थानग्रहणम्। अश्विकेति। पूर्व्ववत् कः। ह्रस्वत्वञ्च। अथ यकपूर्वाया इति स्त्रीलिङ्गेन निर्द्देशः किमर्थं इत्याह स्त्रीलिङ्गनिर्द्देश इत्यादि। स्त्र्यधिकारविहितः प्रत्ययः स्त्रीप्रत्ययः। तस्यैव प्रतिपत्तिर् यथा स्यादित्येवमर्थः स्त्रीलिङ्गेन निर्द्देशः। असति तस्मिन्नाकारमात्रस्थाने योऽकार स्तस्य स्थानित्वं विज्ञायेत। ततश्च यातेः शुभंभद्रंशब्दयोरुपपदतो विजुपे छन्दसीत्यातो ( ३।२।७३ ) मनिन्क्वनिब्वनिपश्चेति ( ३।२।७४ ) विच्। तदन्तात् कप्रत्यये शुभंयिका भद्रंयिकेत्यत्रापि विकल्पः प्रसज्येत। तस्मात् तन्निवृत्त्यर्थं स्त्रीलिङ्गनिर्द्देशः। शुभम्भद्रंशब्दौ मकारान्तौ निपातौ। यकपूर्वाया इत्यादि ग्रहणवाक्यम्। तस्य धात्वन्तयो र्यकारककारयो रित्यादि विवरणम्। वक्तव्यमिति। व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्। व्यवस्थितविभाषाविज्ञानाद्धात्वन्तयोरपि यकारककारयोरनन्तरस्याकारस्येत्त्व प्रतिषेधः प्राप्नोति। स न भविष्यतीति सुनयिका सुशयिकेति। णीञ् शीङ्भ्यामरजित्यच् (३।३।५६)। शोभनो नयोऽस्याः शोभनः शयाऽस्याः सुनया सुशया। ततः प्रागिवात् कः। केऽण इति (७।४।१३) ह्रस्वत्वम्। सुपाकिकाऽशोकिकेति। डुपचष् पाके। शुच शोके। भावे घञ्। शोभनः पाकोऽस्या अविद्यमानः शोकोऽस्या इति बहुव्रीहिः। शेषाद्विभाषेति ( ५।४।१५४ ) कप्। आपोऽन्यतरस्यामिति ( ७।४।१४ ) ह्रस्वत्वम्।

## ४७। भस्त्रैषाजाज्ञाद्वास्वा नञ्पूर्वाणामपि।

भस्त्रका भस्त्रिकेति। पूर्ववत् कः। अभस्त्रका। अभस्त्रिकेति। पूर्ववत् कप्रत्ययः। बहुव्रीहिस्तत्पुरुषो वा। अथ कस्मादेषा-द्वे नञ्पूर्व्वं नोदाह्रियेते इत्याह एषाद्वे नञ्पूर्वे न प्रयोजयत इति। प्रकृतत्वादित्त्वप्रतिषेधविकल्पइति विज्ञेयम्। किं कारणमित्यनेन नञ्पूर्वयोरप्रयोजकत्वे कारणं पृच्छति। अत्र

ह्रीत्यादिना तत्कारणं दर्शयति । सोऽन्तर्वर्त्तिन्या विभक्त्येति । यासौ समासार्था विभक्तिस्तया लुप्तयापि प्रत्ययलक्षणेन स आप्सुबन्तादेव तच्छब्दाद्धिशब्दाच्च परः सम्पद्यते । तेनेत्त्वस्य प्राप्तिरेव नास्ति । असुपइति प्रतिषेधात् । तत् किं प्रतिषेधविकल्पेन ? तस्मादेषाद्वे नञ्पूर्वे न प्रयोजयतः । यद्येवमनयैव युक्त्या स्वशब्दोऽपि न प्रयोजयेदित्यत आह स्वशब्दस्त्वित्यादि । युक्तं यदेषाद्वे नञ्पूर्वे न प्रयोजयतः । अत्र व्यवधानाभावात् सुबन्तात् पर आब् भवतीति कृत्वा । नहि प्राक् टेरभवन्नकज् व्यवधायको भवितुमर्हति । स्वशब्दस्तु स्वमज्ञातिधनाख्यायामिति ( १।१।३५ ) वचनाज् ज्ञातिधनयोरसर्वनामसंज्ञकः । तेन तस्मात् कप्रत्ययेनेव भवितव्यम् । नाकचा । तत्र यदि नञ्समासं कृत्वा कप्रत्ययः क्रियते तदन्ताच्च टाप् तदासौ सुबन्तात् परो न भवति । कप्रत्ययेन व्यवधानादित्यसर्वनामसंज्ञकः स्वशब्दो नञ्पूर्वोऽपि विकल्पं प्रयोजयति । भस्त्रेत्ययमभाषितपुंस्कइति । स्त्रियामेव सर्वदा वृत्तेः । यद्येवमभाषितपुंस्काच्चेत्यनेनेव ( ७।३।४८ ) विकल्पः सिद्धः । तत् किमर्थमिहोपादीयत इत्यत आह तस्येत्यादि । उपसर्जनमर्थः प्रयोजनं यस्य तत् तथोक्तम् । यदानुपसर्जनं भस्त्राशब्दो भवति तदायमभाषितपुंस्क इति सत्यमुत्तरसूत्रेण सिद्धो विकल्पः । तत्रापि नञ्पूर्वाणामित्यनुवृत्तेः । यदा तूपसर्जनं भवति तदा भाषितपुंस्कत्वं प्रतिपद्यत इति न सिद्ध्यति । तस्मादुपसर्जनस्य भाषितपुंस्कस्यापि यथा स्यादित्येवमर्थमिह भस्त्राशब्दस्य ग्रहणम् । अभस्त्रका अभस्त्रिकेति ( ५।३।८५ ) । अल्पइत्यर्थे प्रागिवात् कः । अत्रेति । उपन्यस्त उदाहरण उपसर्जनह्रस्वत्वे कृतइति । अविद्यमाना भस्त्रास्या इति बहुव्रीहौ कृते गोस्त्रियोरुपसर्जनस्येत्यनेन ( १।२।४८ ) । पुनरित्यादि । अभस्त्रशब्दो हि बहुव्रीहिः । स पुंस्यपि वर्त्तत इति भाषितपुंस्को भवति । तस्माद् यदा टाप् स भाषितपुंस्कशब्दादुत्पद्यते । तस्य भाषितपुंस्कादुत्पन्नस्यापि टापः यः केऽणइति ( ७।४।१३ ) ह्रस्वो भवति नासावभाषितपुंस्काद्विहितस्यातः स्थाने भवति । तस्मादभाषितपुंस्कादित्यनेन न सिध्यतीत्यभिप्रायः । नञ्पूर्वाणामपीत्यपिशब्दादन्यपूर्वाणां केवलानाञ्च विधिरयमिष्यत इति । तत्रोदाहरणमाह निर्भस्त्रिकेत्यादि । निर्गता भस्त्रा यस्याः सा निर्भस्त्रिका । बह्व्यो भस्त्रा यस्याः सा बहुभस्त्रिका । आदिशब्देन सुभस्त्रिका सुभस्त्रका भस्त्रका भस्त्रिकेत्येवमादीनां ग्रहणम् । यदि तर्ह्यन्यपूर्वाणां केवलानाञ्च विधिरिष्यते तदा नञ्-

पूर्वाणामिति वचन मनर्थकं स्यात्। नञादिपूर्वाणां तदन्तविधिना भविष्यति। केवलानाञ्च व्यपदेशिवद्भावेन। ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नेति (प,३२)। व्यपदेशिवद्भावोऽप्रातिपदिकेनेति (प,३३) वचनान्न सिध्यतीतीतश्च नाशङ्कनीयम्। उभे अपि ह्येते परिभाषे प्रत्ययविधिविषये एवेत्यत आह अत्रेत्यादि। तदन्तविधिना व्यपदेशिवद्भावेनात्र सिद्धस्यैव यथोक्तप्रकारविधेर्नञ्पूर्वाणामपीति वचनानुवादः। किमर्थः? मन्दबुद्धिप्रतिपत्त्यर्थः। नञ्पूर्वाणामपीति वचन मन्तरेण यः प्रतिपत्तु मनन्तरोक्तमर्थमसमर्थस्तस्यापि मन्दबुद्धेः प्रतिपत्ति र्यथा स्यादितीवमर्थम्।

## ४८। अभाषितपुंस्काच्च।

नञ्पूर्वाणामपीत्यनुकर्षणार्थश्चकार। खट्वाका खट्विकेति। पूर्ववत् कः। खट्वाशब्दोऽयमाविष्टलिङ्गो नित्यं स्त्रियामेव वर्त्तत इति भाषितपुंस्को न भवति। अखट्विकेति। न खट्वा अखट्वेति नञ्समासः। परमखट्वकेत्यादि। सन्महदित्यादिना (२।१।६१) समासः। सर्व्वत्र केऽण इति (७।४।१३) ह्रस्वः। बहुव्रीहि भाषितपुंस्कत्वादत्र न भवितव्यमनेन विकल्पेनेति कस्यचिद् भ्रान्तिः स्यात्। अत स्तान्निराकर्त्तु माह बहुव्रीहावित्यादि। कथं पुनरभाषितपुंस्कादित्युच्यमाने बहुव्रीहौ भाषितपुंस्कादपि भवतीत्याह अत्राप्यभाषितपुंस्कादित्यादि। इतिकरणो हेतौ। यद्यपि बहुव्रीहि र्भाषितपुंस्को भवति तथापि यदा कप्यापोऽन्यतरस्या (७।४।१५) मिति ह्रस्वः क्रियते तदाऽभाषितपुंस्कादेव विहितस्याकारस्य स्थाने यः स्यादकार स्तस्माद् भवत्येव विकल्पः। अविद्यमाना खट्वाऽस्या इति बहुव्रीहिः। शेषाद्विभाषेति (५।४।१५४) कप्। ततो ह्रस्वः। स चाभाषितपुंस्कादेव विहितस्याकारस्य भवति। तेनाखट्वाकाऽखट्विकेति विकल्पो भवत्येव। यदा त्वित्यादि। अविद्यमाना खट्वास्या इति बहुव्रीहौ कृत उपसर्जनह्रस्वत्वम्। ततष्टाप्। अस्या अखट्वेति प्रागिवात् कः (५।३।७०)। अखट्विकेति। अत्र विकल्पो न भविष्यति। भाषितपुंस्कत्वाद्बहुव्रीहे र्विहितस्यातः स्थानेऽकारस्य विहितत्वात्। प्रादिसमासेऽपि न भवतीति दर्शयन्नाह अथेत्यादि। अतिखट्विकेति। अत्रापि प्रादिसमासे कृत उपसर्जनह्रस्वत्वे च पुनस्तत्पुरुषाद्भाषितपुंस्काद् विहितस्यातः स्थाने विहितोऽकारइति न प्रवर्त्तते विकल्पः।

## ४९। आदाचार्य्याणाम्।

नञ्पूर्वाणामपीति निवृत्तम्। पूर्व्वसूत्रे चा-नुकृष्टत्वात्। ह्रस्वापवादोऽयं योगः। केऽण इति (७।४।१३) ह्रस्वापवादश्च। आचार्य्यग्रहणं नित्यार्थम्। असति हि तस्मिन्नुदीचामित्यधिकाराद् विकल्पः स्यात्। आचार्य्यग्रहणे तु सति तेनोदीचामित्येतस्मिन्निवर्त्तिते नित्य एष विधिर् भवतीति।

## ५०। ठस्येकः।

अत्र यद्यविशेषेण ठस्य ग्रहणं स्यात् पठिता पठितुमित्यादौ धात्वन्तस्यापि स्यात्। अत एतद्दोषपरिजिहीर्षया प्रत्ययस्य ठस्य ग्रहणं नतु ठमात्रस्येति दर्शयितुमाह अङ्गस्य निमित्तं यष्ठ इति। अङ्गस्येति सम्बन्धलक्षणा षष्ठी। अत्र यद्यपि धात्ववयवो ह्यङ्गस्य सम्बन्धो भवति तथापि यदा यतो ह्यङ्गस्यात्मलाभो यस्मिन्नङ्गमित्येतद् भवति स एव प्रत्यासत्ते रङ्गस्य निमित्तीभूतः सम्बन्धी गृह्यते। नत्ववयवोऽपि। कथमङ्गस्य निमित्तं भवतीति? एवं मन्यते। यदि सामान्येनाङ्गस्य निमित्तं यत् तदिह गृह्यते धात्वन्तस्य ठस्य स्यादेव। भवन्ति ह्यवयवा अङ्गस्यावयविनो निमित्तम्। तं स्तस्यारभ्यमाणत्वादित्यत आह प्रत्यय इति। अस्यायमभिप्रायः। सत्स्वप्यवयवेषु यावत् प्रत्ययो नोत्पद्यते तावत् तस्यावयविनोऽङ्गात्मलाभो न भवति। तस्मिंस्तूत्पन्ने सति भवति। तस्मात् प्रत्यय एवाङ्गस्य निमित्तम्। नावयव इति। आक्षिकः शालाकिक इति। अक्षैर्दीव्यति शलाकाभिर्दीव्यतीत्यर्थे ठक्। लावणिक इति। अत्रापि लवणं पण्य मस्येति लवणाट्ठञ् (४।४।५२)। इह ठस्येति वर्णमात्रस्य ग्रहणं वा स्यात्? संघातस्य वा? तत्र पूर्वस्मिन् पक्षे ठस्येति निर्द्देशो नोपपद्यते। इतरस्मिंस्त्वौणादिकेऽतिप्रसङ्गः कणेष्ठः कण्ठ इत्यादौ। इह तु मथितं पण्य मस्येति माथितिक इति ठस्येकादेशे कृते प्रकृतेश्च यस्येति (६।४।१४८) चेत्यकारलोपे सति तान्ततायामुपजातायामिकादेशस्य स्थानिवद्भावाट् ठग्रहणेन ग्रहणादिसुसुक्तान्तात् क इति (७।३।५१) कादेशः प्रसज्येतेति यश्चोदयेत् तं प्रत्याह ठगादिष्वित्यादि। आदिशब्देन ठञादीनां ग्रहणम्। यदि तेषु वर्णमात्र मनच्कप्रत्ययोऽकार स्तूच्चारणार्थं स्तदा ठस्येक इत्यत्राप्यकार उच्चारणार्थः। एवं वर्णमात्रं स्थानित्वेनोपादीयते। इहाप्यकार उच्चारणार्थ एवेति वर्णमात्र-

ग्रहणेन यो दोषः परस्य चोदयिष्यतः स निराकृतः। मतयापि वर्णमात्रस्य ग्रहणं आगन्तुकेनोच्चारणार्थेनाकारेण ठस्येति निर्देशस्योपादानात्। संघातग्रहणे त्वित्यादि। अथ ठगादिषु संघातः साच्कष्ठशब्दः प्रत्ययः। एवं मतयापि सूत्रे संघातस्येति स्थानित्वेन ग्रहणं युक्तम्। यस्त्वस्मिन् पक्षे प्रथमो दोष श्चोदयितु-मिष्टः परस्य तं जिहीर्षुराह तत्रेत्यादि। योऽप्यस्मिन् पक्षे द्वितीयो दोष स्तं मथितं पण्यमस्येत्यादिनाविष्कृत्य सन्निपातलक्षणो विधिरित्यादिना ( प,८६ ) परिहरति। अजादिसन्निपातेन तकारान्ततोपजाता। सा नोत्सहतेऽजादित्वं विहन्तुमिति न भवति कादेशः। यस्येति चेति ( ६।४।१४८ ) लोपस्य स्थानि-वद्भावाद्वेति। न भवति कादेश इति प्रकृतेन सम्बन्धः। स्थानिवद्भावेन तकारान्त-ताया विहतत्वात्। स्थानिवद्भावः पुनरचः परस्मिन्नित्यादिना ( १।१।५७ )। पूर्वविधौ कर्त्तव्ये स्थानिवद्भवति। नचात्र पूर्वस्य विधिः। किं तर्हि? पूर्वस्मा-दुत्तरस्य। तत् कुतः स्थानिवद्भाव इत्याह पूर्वस्मादपीत्यादि। न केवलं पूर्वस्य विधिः पूर्वविधिरिति षष्ठीसमासोऽभिमतोऽपितु पूर्वस्माद् विधिः पूर्वविधिरिति पञ्चमीसमासोऽपीत्यभिप्रायः।

## ५१। इसुसुक्तान्तात् कः।

पूर्वेणेकादेशे प्राप्त इसाद्यन्तात् कादेश उच्यते। सार्पिष्कइति। तदस्य पण्यमिति ( ४।४।५१ ) प्राग्वहतीयष्ठक्। रुत्वविसर्जनीयौ। विसर्जनीयस्ये-सुसोः सामर्थ्ये इति ( ८।३।४४ ) षत्वम्। धानुष्क इति। तदस्य प्रहरण मिति ( ४।४।५७ ) ठक्। याजुष्कइति। तेन दीव्यतीति ठक् ( ४।४।२ )। नैषादकर्षुकः शावरजम्बुकइति। निषादकर्ष्वां जातः शावरजम्ब्वां जात इति। ओर्देशे ठञ् ( ४।२।११९ )। केऽणइति ( ७।४।१३ ) ह्रस्वः। मातृकम् पैतृक-मिति। मातुरागतं पितुरागतमिति। ऋतष्ठञ् ( ४।३।७८ )। औदश्वित्-क इति। उदश्वितोऽन्यतरस्यामिति ठक्। शाकृत्को याकृत्कइति। शकृता यकृता संसृष्ट इति ठक् ( ४।४।२२ )। अथेह कस्मान्न भवतीति? आशिषा चरतीत्याशिषिक उषा चरतीत्यौषिक इत्याह इसुसोरित्यादि। अर्चिशुचिहु-सृपिछादिछर्दिभ्यइसिः ( २।२६५, उण )। जनेरुसिः। ( उण,१।२७२ ) अर्ति-पृवपियजितनिधनितपिभ्यो नित्यादिना (उण, २।२४७) प्रकरणेन यौ विहितौ

तयोर् लक्षणप्रतिपदोक्तपरिभाषया (प, ११४) प्रतिपदोक्तयोरिसुसोर्ग्रहणम्। तेनाशिषिक औषिक इत्यत्रापि न भवति। लाक्षणिकत्वादिसुसोः। तथाह्याङ्-पूर्वाच्छास इच्छायामित्यस्माद् वस निवास इत्येतस्माच्च केवलात् क्विपि कृते शासइदङ्हलोरित्याङ् (६।४।३४) शासः क्वावुपसंख्यानमिति शास इत्वम्। वसेरपि वच्यादिसूत्रेण (६।१।१५) संप्रसारणे परपूर्वत्वे च कृत इसुसिति रूपं प्रतिपद्यते। आशिषिक औषिकइति। शासिवसिघसीनाञ्चेति (८।३।६०) षत्वम्। तस्य त्वसिद्धत्वात् कादेशप्राप्तिराशङ्किता। दोष उपसंख्यानमिति। उपसंख्यानशब्दस्य प्रतिपादनमर्थः। तत्रेदं प्रतिपादनम्। नञ्पूर्वाणामपीत्य-तोऽपिग्रहणमनुवर्त्तते। स चानुक्तसमुच्चयार्थः। तेन दोषोऽपि भविष्यति।

## ५२। चजोः कु घिण्ण्यतोः।

पाकस्त्यागइति। भावे घञ्। पाक्यं वाक्यमिति। ऋहलोर्ण्यत् (३।१।१२४)। ननु चात्र घिण्ण्यतोः कार्यिणोश्चजोः साम्याद् यथासंख्यं प्राप्नोति। चकारस्य घिति जकारस्य ण्यति। तत् कथं त्यागो रागइति घिति जकारस्य कुत्वम् प्राप्नोति। नैतदस्ति। ज्ञापकादत्र यथासंख्यं न भवति। यद् भुजन्युब्जौ पाण्युपतापयोः (७।३।६१) प्रयाजानुयाजौ यज्ञाङ्गे (७।३।६२) इति घञि जकारस्य कुत्वाभावं निपातयति। तेन रक्तं रागादिति च (४।२१) निर्देशं करोति तज् ज्ञापयति यथासंख्यमिह न भवतीति।

## ५३। न्यङ्क्वादीनाञ्च।

अघिण्ण्यदर्थोऽयमारम्भः। नावञ्चेरित्युप्रत्यय इति (उण, १।१५)। तत्र भृमृशी-तृचरित्सरितनिधनिमिमस्जिभ्य (उणादि १।७) उरित्यनुवृत्तेः। मद्गुरिति। टुमस्जो शुद्धौ। झलाञ्जश् झशीति (८।४।५३) सकारस्य दकारः। मिमस्जिभ्य उरित्यनेन (उण्, १।७) भृमृशीतृचरीत्यादिकमुपलक्षयति। भृगुरिति। भ्रस्ज पाके। प्रथिम्रदीत्यादिके (उ, १।२८) सूत्रेऽतएव (उ, १।७) सूत्रादुप्रत्ययोऽनुवर्त्तते। दूरेपाकाइति। कर्मकर्त्तरि पचाद्यच्। उकारान्तावपर इति। अधीयत इत्य-पेक्षते। तक्रतेरिति। तन्चु त्वन्चु गतार्विति। वन्चु प्रलम्भने। स्फायितञ्चि-वञ्चीति सूत्रैकदेशः। स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दि-

क्षितिहृत्यजिनीपदिमदिमुदिखिदिछिदिविदिभिदिमन्दिचन्दिदहिदमिदम्भिवसि-वाशिशीङ्हसिसिधिशुभिभ्यो रगित्येतत् ( उण, २।१७० ) सूत्रमुपलक्षयति। व्यतिषङ्ग इति। षन्ज सङ्गे। अवसर्ग इति। सृज विसर्गे। पचाद्यच्। मेघ इति। मिह सेचने। अजेव। श्वपाक इति। कर्म्मण्युपपदादण्प्रत्ययः कर्मण्य-णितानेन (३।२।१)। अर्हेरिति। अर्ह पूजायाम्। दहेरिति। दह भस्मीकरणे। रुहेरिति। रुह बीजजन्मनि प्रादुर्भावे। ननु च न्यङ्क्वादयः कृतकुत्वाः प्राति-पदिकगणे पठ्यन्ते। तत् किमर्थमिदम्? यथैव हि कुत्वादन्यत् कार्य्यं भवति निपातनात् तथा कुत्वमपि भविष्यति। तस्यैव प्रातिपदिकपाठस्याभ्यनुज्ञानार्थ-मिद मुच्यते। असति ह्येतस्मिन् प्रमादपाठो विज्ञायेत।

## ५४। हो हन्तेर्ञ्णिन्नेषु।

घातयतीत्याद्युदाहरणानि हनस्तोऽचिण्णलोरित्यत्र ( ७।३।३२ ) व्युत्-पादितानि। घ्नन्तीति। लट्। झेरन्तादेशः। गमहनेत्यादि-( ६।४।९८ ) नोपधालोपः। घ्नन्त्विति। लोट्। अघ्नन्निति। लङ्। इतश्चेतीकार-( ३।४।१०० ) लोपः। प्रहारः प्रहारक इति। हरते र्घञ्ण्वुली। इह ञ्णिन्नग्रहणं हन्तिविशेषणं वा स्यात् ञ्णिन्नकारपरस्य हन्ते र्यो हकार इति? हकार-विशेषणं वा ञ्णिन्नकारपरस्य हकारस्येति स चेद्धन्तेरिति? तत्र यदि पूर्व्वकः पक्ष आश्रीयेत घ्नन्त्यादौ न स्यात्। नह्यत्र नकारपरो हन्तिः। अवयवेन समुदायस्य पौर्वापर्य्यानुपपत्तेः। अन्यस्य नकारस्याभावात्। अथेतरः पक्ष आश्रीयेत न क्वचित् स्यात्। नहि हकारस्य ञ्णिन्नकारपरता सम्भवति। असम्भवस्तु घ्नन्तीत्यादावकारलोपस्य पूर्वविधौ स्थानिवद्भावे सत्यकारेण व्यवधानात्। घातयतीत्यादावपि हकारात् परेण हन्त्यवयवेनानशब्देन व्यवधानात्। अथ वचनसामर्थ्याद्व्यवधानेऽपि कुत्वं स्यादेवमपि हननमिच्छतीति-सुप आत्मनः क्यच् ( ३।१।८ ) क्यचि चेतीत्वं ( ७।४।३३ )-क्यजन्ताण्ण्वुल्-अतो लोप ( ६।४।४८ ) इत्यकारलोपो-हननीयक इत्यत्रापि स्यादिति यश्चोदयेत् तं प्रति पक्षान्तरमाश्रित्याह ञ्णित्प्रत्ययोऽत्र हन्ते र्विशेषणमित्यादि। नहि सर्वेषां ञ्णिन्नकाराणां हन्तिं प्रति विशेषणत्व मुपपद्यते। नापि हकारं प्रति। तस्माद् यथासम्भवं किञ्चिदेव कस्यचिद्विशेषणम्। ञ्णित्प्रत्ययस्तु हन्तेःपरतः उपपद्यत इति तस्यासौ

विशेषणम् । ञ्णिति प्रत्यये परतोऽनन्तरस्य हन्तेरिति । नकारस्तु हन्ते विशेषणं नोपपद्यते । पूर्वोक्तात् कारणात् । हकारस्य तूपपद्यत इति तस्यैव विशेषणम् । नकारे परतोऽनन्तरस्य हन्तिहकारस्यानन्तर इति । अयं तु तस्मिन्निति निर्दिष्टे ( १।१।६६ ) पूर्वस्येति निर्दिष्टग्रहणस्यानन्तर्यार्थत्वाल्लभ्यते । आनन्तर्याश्रयणे तु हन्ता हन्तुमित्यत्राप्यतिप्रसङ्गो निरस्तः । ननु चानन्तर्यमेव हकारस्य णकारेण न सम्भवति । अकारलोपस्य स्थानिवद्भावे सत्यकारेण व्यवधानादित्यत आह तत्रेत्यादि । सन्निपातकृतमिति । श्रुतिकृतमित्यर्थः । ननु चाश्रितेऽपि सन्निपातकृतानन्तर्ये स्थानिवद्भावशास्त्रेण यत् कृतमनानन्तर्यं तद्विहन्यादेव कुत्वमित्यत आह स्थानिवद्भावशास्त्रकृतन्त्वित्यादि । किं कारणमविघातक मित्याह वचनसामर्थ्यादिति । यदि स्थानिवद्भावशास्त्रकृत मनानन्तर्यं व्यवधायकं बाधकं स्यान्नकारवचनमनर्थकं स्यात् । निरवकाशत्वात् । तस्माद्वचनसामर्थ्यान्न विघातकम् । यद्यपीत्यादिना यौ द्वौ पक्षावुपन्यस्तौ तत्र द्वितीये पक्षे यो दोषस्तस्य परीहारः । तत्र नकारेण हकारे विशिष्यमाणे यो दोषः स पूर्वमेव परिहृतः । सम्प्रति तु ञ्णित्प्रत्ययेन हकारे विशिष्यमाणे यो दोष स्तं परिहरति । योऽयं हन्तेरवयवो हकारात् परोऽकारादिनकारान्तस्तेन सर्वत्र ञ्णित्प्रत्ययस्य व्यवधानम् । अननीयशब्देन तु व्यवधानं सम्भवति । न सम्भवति च तत्र येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यादिति घातयतीत्यादौ कुत्वं भवति । येन त्वननीयशब्देन व्यवधानं न सम्भवति । सम्भवति च तेन व्यवधाने हननयीक इत्यत्र न भविष्यति । आद्ये तु पक्षे यो दोष उक्तः स तस्यानभ्युपगमादेवानवसरः । हन्तेः श्तिपा निर्देशो धातुनिर्देशार्थएव । न यङ्लुग्निवृत्त्यर्थः । तत्र ह्यभ्यासाच्चेति ( ७।३।५५ ) भवितव्यमेव कुत्वेन ।

## ५५ । अभ्यासाच्च ।

जिघांसतीति । सन् । अज्झनगमां सनीति ( ६।४।१६ ) दीर्घः । द्विर्वचनम् । कुहोश्चुरिति ( ७।४।६२ ) कुत्वं झकारः । अभ्यासे चर्चेति ( ८।४।४४ ) जश्त्वं जकारः । सन्यत इतीत्वम् ( ७।४।७९ ) । जङ्घन्यतइति । नुगतोऽनुनासिकान्तस्येति ( ७।४।८५ ) नुक् । जघनेति । उत्तमपुरुषे णलि यदा णित्त्वं नास्ति तदैतदुदाहरणम् । णित्त्वपक्षे तु पूर्वेणैव सिद्धम् । अथ हननशब्दात् क्वचि

कृते तदन्तात् सनि जिहननीयिषतीत्यत्र कस्मान्न भवतीति ? भवति ह्यत्राभ्यासात् परो हन्तिहकारइत्याह इहाभ्यासनिमित्तप्रत्यय इत्यादि। इह हन्तेरित्यनुवर्त्तते। अङ्गस्येति च। अभ्यासेनाभ्यासनिमित्तं प्रत्ययः सन्निधापितः। तस्य प्रत्ययविशेषनिमित्तत्वात् तत्र तेनाभ्यासनिमित्तेन प्रत्ययेन हन्तेरङ्गं विशिष्यते। अभ्यासनिमित्ते प्रत्यये यदङ्गं हन्तिरिति। तेनाप्येवंविधेन हन्तिनाभ्यासो विशिष्यते। यथोक्तविशेषणविशिष्टस्य हन्तेरङ्गस्य योऽभ्यास इत्येवं विशेषणविशेष्यभावे सत्यभ्यासनिमित्ते सन्नादौ प्रत्यये हन्तेरङ्गस्य योऽभ्यासस्तस्मादेव कुत्वेन भवितव्यम्। तेनेह न भवति जिहननीयिषतीति। न ह्यत्राभ्यासनिमित्ते प्रत्यये सनि हन्तिरङ्गम्। किं तर्हि ? हननीयशब्दः। यस्मिंस्तु हन्तिरङ्गं लुप्टि स नाभ्यासनिमित्तम्।

## ५६। हेरचङि।

प्रजिघीषतीति। हि गतौ। सन्। पूर्ववद्दीर्घत्वम्। प्रजेघीयतइति। अकृत्सार्वधातुकयोरिति ( ७।४।२ ) दीर्घः। द्विर्वचनम्। गुणो यङ्लुकोरि- ( ७।४।८२ ) त्यभ्यासस्य गुणः। प्रजिघायेति। णल्। वृद्ध्यायादेशौ। प्राजीहयदिति। हेतुमण्णिच्। णिश्रीत्यादिना चङादेशः ( ३।१।४८ )। णौ चङ्युपधाया इति ( ७।४।१ ) ह्रस्वः। चङीति ( ६।१।११ ) द्विर्वचनम्। तच्च णौ कृतं स्थानिवद्भवतीति हिशब्दस्य दीर्घो लघोरिति (७।४८४) दीर्घः। चङ्भ्यासनिमित्त इत्यादि। प्राजीहयदित्यत्र चङ्भ्यासनिमित्ते परतो यो णिच् तस्मिन् हिनोतिरङ्गम्। नतु तस्मिन्नेव चङ्भ्यासनिमित्ते। इह सूत्रेऽभ्यासाधिकारात्। अभ्यासेनाक्षिप्तेऽभ्यासनिमित्ते प्रत्यये यदङ्गं हिनोतिरित्येवं विज्ञायते। एवञ्च विज्ञायमाने कः प्रसङ्गो यो ण्यधिकस्य चङि स्यात् ? नैवं प्राप्नोतीत्यतो नार्थोऽचङीति प्रतिषेधेन। एवं प्रत्याख्याय चङ्ग्रहणं तस्य प्रयोजनमाह तत् क्रियत इत्यादि। किं पुनरनेन ज्ञाप्यत इत्याह हेरचङीत्यादि। हेरचङीत्यनेन चङोऽन्यत्र सन्नादौ ण्यधिकस्यापि हिनोतेः कुत्वं भवतीत्येषोऽर्थो ज्ञाप्यते। तेनेत्यादिना ज्ञापकस्य प्रयोजनं दर्शयति। प्रजिघाययिषतीति। प्रहाययितुमिच्छतीति ण्यन्तात् सन्।

## ५७। सन्लिटोर्जेः।

जिगीषति जिगायेति। आदेः परस्येति परस्यादे (१।१।५४) र्जकारस्य कुत्वम्। ज्या वयोहानावित्यस्य लिट्। ग्रहिज्यादिसूत्रेण ( ६।१।१६ ) संप्रसारणे कृते

परपूर्वत्वे च जिरित्येष रूपविशेषो भवति। अतस्तस्यापि कुत्वं प्राप्नोति जिग्रहणेन ग्रहणात्। नच शकारे वक्तं हल इति (६।४।२) दीर्घत्वे कृते जिग्रहणेन ग्रहणं न भविष्यति। एकदेशविकृतस्यानन्यत्वात् (प,३८)। अन्यथा हि जिगीषतीत्यत्राप्यज्झनगमां सनीति (६।४।१६) दीर्घत्वे कृते जिग्रहणेन ग्रहणं न भविष्यति। अथवा प्रागेव दीर्घात् परत्वात् कुत्वेन भवितव्यमिति यश्चोदयेत् तं प्रत्याह जिनातेरित्यादि। लक्षणप्रतिपदोक्तपरिभाषया (प,११४) जि जय इति यः पठ्यते तस्यैवेदं प्रतिपदोक्तस्यैव ग्रहणम्। न जिनातेः। संप्रसारणे कृते यज्जीरूपं सम्पद्यते। तस्य लाक्षणिकत्वात्। जिज्यतुर्जिज्युरिति। लिट्। अतुसुस्। एरनेकाचोऽसंयोगपूर्वस्येति (६।४।८२) यणादेशः।

## ५८। विभाषा चेः।

## ५९। न क्वादेः।

चजोः कुघिण्ण्यतोरिति (७।३।५२) कुत्वे प्राप्ते प्रतिषेधोऽयमारभ्यते। कूजः खर्जो गर्जइति। कूज अव्यक्तशब्दे। खर्ज व्यथने। गर्ज शब्दे।

## ६०। अजिव्रज्योश्च।

समाज उदाज इति। अज गतिक्षेपणयोः। समुदोरजः पशुष्विति (३।३।७९) घञ्। परिव्राजः परिव्राज्यमिति। वज व्रज गतौ। अथाजेर्ण्यति कस्मादुदाहरणं नोपन्यस्तमित्याह वीभावस्येत्यादि। तत्राजेर्व्यघञपोरिति (२।४।५६) वीभावस्य विधानमिति। तेन तस्योदाहरणं नोपपद्यते। ततो न दर्शितमित्यभिप्रायः। चकारोऽनुक्तसमुच्चयार्थः। तेन वजेरपि प्रतिषेधो भवति वाजो वाज्यमिति।

## ६१। भुजन्युब्जौ पाण्युपतापयोः।

भुजइति। भुज पालनाभ्यवहारयोः। हलश्चेति (३।३।१२१) घञ्। अत्रावे तॄस्त्रोर्घञित्यतो (३।३।१२०) घञनुवर्त्तते। न्युब्जइति। यदा दकारोपध उच्यत उद्ज आर्जव इति तदा दकारस्य बकारो निपात्यते। अथवाऽसिद्धेभ

उब्जेरित्यनयेष्टया (I) दकारस्य भकारे कृते जश्त्वेन बकारो भवति। यदा तु बकारोपध उब्ज आर्जवइति तदा समुद्गइत्यत्र बकारस्य दकारो वक्तव्यः।

## ६२। प्रयाजानुयाजौ यज्ञाङ्गे।

प्रयाजोऽनुयाज इति। प्रपूर्वादनुपूर्वाच्च यजेरकर्त्तरि च कारके संज्ञायामिति (३।३।१९) घञ्। तस्मिन्न कुत्वं निपात्यते। प्रदर्शनार्थमिति। अन्यस्याप्येवं-प्रकारस्योपलक्षणार्थमित्यर्थः। तेनान्यत्रापि प्रयाजानुयाजप्रकारे यज्ञाङ्गे कुत्वं न भवति। प्रदर्शनार्थता पुनः प्रयाजानुयाजशब्दयोर्यज्ञाङ्गग्रहणाद् वेदितव्या। तद्ध्येव-मर्थं क्रियते। कथं नाम प्रयाजानुयाजग्रहणस्योपलक्षणार्थता प्रतीयते ? अन्यथा हि निपातनसामर्थ्यादेव यज्ञाङ्गविषयता विज्ञायत इति तन्न कर्त्तव्यमेव स्यात्।

## ६३। वञ्चेर्गतौ।

वञ्चमिति। वन्चु चन्चु तन्चु त्वन्चु म्रुन्चु म्लुन्चु म्रुचु म्लुचु गत्यर्थाः। कर्मणि घञ् (J)। वञ्चं वञ्चन्ति गन्तव्यं गच्छन्तीत्यर्थः। वङ्कमिति। हलश्चेति (३।३।१२१) घञ्।

## ६४। ओक उचः के।

न्योक इति। निपूर्वादुच समवाय इत्यस्मादिगुपधज्ञाप्रीकिरः कः (३।१।१३५)। न्युचतीति न्योकः। निवसतीत्यर्थः। न्युचन्त्यस्मिन्निति घञर्थे कविधानमिति (३।३।५८, वा) वा कः। न्योको निवसन्त्यस्मिन्नित्यर्थः। किमर्थं पुनरित्यादि। एवं मन्यते। रूढ़िशब्दोऽयम्। नात्र कश्चिदवयवार्थोऽस्ति। व्युत्पत्तिः केवलं कर्त्तव्या। सा च हलश्चेति (३।३।१२१) घञ्यपि कृते भवत्येव। ततो नार्थोऽनेन योगेनेति। घञि सत्याद्युदात्तः स्यादिति। ञ्नित्यादिर्नित्य (६।१।१९७) मित्यनेन। अथ दिवौकसो जलौकस इत्यादौ कथं कुत्वम् ? यावता नात्र कप्रत्ययो-ऽस्ति। नापि घिण्ण्यतौ। किं तर्हि ? असुन्निति। अत आह दिवौकस इत्यादि। गतार्थम्।

---

(I) इदं हयवरडिति प्रत्याहारसूत्रभाष्यस्थं भाष्यकृद्वचनम्।

(J) अतो गुणिनि वृत्तित्वाद्विशेष्यनिघ्नत्वम्। एवञ्च वङ्कमित्यत्रापि। मुद्रितकाशिकापुस्तके तु वङ्कमिति पाठः।

## ९५ । ण्य आवश्यके ।

अवश्यपाच्यमित्यादि । डुपचष् पाके । वच परिभाषणे । आवश्यकाधमर्ण्ययोर्णिनि ( ३।३।१७० ) रित्यनुवृत्तौ कृत्याश्चेत्यावश्यके ( ३।३।१७१ ) ण्यत् । मयूरव्यंसकादित्वात् ( २।१।७२ ) समासः । लुम्पेदवश्यमः कृत्ये तुम्काममनसोरपीत्यनयेष्याऽवश्यमो मकारलोपः ।

## ९६ । यज-याच-रुच-प्रवचर्चश्च ।

ण्यइतेव । अनावश्यकार्थमिदम् । याज्यमित्यादि । यज देवपूजादौ । टुयाचृ याच्ञायाम् । रुच दीप्तौ । वच परिभाषणे । प्रपूर्वः । ऋच स्तुतौ । कथं पुनर्ऋचेर्ण्यत् ? यावता ऋदुपधाच्चाकॢपिचृतेरिति ( ३।१।११० ) ण्यदपवादेन क्यपा भवितव्यमित्याह ऋदुपधादित्यादि । अथ प्रवचिग्रहणं किमर्थं यावता वचोऽ शब्दसंज्ञाया (७।३।६७) मित्यनेनैव प्रतिषेधो भविष्यतीत्याह प्रवचिग्रहणं शब्दसंज्ञार्थमिति । स्यादेतत् । नास्त्येव कश्चिच्छब्दो यस्य प्रवाच्यमिति नामधेयमित्याह प्रवाच्यो नामेत्यादि । अपरं पुनरित्यादिना मतान्तरं दर्शयति । एतत्त्विति । अविवाक्यमेतद्रूपम् । कः पुनरसौ विशेष इत्याह दशरात्रस्येत्यादि । यस्मिन् याज्ञिका न विब्रुवते तस्य दशरात्रस्य यद्दशम महस्तत्रैवैतच्छब्दरूपमिष्यते । नान्यत्र । यद्येवमनर्थकं नियमार्थं प्रवचिग्रहणम् । अवश्यं तस्य विशिष्टविषये वृत्तिर्यथा स्यादितेवमर्थो यत्नः कर्त्तव्यः । ततएव यत्नात् तत्र कुत्वमपि भविष्यति । नैतदस्ति । नियमाद्धान्योपसर्गस्य कुत्वप्रतिषेधो निवर्त्तते । अभिधेयव्यवस्था तु प्रसिद्धिवशादेव विज्ञास्यते । ण्यति प्रतिषेधइत्यादि । ण्यति प्रतिषेधेऽस्मिन् क्रियमाणे त्यज हानावित्यस्योपसंख्यानं कर्त्तव्यम् । उपसंख्यानशब्दस्य प्रतिपादनमर्थः । तत्रेदं प्रतिपादनम् । चकारोऽनुक्तसमुच्चयार्थः । तेन त्यजेरपि प्रतिषेधो भविष्यतीति ।

## ९७ । वचोऽशब्दसंज्ञायाम् ।

## ९८ । प्रयोज्यनियोज्यौ शक्यार्थे ।

प्रपूर्वस्य निपूर्वस्य च युजिर् योगइत्यस्य ण्यति कुत्वाभावो निपात्यते । स चेच्छक्यार्थो भवति । शक्यार्थे पुनर्ण्यच्छकि लिङ् चेत्यनेन ( ३।३।१७२ )

वेदितव्यः। तत्र हि कृत्याश्चेत्यनुवर्त्तते (३।३।१७१)। अथ किमर्थं पुन निपातनम्? यावता ण्य इत्यनुवर्त्ततएव। तत्र प्रयुजनियुजोः शक्यार्थइति वक्तव्ये निपातनं रूढ्यर्थम्। अगुणभूता यत्र शक्यार्थता तत्र यथा स्यात् प्रयोज्यो भृत्यो नियोज्यो दासइति। स्वामिनि प्रयोज्यो नियोज्य इति न भवति। नहि तत्र प्रयोज्यनियोज्यशब्दौ रूढौ। किं तर्हि? गुणभूतावेव।

## ६९। भोज्यं भक्ष्ये।

भोज्यमिति। भुज पालनाभ्यवहारयोरित्यस्य ण्यति भक्ष्येऽभिधेये कुत्वाभावो निपात्यते। भोज्या यवागूरिति। ननु च भक्षिरयं खरविशदेऽभ्यवहार्य्ये वर्त्तते। न तु द्रवद्रव्ये यथा संस्कृतं भक्षाइत्यत्र (४।२।१६)। तत् कथं भक्ष्यइत्युच्यमाने यवाग्वां भवतीत्याह इह भक्ष्यमित्यादि। नावश्यं भक्षिः खरविशदे वर्त्तते। तथाहि द्रवद्रव्येऽप्यस्य प्रयोगो दृश्यते। यथाऽब्भक्षो वायुभक्षइति। तस्मादभ्यवहार्य्यसामान्ये भक्षिर्वर्त्ततइति यवाग्वामपि भवति। भुजो भक्ष्यइति वक्तव्ये निपातनं रूढ्यर्थम्। अभ्यवहार्य्ये भक्ष्ये कर्म्मणि यथा स्यात्। परिपालनीये मा भूत्। भोग्या अपूपाः। पालनीया इत्यर्थः।

## ७०। घोर्लोपो लेटि वा।

दधन्निति (K) डुदाञ् दाने। लिङर्थे लेट् (३।४।७)। झेरन्तादेशः (७।१।३)। इतश्च लोपः (३।४।९७) परस्मैपदेष्वितीकारलोपः। लेटोऽडाटावित्यट् (३।४।९४)। शप्। तस्य जुहोत्यादित्वाच्छ्लुः। श्लाविति (६।१।१०) द्विर्वचनम्। संयोगान्तलोपः (८।२।२३)। ङमो ह्रस्वादचि ङमुण् (८।३।३२) नित्यमिति ङमुडागमः। सोमो ददद् गन्धर्वायेति।

(K) In the printed काशिका the first example is दधद्रत्नानि दाशुषे। But the न्यासकार quotes ददन with लेट्भि and does not, it seems, notice दधत्। हरदत्त supports दधत् as लेट् तिप्। But when he says अन्ये त्वाहुः शतन्तमेतत्, he does not explain how the example is appropriate in absence of लेट् in it. Again in दधन्निति न्यासकार cites the Rule for ङमुट्। Does then इति belong to the काशिका text? and is not it inserted by the न्यासकार to shew up the application of लेट्?

ददातेस्तिप्। शेषं पूर्ववत्। यदग्निरग्नये ददादिति ददा आदिति स्थितेऽकः सवर्णे दीर्घत्वम् (६।१।१०१)। शेषं पूर्ववत्। यद्यडागमे कृते सत्यपि लोपे च ददार्दिति सिध्यति किमर्थं तर्हि वेतुच्यत इत्याह तत्रेत्यादि। स्यादेतत्। विस्पष्टार्थं तर्हि वाग्रहणमयुक्तम्। ददादित्यस्य रूपस्यासिद्धिं प्रत्याशङ्काया अभावादित्यत आह एषा ह्येत्यादि। सुबोधम्।

## ७१। ओतः श्यनि।

निश्यतीत्यादि। शो तनूकरणे। छो छेदने। दो अवखण्डने। षो अन्तकर्मणि। अथ किमर्थं श्यनीतुच्यते? न शितीत्येवोच्येत। एवं ह्युच्यमाने श्यन्येव लोपो भविष्यति। न ह्योकारान्ताच्छ्यनोऽन्यच्छित् सम्भवति। लघु चैवं सूत्रं भवति। तत्रायमप्यर्थः। ष्ठिवुक्लमुचमां शितीत्यत्र (७।३।७५) शिद्ग्रहणं न कर्त्तव्यं भवतीतेतदेव तत्रानुवर्त्तिष्यते। सत्यम्। सिद्ध्यतेव। किन्तु प्रतिपत्तिगौरवं स्यात्। तस्मात् प्रतिपत्तिगौरवपरीहारार्थं श्यनीतुक्तम्। ओतइति तपरकरणं मुखसुखार्थम्। नह्यन्यदस्य निवर्त्त्यं विधेयं वा सम्भवति।

## ७२। क्सस्याचि।

अधुक्षाताम्। अधुक्षाथामिति। दुहेर्लुङ्। च्लिः। स्वरितञित (१।३।७२) इत्यात्मनेपदम्। आतामाथाम्। शलइगुपधादनिटः क्सइति (३।१।४५) क्सादेशश्च्लेः। तस्यानेनालोऽन्त्यस्य (१।१।५२) लोपः। दादेर्धातोर्घ इति (८।२।३२) हकारस्य घकारः। एकाचो बशो भषित्यादिना (८।२।३७) भष्। धकारः। खरि चेति (८।४।५५) चर्त्वम्। घकारस्य ककारः। इण्कोरिति (८।३।५७) षत्वम्। अधुक्षीति। उत्तमपुरुषैकवचनमिट्। अधुक्षदिति। तिप्। इतश्चेतीकारलोपः (३।४।१००)। अधुक्षतामिति। तस्थस्थमिपा मित्यादिना (३।४।१०१) तसस्ताम्। ककारवत उपादानम्। इह मा भूत्। हंसौ हंसाः। वत्सौ वत्सादति।

## ७३। लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये।

दुह प्रपूरणे। दिह उपचये। लिह आस्वादने। गुहू संवरणे। सर्व्वे एते स्वरितेतः। स्वरितेत्त्वात् स्वरितञितः कर्त्रभिप्राये क्रियाफल (१।३।७२) इत्यात्मनेपदिनः। अदुग्धेति। पूर्ववद् घकारः। झषस्तथोर्धोऽधइति (८।२।४०)

तकारस्य धकारः। झलाञ्जश् झशीति ( ८।४।५३ ) धकारस्य गकारः। अदुग्धामिति। थास्। पूर्ववद् घत्वादि। अधुग्ध्वमिति। ध्वम्। अदुग्ग्धीति। वहिः। अदिग्धेति। पूर्ववद् घत्वादि। अलीढेति। हकारस्य हो ढइति ( ८।२।३१ ) ढकारः। पूर्ववत् तकारस्य धत्वं ष्टुत्वञ्च। ढो ढे लोपः ( ८।३।१३ )। ढ्रलोपे पूर्वस्येत्यादिना ( ६।३।१११ ) दीर्घः। न्यगूढेति। एतदपि पूर्वेण तुल्यम्। (L) व्यत्यपुच्चतेति। पुष पुष्टौ व्यतिपूर्व्वः। कर्त्तरि कर्मव्यतिहार इत्यात्मनेपदम् ( १।३।१४ )। षढोः कः सीति ( ८।२।४१ ) षकारस्य ककारः। अधुक्षामहीति। महिङ्। अथ लुग्ग्रहणं किमर्थम्? यावता लोपइत्यनुवर्त्तत एवेत्याह लोपइति वर्त्तमान इत्यादि। यदि लोपग्रहणमनुवर्त्त्य लोपो विधीयेत तदलोऽन्त्यस्येत्यन्त्यस्य ( १।१।४२ ) स्यात्। लुकि तु सर्व्वस्यैव भवति। प्रत्ययादर्शनस्य लुक्संज्ञाविधानात्। तस्मात् सर्व्वस्य क्सस्य लोपो यथा स्यादित्येवमर्थं लुग्ग्रहणं कृतम्। वह्यर्थमिति। उत्तमपुरुषद्विवचनार्थमित्यर्थः। वहिरर्थः प्रयोजनं यस्य तत् तथोक्तम्। अथान्यार्थं कस्मान्न भवतीत्याह अन्यत्र त्वित्यादि। यदात्मनेपदं दन्त्यादि तत् सर्व्वं झलाद्येव। तत्रान्त्यस्यैवाकारस्य लोपे कृते झलो झलीति ( ८।२।२६ ) सकारस्य लोपेनेष्टं सिध्यत्येव। स्यादेतत्। अन्यत्रापि लुका विना न सिध्यति। अकारलोपस्य सकारलोपे कर्त्तव्येऽचः परस्मिन् पूर्वविधाविति (१।१।५७) स्थानिवद्भावादित्यत आह स्थानिवद्भावोऽप्यकारलोपस्य नास्तीति। कस्मान्नास्तीत्याह पूर्वत्रासिद्धे न स्थानिवदिति (१।१।५८,वा)। तस्मान्नान्यार्थं लुग् ग्रहणम्। अपितु वह्यर्थमेव। अत्र ह्यझलादित्वाज् झलो झलीति ( ८।२।२६ ) सकारलोपो नास्तीति न सिध्यति। ननु च क्रियमाणेऽपि लुग्ग्रहणे वहौ लुका न भवितव्यमेव। अदन्त्यादित्वात्। नहि दन्त्यौष्ठ्यो वकारो दन्त्यग्रहणेन गृह्यतइत्याह दन्त्यौष्ठ्योऽपीत्यादि। अत्रैव हेतुमाह यदीत्यादि। यदि दन्त्यौष्ठ्यो वकारो दन्त्यग्रहणेन न गृह्येत तदा तावित्येवं ब्रूयात्। न दन्त्यइति। तावप्युच्यमाने सर्व्वमिष्टं सिध्यत्येव। नहि तवर्गादन्यद् दन्त्यमात्मनेपदस्यास्ति। तस्माद् दन्त्यौष्ठ्योऽपि वकारो दन्त्यग्रहणेन गृह्यते। तत्रेदञ्चोद्यते यदुक्तमन्यत्र ह्यन्त्यस्यैव लोपे कृते झलो झलीति ( ८।२।२६ ) सकारलोपेनेष्टं सिद्ध्यत्येवेति तदयुक्तम्। नहि झलो झलीत्यनेन ( ८।२।२६ ) सकारमात्रस्य लोपो विधीयते। किं तर्हि? सिचः। तथाहि तत्रैवं वक्ष्यति अयमपि सिचएव

(L) The printed काशिका has the example व्यत्यक्षत in place of व्यत्यपुच्चत।

लोपइति। नैतदस्ति। मिज्ग्रहणस्य चुरादेशस्योपलक्षणार्थत्वाच् चेयं आदेश स्तत्सम्बन्धिनएव सकारस्य लोपो भवतीत्ययं तत्रार्थो वेदितव्यः।

## ७४। शमामष्टानां दीर्घः श्यनि।

बहुवचननिर्देशादष्टग्रहणाच्चाद्यर्थो गम्यतइत्याह शमादीनामित्यादि। शमु उपशमे। तमु काङ्क्षायाम्। दमु उपशमे। श्रमु तपसि खेदे च। क्षमु सहने। भ्रमु अनवस्थाने। क्लमु ग्लानौ। मदी हर्षे इत्येतेऽष्टौ शमादयः। अस्यतीति। असु क्षेपणे। अष्टाभ्यः परिणायं पठ्यते। भ्रमतीति। वा भ्राशे-त्यादिना ( ३।१।७० ) श्यन् यस्मिन् पक्षे नास्ति तत्रेदं प्रत्युदाहरणम्। श्यन्-ग्रहणं स्पष्टार्थम्। शक्यते ह्यतः श्यनीति ( ७।३।७१ ) यत् प्रकृतं श्यन्-ग्रहणं तल्लुग्ग्रहणेन व्यवहितमपि मण्डूकप्लुतिन्यायेनेहानुवर्त्तयितुम्।

## ७५। ष्ठिवुक्लम्वाचमां शिति।

ष्ठिवु निरसने। क्लमु ग्लानौ। चमु छमु जमु झमु अदने। आङ्पूर्वः। क्लामतीति। वा भ्राशेत्यादिना ( ३।१।७० ) श्यनोऽभावे शप्। क्लमिग्रहणं शबर्थम्। नतु श्यन्नर्थम्। तत्र पूर्वेणैव सिद्धत्वात्। चमेराङ्पूर्व्वस्येत्यादिना केवलस्यान्योपसर्गपूर्वस्य वा मा भूदित्येवमर्थं चमेराङ्पूर्वस्य ग्रहणमिति दर्शयति।

## ७६। क्रमः परस्मैपदेषु।

क्रामतीति। क्रमु पादविक्षेपे। आक्रमतइति। आङ्पूर्वः। आङ उद्गमन इत्यात्मनेपदम् ( १।३।४० )। इहोत्क्राम संक्रामेत्यादिना चोद्यम्। उत्पूर्वात् संपूर्वाच्च क्रमेर्लोट्। सिप्। सेर्ह्यपिच्चेति ( ३।४।८७ ) हिरादेशः। तस्मातो हेरिति ( ६।४।१०५ ) हेर्लुकि कृते न लुमताङ्गस्येति ( १।१।६३ ) प्रत्यय-लक्षणनिषेधादुत्क्राम संक्रामेत्यत्र दीर्घत्वं न प्राप्नोति। न ह्यसति प्रत्ययलक्षणे हौ लुप्ते क्रमः परस्मैपदपरता सम्भवति। नैष दोषइत्यादि परीहारः। स्यादेतत्। लुमता लुप्ते क्रमः प्रत्यये हावेव क्रमिरत्राङ्गमित्याह न च क्रमिरङ्गमिति। शपा व्यवहितत्वात्। किं तर्हि? शपीति। शपएव ततो व्यवहितस्य विद्यमानत्वात्।

## ७७। इषु गमियमां छः।

इच्छतीति। तुदादिभ्यः (३।१।७७) शः। गच्छति यच्छतीति। कर्त्तरि (३।१।६८) शप्। अथ किमर्थमिषु इच्छायामित्येतस्योदितो ग्रहणमित्याह इषेरित्यादि। इष गतावित्यस्य दैवादिकस्येष्यतीत्यत्र मा भूत्। इष आभीक्ष्ण्ये इत्यस्य क्रैयादिकस्येष्णातीत्यत्र च मा भूदित्येवमर्थमुकारानुबन्धइषिरिह गृह्यते। ये तद्दीषिमुदितमिह न पठन्ति तेषामिष्यतीष्णातीत्यत्रापि प्राप्नोतीत्यत आह ये त्विषिमुदितमित्यादि। य इषिमुकारानुबन्धविशिष्टमिह न पठन्ति त इष्यतीष्णातीत्यत्र च्छत्वं मा भूदित्येवमर्थं क्रमस्याचीत्यतो (६।३।७२) ऽज्ग्रहणमनुवर्त्तयन्ति। अनुवर्त्तमानेऽप्यस्मिन् यदि तेन शितीत्येतद् विशिष्यते शितिच्छो भवति-किंविशिष्टे ? अजादाविति—तदेष्णाते लोट्सिपो ह्यादेशे कृते हलः श्नः शानज्झौ (३।१।८३) विति श्राप्रत्ययस्य शानजादेशे कृते सतीषाणेत्यत्र यस्मिन् विधिस्तदादावल्ग्रहणइति तदादिविधिना (प, ३४) छत्वं स्यादेवेति मन्यमान आह तच प्रधानमज्ग्रहणं शितीत्यनेन विशिष्यतइति वर्णयन्तीति। अचि चक्षो भवति स चेच्छिद् भवति। प्राधान्यं पुनरज्ग्रहणस्य विशिष्यमाणत्वादेव। तथाच सतीत्यादि। एवमचीत्यस्मिन् प्रधाने शितीत्यनेन विशिष्यमाणे तदादिविधि न भवति। किं कारणमित्याह यस्मिन् विधिरित्यादि। न केवलं येन विधिस्तदन्तस्येत्येतदेव तदन्तविधानं (१।१।७२) विशेषणेनेष्यतेऽपितु यस्मिन्विधिस्तदादावल्ग्रहण इत्येतदेव तदादिविधानं विशेषणेनेष्यते। तेन च तदादिविधेरभावादिषाणेत्यत्रच्छत्वं न भवति। असत्यपि तदादिविधौ शानजादेशस्य योऽयमादिराकार स्तत्र शिति परतश्छत्वं कस्मान्न भवतीत्याह म ह्ययमित्यादि। शकारः समुदायानुबन्धो नाकारस्याचः। तस्मान्नाजेव शिदपितु समुदाय एवेति न भवति च्छत्वम्।

## ७८। पा-घ्रा-ध्मा-स्था-म्ना-दाण्-दृश्य-र्त्ति-सर्त्ति-शद-सदां पिब-जिघ्र-धम-तिष्ठ-मन-यच्छ-पश्य-र्च्छ-धौ-शीय-सीदाः।

पा पाने। घ्रा गन्धोपादाने। ध्मा शब्दाग्निसंयोगयोः। ष्ठा गतिनिवृत्तौ। म्ना अभ्यासे। दाण् दाने। दृशिर् प्रेक्षणे। ऋ गतिप्रापणयोः। ऋ सृ गतौ च। शद्लृ शातने। षद्लृ विशरणे तौदादिकः। षद्लृ विशरणगत्यवसादनेषु

भौवादिकः। एषां धातूनां स्थाने यथासंख्यं पिबादय आदेशा भवन्ति। ननु च द्वौ मदौ। तत्र वैषम्याद् यथासंख्यं न प्राप्नोति। नैष दोषः। एकएव हि सदि विकरणद्वयार्थं द्विरुपदिश्यते। शीयतइति। शदेः शित (१।३।६०) इत्यात्मनेपदम्। अथवेत्यादि। पिबते र्लघूपधगुणः प्राप्नोतीत्यत्र परिहारान्तरम्। यद्याद्युदात्तो न निपात्येत ततो धातुस्वरेणान्तोदात्तत्वे सत्येकादेश उदात्तेनोदात्त (८।२।५) इति शपा सहैकादेशे सत्यतो गुणे (६।१।९७) पररूपत्व उदात्ते कृते पिबतीति मध्योदात्तं पदं स्यात्। आद्युदात्तश्चेष्यते। तस्मादाद्युदात्तो निपात्यते। स निपातनस्वरो धातुस्वरस्य बाधको यथा स्यात्। सर्त्तेरित्यादि। वेगो जवः। स यस्यास्ति स वेगी। तस्य भावो वेगिता। तस्यां गतौ सर्त्तेर्धावादेश मिच्छन्ति। स च लुग् वा दुहदिहेत्यादेः (७।३।७३) सूत्राद्वाग्रहणानुवृत्ते र्व्यवस्थितविभाषात्वा-ल्लभ्यतइति वेदितव्यम्। अर्त्तिसर्त्तीति। श्तिपा निर्द्देशो धातुनिर्द्देशार्थएव। न यङ्लुग्निवृत्त्यर्थः। नहि यङ्लुकि शित् परः सम्भवति। अदादित्वात् ततो विहितस्य शपो लुग्विधानात्। बहुलञ्छन्दसीति (२।४।७३) शपो लुग् न भविष्यतीति चेत्? न। छन्दसि यथादृष्टानुविधानात्। अर्त्ति-प्रभृतेश्छन्दसि यङ्लुकि शबन्तस्य प्रयोगादर्शनात्।

## ७९। ज्ञाजनोर्जा।

जनेर्द्दैवादिकस्य ग्रहणमिति। द्वौ जनी। दैवादिको जनी प्रादुर्भावे जौहोत्यादिको जन जननइति। तत्रेह दैवादिकस्य ग्रहणम्। नेतरस्य। नहि ततः परः शित् सम्भवति। श्लुविधानात्। दीर्घोच्चारणस्य प्रयोजनमुत्तरत्र वक्ष्यति।

## ८०। प्वादीनां ह्रस्वः।

व्ली गतौ वृदिति यावत् केचिदिच्छन्तीति। तेषां ततः परेण पठितयोर्व्री वरणे भ्री भय इत्येतयो र्ह्रस्वत्वेन न भवितव्यं व्रीणाति भ्रीणातीति। ननु ल्वादीनां परिसमाप्त्यर्थं तद्वृत् करणम्। अन्यथा आ गणान्तात् तेभ्यो निष्ठानत्वं स्यात्। ल्वादिपरिसमाप्त्यर्थे च तस्मिन्नागणान्ताः प्वादयो युक्ता इत्यत आह वृत्करण-मित्यादि। न ह्युभयगणपरिसमाप्त्यर्थता केनचिद् विरुध्यत इत्यभिप्रायः। अपर

इत्यादि। ष्वादे गणस्यानन्तरत्वात् तत्परिसमाप्त्यर्थतैव वृत्करणस्य युक्तेति भावः। तेषामेवमिच्छतां व्री वरणे भ्री भय इत्येतयोरपि भवितव्यं ह्रस्वत्वेन व्रिणाति भ्रिणातीति। प्वादिषूभयोरन्तर्भावात्। जानातीत्यत्र ह्रस्वः प्राप्नोतीति। तस्यापि प्वाद्यन्तर्भावादित्याह ज्ञाजनो र्जेत्यादि। यदि जा इत्यादेशे कृते ह्रस्वः स्यात् तदा दीर्घोच्चारणमनर्थकं स्यात्। जइत्येवं ब्रूयात्। तस्माद् दीर्घोच्चारण-सामर्थ्याज् जानातीत्यत्र ह्रस्वो न भविष्यति। ननु च दीर्घोच्चारणं जन्यर्थं स्यात्। नहि जनेर्जे इत्यादेशे कृते जायतइति रूपं सिध्यतीत्यत आह ज इत्यपि ह्यादेशे कृत इत्यादि। येषान्तूभयगणपरिसमाप्त्यर्थं वृत्करणं तेषां किमर्थं जाइति दीर्घो-च्चारणम्? जानातीत्यत्र दीर्घो यथा स्यात्। नैतदस्ति। अतो दीर्घो यञीति (७।३।१०१) दीर्घो भविष्यति। ननु चाङ्गवृत्ते पुनर्वृत्तावविधिर् निष्ठितस्येति (प,९३) न प्राप्नोति। नैतदस्ति। निष्ठितस्येत्युच्यते। नच ज इत्यादेशे कृते निष्ठितमङ्गं भवति। अप्रयोगार्हत्वात्। प्रतिपत्तिलाघवार्थं दीर्घोच्चारणम्।

## ८१। मीनातेर्निगमे।

प्रमिणन्तीति। हिनुमीनेति (८।४।१५) णत्वम्। श्नाभ्यस्तयोरात इत्याकारलोपः (६।४।११२)। मीनातेरिह विकरणनिर्देशो मीञ् हिंसाया मित्यस्य क्रैयादिकस्य ग्रहणं यथा स्यात्। मीङ् हिंसायामित्यस्य दैवादिकस्य ग्रहणं मा भूदित्येवमर्थम्। मीञइति निर्देशो न कृतो वैचित्र्यार्थः।

## ८२। मिदेर्गुणः।

ञिमिदा स्नेहन इति भौवादिको दैवादिकश्च। तत्र दिवादेरिह ग्रहणम्। इतरस्य ह्यङित्त्वाच्छपः पुगन्तलघूपधस्येत्येवं गुणः सिद्धः (७।३।८६)। मिद्यतइति। भावकर्मणोरित्यात्मनेपदम् (१।३।१३) सार्वधातुके (३।१।६७) यक्।

## ८३। जुसि च।

इकात्र सन्निहितेन प्रकृतमङ्गं विशिष्यते। विशेषणेन च तदन्तविधि र्भवतीत्यत आह इगन्तस्येत्यादि। अजुहवुरिति। लङ्। सिजभ्यस्तविदिभ्यश्चेति (३।४।१०९) झेर्जुस्। शपः श्लुः। श्लाविति (६।१।१०) द्विर्वचनम्।

अबिभयुरिति । ञिभी भये । अबिभरुरिति । डुभृञ् धारणपोषणयोः । भृञामिदित्यभ्यासस्येत्त्वम् ( ७।४।७४ ) । चिनुयुः सुनुयुरिति । लिङ् । यासुट् । झेर्जुस् । स्वादिभ्यः श्नुः ( ३।१।७३ ) । उस्यपदान्तादिति ( ६।१।९६ ) पररूपत्वम् । तत्र नाप्राप्ते इत्यादि । सार्वधातुकमाश्रयो यस्य तत् सार्वधातुकाश्रयम् । ङित्त्वं निमित्तं यस्य प्रतिषेधस्य स तथोक्तः । स सर्वत्रैव जुसि प्राप्नोतीति तस्मिन्नप्राप्तेऽयं गुण आरभ्यमाणस्तस्यैव बाधको भविष्यति । न तु यस्य यासुडाश्रयं ङित्त्वं निमित्तं तस्यापि । अत्र हि प्राप्ते चाप्राप्तेऽयमारभ्यते । चिनुयुरित्यादौ प्राप्तेऽजुहवुरित्यादावप्राप्ते । चकारः समुच्चये । नान्यत् समुच्चेतव्यमस्तीत्यस्यैव लक्षणस्य पुनरावृत्तिमाचष्टे । तेन प्रकृतलक्षणस्यापि प्रतिषेधविषये भवति । अदीधयुरिति । दीधीङ् दीप्तिदेवनयोः । लङ् । व्यत्ययेन परस्मैपदम् । झिः । जक्षित्यादयः षडित्यभ्यस्तसंज्ञा ( ६।१।६ ) । सिजभ्यस्तविदिभ्यश्चेति ( ३।४।१०९ ) झेर्जुस् । अदादित्वाच्छपो लुक् । ततः सार्वधातुकार्धधातुकयो ( ७।३।८४ ) रिति गुणः प्राप्तः । स क्ङिति चेति ( १।१।५ ) प्रतिषिद्धः । सोऽप्यनेन पुनः प्राप्तो दीधीवेवीटामिति ( १।१।६ ) प्रतिषिद्धः समुच्चयार्थत्वाच्चकारस्य भवति ।

## ८४ । सार्वधातुकार्धधातुकयोः ।

चेता स्तोतेति । तृच् । ऋदुशनस्पुरुदंसोऽनेहसां चेत्यनङ् ( ७।१।९४ ) । सर्वनामस्थान इत्यादिना (६।४।८) दीर्घः । सार्वधातुकार्धधातुकयोरिति किमिति ? एवं मन्यते । प्रत्यय इति वक्तव्यम् । सङीति वा । एवं ह्युच्यमाने भवतीत्यादौ गुणः सिद्ध एव । सङीति प्रत्याहारग्रहणं सनः सकारादारभ्य महिङो ङकारेण । अग्नित्वमिति । तस्य भावस्त्वतलाविति ( ५।१।११९ ) त्वप्रत्ययः । अग्निकाम्यतीति । काम्यच्चेति ( ३।१।९ ) काम्यच् । यदीत्यादि । यदि प्रत्यय इत्युच्येत त्वकाम्यचोरपि स्यात् । अथापि सङीत्युच्येत काम्यचि स्यात् । तस्यापि प्रत्याहारेऽन्तर्भावात् ।

## ८५ । जाग्रोऽविचिण्णल्ङित्सु ।

जागरयतीति । णिच् । जागरक इति । ण्वुल् । साधु जागरीति । ताच्छील्ये णिनिः । जागरञ्जागरमिति । आभीक्ष्ण्ये णमुल् ( ३।४।२२ ) । आभीक्ष्ण्ये द्वे

भवतइति ( ८।१।१२, वा ) द्विर्व्वचनम् । जागरो वर्त्तत इति । भावे घञ् । एतानि वृद्धिविषय उदाहरणानि । जागरितो जागरितवानिति प्रतिषेधविषये । किं पुनः कारणं वृद्धिविषये प्रतिषेधविषये चैवोपन्यस्तान्युदाहरणानीत्यत आह वृद्धिविष प्रतिषेधविषये चेत्यादि । वृद्धिप्रतिषेधविषयादन्यत्र पूर्वसूत्रेण गुणः सिद्धो भवति तस्माद्वृद्धिप्रतिषेधविषयेऽयं गुण आरभ्यते । तेन तद्विषयाणामेवोदाहरणानामुपन्यासः । जागरयतीत्यादौ गुणे कृते परत्वे चात उपधाया ( ७।२।११६ ) इति वृद्ध्या भवितव्यमिति कस्यचिद् भ्रान्तिः स्यात् । अतस्तान्निराकर्त्तुमाह तस्मिन् कृतइत्यादि । किं पुनः कारणं तस्मिन् कृते न भवतीत्याह यदि हीत्यादि । यद्यस्मिन् कृतेऽपि गुणेऽत उपधाया इति ( ७।१।११६ ) वृद्धिः स्याज् जागरयतीत्यादिकं रूपं न स्यात् । तथाचानर्थको गुणः स्यात् । अचोञ्णितीत्यनयैव ( ७।१।११५ ) वृद्ध्या सिद्धत्वात् । चिण् णलोपर्य्येत्यादि । चिण्णलोः प्रतिषेधस्यैतत् प्रयोजनं वृद्धेः श्रवणं यथा स्यात् । यदि नु कृतेऽपि गुणेऽत उपधाया ( ७।१।११६ ) इति स्याच्चिण्णलोः प्रतिषेधोऽनर्थकः स्यात् । अस्त्वत्र गुणः । सत्यपि तस्मिन् पुनरुपधाया इति वृद्ध्या भवितव्यम् । ततश्च वृद्धेः श्रवणं भविष्यतीति । अजागारीति । लुङ् । च्लिः । चिण् भावकर्मणोरिति ( ३।१।६६ ) च्लेः चिण् । चिणो लुगिति ( ६।४।१०४ ) तकारस्य लुक् । जाग्रतो जाग्रथइति । लट् । तस्थसौ । तयोः सार्वधातुकमपिदिति ( १।२।४ ) ङित्त्वम् । अदादित्वाच्छपो लुक् । वीति केचिदिकारमुच्चारणार्थं वर्णयन्तीति । किं पुनरेवं सतीष्टं सिध्यति यतएवं व्याचक्षतइत्यत आह कसावपीत्यादि । यदि समुदायस्य वेः प्रत्ययस्येदं ग्रहणं स्यात् कसौ गुणप्रतिषेधो न स्यात् । यदि त्विकार उच्चारणार्थो वर्णमात्रस्यैवेदं ग्रहणं तदा यस्मिन् विधि स्तदादावल्ग्रहणइति ( प,२४ ) तदादिविधिना कसावपि गुणप्रतिषेधः सिद्धो भवति । जजाग्रवानिति । लिटः कसुश्चेति ( ३।२।१०७ ) कसुरादेशः । उगिदचामिति ( ७।१।७० ) नुम् । सान्तमहतः संयोगस्येति ( ६।४।१० ) दीर्घः । हल्ङ्यादिसंयोगान्तलोपौ । केचिदिति वचनादपर उच्चारणार्थं न वर्णयन्तीत्युक्तं भवति । त एवं मन्यन्ते । छान्दसः कसुः । लिट् च छन्दसि सार्वधातुकमपि भवति च्छन्दस्युभयथेति ( ३।४।११७ ) वचनात् । ततः सार्वधातुकमपिदिति ( १।२।५ ) ङित्त्वादेव पर्य्युदासो भविष्यतीति । अजागरुरित्यादि । एवं मन्यते । अविचिण्णल्ङित्स्विति प्रसज्यप्रतिषेधोऽयम् । विचिण्णल्ङित्सु न भवतीति । ततश्चाजागरुरित्यत्रापि जुसि

चेत्यनेनापि ( ७।३।८३ ) प्राप्तस्य गुणस्य प्रतिषेधः प्राप्नोति। एवमहं जजागरेत्यत्र णलुत्तमो वेति ( ७।१।९१ ) वचनाण्णित्त्वं यदा नास्ति तदा सार्वधातुकार्धधातुकयोरिति ( ७।३।८४ ) गुण इष्यते। सोऽस्मात् प्रतिषेधान्न प्राप्नोतीति। नाप्रतिषेधादिति परिहारः। नायं दोषः। कुतः ? अप्रतिषेधात्। अप्रसज्यप्रतिषेधादित्यर्थः। यदि प्रसज्यप्रतिषेधो न भवति कस्तर्ह्ययमित्याह अविचिण्णल्ङित्स्विति पर्य्युदासोऽयमिति। प्रसज्यप्रतिषेधे हि लक्षणान्तरेणापि प्रसक्तस्य प्रतिषेधः स्यात्। न पर्य्युदासे। तथाहि पर्य्युदासे विचिण्णल्ङिद्भ्योऽन्यत्र गुणो विधीयते। न तु तेषु विचिण्णलादिषु प्रतिषिध्यते। पर्य्युदासश्चायम्। तस्माज्जुसि णलि च गुणो भवत्येव। अभ्युपेत्यापि प्रसज्यप्रतिषेधं परिहारान्तरमाह अथ वेत्यादि। अनन्तरस्य विधिर्वा भवति प्रतिषेधो (प, ६२) वेत्यानन्तर्य्याज् जाग इति या प्राप्तिः स्तस्यायं प्रतिषेधः। या तु जुसि चेत्यादिना ( ७।३।८३ ) लक्षणान्तरेण प्राप्तिः सा न प्रतिषिध्यते। अजागरुरिति। लङ्। जक्षित्यादयः (६।१।६) षड्भ्य अभ्यस्तसंज्ञा। सिजभ्यस्तविदिभ्यश्चेति झेर्जुस् ( ३।४।१०९ )।

## ८६। पुगन्तलघूपधस्य च।

पुगन्तस्याङ्गस्य लघूपधस्य चेत्युभावपि बहुव्रीही। पुगन्तो यस्य तत् तथोक्तम्। लघ्वी उपधा यस्य तल्लघूपधम्। भेत्ता च्छेत्तेति। ननु च प्रत्ययादेर्हलोऽङ्गावयवस्य चानन्तर्य्ये सति संयोगे गुर्व्विति ( १।४।११ ) गुरुसंज्ञया लघुसंज्ञायां बाधितायां गुणेनात्र न भवितव्यमित्यत आह प्रत्ययादेरित्यादि। त्रसिगृधिधृषिक्षिपेः क्नुः ( ३।२।१४० ) हलन्ताच्चेतीति ( १।२।१० ) क्नुसनोः कित्करणस्यैतदेव प्रयोजनं गृध्नुर् बिभित्सतीत्यादौ गुणो मा भूदिति। यदि प्रत्ययादेर्हलोऽङ्गावयवस्य चानन्तर्य्ये सति लघूपधगुणो न स्यात् तयोः कित्त्वं न कुर्य्यात्। कृतञ्च। तस्मात् क्नुसनोः कित्त्वं कुर्वता प्रत्ययाङ्गावयवयोर्हलोरानन्तर्य्येऽपि लघूपधगुणो न व्यावर्त्त्यत इति ज्ञापित मेतत्। ननु च सनः कित्त्वं सिस्मक्षतीतस्यामागमो मा भूदित्येवमर्थं स्यात्। नैतदस्ति। यदि ह्येतत् प्रयोजन मभिमतं स्यात् तत्रैव प्रतिषेधं कुर्य्यात् सृजिदृशोर्झल्यमकित्सनोरिति। तस्मात् सनः कित्करणं ज्ञापकमेव यदि लघूपधस्यानेन गुणो विधीयते। एवं सतीको गुणवृद्धी ( १।१।३ ) इतस्यस्या उपस्थाने सति यत्र तत्र स्थितस्येको गुणः प्रसज्येत। ततश्चेहापि प्राप्नोति भिनत्तीति। भवति ह्यत्र लघूपधमङ्गम्। न च शक्यते वक्तुं हलोऽनन्तराः संयोग ( १।१।७ ) इति संयोग-

संज्ञायां सत्यां लघूपधमेतन्न भवतीति गुणो न भविष्यतीति। यज् ज्ञापित मेतदिदानीमेव प्रत्ययादेरङ्गावयवस्य च हलोरानन्तर्य्ये सति लघूपधगुणो न व्यावर्त्त्येत इत्यत आह उपधा चात्रेत्यादि। इक्परिभाषया ह्यत्रेकः सन्निधापितत्वादिगेवोपधा गृह्यते। तेन भिनत्तीत्यत्र गुणो न भवति। न ह्यत्राङ्गस्येगुपधा। किन्तर्हि? अकारः। अपरे त्वित्यादि। सूत्रार्थं वर्णयन्तीति वक्ष्यमाणेन सम्बन्धः। पुकिअन्तः पुगन्तः। सप्तमीति योगविभागात् (२।१।४०) समासः। अन्तशब्दोऽयमवयववचनः। पुकि परतोऽवयव इत्यर्थः। कस्यावयवः? अङ्गस्येत्यनुवृत्तेः पुगिति वचनात् पुगागमवतोऽङ्गस्य। स पुनः पुगन्त इक्परिभाषोपस्थानादिगेव वेदितव्यः। लघ्वी उपधा लघूपधेति विशेषणसमासः। पुगन्तलघूपधमिति समाहारद्वन्द्वोऽयम्। सूत्रार्थमिति। सूत्रार्थैकदेशे सूत्रार्थशब्दो वर्त्तते। न ह्येतावानेव सूत्रार्थः। अपरिसमाप्तत्वात्। अपरिसमाप्तिस्तु तस्य पुगन्तस्य तस्याश्च लघूपधाया गुणो भवतीत्यस्य सूत्रार्थस्यैकदेशस्यानभिधानात्। वर्णयन्तीति व्याचक्षत इति। भिनत्तीत्यत्र गुणो मा भूदित्येवमर्थम्। नह्यत्र सूत्रार्थे भिनत्तीत्यत्र गुणः प्रसज्येत। बहुव्रीहौ ह्याश्रीयमाणेऽङ्गस्यान्यपदार्थस्य यो नाम कश्चिदिक् तस्य यत्र तत्रावस्थितस्य गुणः प्रसज्येत। तत्पुरुषे तु नायं दोषः। तत्र हि लघूपधेग्भ्यामङ्गं विशिष्यते। अतस्तस्या एव गुणो विधीयते। अङ्गस्य या लघूपधा इक् तस्या गुणो भवतीति। भिनत्तीत्यत्र याङ्गस्य लघूपधा नासाविक्। यश्चेक् स यद्यपि लघुर्भवति न त्वसावुपधा। तस्मात् तत्पुरुष आश्रीयमाणे नेह गुणस्य प्रसङ्गः। सार्वधातुकार्धधातुकयोरित्येव। अग्निचित्त्वम्। अग्निचित्काम्यति। पुगन्तग्रहणम्। लघूपधार्थम्।

## ८७। नाभ्यस्तस्याचि पिति सार्वधातुके।

नेनिजानि वेविजानि परिवेविषाणीति। णिजिर् शौचपोषणयोः। विजिर् पृथग्भावे। विष्लृ व्याप्तौ। एभ्यो लोट्। मिप्। मेर्निः (३।४।८९)। आडुत्तमस्य पिच्चेत्याट् (३।४।९२)। जुहोत्यादिभ्यः श्लुरिति (२।४।७५) शपः श्लुः। श्लाविति (६।१।१०) द्विर्वचनम्। निजां त्रयाणां गुणः (७।४।७५) श्लावित्यभ्यासस्य गुणः। अनेनिजमवेविजम् पर्य्यवेविषमिति। लङ्। तस्थस्थमिपां तान्तन्तामइति (३।४।१०१) मिपोऽमादेशः। वेदानीति। विद ज्ञाने। पूर्ववल्लोडादि यथायोगम्। अदादित्वाच्छपो लुक्। नेनेक्तीति।

लट्, तिप्। चोः कुरिति ( ८।२।३० ) कुत्वम्। अथ पिद्ग्रहणं किमर्थम्? यावताऽपिति सार्वधातुके सार्वधातुकमपिदिति ( १।२।४ ) ङित्त्वे सति क्ङिति चेति ( १।१।५ ) निषेधेन भवितव्यमिति। न चानयोः प्रतिषेधयोः कश्चिद् विशेषोऽस्तीत्यत आह पिद्ग्रहणमित्यादि। तृणहइमितीमं ( ७।३।९२ ) वक्ष्यति। स पिति यथा स्यादपिति मा भूदित्येवमर्थं पिद्ग्रहणम्। निनेजेति। लिट्। स च लिट् चेत्यार्धधातुकसंज्ञकः (३।४।११५)। जुहवानीति। हु दाने। पूर्ववल्लोड़ादि। अजुहवमिति। पूर्ववल्लङादि। अत्र लघूपधस्येत्यनुवृत्तेः सार्वधातुकार्धधातुकयोरितीगन्तस्य ( ७।३।८४ ) यो गुणो विहित स्तस्य प्रतिषेधो न भवति। बहुलञ्छन्दसीति वक्तव्यमिति। छन्दसि विषये बहुलं गुणप्रतिषेधो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्। इहेदं सूत्रं विभज्य द्वौ योगौ क्रियेते। तत्र नेत्येको योगः। अभ्यस्तस्याचि-पिति सार्वधातुक इति द्वितीयः। तत्र च नेत्यनुवर्त्तते। अयञ्च योगः पूर्वयोगस्यासर्व्वविषयत्वज्ञापनार्थः। तेन च्छन्दसि बहुलं प्रतिषेधो भविष्यति। जुजोषदिति। जुषी प्रीतिसेवनयोः। लेट्। तिप्। लेटोऽडाटावित्यट् ( ३।४।९४ )। तुदादित्वाच्छः। तस्य बहुलं छन्दसीति ( २।४।७३ ) श्लुः। श्लाविति ( ६।१।१० ) द्विर्वचनम्। लघूपधगुणः। यद्यभ्यस्तस्याचि पिति सार्वधातुके गुणप्रतिषेध इष्यते पस्पशाते चाकशीति वावशीतीत्यत्रोपधाह्रस्वत्व मिष्यते तन्न प्राप्नोति। तस्मादभ्यस्तानामुपधाह्रस्वत्वमेव वक्तव्यम्। न गुणप्रतिषेधः। ह्रस्वत्वे हि नेनिजानीतेत्येवमादि सिध्यति। पस्पशाते इत्यादि चेति यश्चोदयेत् तं प्रत्याह पस्पशातेइत्यादि। स्पाशिरिति गणपरिपठितो धात्वन्तरमस्त्येव (M)। तस्माद् यङ्। तस्य यङोऽचि चेति (२।४।७४) लुक्। द्विर्वचनम्। शर्पूर्वाःखय इति ( ७।४।६१ ) खयः शेषः। अभ्यासस्य ह्रस्वत्वे कृते दीर्घोऽकित इति ( ७।४।८३ ) दीर्घः। व्यत्ययो बहुलमिति ( ३।१।८५ ) वर्णव्यत्ययेनोपधाया अभ्यासस्य च ह्रस्वः। लेट्। व्यत्ययेनैवात्मनेपदम्। आट्। चाकशीतीति। काशृ दीप्तौ। कुहोश्चुरित्यभ्यासस्य ( ७।४।६२ ) चुत्वम्। तिप्। यङो वेतीट् ( ७।३।९४ ) वावशीतीति। वाशृ शब्दे। शेषं यथायोगं पूर्ववत्। पस्पशाते इत्यत्राभ्यासह्रस्वत्वञ्चेति। चकारादुपधाह्रस्वत्वञ्च।

---

(M) स्पशि बाधिं ककारवचनादपठितोऽपि धातुरिति तु मिश्रः।

इतरत्र तूपधाङ्कस्वत्वमिव। नाभ्यासस्य ह्रस्वत्वम्। प्रकृत्यन्तराणां वेति। स्मश्च बाधनस्पर्शनयोः। कश्च गतिशासनयोः। वश्च कान्तौ। एतानि प्रकृत्यन्तराणि ह्रस्वोपधानि सन्तीति। अत एषामेवैतानि रूपाणि। तस्माद् यथान्यासमेवास्तु।

## ८८। भूसुवो स्तिङि।

अभूदिति। लुङ्। गातिस्थेत्यादिना (२।४।७७) सिचो लुक्। सुवावहै सुवामहायिति। षूङ् प्राणिगर्भविमोचने। लोट्। वहिमहिङौ। टेरेत्वम्। एतऐ (३।४।९३)। अदादित्वाच्छपो लुक्। आड् उत्तमस्य पिच्चेत्याट् (३।४।९२)। अचिश्नुधात्वादिनोवङ् (६।४।७७)। अथ कस्मात् सूते रादादिकस्योपन्यासः कृतः? न सुवतिसूयत्योस्तौदादिकदैवादिकयोरित्यत आह सूते लुंग्विकरणस्येत्यादि। ननु च लुग्विकरणपरिभाषया (प,९१) षू प्रेरण इत्येतस्य अविकरणस्य तौदादिकस्य षूङ् प्राणिप्रसव इत्यस्य दैवादिकस्य च ग्रहणं युक्तमित्यत आह सुवतिसूयत्योरित्यादि। तिङीति सप्तमीनिर्देशादनन्तरे तिङि प्रतिषेधेन भवितव्यम्। नच सुवतिसूयतिभ्यामनन्तरस्तिङ् सम्भवति। विकरणेन व्यवधानात्। तस्मान्न तयो र्ग्रहणमिति सूतेरेव ग्रहणं युक्तमित्यभिप्रायः। स्यादेतत्। वचनप्रामाण्याद्विकरणेन व्यवधानेऽपि प्रतिषेधो भविष्यतीत्यत स्तयोरेव ग्रहणं युक्तमित्यत आह विकरणस्यैवेत्यादि। तयोर्हि सार्व्वधातुकमपिदिति विकरणङित्त्वम् (१।२।४)। तत्र क्ङिति चेत्यनेनैव (१।१।५) सिद्धः प्रतिषेधइति निरर्थकं तयो र्ग्रहणं स्यात्। अतो न ताविह गृह्येते। भवतीति। तिङीति वचनादिहातिङि अपि परतो निषेधो न भवति। व्यतिभविषीष्टेति। आशिषि लिङ् (३।३।१७३)। स च लिङाशिषीत्यार्द्ध-(३।४।११६) धातुकसंज्ञकः। सीयुट्। कर्त्तरि कर्मव्यतीहार (१।३।१४) इत्यात्मनेपदम्। सुट्। षत्वम्। ष्टुत्वम्। अथेत्यादि प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणं भवतीति (प,१०१) यङ्लुकोऽपि ग्रहणे सति तत्रापि प्रतिषेधेन भवितव्यमिति भावः। बोभवीतीति। गुणो यङ्लुकोरित्यभ्यासस्य (७।४।८२) गुणः। ज्ञापकादित्यादि। यदि यङ्लुक्यपि प्रतिषेधः स्याद् गुणाभावार्थं निपातनं न कुर्य्यात्। कृतञ्च। तस्मादेव ज्ञापयति यङ्लुक्ययं प्रतिषेधो न भवतीति।

## ८९। उतो वृद्धि र्लुकि हलि।

गुणे प्राप्त उतो वृद्धिरारभ्यते। यौतीत्यादौ पूर्ववच्छपो लुक्। सुनोतीति। स्नुः। यवानीति लोट्। उत्तमपुरुषैकवचनम्। युतो रुतइति। लट्। तस्। तपरकरणं सूतीत्यत्र मा भूदिति। अथापि स्तुयाद्, राजानमित्यत्र कस्मान्न भवति? अस्ति ह्यत्रापि यासुटस्तिङ्भक्तत्वात् तिङ्ग्रहणेन ग्रहणमिति प्राप्तिः। नच शक्यते वक्तुं क्ङिति चेति (१।१।५) प्रतिषेधो भविष्यतीति। यस्मादिग्लक्षणाया वृद्धेः प्रतिषेधोऽसौ। नचेयमिग्लक्षणा। साक्षान्निर्दिष्ट-स्थानिकत्वात्। यस्या हि वृद्धेः स्थानी न निर्दिश्यते सेग्लक्षणेत्युक्तमित्याह-अपि स्तुयादित्यादि। अत्र हि यासुट् परस्मैपदेषूदात्तो ङिच्चेति (३।४।१०३) सार्वधातुकं ङित्। ङिच्च पिन्न भवतीति ङित्त्वेन पित्त्वस्य बाधितत्वात्। तस्मात् पितुच्यमाना वृद्धिरिहापि न भवति। अथ योयोति रोरोतीत्यत्र कस्मान्न भवति? लुकि सति भवति ह्येतदङ्गद्वयमुकारान्तमित्याह नाभ्यस्त-स्येत्यादि। गतार्थम्। आदिशब्देन चोकोतीतीत्येवमादीनां (N) ग्रहणम्।

## ९०। ऊर्णोति विभाषा।

पूर्वेण। नित्यायां वृद्धौ प्राप्तायां विकल्पार्थोऽयमुच्यते। प्रोर्णौतीति। पूर्ववच्छपो लुक्। प्रोर्णवानीति। लोडुत्तमपुरुषैकवचनम्।

## ९१। गुणोऽपृक्ते।

विभाषेति निवृत्तम्। पूर्वेण प्राप्तायाः पाक्षिक्या वृद्धेरयमपवादः। ननु हलीत्यनुवर्त्ततएव। तत्र सामर्थ्यादपृक्तएव भविष्यतीति न तदादौ। नहि हलादिसमुदायो हल् भवति। तत् किमपृक्तग्रहणेनेत्यत आह हलीत्यनु-वर्त्तमान इत्यादि। अपृक्तग्रहणं ह्येवमर्थं क्रियते हलीत्यनुवृत्ते स्तदादौ मा भूदिति। यदि चेयं परिभाषा न स्यादपृक्तग्रहणमनर्थकत्वान्न कुर्य्यात्। हल्युच्यमानो गुणः कः प्रसङ्गो य स्तदादावपि स्यात्। नैव प्राप्नोति तस्या हलात्मकत्वात्। कृतश्चेदमपृक्तग्रहणम्। अतस्तेनास्तीयं परिभाषेति

(N) नौनौतीती पाठान्तरम्।

आप्यते। अथ नापृक्त इत्येवं कस्मान्नोक्तम्? किं गुणग्रहणेन? वृद्धौ प्रतिषिद्धाया मुत्सर्गेण गुणेनैव सिध्यति। नैतदस्ति। अनन्तरोक्ताया विभाषायाः प्रतिषेधो विज्ञायेत। तथाच नित्यं वृद्धिः स्यात्।

## ९२। तृणह इम्।

तृह हिंसायामिति रुधादिः। तृह्न तृन्ह्न हिंसार्थाइति तुदादौ। तयोराद्यस्येदं ग्रहणम्। नेतरस्य। तस्य विकरणेन व्यवधानादनन्तरो हल् न सम्भवतीति। तृणेढीति। हो ढः (८।२।३१)। झषस्तथोर्धोऽध इति। (८।२।४०) धत्वम्। ष्टुना ष्टुरिति (८।४।४१) ष्टुत्वम्। ढो ढे लोपः (८।३।१३) तस्येमागमः। आद्गुणः (६।१।८७)। तृणेक्षीति। षढोः कः सीति (८।२।४१) कत्वम्। अतृणेड़िति। लङ् तिप्। हल्ङ्यादिलोपः (६।१।६८)। ढत्वे कृते झलाञ्जशोऽन्त इति (८।२।३९) जश्त्वं ढकारस्य डकारः। तस्य वावसान इति (८।४।५६) चर्त्वं टकारः। ननु चात्र लुप्तत्वात् सार्वधातुकस्येमागमेन न भवितव्यम्। लुप्तोऽपि तत्र प्रत्ययलक्षणेन भविष्यतीति चेत्? न। वर्णाश्रये प्रत्ययलक्षणं (प,२२) नास्तीत्यतआह वर्णाश्रय इत्यादि। एवं मन्यते। वर्णाश्रये नास्ति प्रत्ययलक्षणमिति नानेन सर्व्वथा वर्णाश्रयस्य प्रत्ययलक्षणस्य प्रतिषेधः क्रियते। किं तर्हि? प्रत्ययलोपे प्रत्ययलक्षणमित्यत्र (१।१।६२) प्रत्ययग्रहणस्य प्रयोजनं व्याख्यायते। प्रत्यये लुप्ते द्विविधं कार्य्यं विज्ञायते प्रत्ययनिमित्तमप्रत्ययनिमित्तञ्च। तत्र यत् प्रत्ययनिमित्तं तत् प्रत्ययलोपे यथा स्यात्। इतरन्मा भूदित्येवमर्थम्। तेन गवे हितं गोहितमित्यत्र लुप्तायां विभक्ताववादेशो न भवति। अवादेशस्य ह्यचीत्यधिकाराद् वर्णो निमित्तम्। न प्रत्ययएव। इह त्वङ्गाधिकारात् प्रत्यय एव हलादिराश्रीयत इतीमागमस्य प्रत्ययनिमित्तता। तेनासौ प्रत्ययलक्षणेन भवत्येव। यदि ह्यसौ प्रत्ययनिमित्तस्तत् कथं वर्णाश्रयेऽप्यतेत्युक्तम्। अतृणेड़ित्यत्रोदाहरणे प्रत्ययस्य वर्णमात्रत्वात् प्रत्ययविशेषणत्वेन वा वर्णस्याश्रयणादेवमुक्तम्। नत्वप्रत्ययनिमित्तत्वात्। वर्णस्यापि तकारस्य प्रत्ययत्वापरित्यागात्। तृणहानीत्यत्र तदेव। लोडुत्तमपुरुषैकवचनम्। तृण ढइति। तम्। श्नसोरल्लोपः (६।४।१११)। पूर्ववद् ढत्वादि। नश्चापदान्तस्य झलीत्यनुस्वारः (८।३।२४)। अनुस्वारस्य ययि परसवर्ण इति (८।४।५८) परसवर्णो णकारः।

अथ किमर्थमिह तृन्हिरागतश्नम्को गृह्यते ? न तृहइत्येवोच्येतेत्यत आह तृणह इत्यादि । यद्यागतश्नम्कस्य ग्रहणं न क्रियेत ततो नाप्राप्ते श्नम्ययमारभ्यते । देशहेतुकश्च तयो विरोधोऽस्तीति श्नम इमा बाधा स्यात् । असत्यामपि बाधाया-मनिष्टा व्यवस्था स्यात् । पूर्वमिम् पश्चाच्छ्नम् । ततश्चानिष्टं रूपं स्यात् । आगतश्नम्कस्य ग्रहणे सश्नम्कस्य तृहेरिमि विधीयमाने समावेशस्तयोर्भवति । इष्टा च व्यवस्था सम्पद्यते । पूर्वं श्नम् पश्चादिम् । तस्माच्च श्नमि कृते सतीमागमो-भवेदित्येवमर्थमागतश्नम्क स्तृहि गृह्यते ।

## ९३ । ब्रुव ईट् ।

ब्रुवइत्येषा पञ्चम्यकृतार्था पूर्व्वत्र कृतार्थायाः सार्वधातुक इत्यस्याः सप्तम्याः षष्ठीत्वं प्रकल्पयिष्यति । तस्मादित्युत्तरस्येति ( १।१।६७ ) वचनात् । तेन हलादेः पितः सार्वधातुकस्यैवायमीड् विज्ञायतइत्यत आह ब्रूइतेरतस्मादुत्तरस्य हलादेरित्यादि । कथं पुनर्हल आगमित्वेन तदादि लभ्यते ? यस्मिन् विधि स्तदादावल्ग्रहण (प,३४) इत्युच्यते । ननु यस्य विधिरिति । असति हि तदादि-विधावब्रवीदित्यादावेव स्यात् । ब्रवीतीत्यादौ न स्यात् । नैष दोषः । उत्तरत्र ह्यपृक्तग्रहणात् तदादिविधेः सम्भवो गम्यते । अन्यथा ह्यसति तदादिविधौ विनाप्यपृक्तग्रहणेनापृक्त एव भविष्यति । अपृक्तग्रहणमनर्थकं स्यात् । ब्रवी-तीति । पूर्व्ववच्छपो लुक् । ब्रवाणीति । तदेव । लोडुत्तमपुरुषैकवचनम् । ब्रूतइति । लट् तस् ।

## ९४ । यङो वा ।

लालपीतीत्यादि । लपिवदिरौतिभ्यो यङ् । पूर्व्वयोर्दीर्घोऽकित इत्य-भ्यासस्य ( ७।४।८३ ) दीर्घः । रौतेस्तु गुणो यङ्लुकोरिति (७।४।८२) गुणः । यङोऽचि चेति ( २।४।७४ ) यङो लुक् । वर्वर्त्ति चर्कर्त्तीति । वृत्कृञो र्यङ्लुकि ऋतश्चेत्यभ्यासस्य ( ७।४।९२ ) रुगागमः । किं पुनः कारणं यङ्-लुक्येवोदाह्रियते ? न यङन्तइत्याह हलादिरित्यादि । यङन्ते हि ङित्त्वादात्म-नेपदम् । नचात्मनेपदं हलादि पिदस्ति । हलादेः पितः परस्य सार्वधातुकस्या-भावान्नेह यङन्तस्योदाहरणम् । किं तर्हि ? यङ्लुगन्तस्य । तत्र हि

हलादि पित् सार्वधातुकं सम्भवति। यङ्लुगन्तस्यादादौ चर्करीतञ्च परस्मैभाषमिति पाठे सति परस्मैपदित्वात्। तेन यङ्लुक्येवोदाह्रियते। चर्करीतमिति यङ्लुगन्तस्य पूर्वाचार्य्यसंज्ञा।

## ९५। तुरुस्तुशम्यमः सार्वधातुके।

तु इति सौत्रो धातुर्वृद्ध्यर्थ इत्येके। हिंसार्थ इत्यपरे। अस्य च लुग्विकरणत्वं स्मर्य्यते। तच्च बहुलं छन्दसीति ( २।४।७३ ) बहुलग्रहणेन भाषायामपि लुकः सम्पादनाल्लभ्यते। शमीध्वमिति। लोट्। अशमीध्वमिति। लङ्। अभ्यमीतीति। अम गत्यादिषु। लट् तिप्। कथं पुनः शम्यमिभ्यामनन्तरं हलादि सार्वधातुकं सम्भवति? यावता शमि व्यवधायकेनैव श्यना भवितव्यम्। अमेरपि शप् क्रियतइत्याह शम्यमोरितरादि। विकरणस्यात्र लुग् बहुलञ्छन्दसीत्यनेन ( २।४।७३ )। सार्व्वधातुकास्विति। स्त्रीलिङ्गनिर्द्देशः। स्त्रीलिङ्गस्य सार्व्वधातुकाशब्दस्यापिशालिना संज्ञात्वेन प्रणीतत्वात्। अथ सार्व्वधातुकग्रहणं किमर्थम्? यावता नाभ्यस्तस्याचि पिति सार्वधातुके ( ७।३।८७ ) इत्यतः सूत्रात् सार्वधातुकग्रहणमनुवर्त्ततइत्याह सार्वधातुकइत्यनुवर्त्तमाने इत्यादि। तद्धि सार्व्वधातुकग्रहणं पितीत्यनेन सम्बद्धम्। अतस्तदनुवृत्तौ पिद्ग्रहणमप्यनुवर्त्तेत। तथाचापिति न स्यात्। तस्मादपितेऽपि यथा स्यादित्येवमर्थं सार्व्वधातुकग्रहणं क्रियते।

## ९६। अस्तिसिचोऽपृक्ते।

अपृक्त इति। सुब्व्यत्ययेन षष्ठ्यर्थे सप्तमी। तेनायमपृक्तस्यैवेट्। अस्तिग्रहणं लङर्थम्। आसीदिति। अस भुवि। लङ्। अदादित्वाच्छपो लुक्। आड़जादीनामित्याट् ( ६।४।७२ )। आटश्चेति ( ६।१।९० ) वृद्धिः। अकार्षीदिति। सिचि वृद्धिः। अलावीदपावीदिति। इट ईटीति (८।२।२८) सिचो लोपः। आत्थेत्यत्र ब्रुवउत्तरस्य सिपो ब्रुवः पञ्चानामादित आहो ब्रुव इति ( ३।४।८४ ) थलि कृते ब्रुवश्चाहादेशे कृते तस्य स्थानिवद्भावे सति ब्रूञ्ग्रहणेन ग्रहणात् थलोऽपि सार्वधातुकग्रहणेन ग्रहणादीट् प्राप्नोति। अभूदिति। अस्तेः सिच्। अस्तेर्भूरिति ( २।४।५२ ) भूभावे तस्य स्थानिवद्भावे सतेऽस्तिग्रहणेन ग्रहणादीट् प्राप्नोति।

स कस्मान्न भवतीत्याह (१।१।५३.वा) आहिभुवोरित्यादि । ईटि प्रतिषेध इति । आहे भुवश्चेटि कर्त्तव्ये स्थानिवद्भावस्य प्रतिषेधः । तेनेह न भवति आत्थेति । आहस्थ इति हकारस्य ( ८।२।३५ ) थकारः । तस्य खरि चेति ( ८।४।५५ ) तकारः । अभूदिति । गातिस्थेति ( २।४।७७ ) सिचो लुक् ।

## ९७ । बहुलञ्छन्दसि ।

सर्वमादिति । अस्तेर्लङ् । पूर्ववदाट् । सिपो हल्ङ्यादिलोपः ( ६।१।६८ ) । सकारस्य रुत्वविसर्जनीयौ । गोभिरक्षाः प्रत्यञ्चमत्सा इति । त्सर सञ्चलने । त्सरच्छद्मगतौ । लुङ् । हल्ङ्यादिना ( ६।१।६८ ) सिपो लोपः । अतो ल्रान्तस्येति ( ७।२।२ ) वृद्धिः । पूर्ववद्विसर्जनीयः । अभैषीरिति । ञिभी भये । सिचि वृद्धिः । अथाभैषीर्मा पुत्रकेत्यत्र कथमडागमः ? यावता न माङ्योग ( ६।४।७४ ) इति प्रतिषिद्धोऽसौ । इह चाक्षारत्सारित्यत्र सिच ईडागमः कस्मान्न भवतीत्याह छान्दसत्वादित्यादि । अक्षारत्सारित्यत्र चेडागमाभाव इति छान्दसत्वादिति प्रकृतेन सम्बन्धः । वा छन्दसीति वक्तव्ये बहुलग्रहणमुत्तरार्थम् । उत्तरार्थताञ्चास्योत्तरत्र प्रतिपादयिष्यामः ।

## ९८ । रुदश्च पञ्चभ्यः ।

रुद इति सुब्व्यत्ययेन बहुवचनस्यैकवचनम् । एतच्च पञ्चभ्य इति बहुवचनाद् विज्ञायते । रुदादिभ्यः सार्वधातुक इतीटि प्राप्ते तदपवाद ईडागमो विधीयते । रुदिर् अश्रुविमोचने । ञिष्वप् शये । श्वस प्राणने । अन च । जक्ष भक्षहसनयोरित्येते रुदादय आदादिकाः । अरोदीदिति । लङ् । प्राणीदिति । अनितेरिति ( ८।४।१९ ) णत्वम् । अजागर्भवानिति । जागर्त्तिः पञ्चभ्यः परेणायं पठ्यते । गुणे रपरत्वे च कृते हल्ङ्यादिलोपः ( ६।१।६८ ) ।

## ९९ । अड्गार्ग्यगालवयोः ।

पूर्वेणेटि प्राप्तेऽडागमो विधीयते । गार्ग्यगालवग्रहणं पूजार्थम् । न तु विकल्पार्थम् । अडीटोरादिलिङ्गत्वादेकविषयत्वाच्च न सम्भवति समुच्चय इत्यन्तरेणाप्याचार्यग्रहणं विकल्पस्य सिद्धत्वात् ।

## १०० । अदः सर्वेषाम् ।

सर्वेषां ग्रहणं पूजार्थम्। नतु नित्यार्थम्। गार्ग्यगालवग्रहणस्याविकल्पार्थत्वात्।

## १०१ । अतो दीर्घो यञि ।

तपकरणमुत्तरार्थम्। खट्वाभिरित्यत्र बहुवचने झल्येदित्येत्त्वं (७।३।१०३) मा भूदित्येवमर्थम्। अङ्गेनेति। प्रशस्तान्यङ्गान्यस्याः सन्तीति लोमादिना (५।२।१००) नप्रत्ययः। केशव इति। केशा यस्य सन्तीति केशाद् वोऽन्यतरस्या (५।२।१०९) मिति वप्रत्ययः। केचिदत्र तिङीत्यनुवर्त्तयन्तीति। भूसुवोस्तिङीत्यतः (७।३।८८)। तेषां बभववानिति क्समौ सार्वधातुके दीर्घत्वेन न भवितव्यमिति। क्समोरतिङन्तत्वात्। बभववानिति। भवतेर्लिट्। क्वसुः। छन्दस्युभयथेति (३।४।११७) तस्य पक्षे सार्वधातुकत्वम्। तेन कर्त्तरि शब् (३।१।६८) भवति। सान्तमहतः संयोगस्येति (६।४।१०) दीर्घः। हल्ङ्यादि-(६।१।६८) संयोगान्तलोपौ (८।२।२३) आदिति वक्तव्ये दीर्घग्रहणं दीर्घएव यथा स्याद् यद्यन्यत् प्राप्नोति तन्मा भूदिति। किञ्चान्यत् प्राप्नोति ? विचार्य्यमाणानाम् (८।२।९७) अनन्तरस्याप्येकैकस्य प्राचाम् (८।२।९३) प्रश्नाख्यानयो (८।२।१०५) रिति प्लुतः। अथ प्रकृतोऽड़ागमः कस्मान्न विधीयते ? तत्राप्यकः सवर्णे दीर्घत्वेन (६।१।१०१) सिद्ध्यत्येव। नचातो गुणे पररूपत्वं (६।१।९७) प्राप्नोतीत्याशङ्कनीयम्। अड्विधानसामर्थ्यात्। इहाधुक्षावहीति क्सस्याचीति (७।३।७२) लोपः स्यात्। अतिजराभ्यामित्यत्राचीति जरसभावः स्यात्। तन्निवृत्त्यर्थं दीर्घग्रहणं कृतम्। स चात्र प्लुतः प्रसज्येत।

## १०२ । सुपि च ।

## १०३ । बहुवचने झल्येत् ।

ननु च वृक्षाणामित्यत्र नामीति (६।४।३) दीर्घत्वं बाधकं भविष्यति। तत् किं तन्निवृत्त्यर्थेन झल्ग्रहणेन ? नैतदस्ति। नामीति (६।४।३) ह्यग्नीनामित्यत्र सावकाशम्। तत्रासति झल्ग्रहणे दीर्घत्वं बाधित्वा परत्वादेत्त्वमेव

स्यात्। पचध्वं यजध्वमिति। लोट्। टेरेत्वम्। सवाभ्यां वामावित्यामादेशः (३।४।९१)।

## १०४। ओसि च।

## १०५। आङि चापः।

आङिति पूर्वाचार्य्यनिर्द्देशेनेत्यादि। आचार्य्या हि पूर्वं आङिति तृतीयैकवचननिर्द्देशं कुर्व्वन्ति स्म। तस्मात् तदीयेनाङिति निर्द्देशेन तृतीयैकवचनं गृह्यते। खट्वयेति। टाबन्तस्योदाहरणम्। बहुराजयेति। डाबन्तस्योदाहरणम्। डाबुभाभ्यामन्यतरस्यामिति (४।१।१३) डाप्। कारीषगन्ध्ययेति। चाबन्तस्य। करीषस्येव गन्धोऽस्य। उपमानाच्चेतीत् (५।४।१३७)। करीषगन्धिः। तस्यापत्यमित्यण् (४।१।९२) तस्याणिञोरनार्षयोरित्यादिना (४।१।७८) ष्यङ्। तदन्ताद् यङश्चाबिति (४।१।७४) चाप्। कीलालपेति। कीलालं पिबतीत्यातो मनिन्क्वनिब्वनिपश्चेति (४।२।७४) विच्। तदन्तात् तृतीयैकवचनम्। आतो धातोरित्याकारलोपः (६।४।१४०)। अथेह कस्मान्न भवति खट्वामतिक्रान्तेनातिखट्वेनेति? उपसर्जनह्रस्वत्वे कृते स्थानिवद्भावात् तस्य प्राप्नोतीत्याह ङ्याब्ग्रहणमित्यादि। केचिदाहुर्ङ्याब्ग्रहणे दीर्घग्रहणमित्यतद् वचनं कर्त्तव्यम्। तेन ह्रस्वत्वे कृते न भवति। अपरे त्वाहु हल्ङ्याब्भ्यो दीर्घादिति (६।१।६८) योगविभागः कर्त्तव्यः। यावच्छास्त्रे ङ्यापोः कार्य्यं तत् सर्वं दीर्घयो र्यथा स्यात्। ह्रस्वयोर्मा भूदिति। ततः सुतिस्यपृक्तमिति (६।१।६८) द्वितीयो योगः। तत्र हल्ङ्याब्भ्यइत्यनुवर्त्तत इति। चकार ओसि (७।३।१०४) चेत्यनुकर्षणार्थः।

## १०६। सम्बुद्धौ च।

## १०७। अम्बार्थनद्यो र्ह्रस्वः।

पूर्वस्यायमपवादः। अम्बार्था मात्रर्था। डलकवतीनामित्यादि। डलका यासां सन्तीति श्रुतीनां ता डलकवत्यः। असंयोगावयवभूता डलका इह गृह्यन्ते। अन्यथा हे अक्क हे अल्ल इत्यत्रापि स्यात्। वक्तव्यशब्दस्य व्याख्येयइत्ययमर्थः।

उत्तरयोरपि वक्तव्यशब्दयोरयमेवार्थो वेदितव्यः। तत्रेदं व्याख्यानम्। बहुलञ्छन्दसीत्यतो (७।३।९७) बहुलग्रहणं मण्डूकप्लुतिन्यायेनानुवर्त्तते। तेन सर्वं प्रतिषेधादिकं कार्य्यमपि भविष्यतीति। अर्हत इति। प्रशंसाभाजनभूतायेत्यर्थः। गार्गीमातेति। यो गार्ग्या माता व्यपदेशेन प्रशंसामर्हति स एवमुच्यते।

## १०८। ह्रस्वस्य गुणः।

ह्रस्वग्रहणं प्रकृताङ्गविशेषणम्। विशेषणेन च तदन्तविधि र्भवतीत्याह ह्रस्वान्तस्येत्यादि। एवमुत्तरत्रापि तदन्तविधि र्वेदितव्यः। अथ हे कुमारि हे ब्रह्मबन्धवित्येवमादीनां कस्मान्न भवतीत्याह हे कुमारीत्यादि। यदि ह्रस्वत्वे कृते गुणः स्याद् ह्रस्वकरणमनर्थकं स्यात्। ननु च गुणार्थमेतत् स्यात्। असति हि तस्मिन् ह्रस्वस्य गुण इति गुणो न स्यात्। अह्रस्वान्तत्वादित्याह यदीत्यादि। एवं क्रियागौरवं परिहृतं भवतीति भावः।

## १०९। जसि च।

जसादिष्वित्यादि। आदिशब्दः प्रकारे। जस्प्रकारेषु प्रत्ययेष्वित्यर्थः। इतः प्रकरणादिति। अम्बार्थनद्योर्ह्रस्व इत्येवमादिकात् (७।३।१०७)। छन्दसीति वक्तव्यमिति। छन्दसि विषये वा कार्य्यं भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। व्याख्यानन्तु तदेव बहुलव   ा   कर्त्तव्यम्। अम्ब इत्यादि। अम्बार्थनद्योर्ह्रस्व (७।३।१०७) इति ह्रस्वो न भवति। दर्वीत्यत्र ह्रस्वस्य गुणः। शतक्रत्व इत्यत्रापि जसि चेति। पश्व इति। घेर्ङिति (७।३।१११) गुणः। किकिदीव्या इत्यत्राङो नास्त्रियामिति नाभावः (७।३।१२०)।

## ११०। ऋतो ङिसर्व्वनामस्थानयोः।

तपरकरणं मुखसुखार्थमिति। नहि ङिसर्व्वनामस्थानयो र्दीर्घ ऋकारः सम्भवति यस्तपरेण निवर्त्त्येत।

## १११। घेर्ङिति।

सख्ये पत्य इति। सखिपतिशब्दौ घिसंज्ञकौ न भवतः शेषोऽघ्यसखीति (१।४।७) पर्य्युदासात्। पतिः समास एवेति (१।४।८) नियमाच्च। पट्वीति। वीतो

गुणवचनादिति ( ४।१।४४ ) ङीष्। अत्र गुणो न भवति सुपि चेत्यतः ( ७।३।१०२ ) सुपीत्यनुवृत्तेः। कुरुतइति। करोतेः स्तस्। उप्रत्ययः। धातोर्गुणः। रपरत्वम्। अत उत् सार्वधातुक इत्युत्त्वम् ( ६।४।११० )। अत्रापि सुपीत्यनुवृत्ते स्तसि परतो विकरणान्तस्य न भवति गुणः।

## ११२। आण् नद्याः।

नद्याइति पञ्चमी। स चाकृतार्था पूर्वत्र कृतार्थाया ङितीत्यस्याः सप्तम्याः षष्ठीत्वं प्रकल्पयिष्यति। तेन ङित एवायमाड़ागमो विज्ञायत इत्याह नद्यन्तादङ्गादुत्तरस्येत्यादि। कुमार्य्यायैत्येवमादावाटश्चेति ( ६।१।९० ) वृद्धिः। अथ दीर्घोच्चारणं किमर्थम्? न अड़ेवोच्येत। वृद्धिरेचीति (६।१।८८) वृद्ध्या सवर्णदीर्घत्वेन सिद्ध्यत्येव। कुमार्य्यै कुमार्य्या इत्यत्रातो गुणे ( ६।१।९७ ) पररूपत्वं प्राप्नोतीत्येतच्च नाशङ्कनीयम्। पररूपत्वं ह्यत्र वचनसामर्थ्यान्न भविष्यति। नैष दोषः। अस्ति ह्यन्यद्वचनस्य प्रयोजनम्। किं तत्? श्रियै श्रिया इत्यत्र सावेकाचस्तृतीयादिर्विभक्ति ( ६।१।१६८ ) रित्युदात्तत्वं मा भूत्। आगमा आद्युदात्ता भवन्तीत्यनुदात्तत्वं यथा स्यादिति। शक्यते ह्येकादेशोऽन्तादिवद्भावादागमग्रहणे न ग्रहीतुम्। आगमानुदात्तत्वञ्च यथा प्रत्ययस्वरं लविता लवितुमित्यादौ बाधते तथा विभक्तिस्वरमपि बाधेत। तस्मादाटश्चेति ( ६।१।९० ) वृद्ध्यर्थमेतत्।

## ११३। याड़ापः।

खट्वायामिति। वृद्धिरेचीति ( ६।१।८८ ) वृद्धिः। खट्वाया इत्यत्राकः सवर्णे दीर्घत्वम् ( ६।१।१०१ )। दीर्घोच्चारणं वृद्धिसवर्णदीर्घत्वे यथा स्याताम्। पररूपत्वं मा भूदित्येवमर्थम्। अकारोच्चारणसामर्थ्यान्न भविष्यतीति चेत्? न। अस्ति ह्यन्यदकारोच्चारणस्य प्रयोजनम्। किं तत्? जाये जाया इत्यत्र ( ६।१।१६८ सावेकाचस्तृतीयादिर्विभक्तिरित्यनेनोदात्तत्वं मा भूत्। आगमानुदात्तत्वं यथा स्यादिति। अथ खट्वामतिक्रान्तायातिखट्वायेत्यत्र कस्मान्न भवति? उपसर्जनह्रस्वत्वे कृते तस्य स्थानिवद्भावादाब्ग्रहणेन ग्रहणे सति प्राप्नोतीत्यत आह अतिखट्वायेत्यादि। यदा तावत् सुपि चेति ( ७।३।१०२ ) दीर्घत्वं न क्रियते तदा ङ्याब्ग्रहणेन दीर्घग्रहणमित्येतद्वचनान्न भवति। यदा दीर्घत्वं

तदा लाक्षणिकत्वान्न भवति। लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणमिति ( प,११४ ) वचनात्।

## ११४। सर्व्वनाम्नः स्याड्ढ्रस्वश्च।

याटोऽपवादः। आकारोच्चारणं सर्वस्या इत्यत्र यथा स्यादन्यथा पररूपत्वं प्रसज्येत। अकारोच्चारणसामर्थ्यान्न प्रसज्येतेत्येतच्च नाशङ्कनीयम्। तद्धि तस्यामित्यत्रोड़िदम्पदाद्यप्पुम्रैद्युभ्य इति ( ६।१।१७१ ) विभक्त्युदात्तत्वं मा भूत्। आगमानुदात्तत्वं यथा स्यादित्येवमर्थम्।

## ११५। विभाषा द्वितीयातृतीयाभ्याम्।

असर्वनामार्थं वचनम्। ये तु वाप्रकरणे तीयस्य ङित्सूपसंख्यानमिति ( १।१।३६, वा ) सर्वनामसंज्ञां तीयस्योपसञ्चक्षते त इदं सूत्रं प्रत्याचक्षते। तेनैव सिद्धत्वात्। तच्चोपसंख्यानमवश्यं कर्त्तव्यं स्मायादयो ङिति विकल्पेन यथा स्युरिति। द्वितीयस्मै द्वितीयाय द्वितीयस्मिन् द्वितीय इति। अन्ये त्वनेनैव स्मायादयः सिध्यन्तीत्युपसंख्यानमेव प्रत्याचक्षते। कथम्? सर्वनाम्न इत्येतदिहानुवर्त्तते। स्याड़िति निवृत्तम्। तेनैवमभिसम्बन्धः क्रियते। सर्वनाम्नो ङिति यदुक्तं तद्विभाषा द्वितीयातृतीयाभ्यां भवतीति। तेन स्मायादयोऽप्यनेनैव भविष्यन्तीति नार्थ उपसंख्यानेन।

## ११६। ङेराम् नद्याम्नीभ्यः।

ङेरिति सप्तम्येकवचनस्य ग्रहणम्। एतच्च स्त्रियामितिवत्मादिनिर्द्देशाद्विज्ञायते। ग्रामण्यामिति। ग्रामं नयतीति सत्सूद्विषेत्यादिना ( ३।२।६१ ) क्विप्। अग्रग्रामाभ्याञ्चेति (⁰) णत्वम्। एरनेकाच इति ( ६।४।८२ ) यणादेशः। अथ कुमार्य्यां खट्टायां सर्वस्यामिति कथं सिध्यति? आमि कृते ह्रस्वनद्यापो नुड़िति ( ७।१।५४ ) नुड़ागमेन भवितव्यम्। नैष दोषः। नुटः परत्वादाट्याट्स्याटो भवन्ति। तेषु कृतेषु नुटः प्राप्तिरेव नास्तीति। नहि द्वयोरादिलिङ्गयोः समुच्चय उपपद्यते।

---

(⁰) नेदं कात्यायनस्य वाक्यं नवा भाष्यकारस्य। अन्यैरेव तु वार्त्तिकरूपेण प्रक्षिप्तम्।

## ११७ । इदुद्भ्याम् ।

नदीग्रहणमिहानुवर्त्तते । तेन चेदुतौ विशिष्येते नदीसंज्ञकौ याविदुताविति । यद्येवमनर्थकमिदम् । पूर्व्वेणैव सिद्धत्वात् । नैतदस्ति । औकारो हि परत्वादुत्तरसूत्रेण स्यात् । अस्मिंश्च सत्याम्व भवति ।

## ११८ । औत् ।

नदीसंज्ञकात् परस्य ङेराम् पूर्वेण विहितः । घिसंज्ञकादुत्तरेणात्वसन्नियुक्तमौकारं वक्ष्यति । तस्मात् पारिशेष्यात् ताभ्यां यदन्यदिकारोकारान्तं तदिहोदाहरणं विज्ञायत इत्याह यन्नदीसंज्ञमित्यादि । अत्र च सखिपतिशब्दावस्त्र्याख्यत्वान्नदीसंज्ञकावपि न भवतः । घिसंज्ञकौ यथा न भवतस्तथा पूर्व्वमेव प्रतिपादितम् ।

## ११९ । अच्च घेः ।

अथात्वे कृतेऽजाद्यतष्टाबिति ( ४।१।४ ) कृतौ धेनावित्येवमादौ टाप् कस्मान्न भवतीत्याह अदिति तपरकरणमित्यादि । यस्मात् तपरकरणं टाम्निवृत्त्यर्थं क्रियते तस्मात् कृतेऽप्यत्त्वे टाम् न भवतीति भावः । तपरकरणं हि तत्कालावधारणार्थम् । नचात्र भाव्यमानत्वादणो मात्रिकत्वाच्च स्थानिनो दीर्घत्वस्य प्राप्तिरस्ति । अतोऽन्येनापि हेतुना यद्दीर्घत्वमापद्यते तत्प्रतिषेधार्थमुपजायमानं तट्टापोऽभावमापादयति । टापि हि सत्यकः सवर्णे दीर्घत्वं ( ६।१।१०१ ) स्यात् । तथाचानर्थकं तपरकरणं स्यात् । तस्मान्मा भूदनर्थकमिति कृतेऽप्यत्त्वे टापा न भवितव्यमिति । औदच्च घेरिति येषामित्यादि । इह केचिदौच्च घेरित्येकं योगं कुर्व्वन्ति । तथाच सत्यौत्त्वात्त्वयोः सन्नियोगशिष्टत्वाद् यत्रात्त्वं तत्रैवौत्त्वेन भवितव्यम् । घेश्चात्त्वमिति सख्यौ पत्यावित्यत्रात्त्वाभावादौत्त्वमपि न स्यात् । अतस्तस्य दोषस्य परीहाराय येषामेक एवायं योग स्ते प्रधानशिष्टमौत्त्वमाचक्षते । यथा कर्त्तुः क्यङ् सलोपश्च (३।१।११) त्यत्र प्रधानशिष्टमाचक्षते क्यङमन्वाचयशिष्टं सलोपम् । यथा तत्रैव तत्रासत्यपि सलोपे यथा क्यङ् भवति श्येनायत इत्यादावेवमसत्यप्यत्त्वे सख्यौ पत्यावित्यत्रौत्त्वं भवतीति तेषामभिप्रायः ॥

## १२० । आङो नाऽस्त्रियाम् ।

आङ इति स्थान्यन्तरनिर्देशादिहार्थाद् विभक्तिविपरिणामो भवतीति षष्ठ्यन्तं यद् घेरिति प्रकृतं तदिह पञ्चम्यन्तमुपजायत इत्याह घेरुत्तरस्येत्यादि। अथ किमर्थमस्त्रियामित्युच्यते? आङो नापुंसीतिप्रवोच्यते। एवमुच्यमाने त्रपुणा जतुनेतिप्रतत्र सिध्यतीतिप्रतच्च नाशङ्कनीयम्। इकोऽचि विभक्ताविति ( ७।१।७० ) नुमेव सिद्धत्वादिति यो मन्येत तं निराकर्त्तुममुना ब्राह्मणकुलेनेत्यस्योपन्यासः। अत्र हि त्यदाद्यत्वे कृतेऽदसोऽसे र्दादु दो म इत्युत्वमत्वे (८।२।८०) च। तत्र यदि पुंसीत्युच्येत ततोऽमुनेति नपुंसके न सिध्येत्। मुभावस्यासिद्धत्वात्। नुमोऽभावादस्त्रियामित्युच्यमाने नपुंसकेऽपि नाभावो भवतीत्यमुनेति सिद्धं भवति। नहि नाभावे कर्त्तव्ये मुभावस्यासिद्धत्वम्। न मु न इति (८।२।३) वचनादित्यभिप्रायः।

इति बोधिसत्त्वदेशीयाचार्य्यश्रीजिनेन्द्रबुद्धिपादविरचितायां
काशिकाविवरणपञ्जिकायां सप्तमाध्यायस्य
तृतीयः पादः समाप्तः ॥७।३॥

अथ

# काशिकाविवरणपञ्जिका।

## सप्तमाध्यायस्य

## चतुर्थः पादः।

### १। णौ चङ्युपधाया ह्रस्वः।

चङ्परे णौ परतइति। चङ् परो यस्मात्सेणिरिति स तथोक्तः। अचीकरदित्यादि। कृञ् हृञ् लूञ् पूञितिएतेभ्यो हेतुमण्णिच्। ततो लुङ्। च्लिः। णिश्रीत्यादिना (३।१।४८) च्लेश्चङ्। णेरणिटीति (६।४।५१) णिलोपः। अत्र द्विर्वचनोपधाह्रस्वत्वयोः प्राप्तयोः परत्वादुपधाह्रस्वत्वम्। ततो द्विर्वचनम्। ततश्च णौ कृतं स्थानिवद्भवतीति कृ हृ इत्यादिकमविकृतधातुरूपमेव द्विरुच्यते। अत्र कृहृइत्येतयोरभ्यासस्योरदित्यत्त्वे (७।४।६६) कृते रपरत्वे हलादिशेषे च ततश्च सन्वल्लघुनीत्यादिना (७।४।९३) सन्वद्भावादित्त्वम्। पूल्वित्येतयोरपि ह्रस्वत्वे च कृत ओः पुयण्ज्यपर (७।४।८०) इतीत्त्वम्। सर्वत्र दीर्घो लघोरिति (७।४।९४) दीर्घत्वम्। अत्र द्विर्वचनोपधाह्रस्वत्वयोः प्राप्तयोरित्यादि। अचीकरदित्यादिषूदाहरणेषु कृताकृतप्रसङ्गित्वाद्द्विर्वचनं नित्यमुपधाह्रस्वत्वमपि। तयोरुभयोः परत्वादुपधाह्रस्वत्वं भवति। तत्र कृते द्विर्व्वचनमित्येष कार्य्याणां प्रवृत्तिक्रमः। मा भवानटिटदित्यत्र तु द्विर्व्वचनमेव नित्यम्। न ह्रस्वत्वम्। तथाह्यजादेर्द्वितीयस्येति (६।१।२) द्विर्व्वचनं कृतेऽपि ह्रस्वत्वे प्राप्नोत्यकृतेऽपि। ह्रस्वत्वं तु द्वितीयस्यैकाचो द्विर्वचने कृते न प्राप्नोति। परेण टिशब्दरूपेण व्यवधानात्। तस्मान्मा भवानटिटदित्यत्र नित्यत्वाद् द्वितीयस्यैकाचो द्विर्व्वचनं प्राप्नोति। द्विर्वचने हि सति को दोषः

स्यादित्यत आह तथाच सतीत्यादि। एवञ्च द्विर्वचने हि सति तेन ह्रस्वभाविन आकारस्योपधात्वं विहतमिति ह्रस्वो न स्यात्। नहि द्वितीयस्यैकाचो द्विर्वचने कृते चङ्परे णौ यदङ्गं तस्य ह्रस्वभाव्याकार उपधा भवति। असति च ह्रस्वत्वे मा भवानटिटदिति रूपं न सिध्यति। माथोग आणनिवृत्त्यर्थः। आटि तु सति नास्ति विशेषः। सत्यसति वा ह्रस्वत्व आटश्चेति (६।१।९०) वृद्ध्या भवितव्यमिति। भवच्छब्दः सन्देहनिरासार्थः। नैष दोषइति। योऽनन्तरोक्तः स कथं लभ्यत इत्याह ओणे ऋदित्करणमित्यादि। ओणृ अपनयन इत्येतस्यदित्करणस्यैतत् प्रयोजनमृदित्त्वान्नाग्लोपीत्यादिना ( ७।४।२ ) ह्रस्वप्रतिषेधो यथा स्यादिति। यदि च नित्यमपि द्विर्वचनमुपधाह्रस्वत्वेन न बाध्यते तदोणे ऋदित्करण मनर्थकं स्यात्। द्विर्वचने हि कृते परेण णिशब्दरूपेण व्यवधानादेव ह्रस्वो न भविष्यति। किमोणे ऋदित्करणेनेति? आचार्य्यप्रवृत्ति र्ज्ञापयति नित्यमपि द्विर्वचन मुपधाह्रस्वत्वे न बाध्यतइति। यतओणे ऋदित्करणं करोति। णाविति किमिति। एवं मन्यते। णिग्रहणे चाकृते लुङ्चङादेशयोः कृतयोर् णिलोपे चाकृते वृद्ध्यावादेशयोश्चाकृतयोर लूङ् अत् इति स्थित ऊकारस्य ह्रस्वो मा भूदित्येवमर्थं वा णिग्रहणं क्रियते? ऊकारस्य वृद्धौ कृतायामौकारस्य ह्रस्वो मा भूदित्येव-मर्थं वा? एतच्चोभयमप्रयोजनम्। अत्रान्तरङ्गत्वाद् वृद्ध्यावादेशाभ्यामेव भवितव्यम्। अन्तरङ्गत्वं पुनस्तयो र्णिज्मात्राश्रयत्वात्। ह्रस्वस्य च बहिरङ्गत्वम्। चङाश्रयत्वादिति। चङ्युपधाया ह्रस्व इत्युच्यमानइत्यादि। एतावत्युच्यमानेऽसति णिग्रहणे चङ्परे यदङ्गं तस्योपधाया ह्रस्वो भवतीत्येव-मर्थः स्यात्। तथाचानवकाशो ह्रस्वोऽलीलवदित्यत्रान्तरङ्गामपि वृद्धिं बाधित्वा वचनसामर्थ्यादृकारस्यैव स्यात्। अथापि कथञ्चिद् वृद्धि र्न बाध्यत एवमपि वृद्धौ कृताया मन्तरङ्गमप्यावादेशं बाधित्वौकारस्यैव प्रसज्येत। अन्यथा हि वचनमिद मनर्थकं स्यात्। अदीदपदिति। अत्र ददाते र्णिचि लुङि चङि च कृते अ दा इ अत् इति स्थिते वचनप्रामाण्यादनवकाशो ह्रस्वोऽन्तरङ्गमपि पुकं बाधित्वा प्रसज्येत। तस्मिंश्च सति पुग् विहतनिमित्तत्वान्न स्यात्। अपीपचदित्यादौ तु नैव ह्रस्वः स्यादिति। चङि परतो यदङ्गं पाचिप्रभृति तदीयाया उपधायाश्चाकारादेर-ह्रस्वभाविनीत्वात्। आदिशब्दोऽपीपठदित्यादिपरिग्रहार्थः। तस्माण्णाविति वक्तव्यम्। चङीति किमिति। एषोऽभिप्रायः। केवले णौ ह्रस्वो मा भूदित्येव-मर्थं चङीत्युच्यते। नैतच्चङ्ग्रहणस्य प्रयोजनमुपपद्यते। यस्मादाचार्य्यप्रवृत्ति

ज्ञापयति णाविव केवले ह्रस्वत्वं न भवतीति यदयं मितां ह्रस्व (६।४।९२) इति ह्रस्वत्वं शास्ति । ततः कारयति हारयतीत्यादौ न भविष्यतीत्यभिप्रायः । यद्येतस्माज् ज्ञापकात् कारयतीत्यादौ ह्रस्वो न भवति तदाचीकरदित्यत्रापि न स्यात् । अथात्र वचनसामर्थ्याद् भविष्यति । एवमपि कारयतीत्यादौ स्यादेव । नहि मितां ह्रस्व (६।४।९२) इत्युच्यमाने सत्यचीकरदित्यादौ न भवतीत्येष विषयविभागः शक्यते विज्ञातुम् । तस्माच् चङ्ग्रहणं कर्त्तव्यम् । उपधाग्रहणं किमिति । एवं मन्यते । अलोऽन्त्यस्य मा भूदित्येवमर्थमुपधाग्रहणं क्रियते । एतच्चाप्रयोजनम् । चङ्परे णौ यदङ्गं तस्याचीकरदित्यादावपि णावन्तरङ्गत्वाद् वृद्ध्यादिषु कृतेषु ह्रस्वभाव्यजन्त्यो न सम्भवति यत्राजन्तान्णिजुत्पद्यते । किं पुनरपीपठदित्यादौ यत्र हलन्तान्णिजुत्पद्यते ? तस्मादजन्त्यो ह्रस्वभावी नास्तीत्यन्तरेणाप्युपधाग्रहणं वचनादनन्त्यस्यैवोपधाभूतस्य ह्रस्वो भविष्यतीति । अचकाङ्क्षदवाङ्क्षदिति । काक्षि वाक्षि माक्षि काङ्क्षायाम् । यद्यप्यजन्त्यो ह्रस्वभावी नास्ति तथापि वचनादनन्त्यस्याचीकरदित्यादौ यथा भवति तथाचकाङ्क्षदित्यादावपि स्यात् । तस्मान् मा भूदेष दोष इत्युपधाग्रहणं क्रियतइत्यभिप्रायः । ननु चाङ्गस्य योऽच् तस्य चङ्परे णौ ह्रस्वो विधीयते तत्र यद्यप्यनन्तरोऽज् न सम्भवति तथापि येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यादित्येकेन वर्णेनेति येन नाव्यवधान मपितु सर्वदा व्यवधानमेव तेन व्यवहितेऽपि वचनप्रामाण्याद् भवितव्यम् । एकेनैव वर्णेन व्यवधानं सर्व्वत्र सम्भवति । संघातेन तु व्यवधानं सम्भवति न सम्भवति च । इहाचकाङ्क्षदित्यादौ सङ्घातेनैव व्यवधानम् । अतो नास्त्येव ह्रस्वप्रसङ्ग इति किमुपधाग्रहणेनेत्याह तदेतदित्यादि । लोपः पिबतेरीच्चाभ्यासस्येत्युपधालोपो (७।४।४) यथा स्यादिति । अलोऽन्त्यस्य मा भूदित्येवमर्थमुपधाग्रहणं कर्त्तव्यमवश्यम् । यद्येवं तत्रैव कस्मान्न कृतमित्यत आह तदिहापीत्यादि । उपधाग्रहणमवश्यमुत्तरार्थं कर्त्तव्यम् । इह तु क्रियमाणे सत्यचकाङ्क्षदित्येवमर्थं येन नाव्यवधानमित्येषा परिभाषा नाश्रियतव्या भवति । उपधाग्रहणे नैवात्र ह्रस्वस्य निवर्त्तितत्वादित्येष गुणो लभ्यते । तेनेहैव कृतम् । नोत्तरत्र । उपधाह्रस्वत्वे णौ णिंचुपसंख्यानमिति । चङ्परे णौ परतो यो णि स्तस्मिन् परतोऽङ्गस्योपधाया ह्रस्व उपसंख्येयः । अवीवददिति । वदेर्हेतुमति चेति (३।१।२६) णिच् । तदन्ताद् वादितवन्तं प्रयोजितवानिति पुनर्हेतुमति चेति (३।१।२६) णिच् । ततो लुङादिः । णेरनिटीति (६।४।५१) णिलोपः । किं

पुनः कारणं न सिध्यति ? यावता णिलोपे कृते चङ्परे णावङ्गस्याकारो ह्रस्वभाविन्युपधा भवतीत्येवेत्याह योऽसावित्यादि। अचः परस्मिन् पूर्वविधावपि ( १।१।५७ ) णिलोपस्य ह्रस्वत्वे कर्त्तव्ये स्थानिवद्भावाण्णिजव्यवधानाद् ह्रस्वो न प्राप्नोति। तेन वा णिलोपेनाग्लोप्यङ्गमेतद् भवति। तदेतस्माद्धेतोर्न ह्रस्वत्वं प्राप्नोति। अग्लोपीत्यादिनानन्तरवक्ष्यमाणप्रतिषेधात् (७।४।४) ण्याकृतिनिर्द्देशात् सिद्धमित्युपसंख्यानं प्रत्याचष्टे णाविति। ण्याकृतिरिति णिजाति र्निर्दिश्यते। ननु णिव्यक्तिः। तेन व्यक्तौ व्यवधानं न भवति। नहि जातौ। एकत्वाण्णिजातेः। नहि तयैव तस्या व्यवधान मुपपद्यते। ननु चोत्तरया ण्याकृत्या जात्याधारभूतया णिव्यक्त्या णिजात्याश्रयेऽपि व्यवधानमुपपद्यतएव। नैतत्। तस्यामपि व्यक्तौ जातिः समवायात्। एवं तावद्व्यवधानं ण्याकृत्याश्रये नास्ति। अग्लोपित्वमपि नास्त्येव। नह्यत्र णिजातिव्यतिरेकेणान्योऽग् विद्यते यस्य लोपेनाग्लोप्यङ्गं स्यात्। नच ण्याकृते र्लोपस्य। तस्याः श्रूयमाणत्वात्। नहि श्रूयमाणाया लोप उपपद्यते। अदर्शनं लोप ( १।१।६० ) इति वचनात्। ननु च जातिव्यतिरेकेणापि तदाश्रयभूता व्यक्तिरग् विद्यतएव। न जातिव्यक्त्योरनन्यत्वमिति सांख्यीयसिद्धान्तस्येहाश्रयणात्। अथवा ण्याकृतिनिर्द्देशे सत्युपधाह्रस्वत्वस्य ण्याकृतिनिमित्तत्वेनाश्रीयते। तेन गोबलीवर्द्दन्यायेन तस्या ण्याकृते र्निमित्तत्वेनोपात्ताया अन्यस्याको लोपः प्रतिषेधनिमित्तत्वेन विज्ञायते। स चेह नास्ति। तस्माण् ण्याकृतिनिर्द्देशात् सिद्धम्।

## २। नाग्लोपिशास्वृदिताम्।

अगिति प्रत्याहारग्रहणम्। अको लोपोऽग्लोपः। स एषामस्तीति तान्यग्लोपीन्यङ्गानि। शासु अनुशिष्टौ। ऋदिद् येषां तानि ऋदिन्ति बाधृ विलोड़न इत्येवमादीनि। अममालत्। अममातरदिति। तत् करोति तदाचष्ट इति णिच्। णाविष्ठवत्कार्य्यं प्रातिपदिकस्येतीष्ठवद्भावः ( ६।४।१५५,वा )। तुरिष्ठेमेयःस्विति ( ६।४।१५४ ) टिलोपः। ततो लुङादिः। अत्वरराजदित्यादौ प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्चेति (ग,भू) णिच्। अन्वलुलोमदिति। सत्यापपाशरूपेत्यादिना (३।१।२५) णिच्। अगेव केवलो यत्रेत्यादि। इह द्विविधमग्लोप्यङ्गम्। क्वचिदगेव केवलो लुप्यतेऽममालदित्यादौ। क्वचिद्धलचावत्वरराजदित्यादौ। अगेव केवलो यत्र

लुप्यते तत्राग्लोपस्य स्थानिवद्भावात् सिद्धम् । स्थानिवद्भावे सत्यग्लोपस्य व्यवधानादेव ह्रस्वाप्राप्तिः । तस्मान्न तदर्थमग्लोपीति वचनम् । इतरत्र तु हलचोरुभयोरप्यादेश इति सिध्यति । अस्थानिवद्भावात् । अजादेशस्य हि परनिमित्तकस्य स्थानिवद्भाव उक्तः । न तु हलचोरादेशस्य । तस्माद् यत्र हलचोरादेश स्तदर्थमिदं वचनम् । अन्यार्थमेतत् क्रियमाणं यत्रागेव केवलो लुप्यते तदर्थमपि भविष्यतीति तदर्थमस्योदाहरणमुपन्यस्तम् । अडुढौकदिति । ककि वकि श्वकि त्रकि ढौकृ त्रौकृ ष्वष्क वस्क मस्क टिकृ टीकृ तिकृ तीकृ रघि लघि गत्यर्थाः । अभ्यासे चर्च ( ८।४।५४ ) इति जश्त्वं डकारः ।

## ३ । भ्राजभासभाषदीपजीवमीलपीड़ामन्यतरस्याम् ।

भ्राजिरयं भ्वादावनुदात्तेत् पठ्यते । आत्मनेपदी ऋकारानुबन्धः फणादिषु टुभ्राजृ टुभ्राशृ दीप्ताविति पठ्यते । फणादिभ्यः पुरस्ताच्च एजृ रेजृ भ्राजृ दीप्ताविति । तत्रान्तर्गणकार्य्यार्थः फणादिष्ववश्यमेवास्य पाठोऽङ्गीकर्त्तव्य इति । तेनैव शबादेरपि गणकार्य्यस्य सिद्धत्वात् । अन्यत्रास्य पाठोऽनार्षएव लक्ष्यते । भासृ दीप्तौ । भाष व्यक्तायां वाचि । दीपी दीप्तौ । जीव प्राणधारणे । मील श्मील स्मील क्ष्मील निमेषणे । पीड़ अवगाहने । एषां नित्ये ह्रस्वत्वे प्राप्ते विभाषेयमारभ्यते । अबिभ्रजदिति । यदा ह्रस्वत्वं तदा पूर्ववत् सन्वद्भावेनेत्त्वम् । अबीभषदिति । पूर्ववद् दीर्घः । अथ भ्राजभासयोर् ऋदित्करणं किमर्थम् ? यावता तयोर्हि ऋदित्करणस्यैतत् प्रयोजनम् ऋदित्त्वात् पूर्वसूत्रेण ह्रस्वप्रतिषेधो यथा स्यादिति । यदि विभाषया च तयो र्ह्रस्वत्वं विधीयते तदा ऋदित्करणस्य वैयर्थ्यमेवेत्यत आह भ्राजभासोरित्यादि । अपाणिनीयमिति । पाणिनेरिदं पाणिनीयम् । न पाणिनीयमपाणिनीयमिति । तेनानभ्युपगमात् । न तु तेनाकृतत्वात् । अन्यथा हि बाधृ विलोड़न इत्येवमादीनामपि ऋदित्करणमपाणिनीयं स्यात् । प्रतिपादितं हि पूर्व्वं गणकारः पाणिनि र्न भवतीति । तथाचान्यो हि गणकारः । अन्यश्च सूत्रकारः ।

## ४ । लोपः पिबतेरीच्चाभ्यासस्य ।

ह्रस्वत्वे प्राप्ते तदपवादः पिबते र्लोपो विधीयत ईकारश्चाभ्यासस्येति । उपधाधिकारादुपधाया एव । पर्य्यायेण लोपेकारौ मा भूतामितिश्रवमर्थमभ्यासग्रहणम् ।

अपीप्यदिति। पा पाने। णिच्। शाच्छासाह्वाव्यावेपामिति ( ७।३।३७ ) युक्। ननु च नित्यत्वात् परत्वाच्च पूर्वमुपधालोपे कृतेऽनच्कत्वाद् द्विर्वचनेन न भवितव्यमित्यत आह उपधालोपे कृतइत्यादि। सुबोधम्। पिबतेः श्तिपा निर्द्देशो यङ्लुग्निवृत्त्यर्थः। अपापयदिति। पा रक्षणे पै ओवै शोषणे इत्येतयोस्तु निवृत्त्यर्थो स नोपपद्यते। तत्र ह्येकस्य लुग्विकरणत्वादेव न भविष्यति। अपरस्य तु लाक्षणिकत्वात्।

## ५। तिष्ठतेरित्।

अयमपि ह्रस्वापवादः। ईच्चाभ्यासस्येति निवृत्तम्। श्तिपा निर्द्देशो यङ्लुग्निवृत्त्यर्थएव। अतिष्ठिपदिति।

## ६। जिघ्रतेर्वा।

एषोऽपि ह्रस्वापवादः। अत्रापि श्तिपा निर्द्देशस्य तदेव प्रयोजनम्। अजिघ्रिपदिति।

## ७। उर्ऋत्।

अत्र ऋकारः स्थानित्वेनोपात्तः। तस्य चान्तरङ्गत्वादिररार एव प्राप्नुवन्ति। नहि बहिरङ्गो ह्रस्वः। तस्मात् तेषामपवादो विज्ञायत इत्यत आह इररारामपवाद इति उपधायाश्चेतीकारः ( ७।१।१०१ ) पुगन्त लघूपधस्येति ( ७।३।८६ ) गुणोऽकारो मृजे र्वृद्धिरित्याकार ( ७।२।११४ ) इत्येते च ऋकारस्य स्थान उरण् रपर इति (१।१।५१) रपरा भवन्तो यथाक्रम मिररारो भवन्ति। तेषामपवादः। अचीकृतदिति। कॄत संशब्दने। चुरादिः। णिच्। अवीवृतदिति। वृतु वर्त्तने। अमीमृजदिति। मृजू शुद्धौ। हेतुमण्णिच्। ननु चान्तरङ्गत्वादिरराभिरेव भवितव्यम्। अन्तरङ्गत्वन्तु पुनस्तेषां णिज्मात्राश्रयत्वात्। ऋकारस्तु चङ्परं णिच माश्रित्य भवतीति बहिरङ्गः। तत् कथं तैनेरारो बाध्यन्त इत्यतआह वचनसामर्थ्यादित्यादि। यद्यन्तरङ्गत्वादिररारः स्यु, र्वचनस्य तदा वैयर्थ्यं स्यात्। अनवकाशत्वात्। तस्मादन्तरङ्गा अपि ते बाध्यन्ते। तपरकरण मित्यादि। असति हि तपरकरणे यत्र दीर्घः स्थानी तत्रान्तरतम्याद् दीर्घः प्रसज्येत तस्माद् दीर्घेऽपि स्थानिनि ह्रस्वएव यथा स्यादित्येवमर्थं तपरकरणम्। ननु भाव्यमानोऽ-

ण् सवर्णान् गृह्णातीति दीर्घस्यापि स्थानिनो ह्रस्वएव भविष्यति। न दीर्घइत्यत आह न चायं भाव्यमान इत्यादि। किं कारणमित्यत आह आदेशान्तरनिवृत्त्यर्थ-मिति। आदेशान्तरमिररारादि। तस्य निवृत्त्यर्थमौकारस्यात्मीयरूपेणैवाभ्यनु-ज्ञायते। नत्वपूर्वएव ऋकारो विधीयते। तत् कुतोऽस्य भाव्यमानता ?

## ८। नित्यञ्छन्दसि।

अवीवृधदिति। वृधु वृद्धौ। हेतुमणिच्। ततो लुङादिः। नित्यग्रहणं पूर्वसूत्रे वेत्येतदनुवृत्तेर्विज्ञापनार्थम्। अन्यथा हि तत्राप्यस्याननुवृत्ति विज्ञायते।

## ९। दयते र्दिगि लिटि।

अवदिगइत्यादि। देङ् रक्षणे। लिट्। ङित्त्वादात्मनेपदम्। प्रथमपुरुषः। लिट स्तझयोरेशिरेजित्येशिरेचौ ( ३।४।८१ )। एरनेकाच इत्यादिना (६।४।८२) यणादेशः। दयतेरिति देङो ग्रहणम्। नतु दय दानइत्यस्येति। ननु च दय दान-गतिरक्षणहिंसादानेष्वित्येतस्य ग्रहणं कस्मान्न भवतीत्यत आह तस्य हीत्यादि। लिटीतुग्रच्यते। नच दय दान इत्येतस्यानन्तरो लिड़स्ति। यस्मात् तस्य दययासश्चेत्यनेनाम् ( ३।१।३७ ) विहितः। ननु चामन्त्रइति तत्रानुवर्त्तते। ततो मन्त्र आमोऽभावात् स्यादेवानन्तर्य्यम्। एवं मन्यते। यथा दृष्टानुविधि-श्छन्दसीति। नच दय दानइत्येतस्य मन्त्रे दिगादेशो दृश्यत इत्यभिप्रायः। इहावदिग्य इत्यनवकाशत्वाद् दिगादेशे कृते पश्चाद् द्विर्वचनेन भवितव्यम्। यथा चख्यावित्यत्र चक्षिङः ख्याञिति ( २।४।५४ ) ख्याञादेशस्यानवकाशत्वात् तत्र कृते पश्चाद् द्विर्व्वचनं तथावदिग इत्यत्रापि दिगादेशे कृते पश्चाद् द्विर्व्वचनं केन बाध्यत इति यश्चोदयेत् तं प्रत्याह दिग्यादेशेन द्विर्वचनस्य बाधनमिष्यत इति। कथं पुनरिष्यमाणमपि लभ्यते ? नित्यग्रहणानुवृत्तेः। इह पूर्व्वसूत्रा-न्नित्यग्रहणमनुवर्त्तते। नचात्र विभाषा प्राप्नोति यन्निवृत्त्यर्थं नित्यग्रहणं विज्ञायते। तस्मादन्यल्लिटि यत् कार्य्यं प्राप्नोति तन्निवृत्त्यर्थं नित्यग्रहणं विज्ञायते। तेनैवमभिसम्बन्धः करिष्यते। लिटि प्राप्नुवतां कार्य्याणां दिगादेशएव नित्यं भवति। नान्यत् कार्य्यमित्येवं द्विर्वचननिवर्त्तनं भवति। यणादेशस्तु लिटीतुग्रच्चार्य्य न विधीयत इत्येरनेकाच ( ६।४।८२ ) इत्यचि भवति।

## १० । ऋतश्च संयोगादेर्गुणः ।

सस्वरतुः सस्वरुरिति । स्वृ शब्दोपतापयोः । उरदित्यभ्यासस्यात्त्वम् । ( ६।१।१३५, वा ) रपरत्वम् । हलादिशेषः । दध्वरतुर्दध्वरुरिति । ध्वृ हूर्च्छने । सस्मरतुः सस्मरुरिति । स्मृ आध्याने । ननु च सर्वत्रैव साभ्यास मङ्गम् । नच तत् संयोगादि । नैष दोषः । द्विष्प्रयोगो द्विर्वचनमित्येषोऽत्र पक्षः । तत्र परस्याप्यङ्गसंज्ञा भवत्येव । अथापि स्थाने द्विर्वचन मित्यप्यदोषः । सर्वत्रैव हि लिट्यभ्यासः संयोगादित्वं विहन्ति । उच्यते चेदं वचनम् । तत्रैवं विज्ञास्यामः । प्राग् द्विर्वचनात् संयोगादित्वमस्ति । इह च द्विर्वचनात् प्राक् संयोगादित्वमस्ति । चिक्षियतुश्चिक्षियुरिति । क्षि क्षये । इयङादेशः । प्रतिषेध-विषयेऽपीत्यादि । यः क्ङिति चेत्यस्य ( १।१।५ ) प्रतिषेधस्य विषयो न भवति थलादि स्तत्र सार्वधातुकार्धधातुकयो ( ७।२।८४ ) रित्येवं गुणः सिद्धः । तस्माद् गुणप्रतिषेधविषयेऽपि यथा स्यादित्ययमारम्भः । वृद्धिविषयेऽपि परत्वाद् गुणेन भवितव्यमिति कस्यचिद् भ्रान्तिः स्यात् । अतस्तान्निराकर्त्तुमाह वृद्धिविषये त्वित्यादि । गुणस्यावकाशः सस्वरतुः सस्वरुरिति । ञ्णिति वृद्धेरवकाशः स्वारको ध्वारक इति । सस्वार दध्वारेत्यत्रोभयप्रसङ्गे पूर्वविप्रतिषेधेन वृद्धिरेव भवति । अथ तपरकरणं किमर्थम् ? दीर्घस्यापि मा भूदित्येवमर्थं चेत् ? नैतदस्ति । भवितव्यमेव हि दीर्घस्योत्तरसूत्रेण । स्तॄञ् आच्छादने । आतस्तरतुरातस्तरुरिति । ननु चैतस्मात् तपरकरणान्न प्राप्नोति । सावकाशञ्चोत्तरवचनमसंयोगादौ । कॄ विक्षेपे । निचकरतु र्निचकरुरिति । यद्येवमेवन्तर्हि न चेदं तपरकरणम् । किं तर्हि ? तसिनायं निर्देशः । संयोगादेरित्यादि । इहाङ्गप्रकरणादङ्गं संयोगादित्वेन विशिष्यते । नच करोतेः संयोगाद्यङ्गमिति न प्राप्नोति । तस्मात् संयोगोपधग्रहणं कर्त्तव्यमिति करोतेरपि यथा स्याद् गुणः । सञ्चस्करतुः सञ्चस्करुरिति । सम्पर्य्युपेभ्यः करोतौ भूषणइति सुट् (६।१।१३७) । स चाड़भ्या-सव्यवायेऽपीति ( ६।१।१३५, वा ) वचनादभ्यासव्यवायेऽपि भवति । किं पुनः कारणमिह गुणो न सिध्यति ? यावता सुटि कृते तन्मध्यपतित स्तद्ग्रहणेन गृह्यत इति (प,९०) करोतिः संयोगादिर्भवतीत्यत आह अत्र हीत्यादि । अनेन सुटो बहिरङ्गतां प्रतिपादयति । बहिरङ्गत्वे हि तस्यासिद्धं बहिरङ्ग मन्तरङ्ग (प,५१) इत्यन्तरङ्गे गुणे कर्त्तव्ये बहिरङ्गस्य सुटोऽसिद्धत्वात् संयोगादित्वं करोतेर्नोपपद्यते ।

पूर्वं धातुरुपसर्गेण युज्यते पश्चात् साधनेनेत्यस्मिन् दर्शने धातूपसर्गयोः कार्य्यमन्तरङ्ग मिति सुटोऽपि धातूपसर्गयोः कार्य्यत्वादन्तरङ्गता स्यात्। पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणेत्यस्मिन् दर्शने सुड् बहिरङ्गो भवति। तथाह्यस्मिन् दर्शने निरुपसर्गस्यैव धातोरर्थः साधनेन युज्यत इति साधनाभिधायी पूर्वं तावल्लिट् कर्त्तव्यः। तत्र कृते तदाश्रये द्विर्व्वचने कृते पश्चादुपसर्गयोगेऽड्भ्यासव्यवायेऽपीति (६।१।१३५, वा) सुट् क्रियते। एवञ्च क्रियमाणे ह्यनेकपदाश्रितत्वाद्बह्वपेक्षत्वाच्च सुटो बहिरङ्गता प्रतिपाद्यते। गुणस्तु लिड्ुत्पत्तिसमनन्तरकालमेव प्राप्नोति। नापरं किञ्चिदपेक्षते। एकपदापेक्षत्वादल्पापेक्षत्वाच्चान्तरङ्गः। ततश्च तस्मिन् कर्त्तव्ये सुटोऽसिद्धत्वात् करोतिः संयोगाद्यङ्गं न भवति। तस्मादसौ न प्राप्नोति। एवञ्च कृत्वेत्यादि। यत एवं सुड् बहिरङ्ग एवञ्च कृत्वाऽन्तरङ्ग इटि कर्त्तव्ये तस्यासिद्धत्वादसंयोगादित्वात् करोते रुपस्कृषीष्ट संस्कृषीष्टेत्यत्र ऋतश्च संयोगादेरितीड़ागमो (७।२।४३) न भवति। एतेन बहिरङ्गतैव सुटः प्रतिपादिता। ननु चाङ्गाधिकारात् प्रत्यासत्तेरङ्गावयव एव संयोगो गृह्यते। कात्पूर्वग्रहणेन तत्र ज्ञापितमभक्तत्वं सुटः। ततश्चाभक्तत्वादेवासंयोगादित्वात् करोतेरिड् न भविष्यति। किमत्र बहिरङ्गत्वेनासिद्धत्वनोपन्यस्तेन? सत्यमेतत्। एवं मन्यते। भवतु नाम करोतिभक्तत्वं सुटः। तथाप्यसिद्धत्वात् तस्य संस्कृषीष्टेत्यत्रेट्प्रसङ्गो न भविष्यतीति संयोगोपधग्रहणं कर्त्तव्यमिति। अस्यायमर्थः। संयोगोपधः करोतिरङ्गं गृह्यते येन तत् संयोगोपधग्रहणव्याख्यानं कर्त्तव्यमित्यर्थः। तत्रेदं व्याख्यानं कर्त्तव्यम्। चकारोऽत्र क्रियते। स च करोतेः संयोगोपधस्य समुच्चयार्थः। तेन तस्यापि सुटि कृते संयोगोपधस्य गुणो भविष्यतीति।

## ११। ऋच्छत्यृताम्।

ऋच्छ गतीन्द्रियप्रलयमूर्त्तिभावेषु। अर्त्तेरप्यत्र प्रश्नःस्ते। बहुवचननिर्द्देशात्। अतएवाह ऋच्छतेरङ्गस्य ऋ इत्येतस्य ऋकारान्तानाञ्चेति। ऋकारान्ताः कॄ विक्षेपे गॄ निगरण इत्येवमादयः। आनर्च्छतुरानर्च्छुरित्यादि। अतुसुसौ। गुणः। द्विर्व्वचनमभ्यासकार्य्यम् पूर्व्ववत्। अत आदेरिति (७।४।७०) दीर्घः। तस्मान्नुड्द्विहल इति (७।४।७१) नुट्। आरतुरारुरिति। पूर्व्ववदभ्यासस्य दीर्घः। ततः पूर्वसवर्णेनेति। ऋच्छतेरलघूपधत्वादित्यादि। अलघूपधत्वं तु तस्यान्तरङ्गत्वात्। छे चेति (६।१।७३) तुकि कृते संयोगे गुर्विति (१।४।११) गुरुसंज्ञायां सत्यां

गुरूपधत्वान्न प्राप्नोतीति वेदितव्यम्। ऋतां त्वित्यादि। ऋ ऋतान्तु प्रतिषिद्ध एवेति गुणो विधीयत इत्यपेक्षते। गुणप्रतिषेधस्तु तेषामसंयोगाल्लिट् किदिति (१।२।५) कित्त्वे सति क्ङिति चेत्यनेन (१।१।५) वेदितव्यः। वृद्धिविषये त्वित्यादि। यथा ऋतश्च संयोगादेरिति (७।४।१०) वृद्धिविषये पूर्वविप्रतिषेधेन वृद्धिरेवेष्यते तथा ऋऋतामपीति। गुणस्यावकाशो निचकरतु निचकरुरिति वृद्धेरवकाशः कारको हारक इति। निचकार निजगारेत्यत्र वृद्धिविषये पूर्व-विप्रतिषेधेन वृद्धिरेवेष्यते।

## १२। शॄदॄप्रां ह्रस्वो वा।

शॄ हिंसायाम्। दॄ विदारणे। पॄ पालनपूरणयोः। एषां पूर्वसूत्रेण नित्ये गुणे प्राप्ते पक्षे ह्रस्वो विधीयते। वावचनात् पक्षे गुणो भवत्येव। विशश्रतुरिति। ह्रस्वत्वे कृते यणादेशः। ह्रस्ववचनमित्यादि। असति ह्रस्वग्रहणे वावचनेन विकल्पिते यस्मिन् पक्षे गुणो नास्ति तस्मिन् पक्ष ऋत इद् धातोरितीत्त्वं (७।१।१००) प्रसज्येत। उदोष्ठ्यपूर्वस्येत्युत्त्वञ्च (७।१।१०२)। तस्मात् तन्निवृत्त्यर्थं ह्रस्व इत्युच्यते। ऋदिति कर्त्तव्ये ह्रस्वग्रहणमुत्तरार्थम्। केचिदित्यादि। कथं पुनरस्य प्रत्याख्याने विशश्रतुरित्येवमादीनि रूपाणि सिद्ध्यन्तीत्याह श्रा पाक इत्यादि। यद्य-प्यातो लोप इटि (६।४।६४) चेत्याकारलोपे कृते श्रादीनां विशश्रतुरित्येवमादीनि रूपाणि सिध्यन्तीति तथाप्यर्थभेदो भवति। तदाऽयुक्तमस्य प्रत्याख्यानमित्या-शङ्क्यानेकार्थत्वाद्धातूनामित्युक्तम्। तथाच सतीत्यादिना प्रत्याख्यानं प्रत्याचष्टे। यदि सूत्रस्य प्रत्याख्यानं क्रियते क्वसौ कृते विशश्रुवानिति रूपं न सिध्यति। तथाहि यदि शृणातेर्ह्रस्वो न क्रियते तदा विशशर्वानिति रूपं स्यात्। अथ श्रातेर्विश-श्रिवानिति। तस्मादयुक्तमस्य प्रत्याख्यानम्।

## १३। केऽणः।

अणिति पूर्वेण णकारेण प्रत्याहारग्रहणम्। अन्यथा केऽच इत्येवं ब्रूयात्। अथवाऽच इत्येतदपि न ब्रूयात्। अच एव हि ह्रस्वदीर्घप्लुता भवन्ति। ज्ञकेति। जानातीति ज्ञा। इगुपधज्ञाप्रीकिरः क इति (३।१।१३५) कः। तदन्ताट्टाप्। अज्ञाता ज्ञेति प्रागिवात् (५।३।७०)कः। अथवानुकम्पिता ज्ञेत्यनुकम्पायामिति (५।३।६७) कन्। कनि कृते तदन्ताट्टाप्। अथेह कस्मान्न भवति कुदाधाराचि-

कलिभ्यः कन्निति ( उण्, ३।३२० ) रातेर्दधातेश्च कन् । तदन्ताट्टाप् । राका धाकेत्यादि । सुबोधम् । निरनुबन्धस्येह ग्रहणान्निरनुबन्धकपरिभाषया (प८२) कनो ग्रहणेन न भवितव्यमिति कस्यचिद् भ्रान्तिः स्यात् । अतस्तां निराकर्त्तुमाह न कपीत्यादि । यद्येषा परिभाषोपतिष्ठते तदा न कपीति प्रतिषेधोऽनर्थकः स्यात् । सानुबन्धकत्वादेव कपो ग्रहणं न भविष्यतीत्यभिप्रायः ॥

## १४ । न कपि ।

बहुकुमारीक इति । बह्व्यः कुमार्य्यो यस्य सः । नद्यृतश्चेति (५।४।१५३) कप् । अनुबन्धलोपः । अथात्रास्मिन् ह्रस्वत्वे प्रतिषिद्ध उपसर्जनह्रस्वत्वं कस्मान्न भवति ? अतएव प्रतिषेधान्न भविष्यतीति चेत् ? न । अनन्तरस्य विधिर्वा प्रतिषेधो ( प, ६२ ) वेत्यनन्तरस्यैव ह्रस्वस्य ह्ययं प्रतिषेधो न सर्वस्य । कपीति वचनसामर्थ्यादुपसर्जनह्रस्वत्वमिति न भविष्यतीति चेद् यत्र ह्युपसर्जनह्रस्वत्वस्य प्राप्तिरेव नास्ति बहुयवागूको बहुलक्ष्मीक इति तत्र वचनस्य चरितार्थत्वाद् । न ह्यत्रोपसर्जनह्रस्वत्वस्य प्राप्तिरस्ति । गोस्त्रियोरुपसर्जनस्येति (१।२।४८) ह्रस्वशासने स्त्रीशब्देन स्त्र्यधिकारविहितानां प्रत्ययानां टाबादीनां ग्रहणात् । तस्माद् बहुकुमारीक इत्यत्रोपसर्जनस्य ह्रस्वत्वेन भवितव्यमित्यत आह गोस्त्रियोरुपसर्जनस्येत्यादि । कस्मान्न भवतीत्याह समासार्थे हीत्यादि । उपसर्जनह्रस्वत्वं हि स्त्रीप्रत्ययान्तस्य समासप्रातिपदिकस्य विधीयते । तद्विधाने ह्रस्वो नपुंसके प्रातिपदिकस्येत्यतः ( १।२।४७ ) प्रातिपदिकग्रहणानुवृत्तेः समासप्रातिपदिकस्यैव स्त्रीप्रत्ययान्तस्योपसर्जनह्रस्वः स्यात् । न च बहुकुमारीक इत्यादौ स्त्रीप्रत्ययान्तं समासप्रातिपदिकं भवति यस्मात् समासान्ताइत्यधिकार ( ५।४।६८ ) एवायं कब् विधीयते । समासान्ताइत्यत्रान्तग्रहणस्यैतत् ( ५।४।६८ ) प्रयोजनं समासस्यान्तोऽवयवो यथा स्यादिति । स च कथं समासस्यावयवो भवति ? यदि तेन सह समाससंज्ञा भवति । कथञ्च तेन समाससंज्ञा भवति ? यद्यकृते समासे समासार्थादुत्तरपदात् कब् भवति । पश्चात् कबन्तेन समासो भवति । नान्यथा । तस्मात् समासान्ताधिकारे कपो विधानात् समासार्थादुत्तरपदात् कपि कृते पश्चात् समासेन भवितव्यम् । ततश्च स्त्रीप्रत्ययान्तमिह समासप्रातिपदिकं न भवतीति न भवत्युपसर्ज्जनह्रस्वत्वम् ।

## १५ । आपोऽन्यतरस्याम् ।

बहुखट्वाकइति । शेषाद् विभाषेति ( ५।४।१५४ ) कप् ।

## १६ । ऋदृशोरङि गुणः ।

क्ङिति चेति ( १।१।५ ) प्रतिषेधे प्राप्तेऽयं गुणो विधीयते । अकरदिति । कृञो लुङ् । च्लिः । तिप् । कृमृदृरुहिभ्यश्छन्दसीति ( ३।१।५९ ) च्लेरङ् । असरदिति । सृ गतौ । आरदिति । ऋ गतिप्रापणयोः । सर्त्तिशास्त्यर्त्तिभ्यश्चेति ( ३।१।५६ ) च्लेरङ् । अर्त्तेरजादित्वाद्टाटि कृत आटश्चेति ( ६।१।९० ) वृद्धिः । अदर्शदिति । इरितो वेत्यङ् (३।१।५७) । अथ गुणग्रहणं किमर्थम् ? अकार एव नोच्येत ? नैवं शक्यम् । अकार इत्युच्यमाने दृशेरन्त्यस्य स्यात् । गुणग्रहणे तु सति संज्ञाविधाने नियमइतीकएव स्थाने भवति ।

## १७ । अस्यतेस्थुक् ।

आस्थदिति । असु क्षेपणे । अस्यतिवक्तिख्यातिभ्य इति ( ३।१।५२ ) च्लेरङादेशः ।

## १८ । श्वयतेरः ।

अश्वदिति । टुओश्वि गतिवृद्ध्योः । जृस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्चेत्यादिनाङ् (३।१।५८) । द्वयोरकारयोः पररूपत्वम् ( ६।१।९७ ) ।

## १९ । पतः पुम् ।

अपप्तदिति । शल हुल पत्लृ गतौ । पुषादिनाङ् । मकारो देशविधार्थः ।

## २० । वच उम् ।

अवोचदिति । वच परिभाषणे । अस्यतिवक्तिख्यातीत्यादिनाङ् ( ३।१।५२ ) । मकारस्य तदेव प्रयोजनम् ।

## २१ । शीङः सार्व्वधातुके गुणः ।

अप्राप्तविषयत्वाद् गुणविधानस्य ङिति सार्वधातुक एतद्विधानम् । पिति तु सामान्यलक्षणेनैव गुणः सिद्धः । लोट् । आङ्‌त्तमस्य पिच्चेत्या-( ३।४।९२ ) टि शयै शयावहायिति । तस्माद् यत्र गुणो न प्राप्नोति तत्र विधीयते । शेरतइति । अदादित्वाच्छपो लुक् । आत्मनेपदेष्वनत इति ( ७।१।५ ) झकारस्यादादेशः । अत्र शीङो रुड़िति ( ७।१।६ ) रुड़ागमो भवति । शिश्ये इति । लिट् । लिट् चेत्यार्धधातुकसंज्ञा ( ३।४।११५ ) । उत्तमपुरुषस्यैकवचनम् । प्रथमपुरुषस्यैकवचनं वा । यदा प्रथमपुरुषस्यैकवचनं तदेश् । पूर्ववदेव द्विर्वचनम् । एरनेकाचोऽ संयोगपूर्वस्येति ( ६।४।८२ ) यणादेशः । अन्यदेट् । टेरेत्वम् । अथ गुणग्रहणं किमर्थम् ? न शीङः सार्व्वधातुक एदित्येवोच्येत । एवं मन्यते । शीङ्इति सानुबन्धकनिर्द्देशे षष्ठ्युच्चारिता । निवृत्तिधर्म्मा चानुबन्धः । तस्येत्संज्ञायां लोपेन निवृत्तौ सामायामयमन्यप्रकारो निवृत्ते विज्ञायेत । तस्य नान्येत्संज्ञा निवर्त्तिका । किं तर्हि ? एकारः । एवं तर्हि ङकारस्य स्थान एकार आपद्येत । तस्माद् गुणग्रहणन्त्विकमुपस्थापयति । ङकारस्तु तेनैव हेतुना निवर्त्तत इति । यद्येवं ङकारो नोच्चारयिष्यते । शिय इति निर्द्देशः कारिष्यते । नैवं शक्यम् । एवं हि निर्द्देशे सति यङ्‌लुक्यपि स्यात् । शेशीतः शेश्यतीति ।

## २२ । अयङ् यि क्ङिति ।

शय्यतइति । सार्व्वधातुके यक् ( ३।१।६७ ) । शाशयत इति । यङ् । परत्वान्नित्यत्वाच्च द्विर्वचनात् प्रागयङादेशः । ततः शयेरित्यस्य द्विर्वचनम् । दीर्घोऽकित ( ७।४।८३ ) इत्यभ्यासस्य दीर्घत्वम् । प्रशय्येति । समानकर्त्तृकयोः पूर्वकाले क्त्वा ( ३।४।२१ ) । कुगतिप्रादय इति ( २।२।१८ ) समासः । समासेऽनञ्‌पूर्व्वे क्त्वो ल्यप् ( ७।१।३७ ) । शेयमिति । अचो ( ३।१।९७ ) यत् । शय्येति । संज्ञायां समजनीत्यादिना क्यप् ( ३।३।९९ ) ।

## २३ । उपसर्गाद् ध्रस्व ऊहतेः ।

समुह्य गतइति । ऊह वितर्के । यद्यपि वहेरपि यजादित्वात् किति

संप्रसारणेनैतत् सिध्यति तथाप्यूहेरपि दीर्घस्याश्रवणं यथा स्यादित्येवमर्थमिदं ह्रस्वविधानम्। समोह्यतइति। ईह चेष्टायाम्। समूहित इति। क्तः। समूह्योऽयमर्थइति। ऋहलोर्ण्यत् ( ३।१।१२४ )। अण इत्येवेत्यादि। केऽणइत्यतोऽण्-( ७।४।१३ ) ग्रहणमनुवर्त्तते। आउह्यतेओह्यते। समोह्यत इति। ह्रस्वत्वं न भवति। यद्यण्ग्रहणमनुवर्त्तते तदा ह्रस्वविधानमनर्थकं स्यात्। उपसर्गादूहतेरुदिति वक्तव्यम्। नानर्थकम्। उत्तरार्थत्वात्। एतेर्लिङीति ( ७।४।२४ ) वक्ष्यति। तत्र ह्रस्वइत्येतस्यानुवृत्तिर्यथा स्यात्।

## २४। एतेर्लिङि।

उदियादिति। इण् गतौ। आशिषि लिङ्। स्कोः संयोगाद्योरन्ते चेति ( ८।२।२९ ) सकारलोपः। अभीयादिति। सवर्णदीर्घत्वेऽकृते ह्रस्वः। आशिषि लिङीत्यादिना सूत्रस्य विषयं दर्शयति। सार्वधातुके हि लिङि दीर्घत्वमिणो न सम्भवतीति नात्रास्योपयोगः। यत्राकृत्सार्वधातुकयोर्दीर्घत्वमापद्यते तत्र दीर्घत्वे कृतेऽनेन ह्रस्वो भवति।

## २५। अकृत्सार्वधातुकयो र्दीर्घः।

भृशायतइति। भृशादिभ्यो भुव्यच्वेर्लोपश्च हलइति ( ३।१।१२ ) क्यङ्। सुखायतइति। सुखादिभ्यः कर्त्तृवेदनायामिति ( ३।१।१८ ) क्यङ्। चीयत इति। कर्मणि लकारः। सार्वधातुके यक् ( ३।१।६७ )। चेचीयतइति। गुणो यङ्लुकोरित्यभ्यासस्य ( ७।४।८२ ) गुणः। तोष्टूयतइति। ष्टुञ् स्तुतौ। शर् पूर्वाःखय इति ( ७।४।६१ ) खयः शेषः। चीयात् स्तूयादिति। आशिषि लिङ्। प्रकृत्येति। पूर्ववल्ल्यप्। स च कृदतिङिति ( ३।१।९३ ) कृत्संज्ञकः। ननु च दीर्घश्रुत्याऽजित्येतस्मिन्नुपस्थिते तेनाङ्गं विशिष्यते। तत्र विशेषणेन च तदन्तविधिरित्यजन्तस्याङ्गस्य दीर्घत्वेन भवितव्यमिति। इह ह्रस्वस्य पिति कृति तुकि कृतेऽजन्तता नास्ति। ततश्चानजन्तत्वादेव दीर्घत्वन्न भविष्यति। किमेतन्निवृत्त्यर्थेनाकृद्ग्रहणेनेत्यत आह परत्वादित्यादि। तुकाऽवकाशोऽग्निर्चिदिति। दीर्घस्यावकाशश्चीयत इति। प्रकृत्य प्रहृत्येत्यत्रोभयप्राप्तौ सत्यसत्यकृद्ग्रहणे परत्वाद् दीर्घत्वेन तुग् बाध्येत। तस्मादकृद्ग्रहणं कर्त्तव्यम्। चिनुयादिति। विध्यादिलिङ्। सच तिङ्शित्

सार्व्वधातुकमिति ( ३।४।११३ ) सार्वधातुकसंज्ञकः। उरुया धृष्णुयेति। उरुधृष्णुशब्दयो स्तृतीयैकवचने सुपां सुलुगित्यादिना ( ७।१।३९ ) याभावः॥

## २६। च्वौ च।

शुचीकरोतीति। अभूततद्भावेत्यादिना ( ७।४।५० ) च्विः। चकारः पूर्वापेक्षया समुच्चयार्थः॥

## २७। रीङृतः।

यिग्रहणमनुवर्त्तते। अकृत्सार्वधातुकयोरिति च। मात्रीयतीति। सुपआत्मनः क्यच् ( ३।१।८ )। पित्रीयत इति। कर्त्तुः क्यङ् सलोपश्चेति क्यङ् (३।१।११)। चेक्रीयतइति। करोते र्यङ्। पित्र्यमिति। पितुर्यच्चेति ( ४।३।७९ ) यत् प्रत्ययः। रीङादेशे कृते यस्येति चेतीकारलोपः ( ६।४।१४८ ) कथं पुनः क्ङितीत्युच्यमाने तत्रादेशो भवतीत्याह क्ङितीत्येतदिह निवृत्तमिति। यद्येवं यिग्रहणस्यापि निवृत्तिः प्राप्नोति। तदेकयोगनिर्दिष्टत्वात्। नैतदस्ति। स्वरितत्वप्रतिबद्धा हि शब्दानामनुवृत्तिः। इह च यिग्रहणस्यैव स्वरितत्वं प्रतिज्ञायत इति तदेवानुवर्त्तते। क्ङिद्ग्रहणस्य स्वरितत्वं न प्रतिज्ञायत इति नैतदनुवर्त्तते। चेक्रीय्यतइति। कृ विक्षेपे। ऋत इद्धातारितीत्त्वे ( ७।१।१०० ) रपरत्वम्। हलि चेति ( ८।२।७७ ) दीर्घः। निजेगिल्यत इति। गॄ निगरणे। लुपसदेत्यादिना ( ३।१।२४ ) यङ्। ग्रो यङीति (८।२।२०) लत्वं रेफस्य। अथ दीर्घग्रहणं किमर्थम्? न रिङित्येवोच्येत। अकृत्सार्वधातुकयोरिति ( ७।४।२५ ) दीर्घत्वेनैव सिद्धमिति। तत्राप्ययमर्थः। उत्तरसूत्रे पुना रिङ्ग्रहणं न कर्त्तव्यं भवति। एतदेव हि तत्रानुवर्त्तिष्यते। न सिध्यति। नाप्राप्ते दीर्घत्वे रिङारभ्यमाणस्तस्य बाधकः स्यात्। भवतु नाम ऋकारस्य यो दीर्घस्तस्य बाधकः। यस्तु कृत आदेशे स्यान्यन्तरस्य प्राप्नोति तस्य कथं बाधकः? नह्यस्मिन् प्राप्ते रिङारभ्यते। एवं तर्हि मन्दधियां सुखप्रतिपत्त्यर्थं दीर्घोच्चारणम्। ङकारोऽन्त्यादेशार्थः।

## २८। रिङ् श-यग्-लिङ्क्षु।

अत्रापि यिग्रहणमकृत्सार्व्वधातुकस्चानुवर्त्तते। तत्र सम्भवव्यभिचारा-

लिङ्एव विशेषणम्। न शयकोः। आद्रियत आध्रियत इति। दृङ् आदरे धृङ् अवस्थाने। आङ्पूर्वः। तुदादित्वाच्छः। क्रियादिति। आशिषि लिङ्। बिभृयादिति। अत्र विध्यादिलिङ्। जुहोत्यादित्वाच्छ्लुः। श्लाविति (६।१।१०) द्विर्वचनम्। भृञामिदितीत्त्वमभ्यासस्य (७।४।७६)। कृषीष्टेति। आशिषि लिङ्। उश्चेति (१।२।१२) कित्त्वाद् गुणाभावः।

## २९। गुणोऽर्त्तिसंयोगाद्योः।

ऋ गतिप्रापणयोः। ऋ सृ गतावित्येतयोर् भौवादिकजौहोत्यादिकयो र्ग्रहणम्। छन्दोवत् सूत्राणि भवन्तीत्यतो बहुलं छन्दसीति (२।४।७३) शपो लुकं कृत्वाऽर्त्तीति निर्देशः कृतः। अन्यथा हि यद्यृच्छतीति निर्देशः क्रियत एवं सति जौहोत्यादिकस्य ग्रहणं न स्यात्। अथापीयर्त्ति निर्देशः क्रियत एवमपि भौवादिकस्य ग्रहणं न स्यात्। ऋ इत्येतन्निर्देशो न कृतस्तु वैचित्र्यार्थः। पूर्वेण रिङः प्राप्तस्यायमपवादः। शइत्यसम्भवान्निवृत्तमिति। असम्भव स्त्वर्त्ति-संयोगाद्योरशविकरणत्वात्। अर्य्यत इति। यक्। अर्य्यादिति। आशिषि लिङ्। अथ संस्क्रियते संस्क्रियादित्यत्र कस्मान्न भवति ? भवति हि करोतिरपि सुटि कृते संयोगाद्यङ्गमित्यत आह इहेत्यादि। बहिरङ्गत्वं तु सुटो द्विपदाश्रयत्वात्। गुणस्य पुनरन्तरङ्गत्वमेकपदाश्रयत्वात्। असिद्धं ब हिरङ्गमन्तरङ्ग इति (प, ५१) सुटोऽसिद्धत्वात् संयोगादित्वमङ्गस्य नास्ति। अथापि कथञ्चित् सुटःसिद्धत्वं स्यादेव मप्यभक्तत्वात् सुटः संयोगादित्वं नास्ति। अतो गुणो न प्रवर्त्तते। अङ्गाधिकारादङ्गा वयवः संयोगो गृह्यते। नह्यत्राभक्तत्वे सुटोऽङ्गावयवः संयोगउपपद्यते। इय्र्यादिति। ऋ गतौ। विध्यादिलिङ्। जुहोत्यादित्वाच्छपः श्लुः। श्लाविति (६।१।१०) द्विर्व्वचनम्। अर्त्तिपिपर्त्त्योश्चेत्यभ्यासस्येत्त्वम् (७।४।७७)। अभ्यासस्यासवर्णे इतीयङ् (६।४।७८)। लिङः सलोपोऽनन्त्यस्येति (७।२।७९) सलोपः! अर्त्ति-संयोगाद्योरदिति कर्त्तव्ये गुणग्रहणं वैचित्र्यार्थम्।

## ३०। यङि च।

पूर्वेण प्राप्तस्य रीङोऽयमपवादः। अरार्य्यत इति। यङ्। गुणः। रपरत्वम्। अजादेर्द्वितीयस्येति (६।१।२) द्विर्वचनम्। हलादिशेषः। दीर्घोऽकित इति दीर्घत्वम् (७।४।८३)। ननु चार्त्तेरहलादित्वाद् यङ् न प्राप्नोतीत्यत आह अर्त्ते-

रित्यादि। भवतु नामोपसंख्यानाद् यङ्। रेफादेस्तु द्विर्वचनेन न भवितव्यम्। न न्द्राः संयोगादय(६।१।३) इति प्रतिषेधादित्यत आह न न्द्राः संयोगादय (६।१।३) इत्युक्तं हि तत्र यकारपरस्य रेफस्य प्रतिषेधो वक्तव्यः। तस्माद्रेफादेर्य इत्येतस्य द्विर्वचनं भवति। जङ्घन्यत इति। नुगतोऽनुनासिकान्तस्येति (७।४।८५) नुक्। अभ्यासाच्चेति (७।३।५५) कुत्वम्।

## ३१। ई घ्राध्मोः।

अत्र दीर्घोच्चारणं किमर्थम्? दीर्घो यथा स्यात्। ह्रस्वो मा भूत्। नैतदस्ति। ह्रस्वस्यापि हि विधानेऽकृत्सार्वधातुकयोर् (७।४।२५) दीर्घ इत्येवं सिध्यति। च्वौ चेति। (७।४।२६) यथायोगं दीर्घो भविष्यति। एवं तर्ह्येतज् ज्ञापयति संज्ञापूर्वको विधिरनित्य इति। तेन स्वायम्भुवमिति सिद्धं भवति।

## ३२। अस्य च्वौ।

च्वौ चेति दीर्घस्यायमपवादः (७।४।२६)।

## ३३। क्यचि च।

अकृत्सार्वधातुकयो दीर्घं (७।४।२५) इत्यस्यायमपवादः। चकारोऽस्येत्यनुकर्षणार्थः। अथ पृथग् योगकरणं किमर्थम्? नास्य च्विक्यचोरित्येकयोगएव क्रियतामित्यत आह पृथग् योगकरण मित्यादि। न च्छन्दस्यपुत्रस्ये-(७।४।३५) त्येवमाद्युत्तरकार्थं क्यचि यथा स्यात्। च्वौ मा भूदित्येवमर्थो योगविभागः कृतः।

## ३४। अशनायोदन्यधनाया बुभुक्षापिपासागर्द्धेषु।

भोक्तुमिच्छा बुभुक्षा। पातुमिच्छा पिपासा। गर्द्धनं गर्द्धः। अभिकाङ्क्षेत्यर्थः।

## ३५। न च्छन्दस्यपुत्रस्य।

क्यचि यदुक्तं तन्न भवतीति। किं पुनस्तदित्याह दीर्घत्वमीत्वञ्चेति। ननु चानन्तरस्य विधिर्वा भवति (प,६२) प्रतिषेधो वेत्यनन्तरस्य ईत्वस्य प्रतिषेधेन भवितव्यम्। नतु व्यवहितस्य दीर्घत्वस्य। नैष दोषः। अश्वाघस्यादित्यश्वाघयोरा

दि (७।४।३७) त्यश्वाघयोराद्वचनं ( ७।४।३७ ) ज्ञापकं दीर्घत्वस्याप्ययं प्रतिषेधो भवतीति। अन्यथा दीर्घत्वेनैव सिद्धत्वादाकारकरणमनर्थकं स्यात्। मित्रयुरिति। क्याच्छन्दसीत्युप्रत्ययः ( ३।२।१७० )। अतो लोप ( ६।४।४८ ) इत्यकारलोपः। अपुत्रादीनामिति वक्तव्यमिति। पुत्रादीनां प्रतिषेधो न भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्। क्यचि चेत्यस्यानन्तरं (७।४।३३) पुत्रस्येति वक्तव्यम्। किमर्थमिदम्? नच्छन्दसीति प्रतिषेधं वक्ष्यति तद्बाधनार्थम्। एवमपुत्रस्येति नञ् उच्चारयितव्यो न भवति। तदिदं क्यचि चेत्यस्यानन्तरं (७।४।३३) पुत्रस्येति वक्तव्ये यदिहापुत्रस्येति वचनं तत् पुत्रादीनां प्रतिषेधो यथा स्यादित्येवमर्थम्। एतच्च पुत्रस्योपलक्षणत्वाल्लभ्यते।

## ३६। दुरस्युर्द्रविणस्युर्वृषण्यतिरिषण्यति।

## ३७। अश्वाघस्यात्।

एतदेवाद्वचनं ज्ञापकमित्यादि। कथं कृत्वा ज्ञापकम्? यदि नच्छन्दस्यनन्तरस्यैवेत्वस्यायं ( ७।४।३५ ) प्रतिषेध स्तदाऽद्वचनमनर्थकं स्यात्। अकृत्सार्वधातुकयोरित्यनेनैव ( ७।४।२५ ) सिद्धत्वात्। कृतञ्च। तस्मादेतज् ज्ञापयति दीर्घस्याप्ययं प्रतिषेधो भवतीति।

## ३८। देवसुम्नयोर्यजुषि काठके।

न च्छन्दसीति ( ७।४।३५ ) प्रतिषेधे प्राप्ते देवसुम्नयोरिदमारभ्यत आद्वचनम्। काठक इति। यजुष एवैतद् विशेषणम्। कठस्येदं यजुः काठकम्। गोत्रचरणाद् ( ४।३।१२६ ) वुञ्।

## ३९। कव्यध्वरपृतनस्यर्चि लोपः।

कव्यन्त इति। अलोऽन्त्यस्य ( १।१।५२ ) लोपः। क्यजन्ताच्छन्दप्रत्ययः। तदन्ताज्जस्।

## ४०। द्यतिस्यतिमास्थामित् ति किति।

छन्दसि यजुषि ऋचीति सर्वं निवृत्तम्। तेन सामान्येनायं विधिः। दो

अवखण्डने। षो अन्तकर्म्मणि। मा माने। मेङ् प्रणिदाने। गामादाग्रहणेष्वविशेष इति (प,११५) त्रयाणामपि ग्रहणम्। ष्ठा गतिनिवृत्तौ। तत्राद्यस्य दो दद् घोरिति (७।४।४६) दत्त्वे प्राप्ते शेषाणां घुमास्थागेत्यादिसूत्रेण (६।४।६६) ईत्त्वे प्राप्त इत्त्वं विधीयते। अवदायेति। पूर्ववत् क्त्वो ल्यप्। अवदातेति। तृच्। द्यतिस्यतीति (A) श्तिपा निर्द्देशोऽयं यङ्लुग्निवृत्त्यर्थः। तेन तयोर्यथाप्राप्तमेव भवति। दादत्तो दादत्तवान् सासीतः सासीतवान्। तपरकरणं मुखसुखार्थम्। नतु दीर्घनिवृत्त्यर्थम्। भाव्यमानोऽण् सवर्णान्न गृह्णातीति दीर्घस्याप्राप्तेः।

## ४१। शाच्छोरन्यतरस्याम्।

शो तनूकरणे। छो छेदने। श्यतेरित्त्वं व्रते नित्यमिति। व्रतइति नोत्तरपदं गृह्यते। किं तर्हि? विषयः। व्रतविषये श्यते र्नित्यमित्त्वं भवति। संशितो ब्राह्मणइति। आचारविशेषे व्रताख्ये यत्नवानेवोच्यते संशितव्रतइति। संशितं यत्नेन सम्यक् प्रतिपादितं व्रतं यस्य येन वा स एवमुच्यते। ननु च व्रतविषये विधीयमानेनेत्त्वेनैव व्रतस्य द्योतितत्त्वाद् व्रतशब्दस्य प्रयोगो न प्राप्नोति। नैष दोषः। अन्यत्र ह्येत्त्वं भवत्येव। व्रते तु नित्य माख्यायते सोऽयं सामान्यशब्दो भवति। अत्र विशेषार्थो व्रतशब्दः प्रयुज्यते। परनिपात स्त्वाहिताग्न्यादित्वाद् द्रष्टव्यः। व्यवस्थितविभाषाविज्ञानात् सिद्धमिति। एतदागमवाक्येन द्रढयितुमाह देवत्रात इत्यादि। त्रैङ् पालने। क्तः। नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्यामिति (८।२।५६) संज्ञाविषये नत्वं न भवत्येव। देवैस्त्रातो देवत्रातः। देवशब्दोऽत्र संज्ञोपलक्षणार्थः। केवलस्यापि त्रातशब्दस्य संज्ञायां न नत्वं प्रतिपद्यते। एवं संज्ञाया अन्यत्रोभयं भवति त्राणस्त्रातइति। गलइति। गिरतेः पदाद्यच्। ग्रो यङि (८।२।२०)। अचि विभाषेति (८।२।२१)

---

(A) अत्र प्रसादकारस्य दोषप्रदर्शनेनाह भट्टोजिः—"श्तिपा निर्देशो धातुविशेषणार्थः। नहि तेन विना श्यन् सुलभः। यत् तु प्रसादकृतोक्तं श्तिपा निर्द्देशो यङ्लुग्निवृत्त्यर्थो दादत्तः सासीत इति तन्न। यङ्लुकि ह्रीटा भाव्यम्। दादितः सासित इति। तत्र ति कितीति वचनान्नास्ति प्रसङ्गः। अभ्युपेत्य व्रमः। दो दद् घोरिति (७।४।४६) विधीयमान मार्दशोऽनेकाल्त्वात् सर्वस्येति निर्विवादम्। तथाच साभ्यासस्य प्रवर्त्तित इत्नो यङ्लुगन्तस्यैव विधिः। तथाच दादत्तइति त्वदुदाहृतं रूपं कथमुक्तिसम्भवं लभेतेति" ॥

प्राच्यङ्गे नित्यं लत्वं गलइति। विषे तु न भवत्येव गरइति। ग्राहइति। ग्रहे र्विभाषा ग्रह इति (३।१।१४३) णप्रत्ययः। जलचरे नक्रे नित्यं णप्रत्ययो भवति ग्राह इति। आदित्यसोमादिषु पचाद्यच् भवत्येव ग्रहइति। इतियोगे च सद्विधिर्न भवतीति। वर्षतीति धावति हन्तीति पलायत इति। लक्षणहेत्वोः क्रियाया (३।२।१२६) इति सत्संज्ञकौ शतृशानचाविति योगे न भवतएव व्यवस्थित-विभाषया। तत्र नन्वोर्विभाषेत्यतो (३।२।१२१) विभाषाग्रहणमनुवर्त्तते। अर्जयन् वसति। अधीयानो वसति। तत्रामतीतियोगे नित्यावेव तौ भवतः। ननु चेतिशब्देनैव हेत्वर्थस्य द्योतितत्वाद् वर्षतीति हन्तीत्येवमादौ सद्विधिर्न भविष्यति। यत्र त्वितिशब्दो न प्रयुज्यते तत्र भवत्येवार्ज्जयन् वसतीत्यादौ। तदत्र विभाषाधिकार मन्तरेणापि विभाषा लभ्यत एव। अतो विभाषाग्रहणं नानुवर्त्त्यमेव। तस्माद-नुदाहरणमेतद् व्यवस्थितविभाषायाः। इदं तह्युदाहरणम्। करिष्यामीति-व्रजतीति। अत्र लृट् शेषे चेति (३।३।१३) चकारात् क्रियाया मुपपदे क्रियार्थायां लृट्। तस्य लृटः सद्विधि र्न भविष्यतीति। व्यवस्थितविभाषया। अप्रथमासमानाधि-करणेनेतियोगादन्यत्र नित्यं भवति। करिष्यन्तं पश्येति। प्रथमासमानाधिकरणे तु विकल्पो ब्राह्मणः करिष्यन् ब्राह्मणः करिष्यतीति। मिथ इत्यादि। मिथ इति सहभावेन। देवत्रातगलग्राहादय स्त्राणगरग्रहादिभिः सहैकस्मिन् विषये विकल्पेन नान्वाख्यायन्तइत्यर्थः। गवाक्ष इति। सर्वत्र विभाषा गोरित्यनुवर्त्तमाने (६।१।१२२) ऽवङ् स्फोटायनस्येति (६।१।१२३) वातायने नित्यमवङ् भवति। प्राच्यङ्गे तु गोऽक्षमिति न भवति। अन्यत्रोभयम्। गवाक्षं गोऽक्षमिति। संशित-व्रत इति। व्रते नित्यमित्त्वम्। अन्यत्र विकल्पेन निशितं निशातं शस्त्रम्। तीक्ष्ण मित्यर्थः। तदेतत् सर्वं व्यवस्थितविभाषया लभ्यते। क्वचिद्विधिरेव। क्वचित् प्रतिषेध एव। क्वचिदुभयमपीत्येवं विधा विविधार्थे स्थिता विभाषा व्यवस्थित-विभाषा। एतच्च विविधमवस्थानमाकृतौ पदार्थे वेदितव्यम्। तत्र हि सर्व्वं लक्ष्य-राशिमेकीकृत्याभिसंक्षिप्य तदुभयमुपदिश्यते। विधिः प्रतिषेधश्च जातौ पदार्थे उभयमपि भवतीत्येतावतोऽर्थस्य प्रतिपादने शास्त्रस्य व्यापारः। यस्तु क्वचिदर्थे विधिरेव क्वचित् प्रतिषेधएव क्वचिदुभयमित्यसङ्करेण व्यवस्थानमेतच्चाविच्छिन्ना-चार्य्यपारम्पर्य्योपदेशाल्लभ्यते।

## ४२। दधातेर्हिः।

घुमास्थागेति सूत्रेणेत्त्वे (६।४।६६) प्राप्ते दधातेर्हिरादेशो विधीयते।

श्तिपा निर्द्देशो यङ्लुग्निवृत्त्यर्थः। तेन यङ्लुगन्तस्य हिरादेशो न भवति। दाधीतो दाधीतवान्। दाधीत्वेति। (B)

## ४३। जहातेश्च क्त्वि।

पूर्व्ववदीत्त्वे प्राप्ते क्त्वाप्रत्यये हिरादेशो विधीयते। यद्यपि हि गतावित्यस्यापि हित्वेति सिध्यति तथापि जहातेरिकारनिवृत्त्यर्थं वचनम्। अथ किमर्थं जहातेरिति श्तिपा निर्द्देशः? न हएवोचेरतेत्याह जहातेरित्यादि। एतेन ओहाङ् गतावित्यस्य निवृत्तये निर्द्देशः क्रियतइति दर्शयति। यदि हि ह्व इति निर्द्देशः स्यात् तदा तस्य साधारणत्वाज्जिहातेरपि स्यात्। जहातेरिति श्तिपा निर्द्देशे तु न भवति। अनेन जहातिरेव निर्द्दिश्यते। न जिहातिः। नहि तस्यैवं विधो निर्द्देश उपपद्यते। भृञामिदित्यभ्यासस्येत्त्वविधानात् (७।४।७६)। एवं विधेऽपि श्तिपा निर्द्देशो यङ्लुगन्तस्य न भवति। जाहात्वेति। इत्वमप्यत्र न भवति। तद्विधावपि श्तिपा निर्द्देशात्। अत्र चेटि कृत आतो लोप इटि चेत्याकारलोपः (६।४।६४)।

## ४४। विभाषा छन्दसि।

## ४५। सुधित वसुधित-नेमधित-धिष्व-धिषीय च।

चकारेण छन्दसीत्यनुकृष्यते। इड़ागमो वेति। यदेड़ागम स्तदाऽतो लोप इटि (६।४।६४) चेत्याकारलोपः। सुधितमिति। कुगतिप्रादय इति (२।१।१८) समासः। वसुधितमिति। विशेषणसमासः। पूर्व्ववदाकारलोपः। नेमधितमिति। सामीति (२।१।२७) द्वितीयासमासः। सामीति तत्रार्थग्रहणमित्युक्तम्। नेमशब्दश्चायं सामिशब्दपर्य्यायः। धिष्वेति। थासः से (३।४।८०)। सवाभ्यां वामाविति वकारः (३।४।९१)। द्विर्वचनाभाव इति। श्लाविति (६।१।१०) द्विर्वचनं प्राप्नोति। अतस्तदभावो निपात्यते। धत्स्वेति। श्नाभ्यस्तयोरात इत्यकारलोपः (६।४।११२)। धकारस्य खरि चेति

---

(B) अत्रापि भट्टोजिराह—"अत्रापि प्रसादकृता श्तिपा निर्द्देशस्य यङ्लुग् निवृत्त्यर्थत्वाद दाधीत इति घुमास्थेतीत्त्वमुदाहृतम्। तत्पूर्व्ववदेव हेयमिति।" वस्तुतस्तु श्तिपा निर्द्देशो धिंटो निवृत्त्यर्थः। तीत्यनुवृत्ते यंङ्लुकि तु दाधित इति भवति। प्रसादकारस्तु न्यासकारमेवानुवदतीति स्पष्टम् प्रतीयते॥

( ८।४।५५ ) चर्त्वं तकारः। दधस्तथोश्चेत्यभ्यासस्य ( ८।२।३८ ) भष्भावेन धकारः। धिषीयेति। आशिषि लिङ्। इटोऽदित्यत्वम् ( ३।४।१०६ )।

## ४६। दो दद् घोः।

छन्दसीति निवृत्तम्। पूर्वसूत्रे चकारेणानुकृष्टत्वात्। दत्तो दत्तवानिति। क्तक्तवतू। दत्तिरिति। क्तिन्। धीतो धीतवानिति। पूर्ववदीत्वम्। अथ दधातेर्हिरिति ( ७।४।४२ हिरादेशः कस्मान्न भवतीत्यत आह धेट एतद्रूपमित्यादि। धेट् पान इत्यस्य रूपम्। न दधातेः। तेन हिरादेशो न भवतीति भावः। दातमिति। दाप् लवणइत्येतस्यैतद्रूपम्। तस्य घुसंज्ञा नास्ति। अदाबिति (१।१।२०) प्रतिषेधात्। दो दद् घोरिति जश्त्वेनायं निर्देशः। तत्र न ज्ञायते किं तकारान्तोऽयमादेश आहोस्विद् दकारान्त उत धकारान्तोऽथ थकारान्तइति वेति कस्यचिद् भ्रान्तिः स्यात। अतस्तां निराकर्तुमाह अयमादेश इत्यादि। कथं ज्ञायत इत्याह एवं ह्युक्तमित्यादि। यद्ययमादेश स्तकारान्तः स्यात् सुदत्तेत्यत्रेकः काश इत्यनुवर्त्तमाने ( ६।३।१२३ ) दस्तीति ( ६।३।१२४ ) दीर्घत्वं स्यात्। अथ दकारान्त स्तदा रदाभ्या ( ८।२।४२ ) मित्यादिना निष्ठानत्वं स्यात्। अथ धकारान्त स्तदा झष स्तथोर्धोऽध इति ( ८।२।४० ) झषन्तादधत्व मापद्येत निष्ठातकारस्य। थान्तेऽदोषइति। नञोऽत्र प्रश्लेषः। थान्ते दोषो नास्तीत्यर्थः। तस्मादित्यादि। यस्मात् त्रिषु पक्षेषु पूर्वकेषु दोष स्तस्मात् थान्तोऽयमादेशः। उदाहरणे दत्तो दत्तवानिति खरि चेति ( ८।४।५५ ) चर्त्वं थस्य तः। यदि त्वित्यादि। द्वौ पक्षौ भाष्ये दस्तीत्यत्र ( ६।३।१२४ ) दर्शितौ। दा इत्येतस्मिं स्तकारादौ तकारान्ते वेति। तत्र यदि तकारान्ते दा इत्येतस्मिन् दीर्घत्वं भवतीत्येष पक्ष आश्रीयते तदैव दीर्घत्वप्राप्तिदोषः। यदि तु तकारादौ दा इत्येतस्मिन् दीर्घत्वं भवतीत्येष पक्ष आश्रीयते तदा तान्तेऽप्यदोषः। यत्र तकारादित्वं दा इत्येतस्य तत्र दीर्घत्वं भवति नीत्तं वीत्तमित्यादौ। नतु सुदत्तादौ। तस्मात् पाक्षिको दीर्घप्राप्तिदोषः। दान्तधान्तयोरपीत्यादि। तकारादिसन्नियोगेन हि दान्तधान्तावादेशाविमौ विहितौ नोत्मर्हेते तद्विघातनिमित्ततामुपगन्तुम्। तस्माद् दान्तधान्तयोरप्यदोषः। अवदत्तमित्यादि। आदिकर्मणि क्रियाप्रारम्भे। आदिभूत-

क्रियालक्षण इत्यर्थः। अत्राच उपसर्गात् त इति (७।४।४७) तकारादेशे प्राप्त एतेऽवदत्तादयो निपात्यन्ते। आदिकर्मणीति च सर्वेषां विशेषणम्। ननु प्रदत्तमित्यस्यैव। आदिकर्मणोऽन्यत्राच उपसर्गात् त इति (७।४।४७) तकारादेशो भवति। ननु दद्भावः। अवत्तम्। वीत्तम्। सूत्तम्। अनूत्तमिति। अनुपसर्गा इत्यादि। अथवाऽवादयो ददातिं प्रत्युपसर्गसंज्ञका एव न भवन्ति। तद्वाच्यायाः क्रियाया अन्या या क्रिया गमिर्वाच्या तद्विषयत्वात्। अवगतं दत्तमवदत्तमित्येवमन्यत्रावगन्तव्यम्। तस्माद् गमिं प्रत्युपसर्गसंज्ञका एते। न ददातिं प्रति। तथाह्युक्तं यं प्रति क्रियायुक्ताः प्रादय स्तं प्रति गत्युपसर्गसंज्ञका भवन्तीति। तस्मादुपसर्गसंज्ञाया अभावान्नैवात्र तकारः प्रसजेदिति किं निपातनेन ?

## ४७। अच उपसर्गात् तः।

ददादेशस्यायमपवादः। त इत्ययमादेशो भवतीति। अकार उच्चारणार्थः। प्रत्तमित्यादावाकारस्य तकारे कृते दकारस्य चर्त्वं तकारः। नीत्तमिति। दस्तीति (६।३।१२४) दीर्घत्वम्। अवदातमिति। दैप् शोधन इत्येतस्यैतद्रूपम्। आदेरलः प्राप्नोतीति। आदेः परस्येति (१।१।५४) वचनात्। अच इत्येतद् द्विरावर्त्तयितव्यमिति। अच इत्येतस्य द्विरावृत्तावचोऽच इति द्वे शब्दरूपे भवतः। तत्रैकं पञ्चम्यन्तम्। अपरं षष्ठ्यन्तम्। तत्रैकेनोपसर्गो विशिष्यतेऽजन्तादुपसर्गादिति। इतरेणापि स्थानी निर्दिश्यत इत्येवमा कारस्यायमादेशो भवति। द्वितकारो वेति। अथवाच उपसर्गात् त्त इति द्वितकार एव संयोगादेशो निर्दिश्यते। तेनास्यानेकालत्वात् सर्वस्यैव भवति। यदि तर्हि द्वितकारोऽयं निर्देश स्तदापो भीत्यनेनापि (७।४।४७) सर्वादेशः प्राप्नोति। अनेकाल्त्वादित्याह अपो भीत्यादि। अपो भीत्यत्र (७।४।४७) पञ्चम्यन्तमच इत्यनुवर्त्तते। तेन सत्यप्यनेकाल्त्वे तस्मादित्युत्तरस्येति (१।१।६७) पकारमात्रस्य भविष्यति। न सर्वस्येति। द्यतेरितयादि। द्यतेरित्यस्यावकाशो यत्राजन्त उपसर्गो न भवति निर्दितं दुर्दितमिति। अस्यादेशस्यावकाशोऽजन्तादुपसर्गात् परो योऽन्यो घुसंज्ञको डुदाञ् दाने। अवत्तम् परीत्तमिति। अजन्तादुपसर्गादुत्तरस्य द्यतेरुभयप्रसङ्गे सति तकारएव भवति विप्रतिषेधेन। अवत्तम् प्रत्तमिति।

## ४८। अपो भि।

अद्भिरिति। झलाञ्जशोऽन्त इति (८।२।३९) जश्त्वं तकारस्य दकारः। द्वितकारपक्षे तु पूर्वस्यापि झलाञ्जश् झशीति (८।४।५३) जश्त्वं दकारः। झरो झरि सवर्णे (८।४।६५) इति पूर्वदकारलोपः। सुव इत्यादि। सुवस् स्वतवस् मास् उषस् इत्येतेषाञ्च भकारादौ परत स्त इत्ययमादेश इष्यते छन्दसि विषये। स च व्यत्ययो बहुलमित्यनेनैव (३।१।८५) लभ्यत इति वेदितव्यम्।

## ४९। सः स्यार्धधातुके।

अत्रापि द्वितकारपक्षेऽनेकाल्त्वात् सर्व्वादेशः प्राप्नोति। तस्मादच इति पञ्चम्यन्तमनुवर्त्तनीयमिति। अथवा निर्द्दिश्यमानस्यादेशा भवन्तीति (प,१३) सकारस्यैव भविष्यति। वत्स्यतीति। वस निवासे। जिघत्सतीति। अदेः सन्! लुङ्सनो घस्लृ इति (२।४।३७) तस्य घसादेशः। वच्यतीति। वच परिभाषणे! चोः कुरिति (८।२।३०) कुत्वम्। घासो वास इति। भावे घञ्। घञपोश्चेत्यदे (२।४।३८) घसादेशः। आस्से वसस इति। आस उपवेशने। वस आच्छादने। अनुदात्तत्वादात्मनेपदम्। थासः से (३।४।८०)। अदादित्वाच्छपो लुक्। अथ सः स्यतिङीति कस्मान्नोक्तम्। नैवं शक्यम्। इहापि न स्यात्। व्यतिवत्सीष्टा इति।

## ५०। तासस्त्योर् लोपः।

कर्त्तासीति। अनद्यतने लुट् (३।३।१५)। तासिः। सिप्। कर्त्तास इति। थासः से (३।४।८०)। त्वमसीति। अस भुवि। पूर्व्ववच्छपो लुक्। व्यतिसइति। कर्त्तरि कर्मव्यतीहार इत्यात्मनेपदम् (१।३।१४) भवति। थासः से (३।४।८०)। श्नसोरल्लोपइत्यकारलोपः (६।४।१११)। अथादेशप्रत्ययोरिति (८।३।५९) षत्वं कस्मान्न भवतीत्यत आह अस्तेरकार-सकारयोरित्यादि। अकारसकारयो र्हि लुप्तयोः प्रत्ययमात्रमवशिष्यते। तदेव पदम्। अतः सात्पदाद्योरिति (८।३।१११) प्रतिषेधात् षत्वन्न भविष्य-तीति भावः।

## ५१ । रि च ।

कर्त्तारौ कर्त्तार इति । लुट् तस् । झिः । लुटः प्रथमस्य डारौरस इति ( २।४।८५ ) तसो झेश्च यथाक्रमं रौरसौ भवतः । अध्येतारौ । अध्येतार इति । इङो ङित्त्वादात्मनेपदम् । आताम्झः । तयोश्च पूर्ववद्रौरसौ । अस्ते रेफादि प्रत्ययो न सम्भवतीति नास्त्युदाहरणम् । केचित्तु व्यतिर इत्युदाहरणं दर्शयन्ति । एतच्च च्छन्दस्येवं प्रयोगो यद्यस्ति ततो युक्तम् । अथ तु नास्त्येवं सत्ययुक्तम् । इरयो रे इति ( ६।४।७४ ) रेभाव श्छन्दसि विधीयते । यथादृष्टानुविधि श्छन्दसीति । चकारः पूर्वापेक्षया समुच्चयार्थः ।

## ५२ । ह एति ।

कर्त्ताह इति । कृञो लुट् । आत्मनेपदम् । उत्तमपुरुषैकवचनम् । इट् । टेरेत्त्वम् । अत्र सकारस्यानेन हः । व्यतिह इति । अस्तेः कर्त्तरि कर्मव्यतीहार ( १ ३ १३ ) इत्यात्मनेपदम् । पूर्ववदकारलोपः । एतीति तपरकरणं सप्तम्यामयादेशपरीहारार्थम् । अयादेशे हि सति सन्देहः स्यात् कस्यायं निर्देशइति ? किमयादेशस्याथैकारस्य ।

## ५३ । यीवर्णयो र्दीधीवेव्योः ।

स्वरितत्वाल्लोपोऽनुवर्त्तते । नत्वनन्तरो हकारः । तस्यास्वरितत्वप्रतिज्ञानात् । यकारे त्विकार उच्चारणार्थः । यिश्च इवर्णश्च तौ यीवर्णौ तयोः परतो दीधीङ् दीप्तिदेवनयो र्वेवीङ् वेतिना तुल्य इत्यनयो र्लोपो भवति । स चालोऽन्त्यस्येत्यन्त्यस्य ( १।१।५२ ) । यकारादौ अवर्णे प्राप्त इवर्णादावेरनेकाच इति ( ६।४।८२ ) यणादेशे प्राप्ते लोपवचनमिदम् । आदीध्यावेव्येति । ल्यप् । आदीध्यत आवेव्यत इति । भावकर्मणोरित्यात्मनेपदम् ( १।३।१३ ) । सार्वधातुके यक् ( ३।१।६७ ) । आदीधिताऽवेवितेति । तृच् । आदीध्यनमावेव्यनमिति । ल्युट् ! दीधीवेवीटामिति ( १।१।६ ) गुणनिषेधाद् यणादेशः । अत्र यद्यपि निमित्तयोः कार्यिणोः समानत्वं तथापि यथासंख्यं न भवति । अस्वरितत्वात् । वर्णग्रहणमिवर्णे श्रूयमाणे यथा स्यात् । इह मा भूत् । आदीधयते रावेवयते णिजन्ताण्ण्वुल् । आदीध्यक आवेव्यकः । अत्र

हि नित्यत्वाण्णिलोपे कृते प्रत्ययलोपलक्षणेन (१।१।६२) प्राप्नोति। अतो वर्ण-ग्रहणान्न भवति।

## ५४। सनि मी-मा-घु-रभ-लभ-शक-पत-पदामच इस्।

सः स्यार्द्धधातुक इत्यतः (७।४।४९) सीत्यनुवर्त्तते। तच्च सनो विशेषणम्। मीति मीनातिमिनत्योरिति। मीञ् हिंसायाम्। डुमिञ् प्रक्षेपण इत्येतयोः। ननु च मी इत्येतस्मिन्नुच्चार्य्यमाणे मिनोतेर्ग्रहणं नोपपद्यते। नैवम्। अस्याप्यज्झनगमां सनीति (६।४।१६) दीर्घत्वे कृते मीत्येवं रूपं भवति। एवमपि लक्षणप्रतिपदोक्तपरिभाषया (प,११४) तस्य ग्रहणं नोपपद्यते। नैतदस्ति। अत्र हि घुसंज्ञकत्वाद् घु इत्यस्य पूर्वनिपात मकुर्व्वतैतत् सूचितं यथा पूर्वनिपात इह नापेक्ष्यते तथान्यदपि किञ्चिच्छास्त्रीयं वचनमिति। तेनेयं परिभाषा (प, ११४) नापेक्षात इति युक्तं मिनोतेरपि ग्रहणम्। मा इति गामादाग्रहणेष्वविशेष इति (प, ११५) मेङ्प्रभृतीनां पूर्वोक्तानां त्रयाणां ग्रहणम्। घु इति। घुसंज्ञकौ दा धा इत्येतौ गृह्येते। रभ राभस्ये। डुलभष् प्राप्तौ। शक्लृ शक्तौ। शल हुल पत्लृ गतौ। पद गतौ। एषामचः स्थाने सकारादौ प्रत्यये सनीस् भवति। अच इत्यस्य ग्रहणं सर्वादेशो मा भूदित्येव-मर्थम्। असति हि तस्मिन्ननेकाल्त्वात् सर्व्वादेशः स्यात्। प्रमित्सतीति। अत्र लोपोऽभ्यासस्येत्यभ्यासलोपः (७।४।५८)। सः स्यार्द्धधातुक इति सस्य तः। प्रमित्सतइति पूर्व्ववत् सन इत्यात्मनेपदम् (१।३।६२)। एवमारिप्स-तालिप्सत इत्यत्रापि। खरि चेति (८।४।५५) चर्त्वं भकारस्य पकारः। स्कोः संयोगाद्योरन्ते चेति (८।२।२९) सलोपः।

## ५५। आप्ज्ञप्यृधामीत्।

ईप्सतीति। आप्लृ व्याप्तौ। ज्ञीप्सतीति। ज्ञा अवबोधने। णिच्। अर्त्तीत्यादिना (७।३।३६) पुक्। मारणतोषणनिशामनेषु ज्ञा। मिच्चेति मित्संज्ञायां ह्रस्वः। णेरनिटीति (६।४।५१) णिलोपः। ईर्त्सतीति। ऋधु वृद्धौ। ईकारः। रपरत्वञ्च। धकारस्य खरि चेति (८।४।५५) चर्त्वं तकारः। इह च ज्ञपिनाङ्गेनाज् विशेषयितव्यः। नत्वचा ज्ञपिः। व्यभिचारा-भावात्। नहि ज्ञपिरजन्ततां व्यभिचरति। अपि तु ज्ञपिनाङ्गेन विशिष्यमाणे

सर्वस्य ज्ञपिसम्बन्धिनोऽच ईत्वेन भवितव्यम्। तथाच णिरपोत्त्वे कृते ज्ञोप्सतोति न सिध्येदित्येतच्चोद्यमाशङ्क्याह ज्ञपेद्वावचावित्यादि। तत्रेत्त्व-स्यावकाशोऽजाद्य:। णिलोपस्यावकाशः कारणा ह्रारणा। द्वितीयस्याच उभयप्रसङ्गे णिलोप एव भवति पूर्व्वविप्रतिषेधेन ज्ञोप्सतोति। इतरस्येत्य-कारस्य। अर्दिधिषतोति। लघूपधगुणः। रपरत्वम्। अजादे र्द्वितीयस्येति (६।१।२) धिइत्येतद् द्विरुच्यते। रेफस्य तु द्विर्वचनं न भवति। न न्द्रा संयोगादय इति (६।१।३) प्रतिषेधात्। अभ्यासस्य जश्त्वं जकारः। तकारो मुखसुखार्थः।

## ५६। दम्भ इच्च।

धिप्सति धोप्सतोति। दम्भु दम्भे। तस्य यदा सनीवन्तर्द्धेत्यादिने-(७।२।४९) ण् न क्रियते तदा सनि सकारादात्रिकार इकारश्च। हलन्ताच्चेति (१।२।१०) कित्त्वादनुनासिकलोपः। भकारस्य चर्त्वे पकारः।

## ५७। मुचोऽकर्म्मकस्य गुणो वा।

मोक्षतइति। मुच्लृ मोक्षणे। चोः कुरिति (८।२।३०) कुत्वम्। इण् को रिति षत्वम् (८।३।५७)। कर्म्मवत् कर्म्मणेत्यादिना (३।१।८८) कर्म्मवदति-देशादात्मनेपदम्। स्वयमेवेति वचनं कर्म्मकर्त्तृत्वप्रदर्शनार्थम्। वत्सं मोक्तु-मिच्छति। स मोक्तुमिष्यमाणो मुक्तिक्रियां प्रत्यानुकूल्यं यदा प्रतिपद्यते तदा स्वतन्त्रत्वादस्मिन् कर्म्मणि कर्त्तृत्वेन विवक्षिते मुचिरकर्म्मको भवति। अथ गुण-ग्रहणं किमर्थम्? मौदित्येवोच्येत? ननु चैवं सत्योकारश्चकारस्य स्थाने ऽलोऽन्त्यस्य प्राप्नोति। गुणग्रहणादिक एव भवति। संज्ञाविधाने नियमात्। नैतदस्ति। अचइत्यनुवर्त्तते। तेनान्त्यस्य न भविष्यति। एवं तर्ह्येतज्ज्ञाप-यति। अच इति निवृत्तमिति। तेनात्र लोपोऽभ्यासस्येत्यत्रातोऽ (७।४।५८) भ्यासस्य लोपो न भवति। सति त्वजधिकारे मा भूत् तस्यानुवृत्तिरपार्थिकेत्यच एव लोपः स्यात्।

## ५८। अत्र लोपोऽभ्यासस्य।

अत्रेत्यनेन यन्निर्दिश्यते तद्दर्शयितुमाह यदेतदित्यादि। अथात्रग्रहणं

किमर्थम्? सनि मीमितरादौ प्रकरणे यथा स्याद् ददौ ददतुरित्यादौ मा भूदिति चेत्? न। यदि ह्येतत् प्रयोजनमभिमतं स्यात् सनि मीमाघु-रभलभशकपतपदामचइसभ्यासलोपश्चेत्येवमुद्दिश्येत। एवमिहैव प्रकरणे भविष्यति। नान्यत्र। ततो निष्प्रयोजनमत्रग्रहणमितरत आह सनि मीमा-घुरभलभेतरादि विषयावधारणार्थमिति। अभ्यासलोपविषयस्य नियमार्थं मितरर्थः। तामेव तस्य विषयनियमार्थतां दर्शयितु माह अत्रेत्यादि। अत्रेत्यनेनेसादिविषयो निर्दिश्यते। इसादिविषय एवाभ्यासलोपो यथा स्यादिति नियमेन यद्यावच्छिन्नं तद् दर्शयितु माह सन्वद्भावविषये न भवतीति। अमीमपदिति। मीञ् हिंसायाम्। मीनातिमिनोति-दीङां ल्यपि चेत्यात्वम (६।१।५०)। णिच्। पूर्ववत् पुक्। लुङ्। च्ले चङ्। णिलोपः। उपधाह्रस्वत्वम्। द्विर्वचनम्। अट्। सन्वल्लघुनि चङ्पर इत्यादिना (७।४।९३) सन्वद्भावे सन्यत (७।४।७९) इतीत्त्वम्। दीर्घो लघोरिति (७।४।९४) दीर्घः। अदीदपदिति। डुदाञ् दाने। पूर्ववत्पुगादिः। अत्रग्रहणादिहाभ्यासलोपो न भवति। कथं पुनः सन्यभ्यासलोप उच्यमान इह प्राप्नोति यन्निवृत्त्यर्थमत्रग्रहणं क्रियत इत्याह सन्वल्लघुनीत्यादि। यथैव हि सन्वद्भावातिदेशादित्त्वं भवत्येवमभ्यास-लोपः स्यात्। इहालोऽन्त्यपरिभाषयालोऽन्त्यस्य (१।१।५२) लोपेन भवितव्यमिति कस्यचिद् भ्रान्तिः स्यात्। अतस्तां निराकर्त्तुमाह सर्व्वस्येत्यादि। कथं पुनः सर्व्वस्य लभ्यत इत्यत आह तदर्थमेवेत्यादि। एतेनेवकारेण विषयाव-धारणार्थतां निरस्यति। यद्येवं सन्वद्भावविषयेऽपि प्राप्नोति। एवं मन्यते। सन्वद्भावविषयेऽप्यभ्यासलोपप्रसङ्गं परिहर्त्तुं शक्यते। तत्र सन्वदिति सन्नाश्रय-कार्य्यमतिदिश्यते। न चाभ्यासलोपः सनमेवापेक्षते। किं तर्हि? इस्-भावादिकमपि। तदभावादसत्यप्यत्रग्रहणेऽमीमपदित्यादिष्वभ्यासलोपो न भविष्यति। तस्मादतिरिच्यत एवात्रग्रहणमिति न कर्त्तव्यमेव। तत् क्रियते सर्वस्याभ्यासलोपो यथा स्यादिति। कथं पुनः क्रियमाणेऽप्यत्रग्रहणे सर्व्वस्य लोपो लभ्यते? ग्रन्थाधिक्यादर्थाधिक्यमित्येके। अत्रग्रहणेन महत् सूत्रं प्रणयतैतत् सूचितं महतः स्थानिनोऽयं लोपः कर्त्तव्यः। एवञ्चायं महतः स्थानिनः कृतो भवति यदि सर्वस्याभ्यासलोपः क्रियते। नान्यथेतरान्ये। नानर्थकेऽलोऽन्त्यविधिरित्यपरइति (प,१०५)। के पुन स्ते? ये विषयाव-

धारणार्थतामतग्रहणस्य वर्णयन्ति ते वेदितव्याः। अनर्थकत्वमभ्यासस्य स्थाने द्विर्वचनपक्षे वेदितव्यम्। अत्र हि यस्य स्थाने यच्छब्दान्तरं विधीयते तत् समस्तमनर्थकम्। [illegible] एव [illegible] द्विष्प्रयोगद्विर्वचन-पक्षेऽप्यनर्थकत्वमुक्तत्वादनर्थकमभ्यासः।

## ५९। ह्रस्वः।

[illegible] ढौकृ त्रौकृ इत्येताभ्यामनुदात्तेत्त्वा-[illegible] सन् पूर्ववत् सनः इ आत्मनेपदम् (१।३।६२)। अडुढौक-[illegible]। आभ्यामेव ण्यन्ताभ्यां लुङ्। पूर्ववच्चङादि कार्य्यम्। डुढौके [illegible] इति। लिट् एकवचनम् तस्येश्। अभ्यासस्यानचीत्यादि। अभ्यासस्य [illegible] विधीयते तदनाचि परे भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम् [illegible] वा चरिचलिपतिवदीनामच्याक् चाभ्यासस्येत्यागम-(६।१।१२, वा) विधानसामर्थ्याद्धलादिशेषेण न भवितव्यम्। हलादिशेषे हि सत्यादेशस्यागमस्य च कश्चिद् विशेषो नास्तीत्यादेशमेव विदध्यात्। एवञ्चाभ्यासलोपाभावात् पारिशेष्यादचोऽन्यत्रैव भविष्यति।

## ६०। हलादिः शेषः

हलादिरिति। हल् चासावादिश्चेति हलादिः। कर्मधारयोऽयम्। ननु षष्ठीसमासो हलामादिर्हलादिः। यदि षष्ठीसमासः स्यात् तदायमर्थः स्यात्। अभ्यासस्य ये हलस्तेषामादिः शिष्यत इति। तथाचानच्चतुरानच्चु-रितप्रत्वाच्च व्याप्तावितप्रस्याजादित्वाद् द्वितीयस्यैकाचोऽभावात् प्रथमस्यैकाचो द्विर्वचने कृते यद्यप्यभ्यासादिः ककारो न भवति तथापि हलादि भवति। तस्य शेषः प्रसज्येत। कर्मधारये तु न दोषः। तत्राभ्यासापेक्षं हलादित्वं विधीयते। नचात्र ककारोऽभ्यासादिः। तस्मात् कर्मधारयोऽयम्। जग्लौ मम्लाविति। ग्लै हर्षक्षये। म्लै गात्रविनामे। आदेच उपदेशेऽशितीत्यात्त्वम् (६।१।४५)। आत औ णल इत्यौत्वम् (७।१।३४)। आटतुराटुरिति। अत आदेरित्यभ्यासस्य (७।४।७०) दीर्घत्वे कृते सवर्णदीर्घत्वम्। ननु च शेषोऽवस्थानम्। तच्चादेः सिद्धमेव। तत् किमर्थं विधीयत इत्याह आदि

शेषनिमित्तोऽयमित्यादि। आदिशेषो निमित्तं यस्य लोपस्य स तथोक्तः। नह्यत्रादेः शेषो विधीयते। किं तर्हि? तन्निमित्तोऽयमनादेर्लोपो विधीयते। सिद्धएव ह्यादेरवस्थाने हलादिशेष इतीदं विधीयमानं नियमार्थं विज्ञायते। आदेरेव हलोऽवस्थानं भवति। नत्वनादेरित्येवमादिशेषनिमित्त मनादेरदर्शनं विहितं भवति। यदि तर्ह्यादिशेषनिमित्तोऽयमनादेर्लोपो विधीयत एवं सत्याटतुराट्रित्यत्र लोपो न भवति। निमित्ताभावात्। अभ्यासस्य हलेव तावदादि र्नास्ति। कुतः पुनस्तस्य शेष इत्यत आह तत्रे-त्यादि। अनादिलोपे कर्त्तव्येऽभ्यासजातिराश्रीयते। नाभ्यासव्यक्तिः। तेन यद्यपि सर्व्वास्वभ्यासव्यक्तिषु हलादि र्न वर्त्तते तथापि क्वचिदपि पपाचे-त्यादौ वर्त्तमानो हलादिरनादेः सर्वत्राटतुराट्रित्येवमादावपि निवृत्तिं करोति। अभ्यासजातेरभिन्नत्वात्। यैव हि पपाचेत्यादावभ्यासजातिः सैवाटतुराट्रित्यादावपि। अपरे त्वित्यादि। आटतुराट्रित्यादावनादे र्लोपं प्रतिपादयितुमपरे ब्रुवत इति। शेषशब्दोऽयं नावस्थानमात्रमाह। किं तर्हि? निवृत्त्या विशिष्टमवस्थानम्। यद्येवमवस्थानस्य विशेष्यत्वात् प्राधान्यम्। निवृत्तेस्तु विशेषणत्वादप्राधान्यम्। तथाच प्रधानानुयायित्वाद-प्राधान्यं गुणानाम्। यत्रैवाभ्यासस्य हलादेरवस्थानं पपाचेत्यादौ तत्रैवानादे र्हलो निवृत्त्या भवितव्यम्। ततः स एव दोषः। आटतुराट्रित्यादा-वनादेर्हलो निवृत्तिं न प्राप्नोतीत्यत आह तदवस्थानमित्यादि। यद्यपि विशेष्यभूतं तदवस्थानं शेषशब्देनाभिधीयत इत्युपात्तत: प्रधानं तथाप्यविधेयत्वादप्रधानम्। अविधेयत्वं तु तस्य सिद्धत्वात्। निवृत्तिरेव विशेषणभूतापि विधेयत्वात् प्रधानम्। तथाचोक्तं सिद्धमुपकारकं परार्थमङ्गम्। साध्योऽनुपकारकस्त्वङ्गीति कृत्वा प्रधानम्। तत्र निवृत्तौ विधेयत्वात् प्रधानभूतायामयमस्य सूत्रस्यार्थो जायते। अभ्यासस्यानादेर्हलो निवृत्ति र्भवतीति। तत असौ विधेयत्वात् प्राधान्यमापन्ना सती किमित्यादेर विधेयामप्रधानभूतामनिवृत्तिमपेक्षिष्यते? केन कारणेनापेक्षिष्यते? न केनचिदित्यर्थः। नहि प्रधानस्य गुणानुयायित्वं युक्तम्। तस्मादसत्यपि हलादेरवस्थानेऽनादेर्लोपेन भवितव्यमिति भावः।

## ६१। शर्पूर्वाः खयः।

पूर्व्वेण शरां शेषे प्राप्ते खयां शेष आरभ्यते। अनादिशेषश्चायमादिशेषं बाधते। नहि शरामवस्थाने खयां शेषशब्दो विशेषणमुपपद्यते। स हि निवृत्त्या विशिष्टमवस्थानमाहेत्युक्तम्। नचाभयोरवस्थाने निवृत्त्या विशिष्टमवस्थानम्भवति। तस्मादादिशेषस्यायमनादिशेषोऽपवादः। चुस्चोतिषतोति। स्तिर् चरणे। सन्। इट्। तिष्ठासतोति। ष्ठा गतिनिवृत्तौ। पिस्पन्दिषत इति। स्पदि किञ्चिच्चलने। अनुदात्तेत्। इदित्त्वान्नुम। पूर्ववत् सन इत्यात्मनेपदम् (१।३।६२)। सस्नाविति। ष्णा शौचे। पूर्ववस्सत्वम्। खर् पूर्वा इत्यादि। उचिच्छिषतोति। उच्छी विवासे। सन्। उच्छिष् इति स्थिते द्विर्वचनं प्राप्नोति। तुक् च। तत्र वर्णाश्रयेणान्तरङ्गत्वात् तुक्। तस्मिन् कृते द्विर्वचनं प्राप्नोति। चुत्वञ्च। तत्र परत्वात् द्विर्वचने कर्त्तव्ये चुत्वस्यासिद्धत्वाद् द्विर्वचनं प्राप्नोति छिष् शब्दस्य। तत्र च्छकारस्य शेषो न प्राप्नोति। अशर् पूर्वत्वात्। नह्ययं तकारः शर् भवति। ततश्च पूर्वेण हलादिशेषे कृते सत्यभ्यासे तकारः श्रूयेत। अथापीदमस्ति। पूर्व्वत्रासिद्धीयमद्विर्वचन इति (प,१२७) पूर्वं चुत्वं पश्चाद्विर्वचनं क्रियते तथापि हलादिशेषेण च्छकारे निवृत्ते निमित्तापाये नैमित्तिकस्याप्यपाय इति चुत्वे निवृत्त उचिच्छिषतोत्यत्र तकार एवाभ्यासे श्रूयेत। तस्मात् खर्पूर्वाः खय इति वक्तव्यम्। एवं हि सति च्छकारस्य शेषे कृते तकारो निवर्त्तत इति न भवत्यनिष्टप्रसङ्गः।

## ६२। कुहोश्चुः।

चखानेति। खनु अवदारणे। द्विर्वचनम्। तस्य चुत्वं छकारः। अभ्यासे चर्च्चेति छकारस्य (८।४।५४) चकारः। जघासेति। लिटान्यतरस्यामित्यदे (२।४।४०) घस्लादेशः। अभ्यासस्य चुत्वम्। नादवतो महाप्राणस्य स्थाने तादृशएव झकारः। तस्यापि जश्त्वञ्जकारः। जहारेति। हृञ् हरणे। जिह्रोर्षतोति। इको झलिति (१।२।८) सनः कित्त्वम्। अज्झन गमां सनोति (६।४।१६) दोर्घत्वम्। ऋत इद्धातोरितीत्त्वम् (७।१।१००)। रपरत्त्वम्। हलि चेति (८।२।७७) दोर्घत्वम्। ह्रोर्ष इत्यस्य द्विर्वचनम्।

## ६३ । न कवतेर्यङि ।

पूर्वेण प्राप्तस्य चुत्वस्यायं निषेधः । कोकूयत इति । अकृत्सार्वधातुकयोरिति (७।४।२५) दीर्घः । गुणो यङ्लुकोरित्यभ्यासस्य गुणः (७।४।८२) । अथ विकरणनिर्देशः किमर्थः ? न कोरित्येवोच्येतेत्यत आह कवतेरित्यादि । कुङ् शब्द इति तौदादिकः । कुशब्द इत्यादादिकः । कुङिति भौवादिकः शब्दार्थ एव । तत्र भौवादिकस्य ग्रहणं यथा स्यात् । इतरयो र्मा भूदित्येवमर्थो विकरणनिर्देशः । ननु चानयो र्निवृत्ते रेतत् फलं चोकूयत इत्येतदपि रूपं यथा स्यादिति । एतच्च कोरित्यपि निर्देशे निरनुबन्धकपरिभाषया (प,८२) कौतेरेव निरनुबन्धकस्य ग्रहणे सति सिद्धत्येव । तस्मात् कोरित्येवं निर्देशः कर्त्तव्यः । नैतदेवम् । सत्यपि हि शब्दार्थत्वे भिद्यत एवैषामभिधेयम् । तथाहि कवति स्तावदव्यक्तशब्दे वर्त्तते । उष्ट्रः कोकूयत इति । कुवति रप्यार्त्तस्वरे वर्त्तते चोकूयते वृषलइति । पीड़ित इत्यर्थः । कौतिस्तु शब्दमात्रे । तस्माद्विशिष्टार्थस्य परिग्रहो यथा स्यादित्येवमर्थो विकरणनिर्देशः कर्त्तव्यः । ननु लुग्विकरणपरिभाषया(प,८१) कौते र्न भविष्यतीति । तत् किमर्थं तन्निवृत्त्यर्थता विकरणस्योपपद्यते ? एवं मन्यते । कुवतिनिवृत्त्यर्थोऽवश्यं विकरणनिर्देशः कर्त्तव्यः । सोऽन्यार्थः क्रियमाणः कौते र्निवृत्त्यर्थोऽपि भवति । तेन लुग्विकरणपरिभाषात्र (प,८१) कौतेर् निवृत्त्यर्थमाश्रयितव्या न भवति । चुकुव इति । पूर्ववत् तशब्दस्येश् । अचि श्नुधात्वित्यादिनोवङ् ( ६।४।७७ ) ।

## ६४ । कृषेश्छन्दसि ।

करीकृष्यत इति । कृष विलेखने । रीगृदुपधस्येति (७।४।९०) रीगागमः ।

## ६५ । दाधर्त्ति-दर्धर्त्ति-दर्द्धर्षि-बोभूतु-तेतिक्तेऽलर्ष्यापनीफणत्-संसनिष्यदत्-करिक्रत्-कनिक्रदद्-भरिभ्रद्-दविध्वतो-दविद्युतत्-तरित्रतः-सरीसृपतं-वरीवृजन्-मर्मृज्यागनीगन्तीति च ।

चकारश्छन्दसीत्यनुकर्षणार्थः । धारयते रिति । धृञ् धारणे धृङ् अवस्थाने धृङ् अवध्वंसन इत्येतेषां ण्यन्तानां ग्रहणम् । धृङो वेति । अनन्तरोक्तयोर्ण्यन्तयो-

र्ण्यन्तयोः। श्लौ यङ्लुकि वेति। तत्र तावद् दाधर्त्तीति। यदा धारयतेः श्लौ निपात्यते तदा णिलोपोऽभ्यासस्य दीर्घत्वं निपात्यते। यदा तु यङ्लुकि तदाऽनेकाच्त्वाद् यङ् न प्राप्नोति। सोऽपि निपात्यते। उपधाह्रस्वत्वञ्च। णिलोप स्त्वार्द्धधातुकत्वादेव यङो णेरनिटीत्येवं (६।४।५१) सिद्धः। अभ्यासस्य दीर्घत्व मपि दीर्घोऽकित (७।४।८३) इत्येवं सिद्धम्। दर्धर्त्ति दधर्षीति। अत्रापि यदा धारयत्तेः श्लौ तदभ्यासस्य रुगागमो णिलोपश्च। श्लुस्तु सर्वत्र बहुलं छन्दसीत्यनेनैव (२।४।७६) वेदितव्यः। यदा तु यङ्लुकि तदा दीर्घोऽकित (७।४।८३) इत्यनेन दीर्घत्वे प्राप्ते तदभावश्च निपात्यते। यदा धृङो दाधर्त्तीति श्लौ निपात्यते तदा द्विर्वचने कृतेऽभ्यासस्य दीर्घत्वं निपात्यते। यदा तु तस्यैव धृङो यङ्लुकि तदाभ्यासस्य ऋतश्चेति (७।४।९२) प्राप्तस्य रुगादेरभावो निपात्यते। दर्धर्त्ति दर्धर्षीति। अत्रापि यदा धृङ् श्लौ तदाभ्यासस्य रुगागमो निपात्यते। यदा तु यङ्लुकि तदा पूर्ववत् प्राप्तस्य दीर्घत्वस्याभावो निपात्यते। नतु रुगागमः। तस्य हि रुग्रिकौ च लुकीत्येवं (७।४।९१) सिद्धत्वात्। परस्मैपदञ्च व्यत्ययो बहुल (३।१।८५) मिति। बोभूत्विति। अन्यत्रेति। लोट्प्रथमपुरुषस्यैकवचनापिच्च मन्यत्वं वेदितव्यम्। बोभवीतीति। अदादित्वाच्छपो लुक्। बहुलञ्छन्दसीति (२।४।७३) बहुलवचनत्वाद्भवति। यङो वेति (७।३।९४) पक्ष ईट्। तेतिक्त इति। तिजेरिति। तिज निशान इत्येतस्य। ननु च यङो ङित्वात् प्रत्ययलक्षणेनात्मनेपदं (१।१।६२) सिद्धम्। एतत् किमर्थं निपात्यत इत्याह यङो ङित्वादित्यादि। ज्ञापनार्थमात्मनेपदं सिद्धम्। ज्ञापनार्थमात्मनेपदं निपात्यत इति दर्शयति। ज्ञापनस्य तु प्रयोजन मन्यत्र यङ्लुगन्तादात्मनेपदं न भवतीति भावो बोभवीतीति। अलर्षीति। ऋ सृ गतावित्यस्य जौहोत्यादिकस्योरदित्यत्त्वे (७।४।६६) कृते रपरत्वे च हलादिशेषः प्राप्नोति। तदपवादो रेफस्य लत्वं निपात्यते। किं पुनः कारणं सिपा निर्देशोऽयमतन्त्रमित्येवं व्याख्यायत इत्याह तिप्यपीत्यादि। फणतेरिति। फण गतावित्येतस्य। स्यन्देरिति। स्यन्दू स्रवण इत्येतस्य। किमर्थं पुनः सम्पूर्वस्यातन्त्रत्वं व्याख्यायत इत्याह अन्यत्रापि हीत्यादि। करिक्रदिति। डुकृञ् करणे। यणादेशे कृतेऽनृकारान्तत्वाद्दतश्चेत्यभ्यासस्य (७।४।९२) रिगागमो न प्राप्नोति। स निपात्यते। क्रन्देरिति। कदि क्रदि क्लदि आह्वाने रोदने चेत्येतस्य। कथं पुनर्ज्ञायते लुङीत्येतन्निपातनमित्याह यस्य हीत्यादि। यस्माल्लुङन्तेन क्रन्दतेरर्थो निर्दिश्यते ततो ज्ञायते लुङ्येतन्नि-

पातनमिति। अत्र चाभ्यासस्य रीगागमो निपात्यत एव। बिभर्त्तेरिति। डुभृञ् धारणपोषणयोरित्यस्य। ध्वरतेरिति। ध्वृ हूर्च्छने। द्युतेरिति। द्युत दीप्तावित्येतस्य संप्रसारणाभाव इति। द्युतिस्वाप्योः संप्रसारणमिति (७।४।६७) संप्रसारणं प्राप्नोति। अतस्तदभावो निपात्यते। तरतेरिति। तॄ प्लवनतरणयोरित्यस्य। सृपेरिति। गम्लृ सृप्लृ गतावित्यस्य। वृजेरिति। ओवृजी वर्जन इत्येतस्य। मर्मृज्येति। मृजू शुद्धावित्येतस्य णलि रूपम्। आगनीगन्तीति। एतदपि लटि तिपि। इतिकरणस्य प्रकारार्थतां दर्शयितु माह एवंप्रकाराणामित्यादि। दाधर्त्तिप्रभृतीनामिव येषां छन्दस्यलाक्षणिकं कार्य्यं दृश्यते त एवम्प्रकारा दाधर्त्तिसदृशा इत्यर्थः। के पुनस्ते ? गलगर्त्तीत्येव-मादयः। गॄ निगरण इत्येतस्य यङ्लुकि श्तौ वा गलगर्त्तीति रूपम्। अभ्यासस्य चर्त्वाभावः। हलादिशेषापवादः। रेफस्य लत्वञ्च निपात्यते।

## ६६। उरत्।

छन्दसीति निवृत्तम्। पूर्वसूत्रे चकारानुकृष्टत्वात् (प,७८)। ववृते ववृधे शशृध इति। वृतु वर्त्तने वृधु वृद्धौ शृधु शब्दकुत्सायाम्। लिट्। तत्राद्ययोरनु-दात्तेत्त्वादात्मनेपदम्। इतरत्र स्वरितेत्त्वात्। पूर्ववदेव द्विर्वचनम्। हलादि-शेषे च कृत ऋवर्णान्ततायामुपजातायामद्भावः। रपरत्वम्। हलादिशेषः। नर्नर्त्ति नरिनर्त्ति नरीनर्त्तीत्येवमादावृदुपधस्य चेति (७।४।९०) रुग्रिकौ च लुकीति (७।४।९१) वा परत्वादपवादेषु कृतेषु रीगादिषु ऋवर्णान्ताभावादनेन न भवितव्यमिति कस्यचिद् भ्रान्तिः स्यात्। अतस्तां निराकर्त्तुमाह नर्नर्त्तीति।

## ६७। द्युतिस्वाप्योः संप्रसारणम्।

हलादिशेषे प्राप्ते तस्यापवादो द्युतिस्वाप्योः संप्रसारणमारभ्यते। विदिद्युत इति। द्युत दीप्तौ। लिट्। अनुदात्तेत्त्वादात्मनेपदम्। तत्र संप्रसारण-मनेन। संप्रसारणाच्चेति (६।१।१०८) परपूर्वत्वम्। व्यदिद्युतदिति। ण्यन्ताल्लुङ्। च्लेश्चङ्। णिलोपः। उपधाह्रस्वत्वम्। द्विर्वचनम्। अडागमः। विदिद्युतिषते विदिद्योतिषत इति। सन्। रलो व्युपधादित्यादिना (१।२।२६) विकल्पेन कित्त्वम्। यदा कित्त्वं नास्ति तदा लघूपधगुणः। पूर्ववत् सन

इत्यात्मनेपदम् (१।२।६२)। सुष्वापयिषतीति। ञिष्वप् शये। णिच्। तदन्तात् सन्। किं कारणं ण्यन्तस्योदाहरणमुपन्यस्तमित्यत आह स्वपिर्ण्यन्तो गृह्यत इति। तेन ण्यन्तस्योदाहरणमुपदर्शितमित्यभिप्रायः। ण्यन्तस्य ग्रहणं स्वापेरिति निर्देशादेव विज्ञायते। नह्यण्यन्तस्यैवंविधो निर्देश उपपद्यते। अपिचाण्यन्तस्य योऽभ्यास स्तस्यानेनैव शास्त्रेण संप्रसारणं सिद्धम्। तथाहि लिटि तावल्लिट्यभ्यासस्योभयेषामित्यनेनैव (६।१।१७) सिद्धम्। सनि तु रुदविदेत्यादिना (१।२।८) सनः कित्त्वे सति वच्यादिसूत्रेण (६।१।१५) कृतसंप्रसारण एव सुपिभूतो द्विरुच्यते। यङ्यपि स्वपिस्यमिव्येञां यङीति (६।१।१९) कृतसंप्रसारण एवासौ द्विरुच्यते। तस्मादण्यन्तस्यानेन शास्त्रेण संप्रसारणस्य सिद्धत्वात् स्वापिर्ण्यन्तो गृह्यते। यदि स्वापिर्ण्यन्तो गृह्यते तदा स्वापयतेर्ण्वुल् स्वापकः। स्वापकमिच्छतीति क्यच्। स्वापकीय इति स्थिते स्वापकीयितुमिच्छतीति सन् सिष्वापकीयिषति। अत्रापि संप्रसारणं प्राप्नोतीत्याह तस्येत्यादि। तस्य स्वापेरभ्यासस्य निमित्तं यः प्रत्ययस्तेनानन्तर्ये सत्यव्यवधान इदं संप्रसारणमिष्यते। तेन सिष्वापकीयिषतीत्यत्र न भवति। नह्यभ्यासनिमित्तं यः प्रत्ययः इह स स्वापेरनन्तरः। ण्वुला क्यचा च व्यवधानात्। कथं पुनरभ्यासनिमित्तेन प्रत्ययेनानन्तर्ये सति संप्रसारणं लभ्यते? यावता नायं विशेषः सूत्रोपात्तः। एवं मन्यते। अभ्यासेनाभ्यासनिमित्तं यः प्रत्ययः स सन्निधापितः। तस्य प्रत्ययविशेषनिमित्तत्वात् तत्र तेनाभ्यासनिमित्तेन प्रत्ययेन स्वापिरङ्गं विशिष्यते। अभ्यासनिमित्ते प्रत्यये यदङ्गं स्वापिरिति। एवञ्च विशेष्यविशेषणभावे सत्यभ्यासनिमित्ते प्रत्ययेऽनन्तरे सति स्वापेरङ्गस्य योऽभ्यास स्तस्यैव संप्रसारणेन भवितव्यम्। नतु व्यवहितेन प्रत्ययान्तरेण हि यो व्यवहितः प्रत्ययः सन्नभ्यासे निमित्तं तदपेक्षया स्वापिरङ्गं भवति। नच सिष्वापकीयिषतीत्यभ्यासनिमित्तं यः प्रत्ययः स स्वापेरङ्गस्यानन्तरः। यस्तु स्वापेरनन्तरो ण्वुल् तदपेक्षया स्वापिरङ्गं भवति। न चासावभ्यासनिमित्तं भवति। इह तर्हि कस्मान्न भवति स्वपनं स्वापो घञ्। स्वापं करोतीति णिच्। स्वापयितुमिच्छतीति सन्। सिष्वापयिषतीति? उच्यते। अकारलोपस्य स्थानिवद्भावात्। स्वापे योऽभ्यास स्तस्य संप्रसारणेन भवितव्यम्। नचाकारलोपस्य स्थानिवद्भावे सति स्वापेरभ्यासः। किं तर्हि? शब्दान्तरस्य स्वाप इत्येतस्य।

## ६८ । व्यथो लिटि ।

विव्यथ इति । व्यथ भयचलनयोः । अनुदात्तेत्वादात्मनेपदम् । अथ यकारस्य हलादिशेषेण निवृत्त्या भवितव्यम् । वकारस्य संप्रसारणेनेति कस्यचिद् भ्रान्तिः स्यात् । अतस्तां निराकर्त्तुमाह यकारस्येत्यादि । वाव्यथ्यत इति । यङ् ।

## ६९ । दीर्घ इणः किति ।

इणो ह्रस्वस्यैव अवर्णे प्राप्ते दीर्घत्वं विधायते । ईयतुरीयुरिति । ननुच परत्वादिणो यण्विति (६।४।८१) यणादेशे सत्यनच्कत्वाद् द्विर्वचनं न प्राप्नोतीत्यत आह इणो यण्वित्यादि । स्थानिवद्भावस्तु द्विर्वचनेऽचीत्यनेन (१।१।५९)। स च नियतकाले द्विर्वचनएव कर्त्तव्ये कृते च तस्मिन्नादेशरूप एवावतिष्ठते । इयायेययियेति । णलि थलि चेति यथाक्रमं वृद्धिगुणयोः कृतयोः स्थानिवद्भावाद् द्विर्वचनमिकारः । तस्याभ्यासस्यासवर्णे (६।४।७८) इतीयङ् ।

## ७० । अत आदेः ।

लिटीत्यनुवर्त्तते । किद्ग्रहणं तु निवृत्तम् । अतो गुणे (६।१।९७) पररूपत्वे प्राप्ते दीर्घत्व मारभ्यते । तपरकरणं स्वभावतएव यो ह्रस्वस्तस्य दीर्घो यथा स्यात् । तेनोपदेशे यो दीर्घ स्तस्य ह्रस्वत्वे कृतेऽपि दीर्घो न भवति । आछि आयामे । आञ्छ । आञ्छतुः । आञ्छुरिति । लिट् । तिपो णल् । तसोऽतुम् । झेरुस् । द्विर्वचने हलादिशेषे ह्रस्वः (७।४।५९) । किन्न स्याद् यद्यत्र दीर्घः स्यात् ? तस्माद् नुड् द्विहल इति (७।३।७१) नुट् स्यात् । आदेरिति वचनादिहान्तस्य दीर्घो न भवति पपाचेत्यादौ ।

## ७१ । तस्मान्नुड् द्विहलः ।

द्वौ हलौ यस्य तद्विहल् । आनङ्ग । आनङ्गतुः । आनङ्गुरिति । अगि रगि लगि गत्यर्थाः । इदित्त्वान्नुम् । आनञ्ज । आनञ्जतुः । आनञ्जुरिति । अनञ्ज् व्यक्तिम्रक्षणकान्तिगतिषु । एओजित्यत्र प्रत्याहारे वर्णेषु ये वर्णैकदेशा वर्णान्तर-

समानाकृतय स्तेषु तत् कार्य्यं न भवति । तच्छायानुकारिणो हि ते । न पुनस्त एव । पृथक्प्रयत्ननिर्वर्त्त्यं हि वर्णमिच्छन्त्याचार्य्या इत्युक्ता नुड् विधिला-देशविनामिष्वृकारे प्रतिविधातव्यमित्युक्तम् (C)। तत्रावसरप्राप्तया ऋकारे नुड्विधौ प्रतिविधानमाह ऋकारैकदेशो रेफः। हल् ग्रहणेन गृह्यत इति । आनृधतुरानृ-धुरिति । ऋधु वृद्धौ । कथं पुनर्वर्णात्मकानां हलां ग्रहणेनावर्णात्मक ऋकारैकदेशो रेफो गृह्यते ? द्विहल् ग्रहणसामर्थ्यादिति भावः। अत तस्मान्नुड़ित्येव वक्तव्यम् । नचैवं सत्याटतुराट् रित्यादौ नुट् प्रसङ्गो भवति । अश्नोतेरित्यस्य नियमार्थत्वात् । अद्विहलो यदि भवति नुट् तदाश्नोतेरेव । नान्यस्येत्यश्नातिनिवृत्त्यर्थं तदेतन् नाशङ्कनीयम् । यद्येतावत् प्रयोजनं स्यान् नाश्न इत्येवं ब्रूयात् । तस्मान्नियम एवास्य प्रयोजनम् । तदेवमन्तरेणापि द्विहल् ग्रहणं सिद्धे यतो द्विहल् ग्रहणं करोति तस्यैतत् प्रयोजनं द्विहल्-समानाकृतेरपि यथा स्यात् । यस्याप्येको हल् मुख्योऽवयवो द्वितीयस्त्वमुख्यस्त-च्छायानुकारित्वादुपचारेण हल् व्यपदेशार्हस्तस्यापि यथा स्यादित्येवमर्थम् । एतच्च कथं लभ्यते ? यद्यत्र द्विहल इत्येवं श्रुति स्तच्छायानुकारिण्यपि ऋकारावयवे रेफे वर्त्तते । नान्यथा । तस्माद् द्विहल् ग्रहणसामर्थ्यादत्र हल् ग्रहणेन ऋकारैकदेशो रेफो गृह्यते । अन्यथा द्विहल् ग्रहणमनर्थकं स्यात् ।

## ७२ । अश्नोतेश्च ।

अद्विहलार्थोऽयमारम्भः । व्यानश इति । अशू व्याप्तौ । अनुदात्तेत्वादात्म-नेपदम् । त । एश् । अश्नोतेरिति विकरणनिर्देशोऽश भोजन इत्येतस्य क्रैयादिकस्य निवृत्तये । चकारो नुडागमानुकर्षणार्थः ।

## ७३ । भवतेरः ।

बभूवेति । भुवो वुग् लुङ् लिटोरिति ( ६।४।८८ ) वुक् । अनुबभूवे इति । कर्मण्यात्मनेपदम् । श् तिपा निर्देशो यङ्लुग्निवृत्त्यर्थः । बोभावेति ।

---

(C) ऐ औ जिति प्रत्याहारव्याख्याने काशिकायाम् ।

## ७४ । ससूवेति निगमे ।

सूतेरिति । षूङ् प्राणिगर्भविमोचन इत्येतस्य । सुषुवइति । ङित्त्वा-दात्मनेपदम् । उवङ् । इतिकरणमेवंप्रकाराणामन्येषामुपसंग्रहार्थम् । तेन जाग्रमोऽदर्शमित्यादि सिद्धं भवति । जाग्रमइति । जागर्त्तेरण् निपात्यते । अदर्शमिति । लङि दृशेः पश्यादेशाभावः । जागृमोऽपश्यामिति भाषायाम् । दाधर्त्त्यादिषु ससूवग्रहणं न कृतम् । वैचित्र्यार्थम् ।

## ७५ । निजां त्रयाणां गुणः श्लौ ।

बहुवचननिर्देशादाद्यर्थो गम्यत इत्यत आह एषामित्यादि । णिजिर् शौचपोषणयोः । विजिर् पृथग् भावे । विषॢ व्याप्ताविल्येते निजादयो जौहो-त्यादिकाः । त्रिग्रहणमुत्तरार्थमिति । भृञामिदितीत्त्वम् (७।४।७६) । त्रयाणामेव यथा स्यादधिकानां मा भूदित्येवमर्थं त्रिग्रहणम् । एतदर्थमपि कस्मान्न भवतीत्यत आह एषामित्यादि । यद्यत्र त्रिग्रहणं क्रियते निजादीनामन्ते वृत्-करणं किमर्थम् । एतद् गणकारः प्रष्टव्यः । न सूत्रकारः । अन्यो हि गणकारोऽ-न्यश्च सूत्रकार इत्युक्तम् प्राक् । गणकारेणापि वैचित्र्यार्थं वृत्करणं कृतमिति वेदितव्यम् । विचित्रा हि गणस्य कृतिर्गणकारेण । अथ गुणग्रहणं किमर्थम् ? एकार एव नोच्येत ? अशक्यमेवेदं वक्तुम् । एवं ह्युच्यमाने ह्रस्वमपि कश्चिद् विजानीयात् । हलादिशेषापवादोऽयं निजादीनामेकार इति । गुणग्रहणे हि संज्ञाविधाने नियमइतीक एव भवति । हलस्तु हलादिशेषेण निवृत्ति र्भवति ।

## ७६ । भृञामित् ।

डुभृञ् धारणपोषणयोः । माङ् माने । ओहाङ् गतावित्येते भृञादयो जौहोत्यादिका एव । मिमीते । जिहीत इति । ईहल्यघोरितीत्त्वम् ( ६।४।११३ ) ।

## ७७ । अर्त्तिपिपर्त्त्योश्च ।

इयर्त्ति । पिपर्त्तीति । ऋ सृ गतौ । पॄ पालनपूरणयोः । जुहोत्यादि-त्वाच्छपः श्लुः । गुणः । द्विर्वचनम् । उरदित्यत्त्वम् ( ७।४।६६ ) । अनेनेत्त्वम् ।

रपरत्वञ्च । अर्त्तेरभ्यासस्यासवर्णे (६।४।७८) इतीयङ् । अथार्त्तिग्रहणं किमर्थम्? यावता निजादिभ्योऽयं परः पठ्यते । ये च निजादिभ्यः परे त सर्व एव च्छान्दसाः । तथाहि तान् पठित्वाच्छन्दसीत्युक्तम् । छान्दसत्वाच्चार्त्तेर्बहुलं छन्दसीत्येवं (७।४।७८) सिद्धम् । एवं तर्ह्येतज् ज्ञापयति भाषायामप्यर्त्तेः प्रयोगो भवतीति ।

## ७८ । बहुलञ्छन्दसि ।

विवष्टीति । वश कान्तौ । बहुलञ्छन्दसीति (२।४।७६) शपः श्लुः । व्रश्चादिसूत्रेण (८।२।३६) षत्वम् । विवक्तीति । वच परिभाषणे । सिषक्तीति । सच समवाये । सच सेचन इति वा । जिगर्त्ति जिघर्त्तीति । गॄ घॄ सेचने । सर्वत्र पूर्ववच्छपः श्लुः । जजनं दधनमिति । जन जनने । धन धान्ये । लङ् । मिपोऽम् । जुहोत्यादित्वाच्छपः श्लुः । बहुलञ्छन्दस्यमाङ्योगेऽपीत्यड् (६।४।७५) निषेधः ।

## ७९ । सन्यतः ।

पिपक्षतीत्यादि । पचियज्यो रूपे । पिपासतीति । पातिः पिबते वा । लुलूषतीति । लूञ् छेदने । इको झलिति (१।२।९) कित्त्वाद् गुणाभावः । सनि ग्रहगुहोश्चेतीट्प्रतिषेधः (७।२।१२) । तपरकरणं किमर्थम्? पापच्यतेः सन् पापचिषत इत्यत्र मा भूत् । किं पुनः कारणमत्र ह्रस्वो न भवति । दीर्घविधानसामर्थ्यात् । यदि सनि योऽभ्यास इत्येवं विज्ञायते ततो मुखसुखार्थम् ।

## ८० । ओः पुयण्ज्यपरे ।

पुयण्जीति । पुयण्जमेकवद्भावं कृत्वा सप्तम्या निर्देशः । अपर इति । अः परो यस्मात् पुयण्जस्तदपरमवर्णपरमित्यर्थः । पिपविषतइति । पूङ् पवने । सन् । स्मिपूङ्रञ्ज्वशां सनीतीट् (७।२।७४) । गुणावादेशौ । स्थानिवद्भावात् पू इत्येतस्य द्विर्वचनम् । स्थानिवद्भावस्तु द्विर्वचनेऽचीत्यनेन (१।१।५९) । पिपावयिषतीति । पूञो ण्यन्तात् सन् । अत्रापि स्थानिवद्भावात् पू इत्येतद्द्विरुच्यते । बिभावयिषतीति । भू सत्तायाम् । ण्यन्तात्

सन्। यियावयिषतीति। यौतेर्ण्यन्तात् सन्। सनीवन्तेत्यादिनेट् (७।२।४९)। रिरावयिषति लिलावयिषतीति। रौतिलुनातिभ्यां ण्यन्ताभ्यां सन्। जिजावयिषतीति। जुरिति सौत्रो धातुः। जुचंक्रम्येत्यादौ (३।२।१५०) पाठात्। तस्मान् ण्यन्तात् सन्। कथं पुनः पिपावयिषतीत्यादावुकारान्तताऽभ्यासस्य? यावता णौ परतोऽन्तरङ्गत्वाद् वृद्ध्यावादेशयोः कृतयोर्वकारान्तस्याद्विर्वचनेन भवितव्यम्। स्थानिवद्भावादुकारान्तस्य द्विर्वचनं भविष्यतीति चेत्? न। नहि णौ कृतस्य स्थानिवद्भावो भवति। णेरद्विर्वचननिमित्तत्वादित्यत आह एतदेवेत्यादि। नहि णिच मन्तरेण पुयण्जोऽ वर्णपराः सर्वे सम्भवन्ति। तत्र हि यदि णौ कृतस्य स्थानिवद्भावो न स्यात तदा येषां णिचमन्तरेणावर्णपरता न सम्भवति तेषामुवर्णान्तोऽभ्यासो न स्यात्। उच्यते चेदम् ओः पुयण्ज्यपर इति वचनम्। तस्मादेतज् ज्ञापक मद्विर्वचननिमित्तेऽपि णौ स्थानिवद्भवतीति। तेन तुतावयिषति बिभावयिषतीत्यादि सिद्धम्भवति। केषाञ्च पुनर् णिचमन्तरेणावर्णपरता न सम्भवति? यकारपकाराभ्यामन्येषां सर्वेषामेव। पापचिषतइति। अतो लोप (६।४।४८) इत्यकारलोपः। यस्य हल इति (६।४।४९) यकारस्य। तुतावयिषतीति। तु इति सौत्रो धातुः। तुरुस्तुशम्यम इत्यादौ (७।३।९५) सूत्रे पाठात्। जुहावयिषतीति। हु दाने। ण्यन्तात् तस्मात् सन्। बुभूषतीति। पूर्ववद् इड्गुणयोरभावः।

## ८१। स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा।

स्रु स्रु गतौ। श्रु श्रवणे। द्रु द्रु गतौ। प्रुङ् प्लुङ् च्युङ् गतौ। सिस्रावयिषतीत्यादि। एभ्यो ण्यन्तेभ्यः सर्व्वत्र सन्। ननु च सकारादिना वर्णेनात्र यणो व्यवधानम्। अत्रावर्णपरे यणि परत इत्त्वमुच्यमानं व्यवधाने कथं भवतीत्याह वचनसामर्थ्यादिति। सर्व्वत्रैव हि सकारादिनैकवर्णेन व्यवधानम्। उच्यते चेदं वचनम्। तस्मादत्र वचनसामर्थ्यादेकेन वर्णेन व्यवधान माश्रीयते। अन्यथा हि वचनमिदमनर्थकं स्यात्। पूर्वसूत्रेणेत्यादिनाऽ प्राप्तविभाषेऽयमिति दर्शयति। शुश्रूषतीति। पूर्ववदिड्गुणयोरभावः। शृतिपा निर्देशो धातुनिर्देशार्थः। न यङ्लुग्निवृत्त्यर्थः। अत्र गुणे कृत उकारान्तताभावादित्त्वं न भवतीति। सोस्रविषति।

## ८२। गुणो यङ्लुकोः।

अभ्यासस्य गुणोऽयं विधीयते। तेन यद्यत्र लुक्शब्दोऽयं सामान्य स्तथापि यङ्लुकएव संप्रत्ययो भवति। न ह्यन्यत्र लुक्यभ्यासः सम्भवतीति मत्वाह यङि यङ्लुकि चेत्यादि। चोक्रुशीति। क्रुश आह्वाने यङ्। तस्य यङोऽचि चेति (२।४।७४) लुक्। यङो (७।३।९४) वेतीट्। न लुमताङ्गस्येति (१।१।६३) प्रत्ययलक्षणनिषेधाद् यङो लुकि कृते गुणो न प्राप्नोतीति लुग्ग्रहणम्। पुगन्तलघूपधस्येति (७।३।८६) प्राप्तोऽपि गुणो नाभ्यस्तस्याचि पिति सार्वधातुक (७।३।८७) इति निषिध्यते।

## ८३। दीर्घोऽकितः।

यंयम्यतइति। यम उपरमे। नुगतोऽनुनासिकान्तस्येति (७।४।८५) नुक्। ननु चेत्यादिनाऽकित इत्येतत् प्रत्याचष्टे। यंयम्यत इत्यत्र मा भूदित्येवमर्थमकित इत्युच्यते। अत्र ह्यपवादत्वान्नुकि कृतेऽनजन्तत्वादेव दीर्घो न भविष्यतीति नार्थोऽकित इत्यनेन। एवं तर्ह्येत्यादिनाऽभ्यासविकारेष्वपवादो नोत्सर्गान् विधीन् बाधन्त इत्येतां परिभाषां ज्ञापयितुमकित इत्येतदुच्यत इति दर्शयति। डोढौक्यत इति। ढौकृ गतावित्यस्य यङि कृते हलादिशेषे च ह्रस्वइति (७।४।५९) ह्रस्वत्वम्। पूर्वसूत्रेण गुणः। तत्रासत्यस्मिञ् ज्ञापके पिपासतीतेत्येवमादौ सावकाशं ह्रस्वत्वं दीर्घोऽकित इत्यनेन सम्भ्यक्षरे दीर्घत्वेन बाध्येत। दीर्घस्य दीर्घविधाने प्रयोजनाभावाद् दीर्घो न भविष्यतीति चेत्? नैतद्। अस्ति हि दीर्घस्य दीर्घविधाने प्रयोजनम्। किं तत्? ह्रस्वो मा भूदिति। एवञ्चासत्यस्मिञ् ज्ञापकेऽचोकरदित्यत्राप्यचिक्षणदित्यादौ सावकाशमित्त्वं दीर्घो लघोरिति (७।४।९४) दीर्घत्वेन बाध्येत। मीमांसतइत्यादावसत्यस्मिञ् ज्ञापके पिपक्षतीत्यादौ सावकाशं सन्यत इतीत्त्वं (७।४।७९) मानबधादिसूत्रेण (३।१।६) विहितेन दीर्घत्वेन बाध्येत। अजीगणदित्यत्राप्यसत्यस्मिञ् ज्ञापके पपाठेत्यादौ सावकाशो हलादिशेष ई च गण (७।४।९८) इतीत्त्वेन बाध्येत। अस्मिंस्तु सति सर्वमेतन्न बाध्यते। ननु चासति प्रयोजने ज्ञापकं भवति। अस्ति चास्य प्रयोजनम्। किं तत्? धातुकित्त्वमपेक्ष्य जहाते मां भूज् जाहाति जाहेतीति। नैतदस्ति। यदि ह्येतत् प्रयोजनं स्यात् तदा

अद्धाकइति प्रतिषेधं कुर्य्यात्। किञ्चाकित इतत्र्यभ्यासस्य विशेषणम् भवितुमर्हति यद्यभ्यासावस्थायां कित्त्वमुपजायते। नच जहातेः कित्त्वमभ्यासमपेक्षते। पूर्वमेव हि तदभ्यासाद् भवति। तस्माज्जहातेर् जाहाति जाहेतीति रूपेण भवितव्यम्। ततश्चाकित इति वचनं ज्ञापकमेव। कित्करणस्तु जहाते ईश्वश्नोर्हिकालयोरितत्र (३।१।१४८) सामान्यग्रहणाविघातार्थम्? अथ दीर्घग्रहणं किमर्थम्? आदितीव नोच्येत? नैवं शक्यम्। अकित इतत्रस्य ज्ञापकता नोपपद्यते। सति हि दीर्घग्रहणे नुकि कृतेऽनजन्तत्वादेव हि दीर्घस्य प्राप्तिर्नास्तीतत्रकित इति प्रतिषेधस्य ज्ञापकत्वमुपपद्यते। आकारस्तु विधीयमानोऽजन्तस्याभ्यासस्य स्यादितत्रकित इतत्रस्य ज्ञापकत्वं न स्यात्। तस्माद् दीर्घग्रहणं कर्त्तव्यम्।

## ८४। नीग् वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम्।

वन्चु चन्चु तन्चु त्वन्चु म्रुन्चु मुन्चु गत्यर्थाः। स्रन्सु ध्वन्सु अवस्रंसने। कस गतौ। शल हुल पत्लृ गतौ। स्कन्दिर् गतिशोषणयोः। वनीवच्यत इति। अनिदितामित्यादिनानुनासिकलोपः (६।४।२४)। वनीवञ्चीतीति। अत्र न भवत्यनुनासिकलोपः। यङो लुप्तत्वान्न लुमताङ्गस्येति (१।१।६३) प्रत्ययलक्षणनिषेधात्। अथ नीकि कृते कुत्वं कस्मान्न भवति। दीर्घोच्चारणसामर्थ्यात्।

## ८५। नुगतोऽनुनासिकान्तस्य।

दीर्घोऽकित इत्यनेन (७।४।८३) दीर्घत्वे प्राप्ते वचनमिदमारभ्यते। तंतन्यत इत्यादीनि तमिगमियमिरमीणां रूपाणि। यदि नुक् क्रियते यंयम्यतइत्यादौ नश्चापदान्तस्य झलीति (८।३।२४) झल्युच्यमानोऽनुस्वारो न सिध्यति। अझल्परत्वादित्यत आह नुगित्येतदित्यादि। कथं पुन र्नुगित्येतदनुस्वारोपलक्षणार्थं शक्यते द्रष्टुमित्याह स्थानिना होत्यादि। नुका हि स्थानिनाऽत्रादेशोऽनुस्वार उपलक्ष्यते। तस्मादनुस्वार एवागमोऽत्र विधीयते। न तु नुक्। यंयम्यत इत्यादौ यद्यप्यझल्परतास्ति तथाप्यनुस्वारः सिध्यति। एवमप्यनुस्वारस्य ययि परसवर्णः (८।४।५८) प्राप्नोति। इष्यते च पक्षेऽनुस्वारस्य श्रवणम्। तन्न सिध्यति। अपदान्तत्वादित्यत आह पदान्तवच्चेत्यादि। पदान्तवदनुस्वारो भवतीत्येतदर्थ-

रूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्। तदन्तविधिनैवानुनासिकान्तस्यानुस्वारो भवतीति नार्थोऽन्तग्रहणेन। तत् क्रियते पदान्तस्यानुस्वारस्य यो धर्मः स नुकोऽपि स्यादित्येवमर्थम्। तेनानुस्वारस्य पक्षे श्रवणं भविष्यतीति। तेतिम्यत इति। तिम ष्टिम आर्द्रीभावे। अथ तपरकरणं किमर्थम्? यावता नास्ति किञ्चिदन्यदस्य व्यावर्त्यमिति सर्वत्र ह्रस्वाभावादित्यत आह तपरकरणमित्यादि। वर्त्तमानस्य दीर्घस्याभावाद् भूतपूर्वस्यापि दीर्घस्य निवृत्त्यर्थं तपरकरणं भविष्यतीति। बाभाम्यत इति। भाम क्रोधे।

## ८६। जपजभदहदशभञ्जपशाञ्च।

अनुनासिकार्थोऽयमारम्भः। जप जल्प व्यक्तायां वाचि। जभि जृभी गात्रविनामे। दह भस्मीकरणे। दन्श दशने। भन्जो आमर्द्दने। पशि सौत्रो धातुः। जञ्जप्यतइत्यादिषु दंदश्यत इति पर्य्यन्तेषु लुपसदेत्यादिना (७।१।२४) यङ्। इतरत्र सामान्यलक्षणेन (७।१।२२)।

## ८७। चरफलोश्च।

चर गतौ। ञिफला विशरणे। फल निष्पत्तौ। द्वयोरपि ग्रहणम्। निष्पत्त्यर्थस्याकार उच्चारणार्थः। नानुबन्धः। प्रयोजनाभावात्। ततश्च निरनुबन्धपरिभाषया (प, ८२) निरनुबन्धकस्य निष्पत्त्यर्थस्यैवास्य ग्रहणं प्राप्नोति। न विशरणार्थस्य। नैष दोषः। चकारोऽत्र क्रियते। स च विशरणार्थस्य समुच्चयार्थो भविष्यति। चञ्चूर्य्यत इति। लुपसदेत्यादिना (७।१।२४) यङ्। उत्तरसूत्रेणाकारस्योकारे कृते हलि चेति दीर्घः (८।२।७७)। योगविभाग उत्तरार्थः।

## ८८। उत्परस्यातः।

अभ्यासस्य मा भूदिति। असति परग्रहणेऽभ्यासाधिकारादभ्यासस्यैव स्यादित्यभिप्रायः। अलोऽन्त्यस्य मा भूदिति। यद्यत इति नोच्येत ततोऽलोऽन्त्य-(१।१।५२) परिभाषयाऽभ्यासात् परस्य धातुरूपस्य योऽन्त्योऽल् तस्य स्यादिति मन्यते।

अथ तपरकरणं किमर्थम् ? यावता मात्रिकस्य स्थान आन्तरतम्याद् विधीयमानो मात्रिक एव भविष्यतीत्यत आह तपरकरण मित्यादि। असति तपरकरण उकारे कृते चञ्चूर्त्ति पम्फुलतीत्यत्र पुगन्तलघूपधस्येति ( ७।३।८६ ) गुणः स्यात्। स मा भूदित्येवमर्थं तपरकरणं क्रियते। ननु चञ्चूर्त्तीत्यत्र दीर्घत्वमिव गुणस्य बाधको भविष्यति। तत् किमेतन्निवृत्त्यर्थेन तपरकरणेनेत्यत आह दीर्घत्वमित्यादि। असिद्ध-त्वं तु पूर्वत्रासिद्धमित्यनेन ( ८।२।१ )। यदि तर्हि लक्षणान्तरेण प्राप्तो गुण-स्तपरकरणेन निवर्त्तते गुणवद् दीर्घत्वमपि न स्यात्। नैष दोषः। तपरकरणे हि दीर्घत्वमपि सिद्धमिति। तेन दीर्घस्य निवृत्तिर्न शक्यते वक्तुम्। तथाचात उत् सार्व-धातुक (६।४।११०) इति तपरकरणेन दीर्घत्वमशक्यं निवर्त्तयितुमिति मन्यमानेन न भकुर्छुरामिति ( ८।२।७९ ) करोते र्दीर्घत्वप्रतिषेध आरभ्यते। अत इति तपर-करणमिह मा भूत्। फलन्तं प्रयुङ्क्ते फालयति। फालयतेः क्विप्। तदन्ताद् आचारे पुनः सर्वप्रातिपदिकेभ्य ( ३।१।११ वा ) इति क्विप्। तदन्ताद् यङ्। पम्फाल्यते पम्फालीति। कथञ्च प्राप्नोति। एकदेशविकृतस्यानन्यत्वात् (प,३८)।

## ८९। ति च।

अयङ्लुगर्थोऽयमारम्भः। चूर्त्तिरिति। स्त्रियां क्तिन् (३।३।९४)। पूर्व्ववद्दीर्घः। प्रफुल्ता इति। निष्ठा। तदन्ताट्टाप्। जस्। वचनसामर्थ्यादिह नाभिसम्बध्यत इति। यदीह यङ्लुग्ग्रहणमभ्यासग्रहणञ्चाभिसम्बध्येत ततो वचनस्य वैयर्थ्यं स्यात्। पूर्वेणैव यङ्यङ्लुकोरभ्यासस्य सिद्धत्वादित्यभिप्रायः।

## ९०। रीगृदुपधस्य च।

वरीवृत्यतइत्यादीनि वृतिवृधिनृतीनां रूपाणि। ऋग्रत्वत इति वक्तव्यमिति। ऋदुपधादन्यस्यापिऋत्वतो रीगादयो यथा स्युरित्येवमर्थो व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्। चकारोऽत्र क्रियते। स च ऋदुपधादन्यस्यापि ऋत्वतः समुच्चयार्थः। तेन ह्वयतिप्रभृतीनामपि ऋत्वतां रीगादयो भवन्तीति। रीगृत्वत इति सूत्रं न

क्तम्। वैचित्र्यार्थम्। ऋदुपधस्येति तपरकरणमसन्देहार्थम्। उकारे परतो यणादेशे कृते सन्देहः स्यात् किमृकारोपधस्याथवा रेफोपधस्येति।

## ९१। रुग्रिकौ च लुकि।

## ९२। ऋतश्च।

लुकीत्येव। चकारेण रीगादयोऽनुकृष्यन्ते। चर्करीतीति। डुकृञ् करणे। जर्हर्तीति। हृञ् हरणे। किरतिश्चाकर्तीति। कॄ विक्षेप इत्यस्य। किरति मित्यादि। किरतिग्रहणमुपलक्षणार्थम्। तेन गॄ निगरण इत्येवमादेरपि ऋकारान्तस्य ग्रहणं वेदितव्यम्। चर्करीतान्तमिति। यङ्लुगन्तमित्यर्थः। यङ्लुकएव पूर्वाचार्य्यप्रणीतैषा संज्ञा चर्करीतमिति। पचतीति। लट्प्रथमपुरुषस्यैकवचनम्। एतदप्युलक्षणार्थमेव। वचनान्तराणामपि ह्यत्रग्रहणम्। तेन कॄ इत्येवमादिक मृकारान्तं यो लट्प्रथमपुरुषेकवचनादौ नयेत् चाकर्त्तीत्येवमादीनि रूपाणि प्रापयेत् सम्पादयेदित्यर्थः। प्राप्तिज्ञं तमहं मन्य इति। प्राप्तिं जानातीति प्राप्तिज्ञः। इह तु रुगादीनां प्रकृतत्वात् तत्प्राप्तिं यो जानाति स प्राप्तिज्ञो वेदितव्यः। मन्येऽवगच्छामि। प्रारब्धस्तेन संग्रह इति। अनेन प्राप्तिज्ञतायां हेतुमाह। सम्यग् गृह्यते ज्ञायते लक्षणमनेनेति संग्रहो व्याकरणशास्त्रम्। प्रकर्षेणारब्धः प्रारब्धः। बहुभ्यो बहुशः श्रवणात्। का पुनरसौ प्राप्ति र्यत्परिज्ञानाय प्राप्तिज्ञमवगच्छामीत्याह तत्रेयमित्यादि। इयमिह प्रकृतमङ्गमभ्यासश्चेति। ऋत इति विशेषणमुपात्तम्। तत्र यद्युभयं प्रकृतं तथाप्यृत इत्येतदङ्गस्यैव विशेषणम्। नाभ्यासस्य। कुतः? तपरकरणसामर्थ्यात्। सर्वत्रैव ह्यभ्यासस्य ह्रस्वइति (७।४।५९) ह्रस्वत्वेन भवितव्यम्। अतो दीर्घस्याभ्यासस्याभावात्। यदि ऋत इत्येतदभ्यासस्य विशेषणं स्यात् तदा तपरकरणमनर्थकं स्यात्। तस्मात् तपरकरणसामर्थ्यादङ्गस्यैव विशेषणमृतइत्येतत्। नाभ्यासस्य। एवञ्च सति किरतेरप्राप्तिः। रुगादीनां तपरकरणेन व्यावर्त्तितत्वात्। आदिशब्देन रिगादीनां परिग्रहः। तथाचाप्राप्तिः किरते रुगादीनामिति ब्रुवतैतदुक्तं भवति करोतिप्रभृतीनामेव ह्रस्वान्तानां पारिशेष्यात् प्राप्तिरिति।

## ९३। सन्वल्लघुनि चङ्परेऽनग्लोपे।

सन्यत (७।४।७९) इत्यादिना सूत्रत्रयेण यदभ्यासस्य सनि कार्य्यं भवति तल्लघुनि चङ्पर इत्यतिदिश्यते। लघुनि चङ्पर इति व्यधिकरणे सप्तम्यौ। चङ्परे णौ परतो यत् पूर्वं लघु तस्मिन् परतो योऽभ्यासस्तस्य सन्वद् भवतीति। चङ्पर इति बहुव्रीहिः। चङ् परो यस्मादिति तच्चङ्परम्। न तु चङ्चासौ परश्चेति तत्पुरुषः। तेन सामर्थ्याण्यन्तस्यैवायमतिदेशो विज्ञायते। अन्यथा हि यदि प्रकृत्यन्तस्यायमतिदेशः स्यात् तदा सन्वच्चङीत्येवं ब्रूयात्। अनग्लोप इति। चङ्पर इत्यस्यैतद् विशेषणम्। अगिति प्रत्याहारग्रहणम्। अको लोपोऽग्लोपः। स यस्य नास्ति तदनग्लोपम्। अपीपचदिति। पचेर्णिच्। लुङ्। च्लेश्चङ्। उपधाह्रस्वत्वम्। द्विर्वचनमभ्यासकार्य्यम्। हलादिशेषे च कृतेऽनेन सन्वद्भावः। सन्यत इतीत्वम् (७।४।७९)। उत्तरसूत्रेण (७।४।९४) दीर्घत्वम्। अततक्षदररक्षदिति। अत्र रेफतकारयोः संयोगपरत्वाद् गुरुसंज्ञायां सत्यां न भवति सन्वद्भावः। अजजागरदिति। अत्र जकाराकारस्य दीर्घत्वाद् गुरुत्वम्। अत्र केचिदित्यादि। तेषामजीजागरदिति भवितव्यम्। किं पुनः कारणं त एवमिच्छन्ति ? यावता लघुनि चङ्पर इत्युच्यते। व्यवहितश्चात्र लघुनि चङ्पर इत्यत आह सर्वत्रैवेत्यादि। अचीकरदित्यादावपि ककारादिना वर्णेन व्यवधानाल्लघोरानन्तर्य्यमभ्यासे नास्ति। उच्यते चेदं वचनम्। अतो वचनप्रामाण्याद् व्यवधान एव सन्वद्भावेन भवितव्यम्। ततश्च यथाचीकरदित्यादौ व्यवधानेऽपि भवति तथेहापि व्यवधाने सन्वत्कार्य्येण भवितव्यम्। अथेह चेद् व्यवधानान्न भवत्यत्रापि न स्यादिति भावः। तदसदिति। अजजागरदित्यत्र गशब्दं लघुमाश्रित्य यत् सनूद्भाव मिच्छन्ति सर्वत्रैवेत्यादिना च यत् कारणमुक्तं तदुभयमत्राशोभनम्। अयुक्तत्वात्। कथमित्याह येनेत्यादि। एकेन वर्णेन व्यवधानमस्ति सर्वत्र। वर्णसङ्घातेन व्यवधानमस्ति नास्ति च। तत्र येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यादिति यन्नियतभाव्येकेन वर्णेन व्यवधानमशक्यं परिहर्त्तुं तदेवाश्रीयते। नतु वर्णसंघातेन। अजजागरदित्यत्र वर्णसंघातेन व्यवधानम्। यदि तर्हि वर्णसंघातेन व्यवधानं नाश्रीयते व्यञ्जनसङ्घातेन व्यवधानेन सिद्ध्यतीत्यभिप्रायेणाह कथमचिक्षणदित्यादि। क्षणु हिंसायामित्येतस्यैतद्रूपम्। अत्रापि ज्ञापकेन सिध्यतीत्यत आह आचार्य्यप्रवृत्तिरित्यादि। क्षणोतिना ये सदृशाः संयोगादयस्त एवंजातीयाः। क्षणोतिप्रकारा

इत्यर्थः। तेषां यदीत्त्वं न स्यात् तदा तद्बाधनार्थमत् स्मृदृत्वरप्रथम्रदेत्यादिना (७।४।९५) ऽत्त्वं न विदध्यात्। विदधाति च। तस्मादेतदेवात्त्वविधानलक्षण माचार्य्यप्रवृत्तिर्ज्ञापयति भवत्येवंजातीयानामित्त्वमिति। अजघ्णपणचेति। उत्तमे णलि यदा णलुत्तमो वेति (७।१।९१) णित्त्वं नास्ति तदेदं प्रत्युदाहरणं भवति। अत्र लघुपरतोऽच्चरम्। नतु चङ्परम्। अचकमतेत्यादि। कमेश्चोपसंख्यानमिति (७।१।४८,वा) कमु कान्तावित्येतस्मात् प्रकृतयन्तादेव लुङ्। चङ्। अचकथ-दिति। कथ वाक्यप्रबन्धे चुरादावदन्तः। अत्रातो लोप इत्यकारलोपः (६।४।४८)। अत्र त्वगलोपस्य स्थानिवद्भावे सति व्यवधानेऽपि न स्यात्। अतः प्रत्युदाहरणा-न्तरमाह दृषदमाख्यददृषदिति। तत् करोति तदाचष्ट इति (३।१।२६,वा) णिच्। णाविष्ठवत् कार्य्यं प्रातिपदिकस्येतीष्ठवद्भावाट्टिलोपः (६।४।१५५,वा)। अत्राज्झलो लोपः। नाकएव केवलस्येति नास्त्यत्र स्थानिवद्भावः। अन्यार्थन्त्वग्लोपइति क्रियमाण मचकथदित्यत्रापि सन्वद्भावं निवर्त्तयतीत्यस्योपन्यासः। अवीवददिति। वदते र्ण्यन्ताद् वादितवन्तं प्रयोजितवानिति हेतुमति चेति (३।१।२६) णिच्। पुनर्णि-च्युत्पन्ने णेरनिटीति (६।४।५१) णिलोपे कृते सत्यप्यग्लोप्यङ्गं भवति। अतो न भवितव्यं सन्वद्भावेनेति यो मन्यते तं प्रत्याह वादितवन्तं प्रयोजितवानित्यादि। चङ्पर इत्यादिना णिलोपस्याग्लोपित्वेनानाश्रयणे कारणमाह चङ्पर इत्यनेन हि सन्वद्भावनिमित्तेन णिजातिराक्षिप्ता। तस्माद् गोबलीवर्द्द-न्यायेन णिजाति र्निमित्तत्वेनाश्रीयते। अतो णिजातेरन्यस्याको लोपः प्रतिषेध-निमित्तत्वेन परिगृह्यते। नतु तस्या एव णिजातेः। तस्माण्णिलोपस्याग्लोपि-त्वेनानाश्रयणात् तल्लोपेऽग्लोप्यङ्गं न भवति। अतो भवत्येवात्र सन्वद्भावः। सन्वदित्यतिदेशेन यथाचीकरदित्यादावभ्यासस्येत्त्वं भवति तथामीमपदित्यादाव-भ्यासलोपेन मीमादीनां भवितव्यमिति यश्चोदयेत् तं प्रत्याह मीमादीनामित्यादि। आदिशब्देन घ्रादीनां ग्रहणम्। किञ्चेत्यादिना परीहारान्तरम्। सन्वदित्यति-देशेन हि सन्नाश्रयमेव कार्य्य मतिदिश्यते। सन्नाश्रयञ्च किं कार्य्यम्? यत् सनम-पेक्षते। नापरं किञ्चित्। नचात्र लोपोऽभ्यासस्येत्यनेन (७।४।५८) विधीयमानो लोपः सनमेवापेक्षते। किं तर्हि? इस्भावादिकमपि। आदिशब्देनाज्झन्घ्राध्मामी-दितीत्त्वम् (७।४।५५) मुचोऽकर्मकस्येति (७।४।५७) गुणश्च परिगृह्यते। तेनामीमपदित्यादाविसादेशो न भवति। अभ्यासलोपोऽपि न भवतीत्यभिप्रायः।

## ९४। दीर्घो लघोः।

## ९५। अत् स्मृदृत्वरप्रथम्रदस्तृस्पशाम्।

स्मृ चिन्तायाम्। दृ भये। ञित्वरा सम्भ्रमे। प्रथ प्रख्याने। म्रद मर्द्दने। स्तृञ् आच्छादने। स्पश बाधनस्पर्शनयोः। अथाददरदित्यत्र दीर्घो लघो-(७।४।९४) रिति दीर्घत्वं कस्मान्न भवतीत्याह तपरकरणसामर्थ्यादित्यादि। अनेनैव हि लक्षणेन दीर्घो नैव प्राप्नोति यस्य निवृत्ति स्तपरकरणेन क्रियते। भाव्यमानोऽण् सवर्णान् न गृह्णातीति भाव्यमानानां सवर्णानामणग्रहणात् सर्वत्र स्थानिनो ह्रस्वत्वाच्च। तत्र यदि लक्षणान्तरेणापि प्राप्नुवतो दीर्घस्य निवर्त्तकं तपरकरणं न स्यान्निरर्थकमेव तपरकरणं स्यात्। तस्मात् तपरकरणसामर्थ्या-दति कृते दीर्घो लघो रिति (७।४।९४) दीर्घो न भवतीति भावः।

## ९६। विभाषा वेष्टिचेष्ट्योः।

वेष्ट वेष्टने। चेष्ट चेष्टायाम्। एतयोरभ्यासस्य लघुपरता नास्तीत्यप्राप्तएव सन्वद्भाव इत्यनेन विभाषाऽकारो विधीयते।

## ९७। ई च गणः।

गण संख्याने। चुरादावदन्तः। तत्राकारस्यातो लोप (६।४।४८) इति लोपे कृतेऽनग्लोप इति वचनादप्राप्तयोरेव सन्वद्भावदीर्घयोरिदमीत्वं विधीयते। चकारो विभाषेत्यनुकर्षणार्थः। (D)

---

(D) To prepare the press copy of the seventh Adhyaya of the Nyasa, the editor had the following MSS. at his disposal :—

(1) The 1st. MS. (घ) containing I. 4, II. 1. 2. 3, III. I and VII. 1. 2. It is owned by the Rajshahi Government College. Details are given in the notes in P. 332 and P. 790, vol I.

(2) The 5th. MS. (व) containing VII. 1. 2. 3. 4. and VIII. 1. 3. 4. At the end of its 7/3 is श्रीरस्तु कृष्णनाथशर्मणि and at the end of 8/4 it has.

इति बोधिसत्त्वदेशीयाचार्य्यश्रीजिनेन्द्रबुद्धिपादविरचितायां
काशिकाविवरणपञ्जिकायां सप्तमाध्यायस्य चतुर्थः पादः ॥ ७।४ ॥
समाप्तश्च सप्तमोऽध्यायः ॥७॥

---

तैलाद्रक्ष जलाद्रक्ष रक्ष मां श्लथबन्धनात् ।
मूर्खेभ्यः परहस्तेभ्य एवं वदति पुस्तिका ॥१॥

नत्वा कालीपदाब्जं निखिलभयहरं शोकसन्तापनाशं
यस्याः संमुक्तिमिच्छन् सुरभुवि वसतां सव्य ईशः समास्ते ।
यस्य क्रोधाद् विनष्ट स्त्रिभुवनविजयी तेन सोऽभूदनङ्गः
शाके न्यासं खशन्याब्धिशशिपरिमिते कृष्णनाथोऽभ्यलेखीत् ॥२॥

खशन्याब्धिशशिपरिमित शाक is 1700 *ie* 1778 A.D. ; taking अब्धि as four, it becomes 1400. But the MS. does not appear so old.

(3) The 11th. MS. (फ) with II. 1. 2, VI. 3 and VII. 1. 2. 3. 4, It has at the end लिखिता श्रीरामकान्त शर्मणा । A very good and correct MS.

(4) The 12 MS. (छ) with I. 3, II. 1. 2. 3, IV. 1, VII. 1. 2. 3. 4 and VIII. 1. 4, see note P. 484 vol I.

(5) The 18th MS. (द) with VII. 2 and VIII. 4. It is from the Asiatic Society of Bengal ( Calcutta ). The label is—"No 8029 काशिकाविवरणपञ्जिका । जिनेन्द्रबुद्धिकृता । सप्तमाध्यायस्य द्वितीयः पादः किञ्चिदूनः । अष्टमाध्यायस्य चतुर्थपादश्च व्याकरणम् ।" At the end of 8.4, it has.

प्रणम्य पार्वतीं देवीं श्रीरमापतिशर्मणा ।
पुस्तकं लिखितञ्चेदं देवानन्यान् प्रयत्नतः ॥१॥

(6) The 19th MS. (ध) with VII. 3. 4. It is also from the aforesaid Society. The label is. "No. 8124 seal AS. NS. Government Sanskrit. MS." At the end of 7.3 is श्रीशिवकृष्णदेवशर्मणः स्वार्थे । At the end of 7.4 is श्रीशिवकृष्णशर्मण इयं पुस्तिका ।

(7) The 20th Ms. (ब) with VII. 1,2.3 and VIII. 1.2.3. At the end of its 7-1 is शुभमस्तु । शकाब्दाः १६९५ *ie* 1773 A.D. At the end of 8-1 is तिङ्ङी गोत्रादीनीति । अत शेषभागस्य दर्शनाभावान्न स लिखितः । So it is incomplete. The MS. is from Bengal where the Vedic portions of the text were mostly lost.

(8) The 21st MS (ण) with 4. 1., VII. 2. 4 and VIII. 1. 3.

All the above MSS are in Bengali characters and collected from Bengal.

अथ

# काशिकाविवरणपञ्जिका।

## अष्टमोऽध्यायः।

### प्रथमः पादः।

१। सर्वस्य द्वे।

स्वरितलिङ्गासङ्गादधिकारत्वमस्यावगम्याह सर्वस्येत्यादि। वक्ष्यामइति। व्याख्यास्याम इत्यर्थः। प्राक् पदस्येति। पदस्येति (८।१।१६) वक्ष्यमाणो यो योगस्तस्मात् प्रागित्यर्थः। पदस्येति (८।१।१६) वक्ष्यमाणस्य योगस्यानुकरणमेतत्। विभक्तिस्त्वनुकार्य्यानुकरणयोर्भेदस्याविवक्षितत्वादसत्यर्थवत्त्वे प्रातिपदिकत्वाभावान्न भवति यथा गवित्ययमाहेति। सर्वस्य द्वे भवतइत्येवं तद्वेदितव्यमिति। इतिकरणोऽर्थनिर्द्देशार्थः। सर्वस्य द्वे भवत इति योऽयमर्थः प्रतीयत एतदर्थरूपं तद् वक्ष्यमाणं वेदितव्यमित्यर्थः। वक्ष्यतीति सूत्रकारः। तत्रेति। नित्यवीप्सयो (८।१।४) रित्यत्र योगे। इह द्वौ पक्षौ सम्भवतः। स्थाने द्विवचनं द्विष्प्रयोगो द्विर्वचनञ्चेति। कथं कृत्वा? सर्वस्येति शब्दानुशासनप्रस्तावात् सर्व्वस्य शब्दस्येति गम्यते। यद् द्विशब्दस्याय मा दशभ्यः संख्याः संख्येये वर्त्तन्त इति संख्येयवचनस्तच्चेह संख्येयं शब्दरूपं वा स्यादावृत्तिर्वा? द्वे इत्यपि निर्द्देशो नपुंसकलिङ्गेन वा स्यात् स्त्रीलिङ्गेन वा? तत्र यदा नपुंसकलिङ्गेन निर्द्देश स्तदा शब्दरूपे संख्येये। यदातु स्त्रीलिङ्गेन निर्द्देश स्तदा शब्दस्यावृत्तौ उच्चारणलक्षणे क्रिये। तत्र यदा शब्दरूपे विधीयेते तदा सर्वस्येति स्थानषष्ठीयं सम्पद्यते। अनियतसम्बन्धत्वात् षष्ठी स्थाने योगेति (१।१।४९) न्यायात्। अस्मिन् दर्शने स्थाने

द्विर्वचन मित्येष पक्षो भवति। यदा तु द्वे आवृत्ती विधीयेते तदा द्विष्प्रयोगो द्विर्वचनमित्येष पक्षो जायते। अस्मिन् दर्शने स्थान्यादेशभावो नास्ति। आवृत्तिर्हि क्रिया। तस्याश्चेह शब्दः साधनम्। नच क्रियायाः साधनस्य च स्थान्यादेशभाव उपपद्यते। यदि हि स्याच्छब्दस्य स्थानिनो निवृत्तिधर्मत्वान्निवृत्तिरेव स्यात्। ततश्च क्रियाया अभाव एव स्यात्। नहि शब्देन विनोच्चारणक्रियोपपद्यते। तस्याः शब्दधर्मत्वात्। तस्माद् यदा द्वे आवृत्ती विधीयेते तदा द्विष्प्रयोगो द्विर्वचन मित्येष पक्ष उपजायते। अस्मिंस्तु पक्ष आवृत्तिशब्दापेक्षया सर्वस्येति कर्तृकर्मणोः कृतीति (२।३।६५) कृद्योगलक्षणा कर्तृषष्ठी वेदितव्या। सर्वो हि शब्द आवर्त्यमान एवावृत्तिक्रियायाः कर्त्ता भवति। अत्राद्यं पक्षमाश्रित्यैतदुक्तं सर्वस्य स्थाने द्वे भवत इति। कथं पुनः स्थाने द्विर्वचनपक्ष आश्रितः ? कथं पुनर्नाश्रयितव्यः ? सदोषत्वात्। स्थाने द्विर्वचने पुनः श्वलिट् कुलिड् वाग् वागिति पूर्वत्रासिद्धम् ( ८।२।१ ) इत्यसिद्धत्वात् पूर्वं ढत्वादिभ्यो द्विर्वचने कृते ढत्वादयोऽत्र न सिद्ध्यन्ति। अपदान्तत्वात्। नैष दोषः। वक्ष्यति ह्येतत् पूर्वत्रासिद्धीय मद्विर्वचन इति (प,१२७)। अपि च नित्येऽर्थे वीप्सायाञ्च यः शब्दो वर्त्तते तस्य द्विर्वचनं विधीयते। न च ढत्वादिष्वकृतेषु नित्यादावर्थे पदस्य वृत्तिरुपपद्यते। तस्मात् पूर्वं ढत्वादिभिरेवात्र भवितव्यम्। पश्चाद् द्विर्वचनेनेत्येष क्रमः। इह तर्हि विसं विसं मुसलं मुसलमित्यत्रादेशप्रत्यययो-(८।३।५९) रिति षत्वं प्राप्नोति। अयमप्यदोषः। यस्मादादेशो यः सकारस्तस्य षत्वं विधीयते। नह्यत्रादेशः सकारः। किं तर्हि ? तदवयवः। इह तर्हि नृभिर्नृभिरित्यत्र रषाभ्यां नो णः समानपद ( ८।४।१ ) इति णत्वं प्राप्नोति। एषोऽप्यदोषः। कार्यिणो नकारस्य रेफादिना निमित्तेन यदा सर्वदा समानपदस्थत्वमेव सति णत्वेन भवितव्यमिति। किं वक्तव्यमेतत् ? न। कथं तर्ह्यनुच्यमानं लभ्यते ? समानग्रहणसामर्थ्यात्। यदि हि यत्र समानपदस्थत्वमसमानपदत्वञ्च तत्रापि स्यात् समानग्रहणमनर्थकं स्यात्। नृभिरिति शब्दस्य नकारस्य द्विर्वचन एव कृते रेफेण निमित्तेन समानपदस्थत्वम्। नाऽकृते। तस्माददुष्टएव स्थाने द्विर्वचनपक्षइति युक्त एवाश्रयितुम्। के द्वे इति ? एवं मन्यते। विशिष्टे द्वे एवेष्येते। इह च विशेषानुपादानादनियमेन ये केचन शब्दरूपे प्राप्नुतइति स्थानेऽन्तरतम इति ( १।१।५० ) परिभाषया व्यवस्था भविष्यतीत्यनेनाभिप्रायेणाह ये शब्दतश्चेत्यादि। इह केषाञ्चिच्छब्दानां

## १७। पदात्।

प्राक् कुत्सने च (८।१।६९) सुप्यगोत्रादावित्यादि। कुत एतत्? अत्र केचिदाहुः—सुपीति येयं (८।१।६९) सप्तमी तया पदादित्यस्याः पञ्चम्या निमित्तभावस्य बाधितत्वान्नोत्सहते प्रवर्त्तितुम्। अतो बाध्यते पञ्चम्या निमित्तभाव इति। एतच्चायुक्तम्। नहि सप्तमीपञ्चम्यो र्निमित्तत्वे सत्याश्रीयमाणे कश्चिद्विरोधः। तत्रैवमभिसम्बन्धः स्यात्। पदात् परं यत् तिङन्तं कुत्सनवाचिनि सुबन्ते परतस्तस्मिन्निहन्यत इति। ततश्चेहैव स्याद् देवदत्तः पचति पूतीति। इह तु न स्यात् पचति पूतीति। किञ्च चनचिदिवगोत्रादितद्धिताम्रेड़ितेष्वगतेरित्यत्रापि (८।१।५७) पदादित्यस्यानुवृत्ति र्न स्यात्। सप्तम्या पदादित्यस्याः पञ्चम्या बाधितत्वात्। ततश्च निघातार्थमेव सूत्रं स्यात्। चनादिप्रयोगे सति विज्ञायेत तस्मादिति। अतोऽधिकाराणां प्रवृत्तिनिवृत्ती भवत इति समाधेयम्। अथवा पदादित्येतत् प्रतिषेधेन सम्बद्धम्। अतः कुत्सनइत्यत्र (८।१।६९) प्रतिषेधे निवृत्ते पदादित्येतदपि निवर्त्तते।

## १८। अनुदात्तं सर्व्वमपादादौ।

यत् ते नियत मित्यादि। अत्र मृत्यवित्येतदामन्त्रितं पदं भवति रजस मित्येतस्मात् पदात् परम्। किन्तु मृत्यो अनवधृष्यामित्यस्य पादस्यादौ वर्त्तत इति न भवति निघातादेशः। अस्मिन्नमत्यामन्त्रितस्य चेत्यामन्त्रितस्य (६।१।१९८) षाष्ठिकमेवाद्युदात्तत्वं भवति। रुद्रा विश्वेत्यादि। अत्र देव इतास्मात् पदात् परं युष्माकमितेतत् पदं भवति। किन्तु युष्माकं कुलदेवतेत्यस्य पादस्यादौ वर्त्तत इति न भवति वसादेशः। अनन्तरेऽपि प्रत्युदाहरणेऽस्माकं शत्रुमर्द्दन इतास्य पादस्यादौ वर्त्ततेऽस्माकमितेतत् पदम्। तेन भगवानितास्मात् पदात् परस्यापि तस्य नसादेशो न भवति। पादग्रहणेनात्र ऋक्पादः श्लोकपादश्च गृह्यत इति। विशेषानुपादानात्। अथ सर्वग्रहणं किमर्थम्? यावताऽनुदात्तं पदमेकवर्जमिति (६।१।१५८) पदेषु स्वरित उदात्तो वैक एव भवति। तस्य चानुदात्त आदिष्टे सर्वमेवानुदात्तं पदं जायत इताह सर्वग्रहणमितादि। अनूद्यमानमितादिना सर्व्वग्रहणस्य प्रयोजनमाचष्टे। तद्द्विविधं पदमनूद्यमानं विधीयमानञ्च। तत्र यत् सिद्धमेव कार्य्यान्तरार्थं सकी-

न्नोति तदनूद्यमानम् पदम्। यत्त्वपूर्वमेव विधीयते तद्विधीयमानम्। तदुभय-मप्यनुदात्तं यथा स्यादित्येवमर्थं सर्वग्रहणम्। तेन किं सिद्धं भवतीत्याह तेनेत्यादि। युष्मदस्मदादेशा हि विधीयमानत्वादसिद्धसत्ताकाः। सिद्धस्य हि वस्तुनो धर्मान्तरं शक्यते कर्त्तुं यथा निष्पन्नरूपस्य वाससो रागः। नानि-ष्पन्नस्य। तथा तस्यैवानुपजातावस्थस्य। तत्रासति सर्वग्रहणे यदेव सिद्धसत्ताकं पदमनूद्यमान मामन्त्रितादि तस्यैवानुदात्तत्वं विधीयते। न तु युष्मदस्मदादेशा-नाम्। सर्वग्रहणे तु सति तेषामपि विधीयते। अथ क्रियमाणेऽपि सर्वग्रहणे कथं युष्मदस्मदादेशानामप्यनुदात्तत्वं शक्यं विधातुम्? नहि तेन तेषां विधानकाले यदसिद्धत्वं तदपनीतमित्यत आह वाक्यभेदेनेत्यादि। सर्वग्रहणसामर्थ्यादत्र वाक्यभेद उक्तो भवति। नह्यन्यथा सर्वग्रहणस्यानुदात्तत्वं शक्यं विज्ञातुम्। तत्रैकेन वाक्येनादेशा विधीयन्ते। द्वितीयेन च तेषामनुदात्तत्वम्। कथं तर्हि विधीयमान मित्युक्तम्? यावता विहितानामेव युष्मदस्मदादेशानां वाक्या-न्तरेणानुदात्तत्वं विधीयते? यदिह प्रकरणे विधीयमानं तद्विहितं सदुत्तर-कालमनुदात्तं यथा स्यादित्ययं तत्राभिप्रायो वेदितव्यः। यद्यसिद्धस्य धर्मान्तर-मशक्यं विधातुं तत् कथं लुङ्लङ्लृङ्क्ष्वडुदात्त (६।४।७१) इत्यत्र विधीय-मानस्याट उदात्तत्वं विधीयते? तत्रापि वचनप्रामाण्याद् वाक्यभेदः क्रतो भवेत्। तत्रैकेन वाक्येनाड् विधीयते। अपरेण तु विहितस्योदात्तत्वम्। इह त्वसति सर्व्वग्रहणे वाक्यभेदो न लभ्यत इत्यनुदात्तत्वमेव न स्यात्। अनुदात्त-वचनस्यामन्त्रितादिषु चरितार्थत्वात्। युष्मदस्मदादेशाश्चेति। चशब्दः प्रयो-जनान्तरसमुच्चये। इदञ्चान्यत् सर्वग्रहणस्य प्रयोजनं युष्मदस्मदो र्वाम्नावादय आदेशाः सर्वस्य सुबन्तस्य पदस्य यथा स्युरिति। अन्यथा ह्यसति सर्वग्रहणे युष्मदस्मदोरिति (८।१।२०) षष्ठीनिर्द्देशाद् विभक्तिं विहाय तयोः केवलयोरेव स्युः। ननु च पदस्येति (८।१।१६) वर्त्तते। विभक्त्यन्तं हि पदम्। तत्रान्तरेणापि सर्वग्रहणं सर्व्वस्य सविभक्तिकस्यैव पदस्य भविष्यतीत्यत आह यत्रापीत्यादि। स्वादौ पदं स्वादिपदम्। सप्तमीति (२।१।४०) योगविभागात् समासः। तत् पुनर्यस्य स्वादिष्वसर्वनामस्थान (१।४।१७) इति पदसंज्ञा विहिता। असति सर्वग्रहणे यत्र विभक्त्यन्तं पदं तत्रैव सविभक्तिकस्य पदस्य स्युः। यत्र विभक्तौ परतः पूर्वं पदं तत्र न स्युः। इष्यन्ते च तत्रापि सर्वस्य। तस्माद् यत्रापि स्वादिपदं चतुर्थीद्विवचनादौ तत्रापि सर्वस्य सुबन्तस्य यथा स्युरित्येवमर्थं

सर्वमित्युच्यते। ननु चामन्त्रितस्य पदात् परस्यानुदात्तत्वं वक्ष्यति। तत्र नाप्राप्त आमन्त्रिताद्युदात्तत्व इदमनुदात्तत्वमारभ्यत इति तस्यापवादः। ततश्च तेन तस्मिन् बाधिते प्रकृतिस्वरत्वमामन्त्रितस्यापद्येत। सर्वग्रहणात् तु सर्वस्वरप्राप्तिरामन्त्रितानुदात्तत्वेन बाध्यते। तस्मात् सर्वस्वरप्राप्तिबाधनार्थमपि सर्व्वग्रहणं कस्मान्न भवति? नार्हत्येवं भवितुम्। अनुदात्तशब्दो ह्ययमामन्त्रितसमानाधिकरणः सर्वस्वरप्राप्तिं बाधिष्यते। नह्याद्युदात्तत्वे प्रतिषिद्धे प्रकृतिस्वरे क्रियमाणेऽनुदात्तशब्देनामन्त्रितमुच्यते। तस्मात् पूर्वोक्तमेव सर्वग्रहणस्य प्रयोजनम्।

## १९। आमन्त्रितस्य च।

आमन्त्रिताद्युदात्तत्वे प्राप्त इदमुच्यते। इह पदाधिकारमात्रं प्रकृत्य निघातयुष्मदस्मदादेशा विधीयमाना यत्रापि नेष्यन्ते तत्रापि प्रसजन्ति। यत्रापि क्वचिदिष्यन्ते तत्रापि क्वचिन्न प्राप्नुवन्ति। अत एतद्दोषपरिजिहीर्षयाह समानवाक्य इत्यादि। यस्मात् पदात् परस्यामन्त्रितादे निघातादि कार्य्यं विधीयते तयोः समान एकस्मिन् वाक्य आधारभूते सति निघातादयो विधीयन्त इति वक्तव्यम्। किमर्थमित्याह इहेत्यादि। अयं दण्ड इति। अत्रास्तीत्येतदपेक्षते। अप्रयुज्यमानमपि गम्यत इति तथोक्तम्। यत्रान्यत् क्रियापदं नास्ति तत्रास्ति भवन्तीपरः प्रयुज्यत इत्यप्रयुज्यमानोऽपि गम्यत इति। तदेवमस्तीत्यनेन गम्यमानेन सहित मयं दण्डइत्येकं वाक्यम्। हरानेनेत्यपरम्। तत्र यद्येकवाक्ये निघातादयो नोच्येरंस्ततो दण्डशब्दादतिङन्तात् परस्य हरेत्यस्य तिङन्तस्य निघातः प्रसज्येत। ननु पदविधिरयम्। स च सामर्थ्ये सति भवति। नचेह तदस्ति। अतोऽसामर्थ्यान्निघातो न भविष्यतीति चेदिहापि तर्हि न स्यात्। इह देवदत्त माता ते कथयति। नद्यास्तिष्ठति कूले। शालीनां त ओदनं दास्यामीति। नह्यत्रेहेत्यनेन देवदत्तेत्यामन्त्रितस्यास्ति सामर्थ्यम्। अपिच विद्यतएवायं दण्डो हरानेनेत्यत्र सामर्थ्यम्। तथाह्यनेनेति सर्वनाम्ना यत् करणेन प्रत्यवमृश्यते तद्धरेत्येतदपेक्षते। तच्च प्रत्यासत्तेर्दण्डएवेत्यस्ति दण्डस्य हरेत्येतस्य च व्यपेक्षालक्षणं सामर्थ्यम्। ओदनं पच तव भविष्यतीति। ओदनं पचेत्येकं वाक्यम्। तव भविष्यतीत्यपरम्। ओदनं पच मम भविष्यतीति। अत्राप्योदनं पचेत्येकं वाक्यम्। मम भविष्यतीत्यपरम्। तत्र यद्येकवाक्ये युष्मदस्मदादेशा नोच्येरं-

स्तत: पचेतेरतस्मात् पदात् परयो र्युष्मदस्मदोस्तु तेमयावेकवचनस्येति ( ८।१।२२ ) तेमयावादेशौ स्याताम्। अस्ति ह्यत्रापि सामर्थ्यम्। तथाहि युष्मच्छब्दवाच्यो-ऽस्मच्छब्दवाच्यस्य योऽर्थ स्तत्साधनेन पाकेन तत्स्वामिकौदनो भविष्यतीत्येवम्भूता पाकस्य युष्मदस्मदोश्च व्यपेक्षा विद्यते। अत: समानवाक्यग्रहणे तु सति न किञ्चिदनिष्टमापद्यते। इह चेत्यादि। चशब्द: समुच्चये। इदञ्चापरमस्या-इष्टे: प्रयोजनमिति दर्शयति। इह देवदत्त माता ते कथयतीत्येकं वाक्यम्। नद्यास्तिष्ठति कूल इति द्वितीयम्। शालीनां त ओदनं दास्यामीति तृतीयम्। तत्र प्रथमे वाक्य इहेत्यस्मात् पदात् परस्य देवदत्तस्यामन्त्रितस्यानेन निघातो यथा स्याद् द्वितीये नद्या इत्यस्मात् परस्य तिष्ठतीत्यस्य तिङ्ङतिङ इति ( ८।१।२८) स एव यथा स्यात्। तृतीयेऽपि शालीनामित्यस्मात् परस्य युष्मच्छब्दस्य तेमया-वेकवचनस्येति ( ८।१।२२ ) तइत्येवमादेशो यथा स्यादित्येवमर्थं समानवाक्ये निघातादयो वेदितव्या:। अस्मच्छब्दादेशोदाहरणमिह नोपन्यस्तम्। युष्म-च्छब्दादेशोदाहरणेनैवावगम्यमानत्वात्। तत् पुन: शालीनामोदनं मे देहीत्येवं-जातीयकं तत्र द्रष्टव्यम्। किं पुन: स्याद् यदि समानवाक्ये निघातयुष्मदस्मदा-देशा नोच्येरन्नित्यत आह आमन्त्रितान्तमित्यादि। प्रथमे तावद् वाक्य इहेत्येत-दधिकरणप्रधानम्। अधिकरणञ्चाधेयापेक्षम्। तच्चाधेयं माता। नतु देवदत्त:। इह ते स्थिता माता कथयतीत्यर्थ:। तस्मादिहशब्देन नास्ति देवदत्तेत्यस्या-मन्त्रितस्य सामर्थ्यम्। द्वितीये तु नद्या इत्येतस्मात् परं तिष्ठतीत्येतत् तिङन्तम्। नच तस्या नद्या इत्यनेन सामर्थ्यम्। किं तर्हि ? कूल इत्यस्य। तृतीयेऽपि शालीना-मित्यस्मात् पदाद् युष्मच्छब्द: पर:। नतु शालीनामित्यनेन तस्य सामर्थ्यमस्ति। किं तर्हि ? ओदनस्येति। तत: सामर्थ्याभावात् तदाश्रया निघातादयो न स्यु:। तदाश्रया इति। इहेत्येतत् पदं नद्या इत्येतच्छालीनामित्येतच्चाश्रयो निमित्तं येषां ते तथोक्ता:। अथवा तत् सामर्थ्यमाश्रयो येषां ते तथोक्ता:। असत्यां ह्यस्या मिष्टौ पदादधिकारात् पदविधि निघातादि कार्य्यं भवति। स च सामर्थ्य-निबन्धन:। तच्च सामर्थ्यमिह नास्तीति कुतो निघातादे: प्रसङ्ग: ? तस्माद-सामर्थ्येऽपि यथा स्यादित्येवमर्थं समानवाक्ये निघातादि कार्य्यं वक्तव्यम्।

## २० । युष्मदस्मदो: षष्ठीचतुर्थीद्वितीयास्थयो र्वान्नावौ।

षष्ठीचतुर्थीद्वितीयास्थयोरिति। षष्ठ्यादिषु यौ तिष्ठतस्तौ तथोक्तौ। सुपि

स्थइति ( ३।२।४ ) कः। किं पुनः कारणं द्विवचनान्तयोरेवोदाहरणमुपन्यस्त-मित्याह एकवचनान्तबहुवचनान्तयोरित्यादि। अथ स्थग्रहणं किमर्थम्? न युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्वित्येवोच्येत। षष्ठ्यादिषु ह्यादेशेषु विधीयमानेष्ववश्यं युष्मदस्मदो स्तात्स्थ्यं भविष्यतीत्यत आह स्थग्रहणमित्यादि। श्रूयमाणा विभक्तिरर्थः प्रयोजनं निमित्तं यस्य तत् तथोक्तम्। एतदुक्तम्भवति। श्रूयमाणा षष्ठ्यादिका विभक्ति रादेशस्य निमित्तं कथं नाम लभ्येतेत्येवमर्थं स्थग्रहणम् इति? तेन विभक्तिर्यत्र न श्रूयते तत्र न भवतीति। अयं युष्मत्पुत्रोऽयमस्मत्पुत्र इति। असति तु स्थग्रहणे लुप्तायामपि विभक्तौ प्रत्ययलक्षणेन (१।१।६२) स्यातामेवादेशौ। अश्रूयमाणत्वं पुनरत्र विभक्तेः षष्ठीसमासे कृते सुपो धातुप्रातिपदिकयोरिति लुप्तत्वात् ( २।४।७१ )। कथं पुनःस्थग्रहणे श्रूयमाणा विभक्तिरादेशस्य निमित्तत्वेन लभ्यते? श्रूयमाणायामेव तस्यां तात्स्थ्यस्य सम्भवात्। अथवा तिष्ठतिरयमपरिहाणार्थे वर्त्तते। यथा समये तिष्ठ सुग्रीवेति। समयं न परिजहिहीत्यर्थः। तेनैवं विज्ञायते षष्ठीचतुर्थीद्वितीया मपरिजहतो युष्मदस्मदोरादेशाविति। एवञ्च विज्ञायमाने श्रूयमाणैव विभक्तिरादेशस्य निमित्तत्वेनोपात्ता भवतीति।

## २१। बहुवचनस्य वस्नसौ।

## २२। तेमयावेकवचनस्य।

किं पुनः कारणं षष्ठीचतुर्थ्यन्तयोरेवोदाहरण मुपन्यस्तम्? न द्वितीयान्तया रित्याह द्वितीयान्तस्येत्यादि।

## २३। त्वामौ द्वितीयायाः।

## २४। न चावाहाहैवयुक्ते।

एभिर्युक्त इति। नपुंसके भावे क्तः ( ३।३।११४ )। एभिर्योग इत्यर्थः। अथवा तयोरेव क्तक्तवतू खलर्था ( ३।४।७० ) इति कर्मणि क्तः। एभिर्युक्ते सम्बद्धे। कस्मिन्? युष्मच्छब्देऽस्मच्छब्दे च। यद्यपि तौ द्विवचनान्तौ प्रकृतौ तथापीह प्रत्येकमभिसम्बन्धादेकवचनं कृतम्। तव ममेति। युष्मदस्मद्भ्यां ङसोऽश् ( ७।१।२७ )। तवममौ ङसि ( ७।२।९६ )। युवयोरावयोरिति। युवावौ द्विवचने ( ७।२।९२ )। युष्माकमस्माकमिति। साम आकम् ( ७।१।३३ )।

तुभ्यं मह्यमिति। ङेप्रथमयोरमितत्रम् (७।१।२८)। तुभ्यमह्यौ ङयि (७।२।९५)। युष्मभ्यमस्मभ्यमिति। भ्यसो भ्यम् (७।१।३०)। त्वां मामिति। त्वमावेकवचन इति त्वमादेशौ (७९।२।७)। द्वितीयायाञ्चेत्यात्त्वम् (७।२।८७) युष्मानस्मानिति। शसो न (७।१।२९)। पूर्ववदात्त्वम्। युक्तग्रहणं साक्षाद्योगप्रतिपत्त्यर्थमिति। साक्षादव्यवधानेन चादिभि र्योगः। तस्य प्रतिपत्तिर्यथा स्यादितेत्रवमर्थं युक्त-ग्रहणम्। कथं पुनर्युक्तग्रहणे साक्षाद्योगप्रतिपत्ति र्भवति? एवं मन्यते। अपरिसमाप्तत्वादस्य वाक्यस्य तृतीयानिर्देश एव युक्तग्रहण मध्याहरिष्यति यथा तुल्यार्थैरतुलोपमाभ्यामितत्रत (२।३।६२)। तस्माद् युक्तग्रहणं न कर्त्तव्यमेव। तत् क्रियते साक्षाद्योगप्रतिपत्तिर्यथा स्यादिति। अन्यस्त्वाह—पदविधिरयम्। पदविधिश्च समर्थानामेव भवति। तत्र पदविधित्वादेव योगे लब्धे यद् युक्तग्रहण क्रियते तत् साक्षाद्योगप्रतिपत्तिर्यथा स्यादिति। एतच्चायुक्तम्। असामर्थ्येऽपि निघातादिकार्य्यं समानवाक्ये भवतीत्युक्तमेतत्। कदा पुनश्चादिभिः साक्षाद् युष्मदस्मदो र्योगः? यदा तदर्थगतान् समुच्चयादीनर्थांस्ते द्योतयन्ति। इहैते चादयः समुच्चयादिना द्योत्येनार्थेनार्थवन्तः। तत्र यदा युष्मदस्मदनुगतानेव समुच्चयादीन् धर्मान् द्योतयन्ति तदा चादिभिः साक्षाद् युष्मदस्मदो र्योगः। यदा तु ग्रामादिसम्बन्ध्यन्तरगतांस्तदा युक्तयोगः। नतु साक्षाद् योगः। तत्र युक्तयोगे प्रतिषेधो न भवति ग्रामश्च ते स्वं नगरञ्च मे स्वमिति। तत्र ग्रामशब्दो नगरशब्दश्च चशब्देन युक्तः। तदर्थगतस्य समुच्चयस्य तेन द्योतनाद्। युष्म-दस्मच्छब्दौ तु ग्रामनगराभ्यां युक्तौ। तयोस्ताभ्यां स्वस्वामिकत्वसम्बन्धस्यार्थ-स्येह सम्भवात्। ननुच साक्षाद्योगप्रतिपत्त्यर्थं युक्तग्रहणं युक्तयुक्ते मा भूदित्येवमर्थं कथं क्रियते। न च चादियोगे प्रतिषेध उच्यमानो युक्तयुक्ते प्राप्नोति। नहि यश्चादिभिर्युक्तयुक्तेन योगः स चादियोगो भवति। तत् किं साक्षाद्योगप्रतिपत्त्यर्थेन युक्तग्रहणेन? एवं तर्ह्येतदेव युक्तग्रहणं ज्ञापयति। इह प्रतिषेधकाण्डे युक्तयुक्तेऽपि प्रतिषेधो भवतीति। तेनोत्तरसूत्रे यद् वक्ष्यते पश्यार्थै र्युक्तयुक्तेऽपि प्रतिषेध इति तदुपपन्नं भवति।

## २५। पश्यार्थैश्चानालोचने।

पश्यार्थैरिति बहुव्रीहिः। तत्र पश्यइति यदि पाघ्राध्माधेड्दृशः श इति (३।१।१३७) कर्त्तरि शप्रत्ययान्तः स्यात् ततो द्रष्टृर्थैरित्यर्थः स्यात्। एवञ्चाना-

लोचन इति प्रतिषेधो दुर्घटः स्यात्। तस्मादालोचनशब्दोऽयं भावसाधन आलोचितिरालोचनमिति। तत्र द्रष्टर्थे युक्ते प्रतिषेध उच्यमानः कः प्रसङ्गो यदालोचनवृत्तिभि र्युक्ते स्यात्। नैव प्राप्नोति। स एषोऽनालोचन इति प्रतिषेधः कथमुपपद्यते ? यदि पश्यशब्दो भावसाधनो भवति। नान्यथा। तस्मादतएव निपातनात् कृत्यल्युटो बहुल मिति ( ३।३।११३ ) वा भावेऽत्र श-प्रत्ययः। तत्र पाघ्रेत्यादिना ( ७।३।७८ ) पश्यादेशः। द्वयोरकारयोः पररूपत्वम् ( ६।१।९७ )। पश्योऽर्थो येषां ते पश्यार्था दर्शनार्था इत्यर्थः। दर्शनशब्दोऽयं चक्षुष्पर्यायोऽस्ति यथाऽक्ष्णोऽदर्शनादित्यत्र ( ५।४।७६ )। अत चक्षुषोऽपि संप्रत्ययः कस्यचिन्मा भूदित्यतआह दर्शनं ज्ञानमिति। तच्चोत्तरत्रालोचनं चक्षुर्ज्ञानमिति चक्षुर्ज्ञानस्य पृथगुपादानात् ततोऽन्यद् विज्ञायते। ग्रामस्त्वां समीक्ष्यागतइत्यादिकं साक्षाद्युक्त उदाहरणम्। ग्रामस्तव स्वं समीक्ष्यागत इत्यादिकं युक्तयुक्तं। समीक्ष्यागत इति। मनसा निरूप्यागत इत्यर्थः। ग्रामस्त्वा पश्यतीति। चक्षुर्-ज्ञानेन त्वां पश्यतीत्यर्थः। तथाचेवोदाहृतमिति। यादृशीयमिष्टिस्तदर्थरूप-मेवोदाहृतमित्यर्थः।

## २६। सपूर्वायाः प्रथमाया विभाषा।

सहशब्दोऽत्र विद्यमानवचनः। पूर्वशब्दो व्यवस्थावाची। सह विद्यमानं पूर्वं यस्याः सा सपूर्वा। पञ्चम्यर्थं बहुव्रीहिः। वोपसर्जनस्येति ( ६।३।८२ ) सहस्य सभावः। प्रथमाया इति। प्रत्ययग्रहणपरिभाषया ( प,२४ ) तदन्तग्रहणं विज्ञायते। अत एवाह प्रथमान्तात् पदादिति। युष्मदस्मदोर्विभाषेत्यादि। आदेशः कथनम्। अन्वादेशोऽनुकथनम्। न अन्वादेशोऽनन्वादेशः। तत्रानन्वा-देशे युष्मदस्मदोर्विभाषा भवतीति वक्तव्यम्। किमर्थमित्याह इहेत्यादि। सर्वएवेत्यादि। ये सपूर्वात् प्रथमान्तात् पदात् परयोर्युष्मदस्मदोः प्राप्नुवन्त्यादेशा ये च ततोऽन्ये ते सर्वं एवानन्वादेशे विभाषा वक्तव्याः। यद्येवमनेन वचनेनैव सर्वत्र विकल्पस्य सिद्धत्वादपार्थकमिदं सूत्रमिति मन्यमान आह न तर्हीत्यादि। अन्वा-देशार्थमिति। यद्येतन्नोच्येत ततोऽनन्वादेश इत्यभिधानात् सपूर्वात् प्रथमान्ता-दन्वादेशे विकल्पो न स्यात्। तस्मात् सपूर्वात् प्रथमान्तादन्वादेशेऽपि विकल्पो यथा स्यादित्येवमर्थं क्रियमाणेऽप्युपसंख्याने सूत्रमिदं कर्त्तव्यमेव। अस्मिंस्तु क्रियमाणे तदुपसंख्यानं न कर्त्तव्यम्। कथम् ? सिंहावलोकितन्यायेन हि

विभाषाग्रहणं पूर्वत्राप्युपतिष्ठते। तत्र व्यवस्थितविभाषाग्रहणादनन्वादेशे सर्वत्र विकल्पो भविष्यति। अन्वादेशे तु नित्यं वान्नावादयः। सपूर्वायाः प्रथमाया अन्वादेशेऽपि विकल्प इति।

## २७। तिङो गोत्रादीनि कुत्सनाभीक्ष्ण्ययोः।

यथायथमुदात्तादिषु प्राप्तेष्विदमारभ्यते। पचति गोत्र मिति। यः स्वपुरुषकारेण जीविकां कल्पयितुमशक्तो गोत्रख्यापनेन तां कल्पयति स एवमुच्यते। पचतीति। व्यक्तीकरोतीत्यर्थः। पचि व्यक्तीकरणे। पचति पचति गोत्रमिति। नित्येऽर्थे द्विर्वचनम्। य स्वाभीक्ष्ण्येन गोत्रं ख्यापयति स एवमुच्यते। वच्यादेशाभावश्चेति। ब्रुवो वचिरिति ( २।४।५३ ) वच्यादेशः प्राप्नोति। तस्याभावो निपातनादेव। विचक्षण इति। अत्रापि चक्षिङः ख्याञिति ( २।४।५४ ) प्राप्तस्य ख्याञादेशस्याभावो निपातनादेव वेदितव्यः। नामित्येतद्वा निहन्यत इति। विभाषाग्रहणस्यानुवृत्तेः। न च तदनुवृत्तावतिप्रसङ्गो भवति। व्यवस्थितविभाषाविज्ञानात्। पक्ष आद्युदात्तमेव भवतीति। नब्विषयस्यानिसन्तस्येति ( फिट्. २६ ) नामशब्दस्याद्युदात्तत्वात्। कुत्सितं गोत्रमिति। गुङ् अव्यक्ते शब्दइत्यस्मादौणादिके त्रणि विहिते गोत्रमिति भवति। तस्मान्नित्स्वरेण गोत्रशब्दोऽत्राद्युदात्तः। पचति पापमिति। पापशब्दः कुत्सने वर्त्तते। तिङन्ताच्च परो भवति। न तु गोत्रादिरिति न निहन्यते। इह कुत्सनाभीक्ष्ण्यग्रहण एतदनुदात्तविशेषणं वा स्यात् तिङः पराणि गोत्रादीन्यनुदात्तानि भवन्ति कुत्सनाभीक्ष्ण्ययोरर्थयोरित्युत गोत्रादीनां पाठविशेषणं वा स्यादेतयोः रर्थयोर् गोत्रादीनि भवन्ति तानि च तिङः पराण्यनुदात्तानि भवन्तीति ? अनयोरर्थयोर् गोत्रादिव्यपदेशमासादयन्तीति योऽसौ तेषां प्रातिपदिकेषु विशिष्टानुपूर्वीकः पाठः स एव तयो रर्थयो वर्त्तमानानां भवतीति यावत्। तत्र पूर्वस्मिन् पक्षे चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगतेरित्यत्र ( ८।१।५७ ) कुत्सने च सुप्यगोत्रादावित्यत्र ( ८।१।६९ ) च कुत्सनाभीक्ष्ण्ययोरपि वर्त्तमानानां कार्य्यं प्राप्नोति। विशेषानुपादानात्। इतरस्मिंस्तु पक्षे न भवत्येष दोषः। यानि हि न कुत्सनाभीक्ष्ण्ययो वर्त्तन्ते तेषां गोत्रादिव्यपदेश एव नास्ति। कुत्सनाभीक्ष्ण्यवृत्तीनामेव गणे पठितत्वात्। एतत् सर्वं चेतसि कृत्वाह कुत्सनाभीक्ष्ण्यग्रहणञ्चेत्यादि। पठ्यत इति पाठः। सन्निवेशविशेषः। तद्विशेषणमेव तद् वेदितव्यम्।

तेन किमिष्टं भवतीत्याह तेनेत्यादि। कथं पुनरेकेन यत्नेन गोत्रादीनां पाठश्च शक्यो विशेषयितु मनुदात्तत्वञ्चैषां विधातुम्? एवं मन्यते। योगविभागः कर्त्तव्यः। तिङः पराणि गोत्रादीन्यनुदात्तानि भवन्ति। ततः कुत्सनाभीक्ष्ण्ययोः। गोत्रादीनीत्येव। नचात्र द्वितीये योगे विधेयमन्यदस्तीति गोत्रादीन्येव कुत्सनाभीक्ष्ण्यग्रहणेन विशिष्यन्ते। अथवोभयथा सूत्रमाचार्य्येण शिष्याः प्रतिपादिताः। उभयञ्चैतत प्रमाणम्। अत उभयं ग्रहीष्यतीति। वृत्तिग्रन्थस्तु तिङन्तात पदादुत्तराणि गोत्रादीनीत्यादिको वाक्यभेदेनैव नेयः। गोत्रादीनि कुतमने चाभीक्ष्ण्ये च भवन्ति। तान्येव तिङन्तात् पदादुत्तराण्यनुदात्तानि भवन्तीति। ननु च गोत्रादयः शब्दा गोत्रादावेवानर्थान्तरे वर्त्तन्ते। ते कथं कुत्सनाभीक्ष्ण्ययोर्वर्त्तेरन्? तमेव स्वार्थं यदा तु कुत्सनाभीक्ष्ण्यविशिष्ट माचक्षते तदा तयो र्वर्त्तन्त इत्यदोषः।

## २८। तिङ्ङतिङः।

नीलमुत्पलमिति। उत्पलमित्येतत् नब्विषयस्यानिमन्तस्ये-(फिट् २।२६) त्याद्युदात्तं भवति। भवति पचतीति। पचतिक्रिया भवतीत्ययमस्यार्थः। पचति शब्दे शप्तिपावनुदात्तौ। अकारो धातुस्वरेणोदात्तः। उदात्तादनुदात्तस्य स्वरित (८।४।६६) इति शबकारः स्वरितः। ननुच समासवाक्ये निघातादय उच्यन्ते। इदञ्च वाक्यमेव न भवति। तत् किमेतन्निवृत्त्यर्थेनातिङ्ग्रहणेन? किं पुनः कारण मेतद् वाक्यं न भवति? आख्यातं साव्ययकारकविशेषणं वाक्य मित्यत्र वाक्यलक्षण एकत्वस्य विवक्षितत्वात्। इह चाख्यातस्य द्वित्वात्। नैष दोषः। अत्राप्याख्यातं यदकारकं तद्विवक्षितम्। तच्चास्मिन्नेकमेव भवतिशब्दः। पचतीत्येतत्तु कारकम्। तथाहि भाष्य उक्तम् पचत्यादयः क्रिया भवन्ति क्रियायाः कर्त्र्यो भवन्तीति। यदपीदमुक्तमेकतिङ् पदसमूहो वाक्यमित्यत्रापि प्रधानं यत् तिङ् तदभिक्षत्यैकतिङित्युक्तम्। अत्र चेकमेव तिङन्तं प्रधानम्। यद्येतत् किं तर्ह्यत्र तिङन्तं तत्? भवतीति। पचतीत्येतत् पुनः साधनत्वादप्रधानम्।

## २९। न लुट्।

श्वः कर्त्तेति। करोतेर्लुट्। तासिः। लुटः प्रथमस्य डारौरस (२।४।८५)

इत्येकवचनस्य डादेशः। डिति टिलोपः। तासेः परस्येत्यादि। आगमः प्रत्ययस्वरेणाद्युदात्तः। तस्य यत्र टिलोपो नास्ति कर्त्तारौ कर्त्तार इत्यादौ तत्र तास्यनुदात्तेन्ङिदित्यादिना ( ६।१।१८६ ) लसार्वधातुकस्यानुदात्तत्वे कृते तासेरेवोदात्तत्वं भवति। यत्र तु टिलोप स्तत्रानुदात्तस्य च यत्रोदात्तलोप इति (६।१।१६१) लसार्वधातुकमेवोदात्तं भवति।

## ३०। निपातै र्यद्यदिहन्तकुविन्नेच्चेच्चणकच्चिद्यत्रयुक्तम् (F)।

यद्यपि निपातैरित्येतदपेक्षमाणानां यदादीनां सामर्थ्यं तथापि गमकत्वाद् युक्त शब्देन समास एषां युक्तएव। अथवात्र न समासः। विभक्तिस्त्वव्ययत्वादेषां लुप्तेति न श्रूयते। युक्तग्रहणं त्विहापि साक्षाद्योगप्रतिपत्त्यर्थम्। तेन युक्तयुक्ते प्रतिषेधो न भवति। एतच्च प्रत्युदाहरणेऽपि स्पष्टीकरिष्यामः। अत्र यद्यत्रयोर्ग्रहण माभ्यां पूर्वस्यापि तद्युक्तस्य प्रतिषेधो यथा स्यादित्येवमर्थम्। यद्धि ततः परं तिङन्तं तस्य यद्वृत्तान्नित्यमित्येवं ( ८।१।६६ ) सिद्धः प्रतिषेधः। पूर्वस्य तु तेन न सिध्यति। तदा हि यद्वृत्तादिभिः पञ्चमी तस्मादित्युत्तरस्येति ( १।१।६७ ) परस्यैव निघातप्रतिषेधं प्रतिपादयति। नेतरस्य। यत् करोतीति। करोतिशब्द उकारप्रत्ययस्योदात्तत्वान्मध्योदात्तः। नोज्जिह्मायन्तो नरकं पतामेति। पते र्लट्। मस्। शप्। अतो दीर्घो यञीति ( ७।३।१०१ ) दीर्घः। ङिददुपदेशत्वाल्लसार्वधातुकत्वादनुदात्तत्वे ( ६।१।१८६ ) कृते धातुस्वरेणाद्युदात्तमेतत्। स चेद् भुङ्क्तइति। भुजोऽनवनइत्यात्मनेपदम् ( १।३।६६ )। रुधादित्वाच्छ्नम्। पूर्ववल्लसार्वधातुकानुदात्तत्वम्। श्नसोरल्लोपः ( ६।४।१११ )। अनुदात्तस्य च यत्रोदात्तलोप इत्युदात्तत्वे ( ६।१।१६ ) कृते भुङ्क्तइत्येतदन्तोदात्तम्। स चेदधीत इति। इङ् धातुस्वरेणोदात्तः। ङित इति लसार्वधातुक मेवानुदात्तम्(G)। आदिशब्दापेक्षया निघाते प्राप्ते न प्रतिपदोक्तपरिभाषोपतिष्ठते (प ११४)। साहचर्य्यञ्च

---

(F) "यद्यदार्थे च हेतौ च विचारे यदिचेच्चणः। हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः ॥१॥ कच्चित् प्रश्ने नेन् निषेधे प्रशंसायां कुवित् स्मृतम्। यत्राधारे निपातत्वं यदादीनां विशेषणम्" इति ॥२॥

(G) But there is an exception in the सूत्र 6. 1. 186 viz. अङ्गिङोः which does not make the लसार्वधातुक after इ and इङ् as अनुदात्त. So by प्रत्ययस्वर, ते of अधीते is उदात्त. Says हरदत्त here अधीत इति। अङ्गिङोरिति लसार्वधातुकानुदात्तत्वप्रतिषेधादन्तोदात्तः।

व्यवस्थाकारणं न भवतीति। तेन यावद्यथाभ्यामिति (८।१।३६) यथाशब्दसाहचर्य्याद् यावच्छब्दोऽपि नाव्ययमेव परिगृह्यते। किं तर्हि? परिमाणशब्दोऽपि लाक्षणिकः। यावतोऽश्वान् प्रतिगृह्णीयादित्यत्रापि निघातप्रतिषेधो भवति। यत्तदेतेभ्यः परिमाणे वतुबिति (५।२।३९) वतुबन्तोऽत्र यावच्छब्दः। यत्र क्व च ते मनो दक्षं दधस उत्तरमिति। दध धारणे। लट्। थास्। थासः से (३।४।८०)। अत्र यत्रेत्यनेनाधिकरणप्रधाने उत्तरमित्येतदाधेयं युक्तम्। तेन युक्तं तिङन्तम्। अतः साक्षाद्योगो नास्तीति प्रतिषेधो न भवति।

## ३१। नह प्रत्यारम्भे।

नहेत्ययं निपातसमुदायः प्रतिषेधे वर्त्तते। तेन युक्तं तिङन्तं प्रत्यारम्भविषये न निहन्यते। पुनरारम्भः प्रत्यारम्भः। स च यत्र विषये क्रियते तद् दर्शयितुमाह चोदितस्येत्यादि। भुङ्क्ष्वाधीष्वेत्येवं चोदितं विहितं यत् कर्त्तव्यतयोपन्यस्तं भोजनादौ यदा तत् कर्त्तुं न प्रवर्त्तते नाद्रियते ऽवधीर्य्यत इति यावत् तदा तस्यावधीरणेऽवज्ञाने सति तमवधीरयितारमुपालब्धुं या इच्छा तयोपालिप्सयेतस्यैव भोजनादेरवधीरितस्य प्रतिषेधेन सम्बन्धः प्रत्यारम्भः। प्रत्यारम्भः क्रियत इति। प्रतिषेधसम्बद्धस्य पुनरुपन्यासः क्रियत इत्यर्थः। नह भोक्ष्यसे। नहाध्येष्यस (H) इति। भुजेरिङश्च लृट्। थासः से (३।४।८०)। अदुपदेशत्वान् ङित्त्वाच्च तयोर्धात्वो लसावधातुकमनुदात्तम्। स्यः प्रत्ययस्वरेणोदात्तः। इच्छन्तीति। इषु इच्छायाम्। तुदादित्वाच्छः। इषुगमियमां छः (७।३।७७)।

## ३२। सत्यं प्रश्ने।

सत्यशब्दोऽयमुदाहरणे प्रश्ने वर्त्तते। प्रत्युदाहरणे तु ऋतशब्दस्यार्थे।

## ३३। अङ्गाप्रातिलोम्ये।

प्रातिलोम्यं प्रातिकूल्यमनभिमतकारित्वमित्यर्थः। ततो ऽन्यदप्रातिलोम्य मनुकूलत्व मभिमतकारित्वमिति यावत्। तस्मिन् गम्यमाने ऽयं प्रतिषेधः। अङ्ग कुरु। अङ्ग पचेति। अङ्गशब्दोऽयं निपात इहानुज्ञायां वर्त्तमानोऽ

---

(H) But not so in the case of अधीष्यसे as stated in note (g); for the exception अधिङो: in 6. 1. 186. is not applicable. स्यप्रत्ययस्वर is to prevail here.

प्रातिलोम्यं गमयति। करोतिर् लोटि सिप्। से ह्यपिच्च (३।४।८७)। धातोर् गुणे कृतेऽत उत् सार्वधातुके इत्युत्त्वम् (६।४।११०)। उतश्च प्रत्ययादिति (६।४।१०६) हेर्लुक्। अत्रोकारः प्रत्ययस्वरेणोदात्तः। पचेति। अतो हेरिति (६।४।१०५) लुक्। धातुस्वरेणाद्युदात्तमेतत्। प्रत्युदाहरणेऽङ्गशब्दोऽमर्षे वर्त्तते। आनुलोम्य इति वक्तव्येऽप्रातिलोम्य इति वचनं वैचित्र्यार्थम्।

## ३४। हि च।

चकारोऽप्रातिलोम्य इत्यस्यानुकर्षणार्थः। स हि कुरु स हि पचेति। हिशब्दोऽत्रावधारणे। हेतौ वा वर्त्तते। प्रत्युदाहरणे त्वमर्षे।

## ३५। छन्दस्यनेकमपि साकाङ्क्षम्।

हि चेत्येव। सहाकाङ्क्षया वर्त्तत इति साकाङ्क्षम्। एतच्च तिङन्तस्यार्थद्वारकं विशेषणं वेदितव्यम्। एकमपीति। हीत्यनेन युक्तं तिङन्तं साकाङ्क्षं नानुदात्तं भवतीति प्रकृतेन सम्बन्धः। अत्र च योऽप्ययमेकस्यानुदात्तत्वप्रतिषेधः सोऽपि यत्रानेकतिङन्तं हियुक्तं तत्रैव वेदितव्यः। अन्यथा यदि यत्रैकं हियुक्तं तत्रायमेकस्य हियुक्तस्य निघातप्रतिषेधोऽपिशब्दप्रापितः स्यात् सूत्रमिदमनर्थकं स्यात्। समानेनैकस्यानेकस्य वा पूर्वेणैव सिद्धत्वात्। यथा यत्रानेकस्य हियुक्तस्य उपनिपात स्तत्रैकस्यानुदात्तत्वप्रतिषेधः। तथा न भवति वैयर्थ्यप्रसङ्गः। पूर्वेण नित्ये प्राप्ते विकल्पार्थत्वात्। कदाचिदित्यादिना तमेवानन्तरोक्तमर्थं विस्पष्टीकरोति। अनृतं हि मत्तो वदति पाप्मा एनं विपुनातीति। अत्र द्वयोरपि तिङन्तयो र्हेतुहेतुमद्भावे साकाङ्क्षता। पाप्मा मद उच्यते। यस्मादनृतं मत्तो वदति तस्मात् पाप्मा एनं विपुनाति शुद्धिमापादयति मत्तस्यानृतमदोष इति कृत्वा। द्वे अपि चैते हिशब्देन युक्ते। तदर्थगतस्य हेतुहेतुमद्भावस्य तेन द्योतितत्वात्। तत्र वदतीत्येतत् पचतीत्येतेन तुल्यस्वरम्। पुनातीत्येतत्तु विकरणस्वरेण मध्योदात्तम्। अग्निर्हीत्यादि। अत्रापि हेतुहेतुमद्भावात् साकाङ्क्षता। यस्मादग्निरग्रे पूर्वमुदजयत् तस्मादग्निमिन्द्र अनु पश्चाददुजयत्। उदजयदिति। उत्पूर्वाज्जयते र्लङि रूपम्। एकमुदजयदित्याद्युदात्तमिति। तद्भक्तस्याट उदात्तत्वात्। अपरमनुदात्तमिति। तत्र निघातप्रतिषेधस्याप्राप्तेः। अजा

ह्यग्नेरजनिष्टेत्यादि । तत्रापि तत एव हेतोः साकाङ्क्षत्वम् । तस्मादजा ह्यग्नेर्गर्भस्य जनितारमपश्यत् तस्मादग्नेर्गर्भमजनिष्ट जनितवतो । जनिः प्रादुर्भावे । लुङ् । च्लेः सिच् ( ३।१।४४ ) । इट् । षत्वम् । ष्टुत्वम् । अन्तर्भावितण्यर्थोऽत्र जनि र्वेदितव्यः । अन्यथा कर्मत्वं गर्भस्य नोपपद्यते अकर्मकत्वात् । अपश्यदिति । दृशेर्लङ् । पाघ्रादिसूत्रेण ( ७।३।७८ ) पश्यादेशः । अजनिष्टेति । आद्युदात्तम् । अपश्यदित्यनुदात्तमिति । पूर्ववत् ।

## ३६ । यावद्यथाभ्याम् ।

किमर्थं पुनरिदमुच्यते ? न यद्वृत्तान्नित्यमित्येव ( ८।१।६६ ) सिद्धमिति यश्चोदयेत् तं प्रति देवदत्तः पचति यावद् देवदत्तः पचति यथेत्येतदुदाहरणद्वयमुपन्यस्तम् । एषोऽभिप्रायः । यद्वृत्तादिति ( ८।१।६६ ) पञ्चमीनिर्देशात् तस्मादित्युत्तरस्येति ( १।१।६७ ) यत्रैव यावद्यथाभ्यां परं तिङन्तं तत्रैव प्रतिषेधः स्यात् । यत्र तु ताभ्यां पूर्वं तत्र न स्यात् । इह तु तृतीयानिर्देशात् तत्रापि भवतीति ।

## ३७ । पूजायां नानन्तरम् ।

पूजायां विषय इति । विषयग्रहणे पूजायामिति विषयसप्तमीति दर्शयति । किं तर्ह्यनुदात्तमेवेति । द्वौ प्रतिषेधौ प्रकृत मर्थं गमयत इति कृत्वा । यावत् पचति शोभनमिति । स्तुतिरत्र पूजा । सा च क्रियायाः साधनस्य वा ।

## ३८ । उपसर्गव्यपेतञ्च ।

उपसर्गव्यपेतमिति । उपसर्गव्यवहितम् । चकारेण पूजायामित्यनुकृष्यते । अनन्तर मिति चानुवर्त्तते । तत्रोपसर्गेण व्यवधानमाश्रीयत इति । सामर्थ्यात् । अनन्तरग्रहणं शब्दान्तरव्यवधाननिरासार्थं विज्ञायते ।

## ३९ । तुपश्यपश्यताहैः पूजायाम् ।

ननु पूजायां नानन्तर ( ८।१।३७ ) मिति पूजाग्रहणमनुवर्त्तत एव । तत् किमर्थं पूजायामित्युच्यत इत्याह पूजायामित्यनुवर्त्तत इत्यादि । स्यादेतत् । तदेव पूजाग्रहणमिहानुवर्त्तमानं निघातप्रतिषेधार्थं भविष्यतीत्यत आह तद्धीत्यादि ।

तद्धि पूर्वत्र पूजाग्रहणं निघातप्रतिषेधस्य प्रतिषेधेन सम्बद्धम्। तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यात्। एवञ्च तेषां निघातप्रतिषेधः। लुडादीनां तेषां तु प्रभृतिभि र्योगे निघातप्रतिषेधस्य प्रतिषेधो विज्ञायेत। तस्मान्निघातस्य प्रतिषेधो यथा स्यादित्येवमर्थं पुनः पूजाग्रहणम्। अत्राहग्रहणं किमर्थम्? न चादिषु चेत्येव (८।१।८५) सिद्धम्? न सिध्यति। चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगतेरित्यतो (८।१।५७) गतेरिति तत्रानुवृत्तेः। तथाच देवदत्तः प्रपचत्यहेत्यत्र प्रतिषेधो न स्यात्। परभूतेषु वा स प्रतिषेध इति पूर्वभूते ऽहशब्दे च न स्याद् देवदत्तोऽह पचतीति।

## ४०। अहो च।

चकारेण पूजायामित्यनुकृष्यते। अथ योगविभागः किमर्थम्? पूर्वसूत्र एवाहोग्रहणं क्रियेतेत्यत आह पृथगित्यादि। पृथग् योगे शेषे विभाषेति (८।१।४१) अहेत्यनेनेव योगे यथा स्यात् तुप्रभृतीनां मा भूदित्येवमर्थं पृथग् योगकरणम्।

## ४१। शेषे विभाषा।

करिष्यसीत्यादि। लृडन्तं स्वस्वरेण मध्योदात्तम्। ननु च पूजाग्रहणं पूर्वसूत्रे चानुकृष्टम्। तत्र चानुकृष्टस्येहाननुवृत्तेरविशेषे भविष्यति। तत् किं शेषग्रहणेनेत्यत आह पूजाया मित्यस्येत्यादि।

## ४२। पुरा च परीप्सायाम्।

चकारो विभाषेत्यनुकर्षणार्थः। परीप्सायामर्थ इति। गम्यमान इति शेषः। परीप्सा त्वरेति। संभ्रम आशुप्रवृत्तिरित्यर्थः। अधीष्व माणवकेत्यादि। त्वरित मधीष्वेत्येषोऽर्थो गम्यते। तथाह्यत्र पुरा विद्योतते विद्युत् पुरा स्तनयति स्तनयितुरित्येतदुभयमप्यध्ययनविषययो स्त्वरायाः कारणत्वेनोपात्तम्। विद्युद्द्योतनादौ हि न पठितव्यं पर्व्वदिवसेष्विव। एतदुक्तं भवति। यस्मादचिरकालभावि विद्युद्द्योतनं स्तनयित्नुस्तननं वाध्ययनान्तरायोऽतोऽधीष्वेति। पुरा विद्योतत इति। यावत्पुरानिपातयोर्लट् (३।३।४)। अनुदात्तेत्त्वादात्मनेपदम्।

अदुपदेशाल्लसार्वधातुकानुदात्तत्वे (६।१।१८६) कृते धातुस्वरेणाद्युदात्तमेतत्। पुरा स्तनयतीति। स्तन गदी देवशब्दे। चुरादिणिच्। अदन्तत्वाद्वृद्ध्यभावः। एतदपि पूर्ववन्मध्योदात्तम्। पुराशब्दोऽत्र भविष्यदासत्तिं द्योतयतीति। भविष्यद्विदूरद्योतनादिरध्ययनान्तरायो यस्तस्य प्रत्यासत्तिं सामीप्यमचिरकालभावित्वं द्योतयति। तेन त्वरा गम्यत इत्यभिप्रायः।

## ४३। नन्वित्यनुज्ञैषणायाम्।

अनुज्ञाया एषणा प्रार्थनेति। किञ्चित् कर्त्तुं स्वयमेवोद्यतस्यैवं क्रियतामित्यनुज्ञानमनुज्ञा। प्रार्थनायां मूलोदाहरणयोर्वर्त्तमाने लडिति (३।२।१२३) लट् (I)। प्रत्युदाहरणे तु भूते ननौ पृष्टप्रतिवचन इत्यनेन (३।२।१२०)। इतिकरण एकनिपातोऽयमिति प्रदर्शनार्थः। नन्वनुज्ञैषणायामिति ह्युच्यमाने सन्देहः स्यात् किमयमेकनिपात उत निपातद्वयमिति यथा नन्वो विभाषेत्यत्र (३।२।१२१)। इतिकरणेन त्ववच्छिद्यमानमेकमेवेदं शब्दरूपमिति गम्यते।

## ४४। किं क्रियाप्रश्नेऽनुपसर्गमप्रतिषिद्धम्।

अप्रतिषिद्धमिति। प्रतिषेधः प्रतिषिद्धम्। भावे निष्ठा। नास्य प्रतिषिद्धमस्तीत्यप्रतिषिद्धम्। अथवा कर्मणि निष्ठा। निषिद्धं प्रतिषिद्धमप्रतिषिद्धम्। अर्थद्वारकश्चैतत् तिङो विशेषणम्। पूर्वं किंयुक्तमिति। तत्समीपे किमः श्रूयमाणत्वादित्यभिप्रायः। उत्तरं तु न किंयुक्तमिति। तस्यासमीपे श्रूयमाणत्वादिति भावः। अपरे त्वाहुरित्यादि। नहि समीपे श्रूयमाणत्वं किंशब्दस्य शब्दान्तरेण सम्बन्धे हेतुः। अपि तु संशयविषयत्वम्। यथा चात्र पूर्वस्याख्यातस्य तथा तत्परस्यापीत्यस्ति तस्य योगः किंशब्देनेत्युभयत्र प्रतिषेधः।

---

(I) In the printed काशिका, the passage ननु करोमि भोः। अनुजानीष्व मां गमनं प्रतीत्यर्थः is given as the illustration of the Sutra. It is obviously corrupted. There are two illustrations here viz. ननु करोमि भोः? ननु गच्छामि भोः? So the न्यासकार speaks of मूलोदाहरणयोः। हरदत्त takes the reading अनुजानीष्व मां करणं प्रतीति and says उपलक्षणमेतत्। करणगमने प्रतीत्यर्थः which clearly restores the passage.

## ४५। लोपे विभाषा।

किंशब्दस्य प्रकृतत्वात् तस्यैव लोपो विज्ञायत इत्याह किमो लोप इति। किंशब्दस्य शास्त्रे न क्वचिल्लोपो विहित इत्यतः पृच्छति क्व चास्य लोप इति। अदर्शनमात्रस्य लोप इति संज्ञा ( १।१।६० ) कृता। ननु शास्त्रकृतस्यैवादर्शनस्ये-त्यभिप्रायेणाह यत्रेत्यादि। गम्यते चार्थ इति। कुतश्चिदर्थप्रकरणादेः। नच प्रयुज्यत इति। गम्यमानार्थत्वात्। देवदत्तः पचत्याहोस्वित् पठतीति। अत्राय माहोस्वि-च्छब्दः पक्षान्तरे वर्त्तते। पक्षान्तरोपन्यसनं किमर्थम्? प्रश्नं न व्यभिचरतीति। अत्राप्रयुज्यमानस्यापि तस्यार्थो गम्यते। पठतिशब्दोऽयं पक्षे पचतिशब्देन तुल्यस्वरः।

## ४६। एहिमन्ये प्रहासे लृट्।

एहिमन्य इत्यनेनेति। समुदायस्यैकत्वात् तदपेक्षयैकवचनम्। अन्यथा हि द्वे एते आख्याते इति द्वित्वाद् द्विवचनं स्यात्। प्रहास इति। प्रकृष्टो हासः परिहास इत्यर्थः। एहि मन्य ओदनं भोक्ष्यस इति। प्रहासे च मन्योपपद इति (१।४।१०६) पुरुषव्यत्ययः। (J) भुजेरस्मदुपपदे मध्यमः। मन्यतेर्युष्मद्युपपद उत्तमः। एवमेहि मन्ये रथेन यास्यसीत्यत्रापि पुरुषव्यत्ययो वेदितव्यः। द्वे अपि चैते लृडन्ते स्यप्रत्ययस्वरेण मध्योदात्ते। प्रहास इति किम्? एहि मन्यसे ओदनं भोक्ष्ये इति। अत्र मन्यते र्युष्मद्युपपद इत्यादिना ( १।४।१०५ ) मध्यमः। भुजे स्त्वस्मद्युत्तम (१।४।१०७) इत्युत्तमः। सुष्ठु मन्यसे साधु मन्यसे इति। अनेन यथाभूतं दर्शयन् प्रहासाभावं दर्शयति। ननु च गत्यर्थलोटा लृडित्यादिनैव ( ८।१।५१ ) सिद्धम्। तत् किमर्थोऽयमारम्भ इत्यत आह गत्यर्थलोटेत्यादि। एहिमन्येयुक्त इत्यादिना नियमार्थतामस्य व्यक्तीकरोति। कथं पुनरेहि-मन्य इत्यनेन योगेन नियमः क्रियमाण एहि मन्यसे ओदनं भोक्ष्य इत्यत्र निवृत्तिं करोति? नह्यत्र एहीत्यनेन लृडन्तं युक्तम्? किं तर्हि? एहि मन्यस इत्यनेनेत्यत आह एहि मन्य इत्युत्तमोपादान मतन्त्रमिति। अतन्त्रत्वं तु तस्योपलक्षणार्थत्वात्। ननु च मन्यतेरुत्तम इति ( १।४।१०६ ) वचनाद् युष्म-

(J) तथाच काव्ये—"एहि मन्ये मृगाक्षीणामहं प्रेयान् भविष्यसि। स्यात् प्रेमविषयस्तासामक्षणा काणो भवादृशः" इति। ॥१॥

दुापपदे मन्यतेरुत्तमेनैव भवितव्यम्। एवञ्च एहि मन्य ओदनं भोच्य इत्येष प्रयोगो नोपपद्यत एव। तत् कथमिह नियमेन निवृत्तिः क्रियत इत्याह प्रहास एव हि मन्यते रुत्तम इति। गतार्थम्।

## ४७। जात्वपूर्वम्।

अपूर्वमिति। अविद्यमानं पूर्वं यस्मात् तदपूर्वम्। अत्र च इयं सम्भाव्यते। तिङन्तस्य चेदं विशेषणं स्याज् जातुशब्दस्य वेति। तत्र यदि तिङन्तस्य स्यादाहो उताहो चानन्तरमित्यत्रानन्तरग्रहणं ( ८।१।४८ ) न कुर्यात्। अस्यैव ह्यपूर्वग्रहणस्य तत्रानुवृत्ते स्तिङन्तस्यानन्तर्यं लभ्यते। तस्माज्जातुशब्दस्येदं विशेषणमित्यालोच्याह जात्वित्येतदित्यादि।

## ४८। किंवृत्तञ्च चिदुत्तरम्।

चिदुत्तरमिति। चिदित्येतदुत्तरं यस्मात् तत् तथोक्तम्। पूर्वोक्तया नीत्यै-तदपि किंवृत्तस्यैव विशेषणम्। किंवृत्तग्रहणेन तद्विभक्त्यन्तमित्यादि। किंवृत्ते लिप्साया ( ३।३।६ ) मित्यत्रैतदुक्तार्थम्। भोजयतीति। पूर्ववन्मध्यो-दात्तमेवैतत्। कस्मैचिद् ददातीति। अभ्यस्तानामादि- (K) ( ६।१।१८८ ) रित्याद्युदात्तमेतत्। कतरइति। किंतत्यदो निर्धारण ( ५।३।९२ ) इति डतरच्। कतमइति। वा बहूनां जातिपरिप्रश्न इति ( ५।३।९३ ) डतमच्।

## ४९। आहो उताहो चानन्तरम्।

अविद्यमानमन्तरं व्यवधानं यस्य तदनन्तरम्। अव्यवहितमित्यर्थः। तिङन्तविशेषण मेतत्। आनन्तर्यञ्चाहो उताहो इत्येतयोः श्रुतत्वात् तदपेक्षयैव वेदितव्यम्। अत्रापि चकारोऽपूर्वमित्यस्यानुकर्षणार्थः।

## ५०। शेषे विभाषा।

शेषः सन्निहितापेक्षः। शेषत्रयञ्च पूर्वसूत्रे सन्निहितं निघातकारणम्। आहो उताहोशब्दावनन्तरमित्येतदपूर्वमित्येतच्च। तत्र न ज्ञायते किंकारण-भावापेक्षः शेष इति। किमाहोउताहोशब्दापेक्ष उतानन्तरभावापेक्ष आहो-

(K) वस्तुतस्त्वनुदात्ते चेत्यनेन (६।१।१८९)। अभ्यस्ताना (६।१।१८८) मित्यादावचीत्यनुवृत्तेः।

स्विदपूर्वभावापेच इत्यतः पृच्छति कश्च शेषइति। इह निघात मिच्छता तत्कारण मवश्यमेवापेक्षणीयम्। आहो उताहो इति। अपूर्वमित्येतदपि द्विचकारेणानुकृष्टत्वात्। तस्य हि द्वयोर् योगयो श्चकारो ऽनुकर्षणार्थं एव कृतः। कथं नामात्रापि तदपेक्षा स्यादिति? अन्यथा हि समनन्तरातीत एव सूत्रे तदनुकर्षणार्थं चकारः क्रियेत। किंवृत्तादिसूत्रे (८।१।४८) हि स्वरितत्वादेव तदनुवर्त्तत इति। तस्मात् पारिशेष्यादनन्तरभावापेक्षः शेषो विज्ञायत इत्यत आह तदन्यदनन्तरादिति।

## ५१। गत्यर्थलोटा लृण् न चेत् कारकं सर्व्वान्यत्।

गमिना समानार्था गत्यर्थाइति। अर्थप्रदर्शनमेवैतत्। एवं तु विग्रहः कर्त्तव्यः। गतिरर्थो येषामिति। गत्यर्थलोटा युक्तमिति। योगः पुनर्निमित्तनिमित्तिरूपः। तयो र्निमित्तमिति भावः। न चेत् कारकमित्यादेरर्थं विस्पष्टीकर्त्तुमाह यत्रैवेत्यादि। अनेन लोडन्तवाच्यं लृडन्तवाच्यार्थं यत् कारकं तस्यैवानन्यत्व-माश्रितम्। न शब्दान्तरवाच्यस्येति दर्शयति। एतच्च प्रत्यासत्ते र्लभ्यते। तिङन्तस्य हि तदेव प्रत्यासन्नं कारकं यत् तेनैवाभिधीयते। न शब्दान्तरेण। तेन शब्दान्तरवाच्ये भिद्यमानेऽपि भवत्येव निघातप्रतिषेधः। आगच्छ देवदत्त ग्रामं द्रक्ष्यस्येनमिति। आगच्छेति गत्यर्थलोट्। द्रक्ष्यसीति। लृडन्तम्। तयोश्चैकमेवात्र कारकं देवदत्तः कर्त्ता। द्रक्ष्यसीति। सृजिदृशोर्झल्यमकितीत्य-मागमः (६।१।५८)। व्रश्चादिसूत्रेण (८।२।३६) षत्वम्। षढोः कः सीति (८।२।४१) कत्वम्। स्वप्रत्ययस्वरेण मध्योदात्तमेतत्। एवमुत्तरत्रापि यत्र निघातप्रतिषेध स्तत्र लृडन्तस्य मध्योदात्तता वेदितव्या। आगच्छ देवदत्त ग्राममोदनं भोक्ष्यसइति। अत्रापि तदेवाभिन्न मुभयलकारवाच्यं कर्त्तृ कारकम्। कर्म तु यद्यपि भिद्यते तथापि तच्छब्दान्तरवाच्यमिति सत्यपि तद्भेदे भवत्येव निघातप्रतिषेधः। उह्यन्तां देवदत्तेन शालयो यज्ञदत्तेन भोक्ष्यन्तइति। अथात्र शालय इतुभयलकारवाच्य मभिन्नं कर्म कारकम्। कर्त्ता तु यद्यपि भिद्यते तथापि स शब्दान्तरवाच्य इति तद्भेदेऽपि निघातप्रतिषेधो भवत्येव। उह्यन्तामिति। वहेः कर्मणि लोट्। आत्मनेपदम्। झस्यान्तादेशः। सार्वधातुके यक् (३।१।६७)। वच्यादिसूत्रेण (६।१।१५) संप्रसारणम्। टेरेत्वम् (३।४।७९)। आमेत (३।४।९०) इत्याम्भावः। कथं पुनरिहाभिन्नं कारकम्? यावता शक्तिः

कारकम्। सा च प्रतिक्रियं भिद्यत एव। शक्तिशक्तिमतोर्भेदस्याविवक्षितत्वा-देकं कारकं भविष्यतीत्यदोषः। आगच्छे देवदत्त ग्रामं द्रक्ष्यस्येनमिति। अत्र गत्यर्थलिङा लृङन्तं युक्तम्। न गत्यर्थलोटा। आगच्छ देवदत्त ग्रामं पश्यस्येनमिति। अत्र गत्यर्थलोटा लङन्तं युक्तम्। नतु लृङन्तं। आगच्छ देवदत्त ग्रामं पिता त ओदनं भोक्ष्यतइति। अत्र लोडन्तस्य देवदत्तः कर्त्ता। लृङन्तस्य तु पितेति भिद्यते कारकम्। उह्यन्तां देवदत्तेनेत्यादि। अत्र लोडन्तस्य शालयः कर्म वाच्यम्। लृङन्तस्य तु सक्तव इति भिद्यते कारकम्। आगच्छ देवदत्त ग्रामं त्वश्वाहश्चेत्यादि। यथा पूर्वोपन्यस्तेषु मूलोदाहरणेषु यल्लोडन्तस्य कर्त्रादि कारकं वाच्यं तन्मात्रमेव लृङन्तस्यापि। इह तु न तथा। अत्रापि लोडन्तस्य देवदत्तो युष्मदर्थएव कर्त्ता वाच्यः। लृङन्तस्य तु स चास्मदर्थश्च। तत्रासति सर्व्वग्रहण इह निघातप्रतिषेधो न स्यात्। अत इहापि यथा स्यादि-त्येवमर्थं सर्वग्रहणम्। अथ सत्यपि सर्वग्रहणे निघातप्रतिषेधः कथमेवात्र भवति। यावता भिद्यते लोडन्तवाच्यात् कारकाल्लृङन्तवाच्यो यो ऽर्थः कारकं कर्त्तेत्यत आह लृङन्तवाच्ये चेत्यादि। सर्वग्रहणे सति लोडन्तवाच्यं यत् कारकं तस्माल्लृङन्तस्य तस्य यदि सर्व्वमन्यद् भवति तथाप्येवं न निघात-प्रतिषेधेन भवितव्यम्। अन्यथा तु सति भवत्येव। यदि हि यत्रापि लोडन्तस्य किञ्चित् तदेव कारकं वाच्यं लृङन्तस्य किञ्चित् ततोऽन्यत्रापि निघातप्रतिषेधो न स्यात् सर्वग्रहण मनर्थकं स्यात्। तस्मात् सर्वग्रहणाद् भवत्येवात्र निघातप्रतिषेधः। तत्रैवं स्यात्। अस्मिन्नप्युदाहरणे लृङन्तस्य वाच्यं यत् कारक मन्यदेव तत् लोडन्तवाच्याद्। अतः सत्यपि सर्व्वग्रहणे न भवितव्यं निघातप्रतिषेधेनेत्यत आह इह त्वित्यादि। गतार्थम्।

## ५२। लोट् च।

चकारः पूर्व्वापेक्षया समुच्चयार्थः। पश्येत्यन्तोदात्तम्। एकादेश उदात्ते-नोदात्त (८।२।५) इत्यतो गुण इति (६।१।९७) गुणग्रहणे पररूपस्यैवोदात्तत्वात्। शाधीति। शासु अनुशिष्टौ। से र्ह्यपिच्चेति (३।४।८७) सिपो हिरादेशः। अदादित्वाच्छपो लुक्। शा हाविति (६ ४।३५) धातोः शादेशः। हुझल्भ्यो हे र्धिरिति (६।४।१९) हे र्धिभावः। प्रत्ययस्वरेणान्तोदात्तमेतत्। एवं इष्यतामित्येतदपि। विकरणस्वरात् सार्वधातुकस्वरो बलीयानिति वचनात्।

अथ पृथग्योगकरणं किमर्थम्? न पूर्वसूत्र एव लोड्ग्रहणमपि क्रियेतेत्यत आह पृथगित्यादि। उत्तरत्र लोट एव कार्य्यं यथा स्याल्लृटो मा भूदित्येवमर्थम् पृथग्योगकरणम्।

## ५३। विभाषितं सोपसर्गमनुत्तमम्।

पूर्वेण नित्ये प्रतिषेधे प्राप्ते विकल्पार्थं वचनम्। विभाषितशब्दश्चायं विभाषाशब्देन समानार्थः। नपुंसके भावे क्तः। प्रविशानीति। मिपो मेर्निः। आडुत्तमस्य पिच्चेत्याट् (३।४।९२)।

## ५४। हन्त च।

चकारो विभाषितं सोपसर्गमनुत्तममित्यस्यानुकर्षणार्थः। कुरविति। करोतेर् गुणे कृतेऽत उत् सार्वधातुक इत्युत्त्वम् (६।४।११०)। उतश्च प्रत्ययादित्यादिना (६।४।१०६) हे र्लुक्। प्रत्ययस्वरेणान्तोदात्तमेतत्। हन्त प्रभुनजावहायिति। भुजेर्लोट्। वहिः। टेरेत्वम्। आडुत्तमस्य पिच्च (३।४।९२)। अम्। अत्रापि निपातै र्यद्यदीत्यादिना (८।१।३०) निघातप्रतिषेधः। अदुपदेशाल्लसार्वधातुकस्यानुदात्तत्वे (६।१।१८६) कृते विकरणस्वरेण मध्योदात्तमेतत्।

## ५५। आम एकान्तरमामन्त्रितमनन्तिके।

एकान्तरमिति। अन्तरयतीत्यन्तरम्। व्यवधायकमित्यर्थः। एकं पदमन्तरं यस्य तत् तथोक्तम्। एकेन निपातेन व्यवहितमित्यर्थः। आम् पचसि देवदत्ता३ इति। निघाते प्रतिषिद्ध आमन्त्रितस्येति (६।१।१९८) षाष्ठिकमामन्त्रिताद्युदात्तत्वं भवति। दूराद्धूते चेति (८।२।८४) प्लुतः। आम् भो देवदत्ता३ इति। भवद्भगवदघवतामोच्चावस्येति (८।३।१, वा) भवच्छब्दावयवस्यावशब्दस्यौत्त्वम्। दकारस्य रुत्वम्। तस्य भोभगोअघोअपूर्वस्यादिना (८।३।१७) यकारः। तस्य हलि सर्वेषामिति (८।३।२२) लोपः। ननु चात्र भोः शब्दस्यामन्त्रितं (८।१।७२) पूर्वमविद्यमानवदित्यविद्यमानत्वादेकान्तरता नोपपद्यत इत्यत आह भो इत्यामन्त्रितान्तमपीत्यादि। भो इति सामान्यवचनम्। अत्र भो इति यद्यप्यामन्त्रितं तथापि नाविद्यमानवत्। नामन्त्रित इत्यादिनाऽ(८।१।७३) विद्यमानवद्भावस्य प्रतिषेधात्। तदुभयमप्यनेन

क्रियत इति । कथं पुनरुभयमप्यनेन कर्त्तुं शक्यम्? यावतानुदात्ताधिकारादनुदात्तस्यैवानेन युज्यते प्रतिषेधः । न शक्यते कर्त्तुमप्रकृताया असंशब्दिताया एकश्रुतेः । नैष दोषः । अनन्तिकइति नञत्र विरोधे वर्त्तते । अधर्मानृतादिवत् (L) । अन्तिकविरुद्धमनन्तिकम् । दूरमित्यर्थः । दूरात् सम्बुद्धौ चैकश्रुतिरुच्यते । एकश्रुति दूरात् सम्बुद्धाविति (१।२।३३) वचनात् । एवं हि प्रपचसि देवदत्तेत्येवमादिष्वामन्त्रितनिघातं कृतार्थं बाधित्वा यत्राम एकान्तरमामन्त्रितमनन्तिकं तत्रैकश्रुतिरेव भवति यदीदं नारभ्येत । अतो नाप्राप्तायामेकश्रुता इदमारभ्यत इति तां तावद् बाधते । ततस्तस्याञ्च बाधितायां बाधकाभावात् प्राप्नुवत् तं निघातमपि बाधत एव । कुतः? निघातप्रतिषेधाधिकारे वचनात् । एकश्रुतिप्रतिषेधे हि विधित्सिते सत्येकश्रुतिप्रकरण (१।२।३३-४०) एव प्रतिषेधं कुर्य्यान् नाम एकान्तरमिति । तत्राप्ययमर्थः । आमन्त्रितमनन्तिक इति वक्तव्यं न भवति । तस्मान्निघातप्रतिषेधाधिकारे वचनान्निघातमपि बाधत इति युक्तम् । तदुभयमनेन क्रियत इति । नैष दोषो यदि तर्ह्यप्रकरणापन्नाशब्दिताप्येकश्रुतिरनेन प्रतिषिध्यते । इह दूराद्धूते चेति (८।२।८४) यः प्लुतोदात्तः प्राप्नोति सोऽपि प्रतिषिध्यत इत्यत आह प्लुतोदात्तः पुनरित्यादि । तस्मिन् कर्त्तव्येऽसिद्धत्वात् प्लुतोदात्तो नास्त्येव । स कथं प्रतिषिध्यते? असिद्धत्वं तु पूर्वत्रासिद्धमिति (८।२।१) वचनात् । अपरेषामित्यादि । तेषां मतेन सादृश्येऽत्र नञ् वर्त्तते । न विरोधे । युक्तञ्चैतत् । अन्यथा हि दूर इत्येवं ब्रूयात् । तस्माद् यदिह न दूरं न सन्निकृष्टं तदिहानन्तिकग्रहणेन गृह्यते । तदेव ह्यन्तिकसदृशम् । तेन दूरे विधीयमानाया एकश्रुतेरिह प्राप्तिरेव नास्ति । ततो नास्ति तस्या अपि प्रतिषेधः । क्रियतेऽपितु निघातस्यैवेत्यभिप्रायः । यद्येवं यथैकश्रुतेः प्राप्तिर्नास्ति तथा प्लुतस्यापि । तत् कथं स इहोदाक्रियत इत्याह प्लुतोऽपीत्यादि ।

## ५६ । यद्धितुपरं छन्दसि ।

यद्धितवः परे यस्मात् तत् तथोक्तम् । उदसृजोऽयमिति? अत्र हि तिङन्तमट्स्वरेणाद्युदात्तम् । सृज विसर्गे । लङ् । सिप् । तुदादित्वाच्छः । हशि चेतुरुत्वम् (६।१।११४) । आद् गुणः (६।१।८७) । उशन्ति हीति । वश कान्तौ ।

---

(L) पुत्रकान्तरेऽमृतामित्रादिवदिति पाठः ।

झेरन्तादेशः ( ७।१।३ )। पूर्व्ववच्छपो लुक्। ग्रहिजेत्यादिसूत्रेण (६।१।१६) संप्रसारणम्। प्रत्ययस्वरेण मध्योदात्तमेतत्। आख्यास्यामि त्विति। ख्या प्रकथने। चक्षिङादेशो वा। लृट्। स्यप्रत्ययस्वरेण मध्योदात्तमेतत्। निपातै र्यद्यदिहन्तेत्यादिना ( ८।१।३० ) नियमस्य कारणं दर्शयति। वचनमित्यादिनाप्यस्य वचनस्य नियमार्थत्वम्। एभिरेवेत्यादिनापि नियमस्य स्वरूपम्। नान्यैरिति। अनेनापि नियमस्य व्यवच्छेद्यम्। इहेत्यादिनापि व्यवच्छेद्यस्य विषयम्। स्वो रोहावेहीति। रुह बीजजन्मनि प्रादुर्भावे। लोट्। वस्। शप्। आडुत्तमस्य पिच्च ( ३।४।९२ )। स उत्तमस्येति (M) ( ३।४ ९८ ) सकारलोपः। रोहावेतित्र तस्मिन् परभूते स्वरित्यस्य रो रीति ( ८।३।१४ ) रेफस्य लोपो न भवति। छान्दसत्वात्। तस्मिन्नसति पूर्व्ववद्त्वम्। (N) आद् गुण ( ६।१।८७ ) इति हि गुणे लोण्मध्यमपुरुषैकवचने रूपम्। क्वचिज्जाये स्वो रोहावेहीत्येहीत्यनेन (O) गत्यर्थलोटा युक्तस्येति पाठः। तत्राङ्पूर्वस्येणः प्रयोगो वेदितव्यः। अथ परग्रहणं किमर्थम्! न यद्धितुष्वेवेत्युच्येत ? नैवं शक्यम्। सप्तमीनिर्देशे हि निर्दिष्टग्रहणस्यानन्तर्य्यार्थत्वादनन्तरेष्वेवावयवादिषु भवतीति नियमो विज्ञायते। ततोऽनन्तरेष्वेव पदादिषु भविष्यति। न व्यवहितेष्विति। तथाचान्ययोगनिवृत्ते नियमेनाकृतत्वात् स्वो रोहावहीत्यत्र स्यादेव प्रतिषेधः।

## ५७। चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगतेः।

इहापि गोत्रादयः कुत्सनाभीक्ष्ण्ययोरेव गृह्यन्त इति। न केवलं तिङो गोत्रादीनीत्यादौ ( ८।१।२७ ) सूत्र इत्यपिशब्दार्थः। यथा चात्रापि कुत्सनाभीक्ष्ण्ययोरेव गोत्रादीनि गृह्यन्ते तथा तत्रैवोपपादितम्। पचतिकल्पमिति।

---

(M) वस्तुतस्तु लोटो लङ्वदित्यनेन ( ३।४।८५ ) लङ्वद्भावात् नित्यं ङित ( ३।४।९९) इति सलोपः। स उत्तमस्येति तु लेटो विधानम्।

(N) रोहाव इत्यस्मादेहीति परतोऽपि ओमाङोश्चेति ( ६।१।९५ ) पररूपेण रोहावेहीत्येव स्यात्। कथन्तर्हि रोहावैहीति न्यासे मुद्रितकाशिकायां पदमङ्ग्यांञ्च वृद्धिरेचीति ( ६।१।८८ ) वृद्धियुक्तएव पाठः ? छान्दसत्वात्। नचाङो रुहिणा योगः। अपित्विणैव। तथैव भाष्ये प्रयोगात्। एहीत्यस्य तु न निघातप्रतिषेधः। विभाषितं सोपसर्गमनुत्तममिति (८।१।५३) सोपसर्गमितुग्रक्तेरिति हरदत्तमतम्। भाष्ये त्वेतच्छान्दसत्वात् समाहितम्।

(O) मुद्रितकाशिकायां तु जायेस्वारोहावेहीति पाठः। क्वचिद भट्टोजिग्रन्थे चेवम्। तत्र रो रीति ( ८।३।१४ ) रेफलोपे ढ्लोपे पूर्वस्य दीर्घोऽण इति ( ६।३।१११ ) दीर्घः। न्यासकारहरदत्तौ तु स्वोरोहावेति पाठं गृहीतवन्तौ। स एव भाष्ये दृश्यते।

ईषदसमाप्तौ कल्पप् (५।३।६७)। तत्र हि तिङश्चेत्यनुवर्त्तते (५।३।५६)। अनुदात्त स्तद्धित इहोदाहरण मिति। कस्मान्न भवतीति प्रश्नावसरे आह अन्यत्र तद्धित-स्वरेण तिङ्स्वरो बाध्यत इति। तद्धितस्योदात्तत्वे सत्यनुदात्तं पदमेक-वर्ज्ज मिति (६।१।१५८) चानुदात्तत्वापत्तिः। एवञ्चान्यत्र निघातः सिद्धएवेति। अनुदात्त एव तद्धित इहोदाहरणम्। अत्रेत्यादि। कथं पुनरुपसर्गग्रहणं शक्यं द्रष्टुम् ? उत्तरसूत्रे चादिषु चेति (८।१।५८) चशब्देनास्य सूत्रस्य द्वितीयो व्यापार उच्यते। स आनन्तर्य्याद् गतेरित्यस्य विशेषणार्थो भविष्यति चादिषु च यो गतिरिति। चादिष्विति सामीप्यलक्षणमधिकरणम्। कश्चादिषु गतिः ? चादिसमीपे य उदितः। तेनायं प्रादीनामिवोपसर्गसंज्ञानां प्रतिषेधो विज्ञायते। एवं तावदस्मिन् सूत्रे गतिग्रहणेनोपसर्गस्य ग्रहणं विज्ञायते। सगतिरपि तिङिति। अत्रापि चादिलोपे विभाषेति (८।१।६३) सूत्रान् मण्डूकप्लुतिन्यायेन विभाषे-त्यनुवर्त्तते। सा च व्यवस्थितविभाषा। तेनोपसर्गसंज्ञेन गतिना यो गतिः सः। तस्यैवानुदात्तत्वेन भवितव्यमित्युपसर्गस्यैव गतेर्ग्रहणं विज्ञायते। अथवा द्वयो-रप्येतयो र्योगयो र्विभाषितं सोपसर्ग मनुत्तममित्यत (८।१।५३) उपसर्गग्रहणं मण्डूकप्लुतिन्यायेनानुवर्त्तते। तेन च गति र्विशेष्यत उपसर्गसंज्ञो यो गतिरिति। तेनोपसर्गसंज्ञस्यैव गतेर्ग्रहणं विज्ञायते। यदि तर्ह्युपसर्गग्रहणमनुवर्त्तते गतिग्रहणमनर्थकं स्यात्। उपसर्गग्रहणानुवृत्त्यैव सिद्धत्वात्। नानर्थकम्। विस्पष्टार्थत्वात्। उपसर्गाच्छन्दसि धात्वर्थ इत्यत्र (५।१।११८) ह्युपसर्गग्रहणं प्रादुग्रपलक्षणार्थम्। तत्रासति गतिग्रहण इहाप्युपसर्गग्रहणं प्रादुग्रपलक्षणार्थमिति कस्यचित् संदेहः स्यात्। प्रादुग्रपलक्षणे च सति को दोषः ? अनुपसर्गाणामपि प्रादीनां ग्रहणं विज्ञायेत। ततः शुक्लीकरोतीत्यत्र निघातप्रतिषेधो भवतेव। अभूततद्भावेत्यादिनेह (५।४।५० वा) च्विः। तस्योर्य्यादिच्विडाचश्चेति (४।१।६१) गतिसंज्ञा। अस्य च्वावितीत्वम् (७।४।३२)। यत् काष्ठं शुक्लीकरोतीति। अत्र सगतिरपि तिङिति (८।१।६८) निघातो न वर्त्तते। तेन निपातैर्यद्यदी-त्यादिना (८।१।३०) निघातप्रतिषेध एव भवति।

## ५८। चादिषु च ।

द्विविधाश्चादयः। गणपरिपठिताश्च यानङ्गीकृतैरतदुक्तं चादयोऽसत्त्व इति (१।४।५७)। सूत्रपठिताश्च नचवाहाहैवयुक्त इति (८।१।२४)। तत्र प्रत्यासत्ते

ये इह प्रकरणे पठिता स्तेषामेव ग्रहणं युक्त मिति मत्वाह चादयो नचवाहाहैवेत्यादि। खादतिशब्दः पचतिशब्देन तुल्यस्वरः। प्रथमस्यात्र तिङन्तस्येत्यादिना द्वितीयमिह गतेरित्यस्य प्रत्युदाहरणमिति दर्शयति। चशब्दो गतेरित्यस्यानुकर्षणार्थः। अन्यच्चास्य प्रयोजनमुक्तमेव।

## ५९। चवायोगे प्रथमा।

प्रथमा तिङ् विभक्तिरिति। एतेन प्रथमेति स्त्रीलिङ्गनिर्देशो विभक्त्यपेक्षः सूत्रे कृत इति दर्शयति। प्रथमात्वं तस्य पुनः प्रथममुच्चारणाद् वेदितव्यम्। गर्हभाश्व कालयतीति। कल विल क्षेपे। चुरादिणिच्। चित्स्वरेण लकारोऽकार उदात्तइति मध्योदात्तमेतत्। द्वितीयं तु निहन्यत एव। अथ योगग्रहणं किमर्थम्? नच वयोरित्येव सप्तम्या निर्देशः क्रियेत यथा चादिषु चेत्यत (८।१।५८) आह योगग्रहणमित्यादि। यथा चादिषु चेति (८।१।५८) सप्तम्या निर्देशे सति परैरेव चादिभिर्योगे प्रतिषेधा भवति न पूर्वैस्तथेहापि पराभ्यामेव चवाभ्यां योगे स्यात्। न पूर्वाभ्याम्। ताभ्यामपि योग यथा स्यादित्येवमर्थं योगग्रहणम्। यदि तु चवाभ्यामिति तृतीयया निर्देशः क्रियते विनापि योगग्रहणेन पूर्वाभ्यामपि योगे स्यादेव प्रतिषेधः। सन्देहपरिहारार्थं तु तथा न कृतम्। चवाभ्यामित्युच्यमाने सन्देहः स्यात् किमयं तृतीयया निर्देश उत पञ्चम्येति। पञ्चम्या निर्देशे को दोषः स्यात्? परभूताभ्यां योगे न स्यात्। कथं पुनर्द्वितीयादितिङन्तस्य चवाभ्यां योगो यत् तन्निवृत्त्यर्थं प्रथमाग्रहणं क्रियेतेत्यत आह चवायोगो होत्यादि। इह च योगः समुच्चये सति भवति। वायोगस्तु विकल्पे। स च समुच्चयो विकल्पश्चानेकस्य धर्मः। द्वित्वादिवत्। अतो यत्र तौ समुच्चयविकल्पौ तत्रावश्यमनेकस्य द्वितीयादेः सन्निधानेन भवितव्यम्। तस्मात् तन्निवृत्त्यर्थं प्रथमाग्रहणम्।

## ६०। हेति क्षियायाम्।

आचारभेदइति। शिष्टाचारव्यतिक्रम इत्यर्थः। यातीति। धातुस्वरेणाद्युदात्तः। इतिकरणेन हशब्दमात्रस्य निघातकारणत्व माख्यायते। असति हि तस्मिन् क्षिया हशब्दस्योपाधि विज्ञायेत। तिङन्तस्य वा। तथाच यदा हशब्दस्तिङन्तं वा क्षियायां न प्रयुज्यते तदा निघातप्रतिषेधो न स्यात्। इति-

करणे तु सति स्वरूपमात्रप्रधानो ह्यशब्दो निघातस्य कारणं भवतीति। असत्यामपि ह्यशब्दस्य तिङन्तस्य वा क्रियायां वृत्तौ निघातप्रतिषेधः सिद्धो भवति।

## ६१। अहेति विनियोगे च।

चकारेण क्रियायामित्येतदनुकृष्यते। नानाप्रयोजनइति। अनेकप्रयोजन इत्यर्थः। नियोगइति। प्रेषणं व्यापारणमित्यर्थः। इतिकरणस्य पूर्ववदेव प्रयोजनम्।

## ६२। चाहलोप एवेत्यवधारणम्।

क्व चास्य लोपइति। लोपे विभाषेत्यत्र (८।१।४५) योऽभिप्रायः प्रष्टुरुक्तः स इहापि वेदितव्यः। यत्रार्थो गम्यत इत्यादि। अत्रापि य स्तत्राभिप्राय इतरस्याभिहितः स एव द्रष्टव्यः। कः पुनरर्थं स्तयोः प्रयुक्तयोरपि गम्यतइत्याह तत्रेत्यादि। क्व पुनर्विषये चलोपः क्व वाहलोप इत्याह समानकर्त्तृक इत्यादि। यस्मिन् व्यापारविशेषे समान एकः कर्त्ता स समानकर्त्तृकः। समानकर्त्तृके चलोपः नानाकर्त्तृके ऽहलोप इति। नाना कर्त्ता यस्मिन् स नानाकर्त्तृकः। देवदत्त एव ग्रामं गच्छतु। स देवदत्त एवारण्यं गच्छत्विति। अत्र ग्रामकर्मकमरण्यकर्मकञ्च गमनं यत् तस्य देवदत्त एव कर्त्तेति तत् समानकर्त्तृकम्। चार्थञ्च दर्शयितुमाह ग्रामञ्चेत्यादि। अत्र हि देवदत्त एवारण्यं गच्छतु देवदत्त एव ग्रामं गच्छत्विति देवदत्तस्यैव नियोज्यस्य गन्तुर्ग्राम एव गन्तव्यतयोपदिश्यते। यज्ञदत्तस्य त्वरण्यमेव केवलम्। तेनासत्यप्यहशब्दस्य प्रयोगे तदर्थो गम्यते। ग्रामं केवलं देवदत्तो गच्छतु। अरण्यं केवलं यज्ञदत्तो गच्छत्विति। अनवकॢप्ताविति। असम्भावनायामित्यर्थः। यो हि देवदत्तस्य भोजनं न क्वचित् सम्भावयति सएव प्रयुङ्क्ते देवदत्त क्वेव भोक्ष्यस इति। पररूपत्वम्।

## ६३। चादिलोपे विभाषा।

सूत्रनिर्दिष्टा गृह्यन्त इति। पूर्वतः प्रत्यासत्तेः। अत्र चवालोपे चवायोगे प्रथमेति (८।१।५९) प्राप्ते विभाषा। परिशेषाणामप्राप्ते। भवन्तीति पक्षे प्रत्ययस्वरेण मध्योदात्तः। यजेतेति। अत्र पक्षे ऽदुपदेशात्सार्वधातुकस्यानुदात्तत्वे कृते धातोरुदात्तत्वे सत्याद्युदात्तत्वम्।

## ६४ । वैवावेति च छन्दसि ।

आसीदिति। अस भुवि। लङ्। अदादित्वाच्छपो लुक्। अस्तिसिचोऽपृक्त इति (७।३।९६)। आट्। स चोदात्तइत्याद्युदात्तमेतत्। इतिकरणस्य पूर्वोक्तमेव प्रयोजनम्। चकारोऽनुक्तसमुच्चयार्थः। या हिः पचत्विह तस्याः संवत्सरस्य सस्यं पच्यते हिरित्यनेन युक्ता प्रथमा तिङ्विभक्तिः पचत्विति वा न निहन्यते।

## ६५ । एकान्याभ्यां समर्थाभ्याम् ।

समर्थाभ्यामिति। नायमस्यार्थस्तिङन्तेन संगताभ्यामिति। अन्यथा ह्यस्योपादानमनर्थकमेव स्यात्। चवायोगे प्रथमेत्यतो (८।१।५९) योगग्रहणानुवृत्तेरेवास्यार्थस्य लब्धत्वात्। तस्मात् समानार्थाभ्यामित्यस्यायमर्थः। सा च समानार्थता तिङन्तापेक्षया भवतीति परस्परापेक्षया वेदितव्या। एका जिन्वतीति। जयतेर्लट्। व्यत्ययो बहुलमिति (३।१।८५) श्नुः। बहुलं छन्दसीति (७।१।८) झेरदादेशः। हुश्नुवोः सार्वधातुक इति (६।४।८७) यणादेशः। अनिघातपक्षे सार्वधातुकस्वरेण मध्योदात्तमेतत्। सतिशिष्टादपि हि विकरणस्वरात् सार्वधातुकस्वरो बलीयानिष्यते। अन्तीति। अदेः खरि चेति (८।४।५५) चर्त्वम्। अनिघातपक्षे धातुस्वरेणाद्युदात्तमेतत्। चाकशीतीति। काशृ दीप्तौ। अस्य यङ्लुगन्तस्य रूपमेतत्। उपातिष्ठदिति। तिष्ठतेर्लङ्। पाघ्रादिसूत्रेण (७।३।७८) तिष्ठादेशः। एक इति संख्यापदमेतदिति। अनेन प्रत्युदाहरण एकशब्दस्यान्यशब्देनासमानार्थतां दर्शयति। किं पुनः कारणमन्यशब्देनासमानार्थेन योगेन प्रत्युदाहरणं न दर्शितमित्याह एकशब्दस्य व्यवस्थार्थञ्चेत्यादि। चशब्दोऽवधारणार्थः। अनेकार्थसम्भवेऽर्थान्तराद् व्यवच्छिन्नस्यैकत्रैवार्थे व्यवस्थानं व्यवस्था। एकशब्दस्य व्यवस्थार्थमेव समर्थग्रहणम्। नान्यशब्दस्य व्यवस्थार्थम्। न हि तस्यानेकार्थः सम्भवति। तस्मादेकशब्दस्य व्यवस्थार्थं समर्थग्रहणं कृतम्। तेनैवैकशब्देनासमर्थेन योगे युक्तं प्रत्युदाहरणमुपदर्शयितुम्। नान्यशब्देनेत्यभिप्रायः। कस्मात् पुनरेकशब्दव्यवस्थार्थमेव समर्थग्रहणं कृतमित्याह व्यभिचारित्वात् तस्येति। एकशब्दो हि यत्रार्थेऽन्यत्रादौ दृष्ट स्तं व्यभिचरति। तथाहि स क्वचिदन्यशब्दस्यार्थे दृश्यते। क्वचित् प्राथम्ये। क्वचित् संख्यायाम। तस्मादसौ व्यभिचारी। अनवस्थित इत्यर्थः। तद्व्यवस्थार्थं समर्थग्रहणं युक्तम्।

नान्यशब्दव्यवस्थार्थम्। तस्याव्यभिचारित्वात्। नह्यन्यशब्दो यत्रार्थे दृष्ट-स्ततोऽन्यत्र वर्त्तते। ननु च व्यवस्थाया एतत् फलमन्यशब्दसमानार्थ स्यैकशब्दस्य ग्रहणं यथा स्यादिति? एतच्चान्तरेणापि व्यवस्थाकारणं समर्थग्रहणमन्यशब्द-साहचर्य्यादेव लभ्यते। तदनर्थकं समर्थग्रहणम्। नैतदस्ति। निपातैर्यद्यदी-त्यादौ (८।१।३०) सूत्रे निपातग्रहणेन ज्ञापितं साहचर्य्यमिह प्रकरणे व्यवस्था-कारणं न भवतीति।

## ६६। यद्वृत्तान्नित्यम्।

प्रथमा च्छन्दसीति च निवृत्तमिति। तयो र्विभाषाग्रहणेन सम्बद्धत्वात्। तस्य चेह नित्यग्रहणेन निवर्त्तितत्वात्। अत स्तन्निवृत्तौ तत्सम्बद्धयोरपि निवृत्तिर्भवति। वृत्तशब्दोऽयमिहाधिकरणसाधनम्। वर्त्तते तस्मिन्निति वृत्तम्। वृतेरकर्मकत्वात्। क्तोऽधिकरणे चेत्यादिनाधिकरणे (३।४।७६) क्तः। तत् पुनरधिकरणं पदाधिकारात् पदमेव विज्ञायत इत्याह यत्र पदे यच्छब्दो वर्त्तत इत्यादि। यदि यद्वृत्तमित्यधिकरणे क्त स्तर्ह्यधिकरणवाचिना चेति (२।१।१३) प्रतिषेधात् षष्ठीसमासो न प्रवर्त्तते। अतएव निपातनात् समास इत्यदोषः। एतन्नाश्रीयत इति। यद्येतदाश्रीयेत यत्कामास्ते जुहुम इत्यादौ न स्यादिति भावः। कथं पुनरत्र परिभाषा शक्या नाश्रयितुम्। वक्तृव्यमेवै-तदिह परिभाषा न भवतीति। ददाति जुहुमइति। अभ्यस्तानामादिरित्युभय-(६।१।१८९) मप्येतदाद्युदात्तम् (P)। यत्कामाइति। यस्मिन् काम एषामिति बहुव्रीहिः। यद्राङ्ङिति पदम्। यदञ्चतीति ऋत्विगित्यादिना (३।२।५९) क्विन्। अनिदितामित्यनुनासिकलोपः (६।४।२४)। हल्ङ्यादिलोपः (६।१।६८)। उगिदचामिति (७।१।७०) नुम्। संयोगान्तलोपः। विष्वग्देवयोरित्यद्र्यादेशः (६।३।९२)। क्विन्प्रत्ययस्य कुः (८।२।६२)। वातीति। वा गतिगन्धनयोः। अदादित्वाच्छपो लुक्। धातुस्वरेणाद्युदात्तमेतत्। पवतइति। पूङ् पवने। एतदपि पूर्ववदाद्युदात्तम्। अत्र ङित्त्वात्सार्वधातुकस्यानुदात्तत्वे कृते धातुस्वर-एव भवति। ननु च यद्वृत्तादिति पञ्चमीनिर्देशोऽयम्। यत्कामा स्ते जुहुम

(P) एतत्तु चिन्त्यम्। अभ्यस्तानामादिरित्यत्र (६।१।१८९) लघौति वर्त्तते। ददातीत्यत्रानुदात्ते चेति (६।१।१९०) आदुदात्तत्वम्। जुहुमेत्यत्र प्रत्ययस्वरेणान्तोदात्तत्वम्। भीह्रीभृहुमदेत्यादावपि (६।१।१९२) पितीत्यनुवृत्तेः।

इत्यादिषु चोदाहरणेषु त इत्यादिना पदेन व्यवधानम्। अतो निर्दिष्टग्रहणस्यानन्तर्य्यार्थत्वादिह निघातप्रतिषेधेन भवितव्यमित्याह पञ्चमीनिर्देशेऽप्यत्र व्यवहितेऽपि कार्य्यमिष्यतइति। एतच्चोत्तरसूत्रे ज्ञापयिष्यते।

## ६७। पूजनात् पूजितमनुदात्तं काष्ठादिभ्यः।

पूजनादिति। सुपां सुपो भवन्तीति (७।१।३९ वा) बहुवचनस्य स्थान एकवचनम्। अत एवाह पूजनवचनेभ्यइति। उत्तरपदमिति। सुबन्तं वेदितव्यम्। ननु तिङिति वर्त्तते। सत्यमेतत्। उत्तरत्र ( ८।१।६८ ) तिङिति वचनादिह सुबन्तस्य ग्रहणं विज्ञायते। अपिच वक्ष्यतेऽतदिहैव समासे चैतदनुदात्तत्वमिति। समासश्च काष्ठादीनां सुबन्तेनैव सम्भवति। न तिङन्तेनेति युक्तमिह सुबन्तस्यैव पदस्य ग्रहणम्। सर्वएते काष्ठादयोऽद्भुतपर्य्यायाः पूजनवचना भवन्ति। अद्भुतं योऽधीते स काष्ठाध्यायकइत्युच्यते (1)। एवं दारुणादिषु वेदितव्यम्। इह सर्व एवैते काष्ठादयः क्रियाविशेषणभूताः समस्यन्ते। न च क्रियाविशेषणानां समासः क्वचिद्विहितः। तत् कथमत्र समास इत्याह मयूरव्यंसकादित्वात् समास इति। समासे चैतदित्यादि। चकारोऽवधारणार्थः। समास एवेत्यर्थः। कथं पुनःसमास एवैतल्लभ्यते। चादिलोपे विभाषेत्यतो ( ८।१।६३ ) मण्डूकप्लुतिन्यायेन विभाषाग्रहणानुवृत्तेः। सा व्यवस्थितविभाषेति विज्ञानाच्च। यद्येवं कथं वार्त्तिककारेणोक्तं मलोपश्चेति ? काष्ठादिषु हि येऽकारान्ता स्तेषां विभक्तेरभावे कृते मकारः सम्भवति। समासे चेतदनुदात्तत्वेन भवितव्यम्। तत्र विभक्तेरभावान् मकारो न सम्भवतीति मलोपवचन मयुक्तं स्यादित्यत आह मलोपश्चेत्यनेनापीत्यादि। एवमस्माभिरनुदात्तत्वस्य विषय आख्यातः। मलोपश्चेत्यनेनापि स एवाख्यायते। यस्मात् समासे मलोपो न भवति विभक्तेर्लुप्तत्वात्। असमासे विभक्तेरभावे कृते मकारस्य श्रवणमेव भवति। न तु लोपः। अथासमासे मलोपार्थमितेऽतदुक्तमितेऽव कस्मान्न विज्ञायत इत्याह असमासे हीत्यादि। अथ पूजितग्रहणं किमर्थम् ? यावता पूजनशब्दोऽयं पूजितापेक्षत्वात् सम्बन्धिशब्दः। तेन सम्बन्धिशब्दत्वात् पूजित मर्थादुपस्थापयति। तत्रान्तरेणापि पूजितग्रहणं

---

(1) मुद्रितकाशिकादौ तु काष्ठाध्यापक इति पाठो लभ्यते। तत्राद्भुतं योऽध्यापयतीत्येवं विग्रहः।

पूजितस्यैव परिग्रहो भविष्यतीत्यत आह पूजायेत्यादि । पूजनग्रहणादेव पूजितग्रहणे लब्धे पूजितग्रहणं यत् क्रियते तस्यैतत् प्रयोजनं विशिष्टस्याव्यवहितस्य प्रत्यासन्नस्य ग्रहणं यथा स्यादित्येवमर्थम् । तेनोत्तरसूत्रे ( ४।१।६८ ) यत् काष्ठं देवदत्तः पचतीत्यत्र व्यवहितस्य न भविष्यति । ननु पञ्चमीनिर्देशादेव व्यवहितस्य न भविष्यतीत्यत आह एतदेवेत्यादि । यादृशमिदं ज्ञापकं तदनुरूपं यद्वृत्तान्नित्यमित्यत्र ( ८।१।६६ ) यत्कामा स्ते जुहुमो यद्वाङ् वायुर्वातीत्येवमाद्युदाहृतमित्यर्थः । एतेन ज्ञापनस्य प्रयोजनं दर्शितम् । अथानुदात्तग्रहणं किमर्थम् ? यावतानुदात्तं सर्वमपादादावित्यतो ( ८।१।१८ ) ऽनुदात्तग्रहण मनुवर्त्तत एवेत्याह अनुदात्तइति वर्त्तमान इत्यादि । तत्रानुदात्तग्रहणं न लुडिति ( ८।१।२८ ) प्रतिषेधेन सम्बद्धम् । अत स्तदनुवृत्तौ सोऽप्यनुवर्त्तेत । तथा च सति यस्यामन्त्रितादेः पूजितस्य निघातप्राप्तिरस्ति तस्यायं काष्ठादिभ्यः परस्य निघातप्रतिषेधो विज्ञायेत । तस्मात् प्रतिषेधनिवृत्त्यर्थ मन्यदिहानुदात्तग्रहणं क्रियते ।

## ६८ । सगतिरपि तिङ् ।

सगतिग्रहणाच्च गतिरपि निहन्यत इति । तुल्ययोगेऽत्र सहशब्दः । तत्रोभयोरपि विधीयमानेन कार्य्येण सम्बन्धो भवति । तथाहि सपुत्रो भोज्यतामित्युक्ते द्वयोरपि पितापुत्रयोर् भोजनेन सम्बन्धो भवति । तस्मादिहाप्यगते स्तिङन्तस्य च निघाते च सम्बन्धो विज्ञायते । गतिग्रहणेन चात्रोपसर्गग्रहण मिष्यत इति । यथा चैतल्लभ्यते तथा पूर्वमेवाख्यातम् । तिङ्ग्रहणं पूर्वो निघातः सुबन्तविषयो यथा विज्ञायेतेत्येवमर्थम् ।

## ६९ । कुत्सने च सुप्यगोत्रादौ ।

पचति पूतीति । पूतिशब्दस्य क्रियाविशेषणत्वात् स्वमोर्नपुंसकादिति ( ७।१।२३ ) विभक्तेर् लुक् । पचति क्लिश्नातीति । क्लिशू विबाधने । क्र्यादित्वाच्श्ना । अत्र क्लिश्नातीत्येतत् कुत्सनं भवति । यो यस्य बाधनं करोति तेन स कुत्स्यते । सम्बन्धोऽप्यनयो स्तिङन्तयोरस्त्येव । यस्मात् पचति तस्मात् क्लिश्नातीति । सुबन्तं तु क्लिश्नातीत्येतन्न भवति । अस्य न भवति निघातः । क्रियाकुत्सनइत्यादि । तिङन्ते द्वयमस्ति । साधनं क्रिया च । तत्र क्रियायाः

कृत्सनेऽनुदात्तत्वं भवतीति तदर्थमिदं व्याख्येयम्। कर्त्तुः कृत्सनं मा भूदितीवमर्थञ्च। तत्रेदं व्याख्यानम्। चादिलोपे विभाषेत्यतो (८।१।६३) विभाषाग्रहणमनुवर्त्तते। व्यवस्थितविभाषा च सा। तेन क्रियाकृत्सन एव भविष्यति। न कर्त्तुः कृत्सनइति। ननुच क्रियाप्रधानमाख्यातम्। साधनं तु तत्राप्रधानम्। तस्य क्रियाङ्गत्वात्। तत्र प्राधान्यादेव पूतीत्येवमादिना विशेषणेन क्रियाया एव सम्बन्धो भविष्यति। न गुणभूतस्य कर्त्तुः। तत् किमुच्यते क्रियाकृत्सनमिति वक्तव्यमिति? एवं मन्यते। यथैव कृदन्तेषु दारुणाध्यायकादिषु क्रियायाः प्रधानभूताया अपि विशेषणेन सम्बन्धो भवति तथाख्यातेष्वप्यप्राधान्येऽपि साधनस्य विशेषणेन सम्बन्धेन भवितव्यमिति। पूतिश्चानुबन्धइत्यादि। पूतिशब्दश्चकारानुबन्धा भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्। चकारोऽत्र क्रियते। स चानुक्तसमुच्चयार्थः। तेन पूतिश्चानुबन्धो भविष्यतीति। ननुच पूतिशब्दस्य प्रातिपदिकत्वादप्रतिषिद्धमेवान्तोदात्तत्वम्। कस्मात् स चानुबन्धः क्रियते? नचायं क्तिन्नन्तः। पूतिरयमिति पुंसा सामानाधिकरण्यात्। एवं तर्ह्यनेन चकारानुबन्धकरणेनैतद्दर्शयति यत्र सगतिस्तिङोऽनुदात्तत्वं तत्र पूतेरन्तोदात्तत्वम्। अन्यत्रायमाद्युदात्तएव। तेन क्रियाकृत्सनेऽन्तोदात्तः कर्त्तव्यः। कृत्सन आद्युदात्तइति। तेनायमित्यादिना चानुबन्धकत्वस्य फलं दर्शयति। विभाषितमित्यादि। बह्वर्थे यत् तिङन्तं तद् विभाषानुदात्तं भवतीति तदर्थरूपं व्याख्येयमित्यर्थः। व्याख्यानं त्विहापि विभाषाग्रहणानुवृत्तेः। तेन व्यवस्थितविभाषात्वं चाश्रित्य कर्त्तव्यम्। सुपि कुत्सनइत्यादि। अयमुक्तार्थसंग्रहश्लोकः। तत्राद्येन पादेन यदुक्तं क्रियाकृत्सनइति वक्तव्यमिति तस्य संग्रहः। मलोप इत्यादि। नास्मिन् तिङ् विद्यत इतयतिङिति। स पुनः प्रस्तावान् काष्ठादीनां समासो विज्ञायते। तत्रातिङि काष्ठादिसमासे मलोप इष्टः। एतच्च मलोपश्चेत्यनेनायमेव विषय आख्यायत इत्यादिना सूक्तार्थम्। तदनेन समासे चैतदनुदात्तत्वमित्यादिना यदुक्तं तत् सर्वं ग्रहीतुम्। अथवा मलोप इत्यनेन मलोपश्चेत्येतद् वचनमुपलक्षयति। अस्य चोक्तार्थमित्यनेन सम्बन्धः। तदेतदुक्तं भवति। मलोपश्चेति यत् कार्य्यं वचनं तत् मलोपश्चेत्यनेनापीत्यादिना पूर्वमेवोक्तप्रयोजनमिति। अतिङीति। अनुदात्तमित्येतद् वक्तव्यमिति वृत्तभङ्गभयान्नोक्तम्। अनुक्तमपि तस्य श्लोकस्य पूर्वोक्तार्थसंग्रहार्थत्वात् काष्ठादीनाञ्च पूर्वमनुदात्तस्य चोक्तत्वाद्

गम्यतएव। अतिङीति चानेन बहुव्रीहिना समासः। तेनैतदुक्तं भवति काष्ठादीनां समासेऽनुदात्तत्वं भवतीति। शेषं सुगमम्।

## ७०। गतेर्गतौ।

अभ्युद्धरतीति। अभिशब्दस्य प्रातिपदिकस्वरेणान्तोदात्तत्वे प्राप्त उच्छब्दे गतौ परतोऽनुदात्तत्वं भवति। समुदानयतीति। अत्रापि निपाता आद्युदात्ता उपसर्गाश्चाभिवर्जमिति (फिट्, ४।७९) सम आद्युदात्तत्वे प्राप्तेऽनुदात्तत्वं भवति। कथं पुनरत्राङ् समश्च गतिसंज्ञेति? यत्क्रियायुक्ताः प्रादय स्तं प्रत्येव गत्युपसर्गसंज्ञे भवत इत्युक्तम्। नचोच्छब्दस्य क्रियावाचित्वम्। नैष दोषः। क्रियाविशेषवाचिना हि प्रादयः। क्रियाविशेषश्च क्रियैव। कारकाणां प्रवृत्तिविशेषः क्रियेत्युक्तम्। उपसर्गेऽपि कारकप्रवृत्तिर् विशिष्यतएव। नह्यु-त्तरतीति हरत्यर्थ एव केवलं कर्तृव्यापारं व्यवच्छिनत्ति। किं तर्हि? उपस-र्गार्थोऽपि। अथवा हरणादर्थान्तरमेवोद्धरणम्। तस्याभिविशेषणमिति नानुप-पन्ना गतिसंज्ञा। देवदत्तः प्रपचतीति। देवैर्दत्तोऽस्तीति क्तिच्क्तौ च संज्ञाया-मिति क्तः (३।३।१७४)। दो दद् घोरिति (७।४।४६) ददादेशः। तृतीया कर्मणीत्याद्युदात्तत्वे (६।२।४८) प्राप्ते कारकाद्दत्तश्रुतयोरेवाशिषीति (६।२।१४८) देवशब्दोऽन्तोदात्तः। आमन्द्रैरित्यादि। अत्र सर्वमस्ति। नतु मन्द्रो गतिरिति। तस्मिन् परत आङोऽनुदात्तत्वं न भवति। असति चानुदात्तत्वे निपाता आद्युदात्ता उपसर्गाश्चाभिवर्जमित्याद्युदात्तत्वमेव (फिट्, ४।७९) भवति। कथं पुनराङो गतिसंज्ञा। क्रियायोगे हि सति विहिता सा। न चात्रास्ति क्रियायोगः। मन्द्रशब्दस्याक्रियावाचित्वादित्यत आह याहीत्येतत् प्रति क्रिया-योगादाङित्येष गतिरिति। सत्यपि व्यवधाने व्यवहिताश्चेति (१।४।८२) गतिसंज्ञाविधानादिति भावः। स्यादेतत्। यद्यपि याहीत्येतत् प्रत्याङो गतित्वं तथापि मन्द्रशब्दं प्रति नास्त्येव तस्य गतिसंज्ञा। तेन यद्यपि गताविति-त्येतन्नोच्येत तथापि नैवेहानुदात्तत्वं प्राप्नोतीत्यत आह तस्येत्यादि। अत्रास्या-नुदात्तत्वं स्यादेवेति। अस्यानाश्रितपरनिमित्तकमित्यनेन हेतु रुक्तः। तस्यानाश्रितपरनिमित्तकत्वस्यापि गताविव्यस्मिन्नसतीत्यनेन गतिग्रहणस्याभावो हेतुरभिहितः। यदि गतावित्येतन्नोच्येत ततोऽनाश्रितपरनिमित्तमेवानुदात्तत्व-मुक्तं स्यात्। नह्यसति सप्तमीनिर्दिष्टे गतिग्रहणे परनिमित्तताश्रीयते। ततश्च

गतिरित्येतावत्युच्यमाने यद्यपि मन्द्रशब्दो गतिर्न भवति तथापि तस्याङाश्रित-परनिमित्तमनुदात्तत्वमिह स्यादेव। गताविन्यस्मिंस्तु सति न भवत्येष दोषः। गतेः परनिमित्तस्याश्रयणात्। तस्य चेहाभावात्।

## ७१। तिङि चोदात्तवति।

यत् पपचति यत् प्रकरोतीति। यद्वृत्तान्नित्यमिति ( ८।१।६६ ) निघात-प्रतिषेधे कृते उभयमप्येतत् तिङन्तमुदात्तवद् भवति। एकं धातुस्वरेणापरं प्रत्ययस्वरेण। इहेदं तिङ्ग्रहणमेवमर्थं क्रियते। तिङ्युदात्तवति यथा स्यात्। आमन्द्रैरिन्द्र हरिभिर्याहीत्यत्र मन्द्रशब्दे मा भूदित्येवमर्थम्। एतच्चा-प्रयोजनम्। यदि स तत्र स्यात् पूर्वसूत्रे गताविति एतदपार्थकं स्यात्। अस्य हि तत्र मन्द्रशब्दे परतो मा भूदित्येतदेव प्रयोजनं व्यवस्थितम्। न चान्यत् तिङ्ग्रहणस्येह व्यवच्छेद्यमस्ति। तस्माद् व्यवच्छेद्याभावान्न कर्त्तव्यमेव तिङ्ग्रहणमित्येतच्चोद्यमपाकर्त्तुमाह तिङ्ग्रहणमित्यादि। परिमाणं परिच्छेदः। तदुदात्तवतो यथा स्यादित्येवमर्थं तिङ्ग्रहणम्। किं पुनः स्याद् ? यदि परिमाणार्थं तिङ्ग्रहणं न क्रियेतेत्यत आह अन्यथा हीत्यादि। यदि हि तिङीति नोच्येत तदुदात्तवतीत्येतावत्युच्यमाने यद्युदात्तवतीति सामान्येनोच्येत तथापि प्रत्यासत्ते यं प्रति गतिस्तस्यैव निघातो विज्ञायेत। ततश्च धाताविवोदात्तवति स्याद् यत् प्रपचतीत्यादौ। प्रत्यये तु यत् प्रकरोतीत्यत्र न स्यात्। विकरणो ह्यत्रोदात्तवान्। न धातुः। ननु चोदात्तोऽत्र प्रत्ययः। नोदात्तवान्। नहि प्रत्ययादन्यः स उदात्तोऽस्ति येन प्रत्यय उदात्तवान् स्यात्। नैतत् सारम्। यथा स्याद् यत्राद्युदात्तत्वमस्य व्यपदेशिवद्भावेन भवति तथो-दात्तत्वमपि स्यादेव। स्यादेतत्। प्रत्ययमपि प्रति प्रादेर्गतिसंज्ञा। ततो नायं दोष इत्यत आह यत्क्रियायुक्ता इत्यादि। इतिकरणो हेतौ। यस्मात् यत्क्रियायुक्ताः प्रादयस्तं प्रति तेषां गत्युपसर्गसंज्ञा तस्माद् धातुमेव प्रति गति-संज्ञा। न प्रत्ययम्। यदि हि प्रत्ययोऽपि धातुवत् क्रियावचनः स्यात् तमपि प्रति प्रादयो गतिसंज्ञां प्रपद्येरन्। न चासौ क्रियावचनः। तस्मान्न प्रत्ययं प्रति प्रादीनां गतिसंज्ञा। आमन्त्रे तर्हीत्यादि। प्रपचतितरामिति तिङश्चेति ( ५।३।५६ ) तरप्। तदन्तात् किमेत्तिङव्ययघादित्यादिनामि ( ५।४।११ ) कृते सत्यामन्तमेतद् भवति। न तिङन्तम्। ततो यदि तिङि चेति तिङ्ग्रहणं न

क्रियेत तस्मिन्नामन्ते परतो गतिनिघातो न प्राप्नोति। अत्रेत्यादि उत्तरम्। अत्र केचित् कुगतिप्रादय (२।२।१८) इत्यामन्त्रेन गतेः समासं कुर्वन्ति। केचिन्न कुर्वन्त्येवेति। तत्र त्रयः पक्षाः। तत्र य आमन्त्रेन समासं कुर्वन्ति तेषां तत्पुरुषे तुल्यार्थतृतीयेत्यादिना (६।२।२) पूर्वपदस्याव्ययस्य प्रकृतिस्वरे सति शेषस्यानुदात्तं पदमेकवर्जमित्यनुदात्तत्वेन (६।१।१५८) भवितव्यम्। अतोऽक्रियमाणेऽपि तिङ्ग्रहणे परमामन्त्रमुदात्तं न भवतीति गतिनिघातो नैव सिध्यति। ततो नायं दोष स्तिङ्ग्रहणे सत्येव। किं तर्हि? असत्यपि। तेन तिङ्ग्रहणे क्रियमाण एव चोदयितुं युक्तमित्यभिप्रायः। अथेत्यादि। अथ तरबन्तेन गतिसमासः क्रियत एवमप्ययुक्तमेव चोद्यम्। तथाहि तरबन्तस्य गतिसमास इत्यस्मिन् पक्षे प्राग् गतिसमासे कृते पूर्वपदस्य च प्रकृतिस्वरत्वे पश्चादामा भवितव्यम्। तथाच सतिशिष्टत्वादाम एवोदात्तत्वे सति गतेरनुदात्तं पदमेकवर्जमित्यनेनैवानुदात्तत्वं (६।१।१५८) सिद्धम्। अतो नाथ एतत्सूत्रविहितेन गतिनिघातेनेति। वाभावे वाह चोदको येषां त्वित्यादि। गतिकारकोपपदानां कृद्भिःसह समासवचनं प्राक् सुबुत्पत्तेरित्यत्र दर्शनद्वयम्। गत्यादयोऽविशेषेण समस्यन्ते कृद्भिः सह प्राक् सुबुत्पत्तेरित्येकं दर्शनम्। गत्यादयः कृद्भिरेव समस्यन्ते। नान्यप्रत्ययान्तैः। तैश्च प्राक् सुबुत्पत्तेरिति द्वितीयम्। तत्र येषां पूर्वं दर्शनं तान् प्रत्यामन्ते तर्हि न प्राप्नोतीति सत्यमयुक्तमेतच्चोद्यम्। येषां तु द्वितीयं दर्शनं तान् प्रत्युक्तमेव। तथाहि तेषामित्थंविधविषये प्रपचतितरामित्येवंप्रकारे यत्र कृत्प्रयोगो नास्ति तत्र समासेन नैव भवितव्यम्। अथ पृथक् स्वरः प्राप्नोति। प्रग्रह्यस्योपसर्गाश्चाभिवर्जमित्याद्युदात्तत्वम (फिट्, ४।८०) प्राप्नोति। पचतितरामित्यत्रापि प्रत्ययस्वरेणाम उदात्तत्वम्। तत्र पृथक्स्वरप्राप्तौ सत्यामनेन निघातेन प्रयोजनम्। एष च गतिनिघात स्तिङ्ग्रहणे क्रियमाणे सत्यामन्ते प्राप्नोतीति भावः। इतर आह तदर्थं यत्नः कर्त्तव्यइति। स पुनरत्र व्याख्यानविशेषः। इह चकारः क्रियते। स चानुक्तसमुच्चयार्थः। तेनामन्तेऽपि निघातो भविष्यतीति। प्रपचति प्रकरातीति। तिङ्ङतिङ इति (८।१।२८) निघातादुभयमप्येतदुदात्तवन्न भवति।

## ७२। आमन्त्रितं पूर्वमविद्यमानवत्।

तस्मिन् सतीत्यादिनाऽविद्यमानवद् भवतीत्यस्यार्थमाचष्टे। अविद्यमानव-

दिति। वतिना निर्देशोऽयम्। अविद्यमानेन तुल्यं वर्त्तत इत्यविद्यमानवत्। वतिश्च सादृश्ये भवति। एवञ्च तस्याविद्यमानेन सादृश्यं भवति यदि सत्यपि तस्मिं-स्तन्निबन्धनं कार्य्यं न भवति। असति च तस्मिन् यत् कार्य्यं तदसत्तानिबन्धनं तत् सत्यपि तस्मिन् भवति। आमन्त्रितनिघातेनेत्यादिना तस्मिन्त् सति यत् कार्य्यं प्राप्नोति तदभावमविद्यमानवद्भावस्य प्रयोजनं दर्शयति। देवदत्त यज्ञदत्ते ति। अत्र पूर्वस्याविद्यमानत्वादसति निघाते यज्ञदत्तशब्दस्य षाष्ठिकमेवा-(६।१।१६८) मन्त्रिताद्युदात्तत्वं भवति। देवदत्त पचसीति। अत्रापि तिङन्तस्यासति निघाते धातुस्वरेणाद्युदात्तत्वं भवति। देवदत्त तव ग्रामः स्वम्। देवदत्त मम ग्रामः स्वमिति। तवममौ ङसीति (७।१।८६) तवममादेशौ सामिकौ। इत्येवमादिष्विति। आदिशब्देन देवदत्त तुभ्यं दीयत इत्येवमादीनां ग्रहणम्। युष्मदस्मदादेशा न भवन्तीति। तेमयावेकवचनस्येत्येवमादयः (८।१।२२)। पूजायामनन्तरप्रतिषेधः प्रयोजनमित्यादिना तस्मिन्नामन्त्रितेऽसति यत् कार्य्यं प्राप्नोति तस्य सत्यपि तस्मिन भावेऽविद्यमानवद्भावस्य प्रयोजनं दर्शयति। यावद् देवदत्त पचसीत्यत्रापीत्यादि। यत्राप्यामन्त्रितं व्यवधायकमित्येषोऽपिशब्दस्यार्थो वेदितव्यः। देवदत्तः पचतीति। अत्राविद्यमानत्वाभावात् तिङ्निघातो भवत्येव। पूर्वमिति। किं देवदत्तइति पूर्वं परमपि खलु भवति? नचेह परमस्तीति नास्ति देवदत्तेत्यस्य पूर्वत्वम्। तेनामन्त्रिताद्युदात्तत्वे कर्त्तव्ये नाविद्यमानवद् भवति। देवदत्त पचसीति। अत्र पचसीत्येतदपेक्षया देवदत्तशब्दस्य पूर्वत्वम-स्तीत्यविद्यमानवद्भावेन तस्य भवितव्यम्। ततश्चामन्त्रिताद्युदात्तत्वं तस्य न स्यात्। इमं मे गङ्गे यमुन इति। अत्र च गङ्गेशब्दस्य यमुनेशब्दापेक्षमेव पूर्वत्वमिति तमेव प्रति तस्याविद्यमानवद्भावः। न मेशब्दं प्रति। ततश्च तस्य मेशब्दस्य यमुनेशब्देनानन्तर्य्यमपनयन् स निघातनिमित्तभावं प्रतिबध्नीयादिति यमुनेशब्दस्य निघातो न स्यादित्येतच्चोद्यद्वयमाशङ्क्याह पूर्वत्वञ्चेत्यादि। चकारोऽवधारणे। भिन्नक्रमश्च। परापेक्षमेवेत्येवं द्रष्टव्यम्। इतिकरणो हेतौ। येषां यद्भावो यदपेक्षवद् भवति तेषां तद्भावेनान्वीयमानानां विधीयमानो धर्म-स्तद्विषयएव प्रतीयते। तद् यथा पुत्रः कार्य्येष्ववहितइति पुत्रस्य पुत्रभावं पुत्रापेक्ष इति तस्य पुत्रभावेनान्वीयमानस्य विधीयमानं कार्य्येष्ववहितत्वं यदपेक्षः पुत्रत्वं तत्कार्य्येष्ववगम्यते। नान्यकार्य्येषु। पूर्वत्वञ्चेदं परापेक्षमेव। तस्मात् तदन्वीयामन्त्रितस्याविद्यमानवद्भावो यदपेक्षं तत्पूर्वत्वं तस्यैव परस्य कार्य्ये

कर्त्तव्ये भवति। नान्यस्य। किंविशिष्टे कार्य्ये? स्वनिमित्तेऽन्यनिमित्ते वा। स्वं निमित्तं यस्य तत् स्वनिमित्तम्। आमन्त्रितनिमित्तमित्यर्थः। तस्मादन्यच्छब्दान्तरं निमित्तं यस्य तदन्यनिमित्तम्। यतएवं परस्येव कार्य्यं कर्त्तव्ये तदामन्त्रितमविद्यमानवद् भवति नतु स्वकार्य्यं कर्त्तव्ये तेन देवदत्त पचसीत्यत्रामन्त्रिताद्युदात्तत्वं न परस्य कार्य्यम्। किं तर्हि? आमन्त्रितस्यैव। यतः परस्य कार्य्यमनुदात्तत्वम्। तस्मिंस्त्वविद्यमानवद् भवत्येव। एवं प्रथम चोद्यं निराकृत्य द्वितीयं निराकर्त्तुमाह इमं मे गङ्गे यमुनइत्यादि। अत्रापि पूर्वत्वञ्च परापेच्चं भवतीतिएष एव हेतुः गङ्गेशब्दः पूर्वमामन्त्रितान्तः स्वयमविद्यमानत्वान्निमित्तं न भवतीति सम्बन्धनीयम्। क्व विषये निमित्तं न भवति? परस्यैव यमुनेशब्दस्यानुदात्तत्वे कर्त्तव्ये। मेशब्दस्य च निमित्तभावं न प्रति बध्नातीति गङ्गेशब्दः पूर्वमामन्त्रितो यमुनेशब्दस्यानुदात्तत्वे कर्त्तव्ये विद्यमानवत्त्वादिति सर्वमपेच्चते। इह पूर्व्वशब्दस्य सम्बन्धिशब्दत्वात् परस्य कार्य्यं कर्त्तव्ये पूर्वस्यामन्त्रितस्याविद्यमानवद्भावो विधीयते। इमं मे गङ्गे यमुन इत्यत्र च यद्यपि गङ्गेशब्दादन्यच्छब्दान्तरं म इत्येतद् यमुनेशब्दस्यानुदात्तस्य निमित्तं तथापि तदनुदात्तत्वं परस्यैवामन्त्रितस्य कार्य्यमिति तस्मिन्नपि कर्त्तव्ये गङ्गेशब्दोऽविद्यमानवद्भवति। अतएव प्रागुक्तम् अन्यनिमित्ते वै तेनाविद्यमानवत्त्वान् मेशब्दस्य निघातं प्रति यो निमित्तभावः तं न प्रतिबध्नाति। वत्करणं किमर्थम्? स्वाश्रयमपि यथा स्यात्। आम् भो देवदत्ता३। आम एकान्तरमामन्त्रित मनन्तिकइत्येकान्तरता-(८।१।५५) निबन्धनो निघातप्रतिषेधः सिद्धो भवति। बहुवचनान्तञ्चैतद् विज्ञेयम्। एकवचनान्ते हि नामन्त्रिते समानाधिकरणे सामान्यवचनमिति (८।१।७३) प्रतिषेधान्नैवाविद्यमानत्वमस्ति। बहुवचनान्ते तु विभाषितं विशेषवचने बहुवचनमिति (८।१।७४) पच्चे विद्यते। ननुच परार्थे प्रयुज्यमानाः शब्दा अतिदेशं गमयन्ति यथा गोर्वाहीकइति। तत्र विद्यमानस्याविद्यमानमिति वचनादतिदेशो गम्यते। अतिदेशधर्मश्च स्वाश्रयानिवृत्तिरिति नार्थो वतिना। सत्य मेतत्। एवं तु मन्यते। वतिमन्तरेण प्रयोगव्यवस्थार्थमिदं स्यात्। कुतश्चिदामन्त्रितं पूर्वं न भवतीति। तथाचामन्त्रितस्यामन्त्रितेन पूर्वणेकान्तरता न स्यादिति।

## ७३ । नामन्त्रिते समानाधिकरणे सामान्यवचनम् ।

समानाधिकरणमिति। समानाभिधेयमित्यर्थः। अग्ने गृहपत इति। अग्निशब्दोऽत्राग्निमात्राभिधायित्वात् सामान्यवचनोऽपि गृहपतिशब्देन विशेषाभिधायिना व्यवच्छिद्यमान स्तद्वाच्ये गार्हपत्याख्येऽग्निविशेषे एवावतिष्ठत इति गृहपतिशब्द स्तेन समानाधिकरणः। एवं माणवक जटिलकाध्यापक इत्यत्रापि समानाधिकरणता विज्ञेया। अत्र जटिलकशब्दस्यापेक्षाभेदात् सामान्ये विशेषत्वं न। किं तर्हि? माणवकापेक्षया विशेषत्वम्। अध्यापकापेक्षया सामान्यभावः। अत्र जटिलके समानाधिकरणे परतो माणवकस्याविद्यमानत्वं न भवति। अध्यापके तु जटिलकशब्दस्य। पूर्वस्येत्यादिना प्रतिषेधस्य फलं दर्शयति देवदत्त पचसीति। तत्र देवदत्तस्य योऽभिधेयोऽर्थ स्तत्रैव कर्त्तरि लकारो विहित इति भवति पचसीत्येतद्देवदत्तशब्देन समानाधिकरणम्। आमन्त्रितं तु न भवति। देवदत्त यज्ञदत्तेति। देवदत्तशब्दोऽत्र न संज्ञाशब्दो गृह्यते। किं तर्हि? क्रियानिमित्तकः। अन्यथा संज्ञाशब्दस्यैकवस्तुनिष्ठत्वात् सामान्यवचनः स न स्यात्। एते पर्य्याया इति। एतेन सामान्यवचनत्वाभावं दर्शयति। विशेषापेक्षं सामान्यम्। नचात्र कस्यचिद् विशेषो वाच्यो यदपेक्षया सामान्यं स्यात्। सर्वेषामत्यन्ताभिन्नार्थत्वात्। अन्यथा पर्य्याया एवं न स्युः। कथं पुनर्ज्ञायन्ते पर्य्याया एत इत्याह एवं ह्युक्तमित्यादि।

## ७४ । विभाषितं विशेषवचने बहुवचनम् ।

पूर्वेण नित्यं विद्यमानवत्त्वे प्राप्ते विकल्पार्थमिदं वचनम्। देवाः शरण्या इति। यदाऽविद्यमानवत्त्वं तदा शरण्या इत्यस्यामन्त्रिताद्युदात्तत्वम् भवति। अन्यथा निघातः। एवं ब्राह्मणा वैयाकरणा इत्यत्रापि वैयाकरणशब्दस्याद्युदात्तत्वम्। पाक्षिकनिघातश्च वेदितव्यः। अथ विशेषवचनं किमर्थम्? यावता सामान्यवचन मित्यनुवर्त्तते। सामान्यञ्च विशेषापेक्षम्। तत्रान्तरेणापि विशेषवचनं विशेषवचनं विज्ञास्यत इत्यत आह सामान्यवचनाधिकारादेवेत्यादि। य एवं न शक्नोति मन्दधीः प्रतिपत्तुं तं प्रति विस्पष्टार्थं विशेषवचनग्रहणं क्रियते। यदि तर्हि सामान्यस्य विशेषापेक्षत्वात् सामान्यवचनग्रहणाद् विशेषवचने कार्य्यं विज्ञायते तत्र पूर्वसूत्रेऽपि ( ८।१।७३ ) तत्रैव कार्य्यं विज्ञायते। तथाच देवदत्त

यज्ञदत्तेति प्रत्युदाहरणं दृष्टान्तविकलं स्यात्। तथाहि यथा यज्ञदत्तशब्दो न समानाधिकरणो भवति तथा विशेषवचनोऽपि। अथासौ विशेषवचन एवं सति यथाग्ने गृहपत इत्यत्राग्निशब्दः सामान्यवचनोऽपि गृहपतिशब्देन विशेषाभिधायिना व्यवच्छिद्यमानस्तदग्निविशेषणं भवति गृहपतिशब्दस्तेन समानाधिकरण एवं देवदत्तशब्दो विशेषाभिधायिना यज्ञदत्तशब्देन व्यवच्छिद्यमानस्तद्वाच्य एव विशेषेऽवतिष्ठत इति यज्ञदत्तशब्दस्तेन समानाधिकरण इति चिन्त्यमेतत्।

इति बोधिसत्त्वदेशीयाचार्यश्रीजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरणपञ्जिकायामष्टमाध्यायस्य प्रथमः पादः॥ ८।१॥

अथ

# काशिकाविवरणपञ्जिका।

## अष्टमाध्यायः।

## द्वितीयः पादः।

### १। पूर्वत्रासिद्धम्।

एष योगः परिभाषा वा स्यादधिकारो वेति पक्षद्वयं सम्भाव्यते। तत्र यद्ययं परिभाषा स्यात् सर्व्वस्यामष्टाध्याय्याम्पूर्वस्मिन्नुत्तरमसिद्धं स्यात्। ततश्चातो भिस ऐसित्यत्र (७।१।९) त्यदाद्यत्वस्यासिद्धत्वात् तै यै रित्यत्रैस्भावो न स्यादितीमं परिभाषापक्षे दोषं दृष्ट्वा स्वरितत्वेनाधिकारत्वमस्येति (१।३।११) निश्चित्याह पूर्वत्रासिद्धमित्यधिकारोऽयमिति। अध्यायपरिसमाप्तेरिति। अवधिप्रदर्शनार्थमेतत्। तत्रेति वाक्योपन्यासे। सपादेति। सह पादेनानन्तरं प्रक्रान्तेन वर्त्तत इति सपादा। सप्ताध्यायीति। सप्तानामध्यायानां समाहारः। द्विगोरिति (४।१।२१) ङीप्। क्वचित् सपादसप्ताध्यायीति पाठः। तत्र सपादा चासौ सप्ताध्यायी चेति विशेषणसमासः। पुंवद्भावः। अयमिति। वक्ष्यमाणः पादोनोऽध्याय इति। अनन्तरोक्तेन पादेनोनोऽपरिपूर्णः पादोनोऽध्यायः। असिद्धो भवतीत्यादि। पादोनाध्यायग्रहणेनोत्तरोत्तरयोगग्रहणेन च शास्त्रासिद्धत्व मिहाश्रीयत इति दर्शयति। कार्य्यासिद्धत्वाश्रयणे हि यथा देवदत्तस्य हन्तरि हते न पुन र्देवदत्तस्य प्रादुर्भावो भवति तथा कार्य्यस्यासिद्धत्वे प्रतिपादिते न पुनः प्रकृतेः प्रादुर्भावो (A) भवति। ततश्चामुष्यामुष्यायित्यत्र सत्यप्युकारस्यासिद्धत्वेऽ

(A) नदीयपुस्तके प्रादुर्भाव इत्यत्र प्रत्यापत्तिरिति पाठः।

कारान्तमङ्गं न भवतीति तन्निबन्धनः स्मेभावो न स्यात्। शास्त्रासिद्धत्वे तु स्मेभावशास्त्रमेव प्रवर्त्तते। नत्वशास्त्र मसिद्धत्वमिति न भवत्येष दोषप्रसङ्गः। अपि च शास्त्रस्य मुख्यत्वं पूर्वत्वं कार्य्यस्यौपचारिकत्वम्। यस्य कार्य्यस्य शास्त्रं पूर्वं तदप्युपचारेण पूर्वमित्युच्यते। न स्वत एव तस्य पूर्वत्वम्। सन्निवेशविशेषाभावात्। कार्य्यं हि लक्ष्यगतम् (B)। तत्र यथा लक्ष्यस्य सन्निवेशो नास्ति तथा तद्गतस्यापि कार्य्यस्य। न च मुख्ये पूर्वत्वे सति गौणत्वस्य परिग्रहणं युक्तम्। तस्माच्छास्त्रपूर्व्वग्रहणेन गृह्यते। तस्य च पूर्व्वत्वम् परशास्त्रमेवापेक्ष्य भवति। अतो यदपेक्षं तस्य पूर्वत्वं ततः परस्य शास्त्रस्यैवासिद्धत्वमनेन कर्त्तुं युक्तम्। शास्त्रस्यासिद्धौ च कृतायामर्थतः कार्य्यासिद्धत्वं कृतमेव भवति। तस्य तन्निबन्धनत्वात्। सिद्धशब्दो निष्पन्नवचनः। सिद्धं निष्पन्नमित्यर्थः। न सिद्ध मसिद्ध मनिष्पन्नमित्युच्यते। परञ्च शास्त्रं यच्च निष्पन्नं तन्न शक्यं वचनशतेनाप्यनिष्पन्नसत्तायामापादयितुम्। अन्यथा न कश्चिद् दुःखविवशां दशामनुभवेत्। असिद्धवचनेनैव न दुःखस्यानिष्पन्नतापादानात्। तस्माद् यथा ब्रह्मदत्तोऽब्रह्मदत्तोऽयमित्युक्तेऽतिदेशोऽयं गम्यते तथेहाप्यसिद्धत्वमित्युक्तेऽतिदेशोऽयं गम्यत इत्याह असिद्धवद्भवतीति। एतदेव स्पष्टीकर्त्तुमाह सिद्धकार्य्यमित्यादि। एवं हि तदसिद्धवद् भवति यदि सिद्धस्य यत् कार्य्यं तन् न करोति। तदेतदित्यादि। तदिति हेतौ। यस्मादनन्तरोक्तोऽसिद्धशब्दस्यार्थ स्तस्मादेतदसिद्धवचनमादेशलक्षणप्रतिषेधार्थम्। आदेशो लक्षणं निमित्तं यस्य तदादेशलक्षणम्। तस्य प्रतिषेधः। सोऽर्थः प्रयोजनं यस्य तत् तथोक्तम्। उत्सर्गलक्षणभावार्थञ्चेति। उत्सृज्यते निवर्त्त्यत इत्युत्सर्गः स्थानिलक्षणम्। उत्सर्गो लक्षणं निमित्तं यस्य तदुत्सर्गलक्षणं कार्य्यम्। तस्य भाव उपजनन मुत्सर्गलक्षणभावः। सोऽर्थः प्रयोजनं यस्य तत् तथोक्तम्। अस्मा उद्धरेत्यादि। अस्मैइतीदंशब्दाच्चतुर्थी। उद्धरेत्यस्मिन् परत आयादेशः। लोपः शाकल्यस्येति (८।३।१८) यकारलोपः। तत्र कृत आद् गुणः (६।१।८७) प्राप्नोति। यकारलोपस्यासिद्धत्वान्न भवति। द्वा आनयेत्यादि। अत्रात्रानयशब्दयोः परतोऽसावित्यस्यादित्यशब्दे च परत आवादेशः। लोपः शाकल्यस्येति (८।३।१९) वकारलोपः। तत्र कृतेऽकः सवर्णे दीर्घत्वं (६।१।१०१) प्राप्नोति। वकारलोपस्यासिद्धत्वान्न भवति। व्यलोपासिद्धत्वादिति। तादर्थ्याद्यलोपशास्त्रं व्यलोपशब्देनोक्तम्। अथवा व्यलोपशास्त्रस्यासिद्ध-

(B) भिन्नलक्षणगतमिति तु महीशूरपुस्तके पाठः।

त्वाद् य्लोपस्यासिद्धत्वमित्युच्यते। एवमुदाहरणेष्वादेशलक्षणप्रतिषेधो ऽसिद्धत्ववचनस्य प्रयोजनम्। इदानीं येषूदाहरणेषूत्सर्गलक्षणभावः प्रयोजनं तानि दर्शयितुमाह अमुष्मा इत्यादि। अदस चतुर्थीपञ्चमीसप्तम्येकवचनानि। त्यदाद्यत्वम् (७।२।१०२)। अत्रासत्यप्यसिद्धत्वे परत्वाददसोऽसेर्दादु दो म इत्युत्वम् (८।२।८०)। ततश्चाकारान्तस्याभावात् तन्निबन्धनाः सर्वनाम्नः स्मै (७।१।१४) ङसिङ्योः स्मात्स्मिनाविति (७।१।१५) स्मायादयो न स्युः। असिद्धत्वे सति शास्त्रस्य ते भवन्ति। उत्वस्यासिद्धत्वादिति। अत्रापि तादर्थ्याद्दुत्वशब्देनोत्वशास्त्रमुक्तम्। शुष्किके-त्यादिश्लोकः। अत्र निदर्शनमित्येतच्च शुष्किकेत्यादिभिः प्रत्येकमभिसम्बध्यते। झलाञ्जश्त्व इति। अत्राप्यसिद्ध इति वृत्तभङ्गभयान्नोक्तम्। अनुक्तमपि प्रकरणेन ज्ञायते। शुष्किकेति। शुष शोषणे इत्येतस्मात् क्तप्रत्ययः। शुषः क इति (८।२।५१) कादेशः। टाप्। अज्ञातार्थे प्रागिवात् कः (५।३।७०)। केऽण इति ह्रस्वत्वम् (७।४।१३)। ततष्टाप्। प्रत्ययस्थात् कादित्यादिना ७।३।४४) नित्यमित्त्वं भवति। नतूदीचां मित्यादिना (७।३।४६) पाक्षिकम्। शुषः क इत्यस्यासिद्धत्वात्। शुष्कजङ्घेति। शुष्के जङ्घे अस्या इति बहुव्रीहिः। न कोपधाया इति (६।३।३७) पुंवद्भावनिषेधो न भवति। शुषः क इत्यस्यासिद्धत्वादिति प्रकृतेन सम्बन्धनीयम्। ननु च सत्यप्यसिद्धत्वे नैवात्र पुंवद्भावप्रतिषेधो न प्राप्नोति। कोपधप्रतिषेधे तद्धितवुग्रहणं कर्त्तव्यमिति (६।३।३७, वा) वचनात्। न। वाक्यकारमतमेतत्। सूत्रकारमतेन तु श्लोकवार्त्तिककारेण च न चात्रैतत् प्रयोजनमुपन्यस्तम्। एतयोर् हि सामान्येन कोपधप्रतिषधोऽभिमतः। क्षामिमानिति। क्षै जै षै क्षये। आदेच उपदेशेऽशितीत्यात्त्वम् (६।१।४५)। क्षायो म इति (८।२।५३) निष्ठातकारस्य मकारः। क्षामइति स्थितेऽत इञितीञं (४।१।९५) कृत्वाऽत इनिठनाविनीनिप्रत्ययं (५।२।११४) वा कृत्वा मतुप् कर्त्तव्यः। वोढेरित्यादि। वह प्रापणे इत्येतस्मान्निष्ठा। संप्रसारणम् (६।१।१५)। हो ढइति (८।२।३१) ढत्वम्। झषस्तथोर्धोऽध इति (८।२।४०) धत्वम्। ष्टुना ष्टुरिति (८।४।४२) ष्टुत्वम्। ढो ढे लोप इति (८।३।१३) ढलोपः। ढ्रलोपे पूर्व्वस्य दीर्घोऽण इति दीर्घः (६।३।१११)। ऊढइति स्थिते तमाचष्ट इति णिच्। णाविष्ठवत् कार्य्यं प्रातिपदिकस्येतीष्टवद्भावाट्टिलोपः (६।४।१५५,वा)। तदन्ताल्लुङ्। णिश्रीत्यादिना (३।१।४८) चङ्। अत्र ढत्वष्टुत्वादीनामसिद्धत्वाद् योऽसौ णौ टिलोप स्तस्य णौ कृतं स्थानिवद् भवतीति स्थानिवद्भावाच्चङी-( ६।१।११ ) त्यजादे द्वितीय-

स्येति (C) (६।१।२) ह्न त इत्येतस्य द्विर्वचनम्। कुहोश्चुरिति (७।४।६२) चुत्वं महाप्राणस्य हकारस्य स्थाने महाप्राणएव झकारः। अभ्यासे चर्चेति (८।४।५४) झकारस्य स्थाने जकारः। आड़जादीनामित्याट् (६।४।७२)। आटश्चेति (६।१।९०) वृद्धिः। अथ सन्वल्लघुनि चङ्परइति सन्वद्भावः (७।४।९३) कस्मान्न भवतीत्याह अनग्लोप इत्यादि। यदि तर्ह्यनग्लोप इति प्रतिषेधात् सन्वद्भावो न भवति तदौजढ़दिति न सिध्यतीत्याह औजढ़दित्यादि। गुड़लिड़्मानिति। गुड़ं लेढ़ीति क्विप्। तदन्तान्मतुप्। पूर्ववड् ढत्वम्। झलाञ्जशोऽन्त इति (८।२।३९) जश्त्वं ढकारस्य डकारः। मतोर्वत्वे कर्त्तव्ये ढत्वजश्त्वयोरसिद्धत्वाज् झयइति (८।२।१०) वत्वं न भवति। कारिकायां झलां जश्त्वग्रहणमुपलक्षणार्थं निदर्शन मिति। अनेनैतत् दर्शयति निदर्शनमेतच्छुष्किकादीनाम्। नतु परिगणनमिति। यदि हि सपादायां सप्ताध्याय्यां कर्त्तव्यायां पादोनोऽध्यायोऽसिद्ध इत्युच्यते तदा यद्दह षष्ठीनिर्द्देशसप्तमीनिर्देशपञ्चमीनिर्द्देशाः क्रियन्ते तेऽप्यसिद्धाः स्युः। ततश्च संयोगान्तस्य लोप (८।२।२३) इत्यत्र षष्ठीनिर्देशस्यासिद्धत्वात् षष्ठी स्थानेयोगेत्येषा (१।१।४९) नोपतिष्ठेत। एवञ्च सामीप्ययोगाप्येषा षष्ठी स्यात्। ततः संयोगान्तसमीपो यस्तस्यापि लोप आपद्येत। झलो झलीत्यत्रापि (८।२।२६) सप्तमीनिर्देशस्यासिद्धत्वात् तस्मिन्निति निर्द्दिष्टे पूर्वस्ये-(१।१।६६) त्येषा परिभाषा नोपतिष्ठेत। तथाच पूर्वस्यैवानन्तरे भवितव्यमिति नियमस्याभावात् सामान्येन पूर्व्वस्य परस्य वानन्तरे व्यवहिते झलि लोपः। रुस्सादङ्गादित्या-(८।२।२९) दावपि पञ्चमीनिर्द्देशस्यासिद्धत्वात् तस्मादितुयत्तरस्ये-(१।१।६७) त्यस्योपस्थानं न स्यात्। ततश्चानियमात् पूर्वस्य परस्य वानन्तरस्य व्यवहितस्य च लोपः प्रसज्येतेत्यत आह येऽत्र षष्ठीनिर्द्देशा इत्यादि। किं पुनः कारणमसिद्धत्वं न भवतीत्याह कार्य्यकालं हीत्यादि। यदि हि यथोद्देशं संज्ञापरिभाषं (प,२) स्याद् एवमासां परिभाषाणां पूर्वत्वे सति पष्ठीनिर्देशादीनामसिद्धत्वं न स्यात्। न तु यथोद्देशं संज्ञापरिभाषम्। किं तर्हि? कार्य्यकालं संज्ञापरिभाषम् (प,३)। कार्य्यकालाः कार्य्यप्रयुक्ता हि संज्ञाः परिभाषाश्च। तस्माद् यत्र कार्य्यं तत्रैव ताः प्रयुज्यन्ते। तेन ता उपदेशएव। अतो निर्द्देशैरभिन्नदेशत्वात् परिभाषाणामत्र पूर्वत्वं नास्ति। ततः कुतस्तासु कर्त्तव्यासु तेषामसिद्धत्वप्रसङ्गः? यदि कार्य्यकालं संज्ञापरिभाषं (प,३) विप्रतिषेधे परं कार्य्य (१।४।२) मितेयषात्रोपतिष्ठेत।

---

(C) जह् त इति स्थित इति शेषः।

तत्र को दोषः ? स्फुर स्फुल सञ्चलने। गुरी उद्यमने। आभ्यामृहलोर्ण्यदिति (३।१।१२४) ण्यति कृते विस्फोर्य्यमवगोर्य्यमिति न सिध्येत्। अस्या हि परिभाषाया उपस्थाने गुणं परत्वाद्बाधित्वा हलि चेति ( ८।२।७७ ) दीर्घत्वं प्राप्नोतीत्यत आह विप्रतिषेधे परमित्येषा त्वित्यादि। विप्रतिषेधे परमित्येषा परिभाषात्र (१।४।२) न प्रवर्त्तत इति प्रकृतेन सम्बन्धः। कस्मान्न प्रवर्त्तत इत्याह येनेत्यादि। द्वयो र्हि तुल्यबलयो र्विप्रतिषेधो भवति। इह तु येन पूर्वेण लक्षणेन पुगन्तस्येत्यादिना ( ७।३।८६ ) सह परं लक्षणं स्पर्द्धते तदप्यभिभवितुमिच्छति परं लक्षणं हलि चेत्यादिकम्। तत् पूर्वं प्रति तस्यासिद्धत्वम्। अतोऽतुल्यबलत्वाद्विप्रतिषेधो नास्तीति विप्रतिषेधे परमित्येषा (१।४।२) परिभाषा न प्रवर्त्तते। तथा चेत्यादि। एवमस्याः परिभाषाया अप्रवृत्तौ सत्यामित्यर्थः। यदि तर्हि पूर्वस्मिन् कार्य्ये कर्त्तव्ये परमसिद्धं भवत्येवं सत्युत्सर्गे कर्त्तव्ये परस्यापवादस्यासिद्धत्वं स्यात्। ततश्च दोग्धा दोग्धुमित्यत्र दादेर्धातोर्घ ( ८।२।३२ ) इति घस्यासिद्धत्वाड् ढत्वं स्यादित्यत आह अपवादस्य त्वित्यादि। यद्यप्यपवादविषयस्यापि परस्योत्सर्गे कर्त्तव्येऽसिद्धत्वं स्यान् निर्विषयत्वाच्चापवादवचनस्य वैयर्थ्यं स्यात्। अतोऽपवादस्य परस्यापि वचनप्रामाण्यादसिद्धत्वं न भवति। ननु च वचनप्रामाण्यात् पर्य्यायेण तयोर्भावः स्यात्। तत् कुतो वैयर्थ्यप्रसङ्गः ? नैतदस्ति। यद्यपवादस्य पर्य्यायता स्याद् वा द्रुहमुहेति ( ८।२।३३ ) विकल्पेन घत्वविधानमनर्थकं स्यात्।

## २। नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति।

कृतीत्येतदनन्तरोक्तेन तुग्ग्रहणेनैव सम्बध्यते। न तु सर्वैः सुबादिभिः। अन्यथा यथा विधिशब्दस्य प्रत्येकं विधिसम्बन्धो दर्शित स्तथास्यापि सम्बन्धं दर्शयेत्। इहायं विधिशब्दः सुबादिभिः सम्बध्यमानो भावसाधनो वा सम्बध्येत कर्म्मसाधनो वा ? तत्राद्ये पक्ष आश्रीयमाणे राजभिस्तक्षभिरित्यत्रैस्भावे कर्त्तव्ये नलोपस्यासिद्धत्वं न प्राप्नोति। भावसाधने हि यत्रासतो विधानं तत्रासिद्धत्वेन भवितव्यम्। न तु सतः। न चात्रासतः सुपो विधानम्। किं तर्हि ? सतएव। यतस्तस्य स्थान ऐस्भावस्य राजभ्यां राजभ्य इत्यत्रापि सुपि चेति दीर्घत्वे (७।३।१०२) बहुवचने झल्येदित्येत्त्वे च ( ७।३।१०३ ) कर्त्तव्ये नैवासिद्धत्वं प्राप्नोति। यस्मादिह सुपि परतो दीर्घत्वस्यैत्त्वस्य च विधानम्। नत्वसतः सुपः। इतरस्मिंस्तु पक्षे स्वरसंज्ञातुकामसतामेव विधानेन लोपस्यासिद्धत्वमिष्यते। एतच्च न सिध्यति।

कर्मसाधने हि विधिशब्दे तैः सम्बध्यमाने सतामेव तेषामन्यस्मिन् कार्य्ये विधीयमाने सत्यसिद्धत्वेन भवितव्यम्। नतु तेषामसतां विधानेन तु शक्यते वक्तुं सुपा कर्मसाधनः सम्बध्यते स्वरादिभिश्च भावसाधनइति। एको ह्ययं विधिशब्दः सूत्रोपात्तः। स च भावसाधनो वा स्यात् कर्मसाधनो वेति। नतूभयसाधनः। नह्येकस्योभयसाधनत्वमुपपद्यत इत्येतच्चोद्यमपाकर्त्तुमाह विधिशब्दोऽयमित्यादि। यद्येष विधिशब्दः सुप्स्वरादिभिः समुदायेन सम्बध्यते तदा स्यादयं दोषः। नच समुदायेन सम्बध्यते। किं तर्हि? सुबादिभिः प्रत्येकम्। प्रत्येकञ्चास्मिन् सम्बध्यमाने यावद्भिः सहायं सम्बध्यते तावन्त्येव स्वरादिविधौ नलोपोऽसिद्धो भवतीत्येवमादीनि वाक्यानि भवन्ति। नलोपः सुप्स्वरसंज्ञातुग्विधिष्वेतद्ग्रहणकवाक्यं तेषामिव निबन्धनम्। तेषु च भिन्नेषु वाक्येषु विधिशब्दोऽपि भिन्न एव। तत्र कश्चिद् भावसाधनः कश्चित् कर्मसाधनः। तत्र स्वरसंज्ञातुकामसतामेव विधाने कर्त्तव्ये नलोपस्यासिद्धत्वमुच्यते। तेन च ते विधीयमानत्वात् कर्मभावमापद्यन्ते। ततो भावसाधनेन विधिशब्देन कर्मणोऽनभिहितत्वादेषु कर्तृकर्मणोः कृतीति (२।३।६५) षष्ठ्या भवितव्यम्। तेन तैः कर्मषष्ठीयुक्तैर्भावसाधनोऽभिसम्बध्यते। सुपा च सम्बन्धसामान्यवचनषष्ठ्यन्तेन। कर्मसाधनइति। सुपो विधीयमानेन कार्य्येण सम्बन्धमात्रम्। सम्बन्धसामान्ये षष्ठी तु यत्र शेषइति (२।३।५०) षष्ठी विधीयते तत्र वेदितव्यम्। सम्बन्धसामान्यस्य वचनीति षष्ठीसमासः। सा चासौ षष्ठी चेति विशेषणसमासः। सम्बन्धसामान्यवचनषष्ठी अन्ते यस्य सुपः स तथोक्तः। कर्मषष्ठीयुक्तेन सुपा कर्मसाधनस्य विधिशब्दस्य सम्बन्धो नोपपद्यते। कर्मषष्ठ्यनुपपत्तेः। यदि हि सुप् कर्म स्यात् तत्र कर्मणि षष्ठी स्यात्। नचासौ सुप् कर्म। सुपो विधीयमानत्वात्। तत् तु तत्सम्बन्धिकार्य्यम्। विधीयमानत्वात् कर्म तद्विधिशब्देनोक्तम्। अत स्तत्रापि तावत् कर्मषष्ठी न सम्भवति। किंपुनरकर्मणि सुप। तेनेत्यादि। यस्मात् सम्बन्धमात्राभिधायिनी या षष्ठी तदन्तेन सुपा कर्मसाधनो विधिशब्दः सम्बध्यते तेन हेतुना सुपःस्थाने यो विधिर्भिस ऐस्भावः सुपि परतो यो विधिर्दीर्घत्वादि र्यस्य सुब् निमित्तं भर्वोऽसौ सुपसम्बन्धो भवताति सर्वत्राप्यसिद्धत्वं भवति। ननु च षष्ठीस्थाने योगेति (१।१।४९) वचनात् सम्बन्धविशेषे षष्ठ्या भवितव्यम्? नतु सम्बन्धसामान्ये। ततश्च सुप एव स्थाने यत् कार्य्यं तत्रैवासिद्धत्वं स्यात्। नान्यत्र। नैतदस्ति। यत्र ह्यादेशो विधीयतेऽस्तेर्भूरित्येवमादौ (२।४।५२) तत्रास्याः

परिभाषाया व्यापारः। ननु यत्र लक्षणान्तरेण विहितं कार्य्यं कार्य्यान्तरार्थ-मुपादीयते तत्रापि। अन्यथोदीचामातः स्थाने यकपूर्वाया ( ७।३।४६ ) इत्यत्र स्थानग्रहणमनर्थकं स्यात्। अनयैव परिभाषया ऽतःस्थाने योऽकारस्तस्य ग्रहणं भवति। ननुचेह सुपामादेशो न विधीयते। किं तर्हि ? लक्षणान्तरविहितस्यापि सिद्धत्वम्। तस्मान्नात्र स्थानेयोगपरिभाषाया (१।१।४९) व्यापारः। राजवतीत्यादि। राजशब्दान्मतुप्। उगितश्चेति ( ४।१।६ ) ङीपि कृतेऽन्तोऽवत्या ( ६।१।२२० ) इत्यन्तोदात्तत्वं प्राप्नोति। नलोपस्यासिद्धत्वान्नायमवतीशब्द इति न भवति। तस्मिन्नसति कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिव ( उण्, १।१५४ ) इति राजन्शब्दस्य कनिन्प्रत्ययान्तस्य नित्स्वरेणाद्युदात्तत्वाद् राजवतीशब्द आद्युदात्त एव भवति। पञ्चार्म्मं दशार्म्ममिति। दिक्संख्ये संज्ञायामिति ( २।१।५० ) समासः। अत्र नलोपे कृते ऽवर्णान्तं पूर्वपदंजातमित्यर्म्मे चावर्णमि-( ६।२।९० ) त्यादिना सूत्रेण तस्याद्युदात्तत्वं प्राप्नोति। असिद्धत्वान्न भवति। समासान्तो-दात्तत्वमेव ( ६।१।२२३ ) भवति। पञ्चदण्डीति (D)। पञ्चानां दण्डिनां समाहारइति तद्धितार्थेत्यादिना ( २।१।५१ ) समासः। समाहारे द्विगुः। स नपुंसक ( २।४।१७ ) मिति नपुंसकत्वम्। नलोपे कृत इगन्तता जातितौगन्त-कालकपालभगालशरावेषु द्विगाविति ( ६।२।२९ ) पूर्वपदस्य प्रकृतिस्वरः प्राप्नोति। नलोपस्यासिद्धत्वान्न भवति। समासान्तोदात्तत्वमेव भवति। तदेत-दित्यादि। इह केषाञ्चिदेकयैव संज्ञयाऽनेकसंज्ञाकार्य्यं क्रियते। यावन्ति संज्ञा-कार्य्याणि तत्रैकैव संज्ञा प्रवर्त्ततइति दर्शनम्। अन्येषान्तु यया संज्ञयैककार्य्यं क्रियते तयैवान्यत्। अतो यावन्ति संज्ञाकार्य्याणि तावन्त्येव संज्ञाः प्रवर्त्तन्त-इति दर्शनम्। तत्र पूर्वस्मिन्दर्शने नेदं प्रयोजनम्। ययैव हि प्राक् प्रवृत्तया संज्ञया षड्भ्यो ( ७।१।२२ ) लुगिति जश्शसोर्लुक्कार्य्यं कृतं तयैव हि टाप्-प्रतिषेधो भविष्यति। तस्मादितरस्मिन् दर्शने तत् प्रयोजनं भवति। अत्रापि कथमेतत् प्रयोजनं भवतीत्याह या हीत्यादि। हिशब्दो यस्मादर्थे। इतिकरण स्तस्मादर्थे। यस्माज् जश्शसोर्लुगर्था या षट्संज्ञा प्रवृत्ता तया स्त्रीप्रत्यय-प्रतिषेधो न भवति तस्मात् पुनः सा प्रवर्त्तयितव्या। यस्मात् सा प्रवर्त्तयितव्या तस्मादेतत् प्रयोजनमित्यर्थः। वृत्रहभ्यां वृत्रहभिरिति। वृत्रं हतवानिति ब्रह्मभ्रूणवृत्रेषु क्विप् (३।२।८७)। तदन्ताद् भ्याम्भिसौ। तत्र नलोपे कृते ह्रस्वस्य

(D) मुद्रितकाशिकायां पञ्चवीजीत्युदाहरणम्। पदमञ्जर्याञ्च पञ्चदण्डीति।

पिति कृति (६।१।७१) तुक् स्यात्। असिद्धत्वान् न भवति। अत्र केचिदित्यादि। सन्निपात आनन्तर्य्यम्। तल्लक्षणं निमित्तं यस्य स तथोक्तः। सुपः सन्निपातेन नलोपः। स यदि तुकं प्रवर्त्तयेत् तत् सन्निपातं विहन्यात्। अनिमित्तञ्च। सन्निपात-लक्षणो विधिरनिमित्तं तद्विघातस्येति (प,८६)। तस्माद् नलोप स्तुकं न प्रवर्त्तयतीति तुग्ग्रहण मनर्थकम्। ननुच तुकः पूर्व्वान्तत्वात् तुक् प्रातिपदिकग्रहणेनैव गृह्यते। तत् कुतस्तस्य सन्निपातस्य विघातः? नहि स्वावयवेनैव स्वस्य व्यवधानमुप-पद्यते। नैतदस्ति। कृत्स्नो ह्यागमो तुकः। न तदन्तः समुदायः। तत् कुतस्तस्य प्रातिपदिकग्रहणेन ग्रहणम्? बहिरङ्गलक्षणेन वासिद्धत्वात् तुकं प्रति नलोपस्य तुग्विधिग्रहण मनर्थकम्। पदस्य बाह्यविभक्तिप्रत्ययमाश्रित्य नलोपो विधीयतइति तस्य बहिरङ्गत्वम्। अन्तर्वर्त्तिनं पदमाश्रित्य वर्णस्य तुग् विधीयतइति तस्यान्तरङ्गत्वमिति। असिद्धं बहिरङ्गमन्तरङ्ग इति (प,५०)। यद्येवं युक्तमेवेति प्रतिपन्नाः। तत् किमर्थं तुग्ग्रहणं क्रियत इत्यत आह तत् क्रियत इत्यादि। अनित्यत्वज्ञापने तु सन्निपातलक्षणपरिभाषायाः प्रयोजनं वृत्तायेत्यत्र सुपि चेति (७।३।१०२) दीर्घत्वसिद्धिः। अकारान्तता-सन्निपाते हि ङेर्यः (७।१।१३) विधीयतइति। तन्निमित्तत्वादिति। दीर्घत्व-निमित्तभावोपगमनद्वारेण तद्विघातं न कुर्य्यात्। अनित्यत्वात् तु करोति। अन्यच्चात्र प्रयोजनमुत्तरत्रैव वक्ष्यते। बहिरङ्गलक्षणपरिभाषया सुप्यनित्यत्वस्य ज्ञापन एषा द्वे इत्यत्र टाप्सिद्धिः। अत्र हि त्यदाद्यत्वस्य विभक्त्याश्रयत्वाद् बहिरङ्गत्वम्। प्रातिपदिकाश्रयत्वाट्टाबन्तरङ्गः। तत्र टापि कर्त्तव्ये त्यदाद्यत्व-स्यासिद्धत्वं स्यात्। ततष्टाम् न सिध्येत्। अनित्यत्वात् तु सिध्यति। प्रतिदीव्नेत्यत्र हलि चेति (८।२।७७) दीर्घत्वसिद्धिः प्रयोजनम्। असति तस्यानित्यत्वे हलि चेति दीर्घत्वे कर्त्तव्ये बहिरङ्गस्याल्लोपस्यासिद्धत्वाद् हलि परतो वकारान्तो धातु र्न भव-तीति दीर्घत्वं न स्यात्। अनित्यत्वात् सिद्ध्यति। राजीयतीति। सुप आत्मनः क्यजिति (३।१।८) क्यच्। क्यचि चेतीत्त्वम् (७।४।३३)। राजायतइति। कर्त्तुःक्यङ् सलोपश्चेति क्यङ् (३।१।११)। अकृत्सार्वधातुकयो-(७।४।२५) रिति दीर्घः। राजाश्वइति। अकः सवर्णे दीर्घः (६।१।१०१)।

## ३। न मु ने।

मु इत्यविभक्तिकोऽयन्निर्देशः। अमुनेति। अदसस्त्यदाद्यत्वम्। अदसोऽ-

मेर्दीदु दो म ( ८।२।८० ) इतुत्वमत्वे। अत्र घेरितग्रतो (७।३।११९) घेरितानुवर्त्तमान आङो नास्त्रिया मिति ( ७।३।१२० ) नाभाव:। यदि सुभावो नाभावे कर्त्तव्ये नासिद्धो भवतीत्येष सूत्रार्थ: स्यात्। एवं सति नाभावे कृते यत् कार्य्यं प्राप्नोति तत्र तस्यासिद्धत्वं न स्यात्। ततश्चामुनेत्यत्राकारान्तस्याङ्गस्य सुपि चेति ( ७।३।१०२ ) विधीयमानं दीर्घत्वं प्रसज्येतेत्यत आह कृते तु नाभावइत्यादि। कृत्स्वसन्निपातेन हि नाभावो कृत्स्वस्य विघातं प्रति निमित्तं न भवतीति सत्यप्यसिद्धत्वे न भवति दीर्घत्वप्रसङ्गः। अथवेत्यादि। यथैकेन हि कइतो धावतीति पृष्टोऽपरेणापि किंवर्णो धावतीति प्रश्ने कश्चिन्निपुणमतिस्तन्त्रेण वाक्यद्वय मुत्तरयति श्वेतो धावतीति तथेहापि योगद्वयमेतत् तन्त्रेणोच्चारितम्। तत्र द्वितीयस्य योगस्य ने परतो यत् प्राप्नोति तस्मिन् कर्त्तव्ये सुभावो नासिद्ध इतेत्रष सूत्रार्थ:। तेन दीर्घत्वं न भविष्यति। एकस्मिन्नेव योगे दीर्घत्वप्राप्ति मपाकर्त्तुमाह अथवेत्यादि। ननु चास्मिन् सूत्रार्थे ने कर्त्तव्ये सुभावस्य यत् सिद्धत्वं तत् सूत्रेण न संगृहीतं स्यात्। ततश्च नाभावएव तावन्न प्राप्नोति। कुत: पुन स्तस्मिन् परतो यत् प्राप्नोति तस्मिन् कर्त्तव्ये सुभावस्यासिद्धत्वमित्याह ने तु कर्त्तव्य इत्यादि। यथा पुत्रा मे बहुक्षीरघृत मोदनं सुवर्णपात्र्यां भुञ्जीरन्निति वरं प्रार्थयामानया वृद्धकुमार्य्या अर्थत:पति: पुत्रा गावो धनं संगृहीत मेवमिहापि ने परतो यत् कार्य्यं प्राप्नोति तस्मिन् कर्त्तव्ये सुभावस्य सिद्धत्वं ब्रुवता ने कर्त्तव्ये सुभावस्यासिद्धत्वं नाश्रितम्। (E) तेनेत्यादि। यस्मादेष एव वाक्यार्थो ने कर्त्तव्ये सुभावस्य यत् सिद्धत्वं तदर्थतो गृहीतं तेन हेतुना नाभावश्च भवति। दीर्घत्वञ्च न भवतीति। एकादेश इति। प्रातिपदिकान्तसप्तम्येकवचनयो-रुदात्तानुदात्तयोरिति। वृक्षशब्द: प्रातिपदिकस्वरेणान्तोदात्तइति तस्यान्तो योऽकार: स उदात्त:। सप्तम्येकवचनमनुदात्तौ सुप्पितावित्य( ३।१।४ ) नुदात्तम्। तयोराद् गुण ( ६।१।८७ ) इत्येकादेश आन्तरतम्यात् स्वरिते (F) प्राप्त एकादेश उदात्तेनोदात्त इत्युदात्त: ( ८।२।५ ) क्रियते। तस्य सिद्धत्वं वक्तव्यम्। किमर्थम्? आन्तर्य्यतोऽयादेश उदात्तो यथा स्यात्। असिद्धत्वे हि सति तस्य स एकादेश: स्वरित एवायादेशे कर्त्तव्ये स्यादिति तस्य स्थानेऽयादेश

---

(E) सुभावस्य सिद्धत्वमुक्तमिति महीशूरपुस्तके पाठ:। सुभावस्य सिद्धत्वमेवेति वरदापुस्तके पाठान्तरम्।

(F) उदात्तानुदात्तयो: समाहारेण स्वरितत्वादादेशस्य च स्थानेऽन्तरतमत्वात्। तथाच समाहार: स्वरित इति ( १।२।३१ )। स्थानेऽन्तरतम इति ( १।१।५० ) च।

आन्तर्य्यतः स्वरित एव प्रसज्येत। अन्तरङ्गत्वं पुनरेकादेशस्यान्तराश्रितत्वात्। आद् गुणो ह्यत्रान्तरङ्गः। एकपदाश्रितत्वात्। अयादेशस्तु बहिरङ्गः। तद् विपर्य्ययात्। कुमार्य्यादइदमिति। कुमारशब्दो वृत्तशब्दवदन्तोदात्तः। तस्माद् वयसि प्रथमइति (४।१।२०) ङीप्। यस्येति चेत्यकारलोपः (६।४।१४८)। अनुदात्तस्य च यत्रोदात्तलोपइतीकारस्योदात्तत्वम् (६।१।१६१)। चतुर्थ्येक-वचनम्। कुमारी ए इति स्थित आण् नद्या (७।३।११२) इत्याट्। यणादेशः (६।१।७७)। उदात्तयणो हल्पूर्वादिति (६।१।१७४) विभक्तेरुदात्तत्वम्। तच्चादिः (१।१।५४) परस्येति विभक्तिभक्तस्याट एव भवति। आट-(६।१।९०) श्चेति वृद्धिरेकादेशः। स च पूर्ववत् स्वरिते प्राप्त एकादेश उदात्तेनोदात्त (८।२।५) इत्युदात्तः क्रियते। तस्य सिद्धत्वं वक्तव्यं कुमार्य्यादइदमित्यत्रायादेश उदात्तो यथा स्यात्। अन्यथा हि पूर्ववत् स्वरितः स्यात्। यदीत्यादि। यदि पूर्वमुदात्तत्वं क्रियते पश्चादेकादेशो यथादर्शित मनन्तरायां रूपसिद्धावेवा-यादेशे कर्त्तव्ये सिद्धो भवतीति युज्यत इदमुदाहरणम्। अथ त्वित्यादि। कुमारी ए इति स्थित आट्। यणादेशः। तत्रैकादेश उदात्तयणो (६।१।१७४) हल्पूर्वादिति विभक्तिस्वर इति। यदि कृत एकादेशे विभक्तिस्वरः क्रियते तदा नैतदस्योपसंख्यानस्य प्रयोजनम्। अस्यां हि रूपसिद्धावेकादेशस्य यदुदात्तत्वं तस्यायादेशे कर्त्तव्ये सिद्धत्वादनेन प्रकारेणोपसंख्यानस्येदं प्रयोजनं न भवती-त्याचष्टे। युक्तञ्चैतत्। तथा ह्यन्तरङ्गत्वादेकादेशेनैव तावद् भवितव्यम्। पश्चाद्विभक्तिस्वरेण। वर्णं ह्याश्रित्यैकादेशो भवतीति तस्यान्तरङ्गत्वम्। उदात्तत्वं विभक्तेराश्रितत्वात् पदस्य भवतीति तस्य बहिरङ्गत्वम्। वृक्षाविदमिति। वृक्ष इदमित्येतदनुसारेणानुगन्तव्यम्। एकादेशः। पुनरत्र वृद्धिरेचीति (६।१।८८) वृद्धिः। प्रथमयोः पूर्वसवर्णदीर्घ (६।१।१०२) इत्येतत् तु न प्रवर्त्तते। नादिचीति (६।१।१०४) दीर्घप्रतिषेधात्। गाङ्गेऽनूपइति। गङ्गायां जातइत्यणि कृते प्रत्यय-स्वरेणान्तोदात्तो गाङ्गशब्दः। अनुगता आपोऽस्मिन्निति बहुव्रीहिः। ऊदनोर्देश इत्यूत्त्वम् (६।३।९८)। ऋक्पूरब्धूःपथामानक्षइत्यकारप्रत्यये (५।४।७४) कृते ऽनूपशब्दोऽपि प्रत्ययस्वरेणान्तोदात्तः। शेषमस्यानुदात्तम्। तस्य सिद्धत्वादिति। योऽसावेकारो गाङ्गशब्दे सप्तम्येकवचने परत आद् गुण इत्यने-(६।१।८७) नाभिनिर्वृत्तस्तस्य सिद्धत्वाद् यः पुनरेङः (६।१।१०९) पदान्तादतीत्येकादेशो-ऽनूपशब्दाकारेण सह स एकादेश उदात्तेनोदात्तइति (८।२।५) भवति। अतो

ह्रेतोः स्वरितो वानुदात्ते पदादाविति (८।२।६) पक्षे स्वरितो भवति। यदि पुनरसिद्धत्वं स्यात् तदासावेकार उदात्तानुदात्तस्थानित्वादान्तर्य्यतः स्वरितः स्यात्। यः पुनरेङः पदान्तादतीत्येकादेशः (६।१।१०९) स उदात्तेनानुदात्तस्य न भवतीति स्वरितो वानुदात्ते पदादाविति (८।२।६) पक्षे स्वरितो न स्यात्। अपितु स्वरितानुदात्तयोः स्थाने भवन्नान्तरतम्यान्नियमेन स्वरितः स्यात्। शतृस्वरइति। अत्राश्रयः स्वरइति शाकपार्थिवादित्वादुत्तरपदलोपी समासः (२।१।६९, वा)। तुदती नुदतीति। तुदिनुदिभ्यां लट्। तुदादित्वाच्छः। स च प्रत्ययस्वरेणान्तोदात्तः। लसार्वधातुकस्यानुदात्ते कृतेऽतो गुणे (६।१।९७) पररूपत्वमेकादेशः। स चैकादेश उदात्तेनोदात्त इत्युदात्तः (८।२।५)। तदुदात्तस्य सिद्धत्वात्। अन्तोदात्तादुत्तरपदादित्यन्तोदात्तादित्यनुवर्त्तमाने (६।१।१६९) शतुरनुमो नद्यजादिरिति (६।१।१७३) शत्रन्तादन्तोदात्तादीकारस्योदात्तत्वं भवति। असिद्धत्वे त्वेकादेशेऽस्योदात्तत्वं न स्यात्। आन्तोदात्तादित्यधिकारात् (६।१।१६९)। अनुमइत्यादिना ज्ञापकमाश्रित्यैतत् प्रयोजनमपाकरोति। कथं पुनरेतज् ज्ञापकमित्याह नह्वीत्यादि। हिशब्दो हेतौ। अनुमइति प्रतिषेधस्यैतत् प्रयोजनम्। तुदन्ती नुदन्तीत्यत्राच्छीनद्योर्नुमिति (७।१।८०) नुमि कृते सनुम उदात्तत्वं मा भूदिति। यदि च शतृस्वरयैकादेशस्वरोऽसिद्धः स्यात् प्रतिषेधस्य वैयर्थ्यं स्यात्। यस्मादेकादेशस्वरमन्तरेण नास्ति शतुरन्तोदात्तत्वम्। अतः प्रतिषेधादवसीयते सिद्ध एकादेशस्वरः। नहि एकादेशस्वरमन्तरेण शत्रन्तं सनुम्कं किञ्चिदन्तोदात्तमस्ति। (G) तस्मादनुमइति प्रतिषेधवचनं ज्ञापकमेव। तुदन्ति लिखन्तीति। अत्रापि पूर्ववल्लसार्वधातुकानुदात्तत्वे कृत उदात्तानुदात्तयोरेकादेश उदात्तः। तेनेति। एकादेशस्वरेण सिद्धेन। वर्ज्यमानतेति। अनुदात्तं पदमेकवर्जमित्येषोऽर्थोऽनेन (६।१।१५८) लक्ष्यते। एकं वर्जयित्वा शेषस्यानुदात्तत्वं भवतीत्यर्थः। यदि पुनरसिद्धत्वं स्यादनुदात्तं पदमेकवर्जम् (६।१।११८) मित्यस्मिन् कर्त्तव्ये सत्येकादेशस्वरस्यासिद्धत्वादसत्याञ्च वर्ज्यमानतायां द्वयोरुदात्तयोः श्रवणं प्रसज्येत। ननु चासिद्धवचनमुत्सर्गलक्षणभावार्थमित्युक्तम्। अस्य च स्थानी स्वरितः। तथाह्यतो गुणे पररूपत्व इत्यनेनैवा-

---

(G) अतोऽत्र मा भूदित्येवमर्थादनुमइति प्रतिषेधः स्यात्। नैतदस्ति। अत्रापि हि परत्वादनुदात्तं पदमेकवर्जमिति (६।१।१५८)। धातोस्तूदात्ते कृत उदात्तानुदात्तयोरेवैकादेशः। स चैकादेश उदात्तेनोदात्त इत्यनेनैवोदात्तो (८।१।५) भवतीति द्वितीयमहीशूरपुस्तकेऽधिकः पाठः।

नाश्रितो यो विहितः स्वरितस्तस्य स्थान एकादेश उदात्तेनोदात्त (८।२।५) इत्यनेनोदात्त आदेशो विधीयते। तत्र यद्युदात्तस्यादेशस्यासिद्धत्वात् तन्निमित्ता वर्ज्यमानता न भवति मा भूत्। यस्त्वस्य स्वरितस्य स्थानी तन्निमित्ता भविष्यति। तत् कथमेतत् प्रयोजन मुपपद्यते? यथोपपद्यते तथाख्यायते। एकादेश उदात्तेनोदात्त (८।२।५) इत्यत्र चत्वारि दर्शनानि। आद् गुणइत्येव-(६।१।८७) मादिभिरुदात्तानुदात्तयोरेकादेश आन्तरतम्यात् स्वरितगुणयो र्निवृत्तः। तस्यैकादेश उदात्तेनोदात्त (८।२।५) इत्यनेन स्वरितस्य स्थान उदात्तगुण आदेशो विधीयत इत्येकं दर्शनम्। स्वरितगुणस्यैवाभिनिर्वृत्तस्य गुणान्तरापत्तिद्वारेण शब्दान्तरं प्रतिपद्यतइति द्वितीयम्। परिभाषेयमनुदात्तानुदात्तयोरेकादेश उदात्तइति तृतीयम्। अस्मिन् दर्शने परिभाषायाः पराङ्गभूतत्वादेकादेशशास्त्रैः सहास्यैकवाक्यता भवति। तत्रायमर्थः संपद्यते। आद् गुणो भवति। उदात्तानुदात्तयोस्त्वाद् गुण उदात्तो भवतीति। चतुर्थं तु दर्शनमुदात्तानुदात्तयो र्य एकादेशः स उदात्तो भवति। न स्वरितगुणयुक्तइति स्वरितस्यापवादभूतस्तूदात्तत्वमारभ्यते। येन नाप्राप्तन्यायेनेदं (प,५४) दर्शनमाश्रित्येदं प्रयोजन मुपन्यस्तम्। उपपद्यते च तदेतस्मिन् दर्शने। अत्र हि नाम विधानसमकालमेवोदात्तत्वं विधीयते। नतु स्वरितगुणविहितस्य पुनरुदात्तत्वगुण आदेशइति न सम्भवति स्वरितेन स्थानिना वर्ज्यमानता। एकादेशस्वरस्य सिद्धत्वात्। कृते तस्मिन् तिङ्ङतिङइति (८।१।२८) निघातइति। असति तु तस्य सिद्धत्वे पश्चादेकादेशस्वरः स्यात्। ततश्च मध्योदात्तता प्रसज्येत। पचतीति। अत्र तिशब्दे यइकारः स सतिशिष्टत्वादनुदात्तः। इतिशब्दो निपाता आद्युदात्ता (फिट्, ४।७९) इत्याद्युदात्तः। तयोरकः सवर्णदीर्घत्वमेकादेशो द्विपदाश्रयत्वाद् बहिरङ्गः। तस्य बहिरङ्गत्वात् तदाश्रयोऽपि स्वरो बहिरङ्गः। तत इकारस्यासिद्धत्वमेव भवति। ततश्च तेनानुदात्तं पदमेकवर्जमिति (६।१।१५८) वर्जमानता न भवति। प्रपचतीति। अत्रापि बहिरङ्गत्वेनासिद्धत्वात् तिङि चोदात्तवतीति (८।१।७१) गतेरनुदात्तत्वं न भवतीति। तिङ्ङतिङ (८।१।२८) इति निघातएवात्र भवति। हरिवो मेदिनमिति। हरिशब्दान् मतुप्। सुः। नुम्। हल्ङ्यादि (६।१।६८) लोपः। संयोगान्तलोपश्च। तस्मिन् कृते रुत्वम्। हशि चेत्यस्योत्वम् (६।१।११४)। आद् गुणः (६।१।८७)। संयोगान्तलोपस्यासिद्धत्वाद् हशि चेतुरुत्वं (६।१।११४) न प्राप्नोतीति। संयोगान्तलोपस्यासिद्धत्वे सति तकारेण

इणो मकारस्य व्यवधानात्। तकारस्याङ्गत्वात्। अलावीदिति। लुङ्। च्लेः सिच् (३।१।४४)। इट्। अस्तिसिचोऽपृक्तइतीट् (७।३।९६)। सिजवृद्धिः। इटइटीति (८।२।२८) सिचो लोपेऽकः सवर्णदीर्घत्वम्। वृक्णः। वृक्णवानिति। ओव्रश्चू छेदने। निष्ठा। ग्रहिज्येतिसूत्रेण (६।१।१६) संप्रसारणम्। चोः कुरिति (८।२।३०) कुत्वम्। ओदितश्चेति (८।२।४५) नत्वम्। अट्कुप्वाङिति (८।४।२) णत्वम्। षत्वे चासति स्कोः संयोगाद्योरिति (८।२।२९) सलोपः कुत्वं प्रत्यसिद्ध एवेति षत्वस्वरप्रत्ययविधीड्विधिग्रहणस्य व्यावर्त्त्यं दर्शयति। स्वरप्रत्ययविधीड्विधिषु क्षीबशब्द उदाह्रियतइति। कथं पुनस्त्रिषु विधिषु क्षीबशब्द एक एवोदाहरणमुपपद्यत इत्याह तत्रेत्यादि। अनुपसर्गात् फुल्लक्षीबेत्यत्र (८।२।५५) क्षीबृ मद इत्यस्मात् क्तप्रत्यये परभूते क्षीबशब्दो निपातितः। तत्र चानेकप्रकारं निपातनमाश्रितम्। तत्र क्वचिन्निपातने प्रत्ययविधौ स्वरविधौ च क्षीबशब्द उदाह्रियते। क्वचिदिड्विधौ। कथमित्याह यदित्यादि। संज्ञायामित्यादिग्रहणं संज्ञायामुपमानमित्यतः (६।१।२०४) संज्ञाग्रहणानुवृत्तेः। एष स्वरइति। आद्युदात्तः। तत्र हि कर्षात्वतो घञोऽन्त उदात्तइत्यत (६।१।१५९) उदात्तग्रहणमनुवर्त्तते। उनित्यादिर्नित्यमित्यत (६।१।१९७) आदिग्रहणञ्च प्राप्नोतीति। इच्छब्दलोपस्यासिद्धत्वे सति क्षीबशब्दस्या द्व्यच्कत्वात्। नह्नीच्छब्दलोपस्या सिद्धत्वे सति क्षीबशब्दा द्व्यच्को भवति। किं तर्हि? त्र्यच्कः। क्षीबिकइति। नोद्व्यचष्ठन् (४।४।७)। इडागमः प्राप्नोतीति। तकारलोपस्यासिद्धत्वे सति। आर्धधातुकस्य वलादित्वात्। अग्ना३ इच्छत्रमिति। पटा३ उच्छत्रमिति। अग्निपटुशब्दयोः सम्बुद्धौ ह्रस्वस्य गुणे कृत एङ्ह्रस्वात् सम्बुद्धेरिति (६।१।६९) सम्बुद्धिलोप एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्द्धस्यादुत्तरस्येदुतावित्येकारौकारयोः (८।२।१०७) पूर्वस्यार्द्धस्याकारादेशः। स च पुनरुत्तरस्य च यथाक्रममिकारोकारौ। नित्यस्तुङ् न प्राप्नोतीति। नित्यश्चेष्यते। पदान्ताद्वेत्यनेन (६।१।७६) विकल्पेन प्राप्नोति। स चानिष्टः। तस्माद् तुग्विधौ प्लुतविकारः सिद्धो वक्तव्यः। क्व इति किम्? अन्यत्र तुग्विधौ प्लुतविकारस्यासिद्धत्वमेव यथा स्यात्। खलं पुनाति ब्राह्मणकुलमिति। क्विप्। ह्रस्वो नपुंसके प्रातिपदिकस्येति (१।२।४७) ह्रस्वत्वम्। खलपुइति स्थित आमन्त्रितैकवचनम्। स्वमोर्नपुंसकादिति (७।१।२३) तस्य लुक्। ह्रस्वस्य गुणः (७।३।१०८)। पूर्ववत् प्लुतविकारः। अस्यासिद्धत्वात् खलपुइत्यत्र ह्रस्वस्य पिति

कृति तुगिति (६।१।७१) तुग् न भवति। श्चुत्वं श्चुटीत्यादि। अट्श्चोतति रट्-
श्चोततीति। अट रट गतावित्याभ्यां क्विप्। सुः। हल्ङ्यादिलोपः (६।१।६८)।
झलाञ्जशोऽन्त इति (८।३।३९) टकारस्य डकारः। तस्मिन् श्चोततिशब्दे परतः
श्चुत्वस्यासिद्धत्वाद् धुड् न प्राप्नोति। तस्मात् श्चुत्वं धुट्त्वे कर्त्तव्ये सिद्धं वक्तव्यम्।
किमर्थम् पुनरयमित्यादि। नत्वस्य सकारस्य क्वचिच्छ्रवणमस्तीत्यभिप्रायः।
मधुश्च्यदिति। तत् करोति तदाचष्ट (३।१।२६, वा) इति मधुश्च्युतमाचष्टइति
णिचि कृते णाविष्ठवत् प्रातिपदिकस्येति (६।४।१५५ वा) णिलोपः। मधुश्च्यति-
स्थिते ण्यन्तात् पुनरपि क्विप्। णेरनिटीति (६।४।५१) णिलोपः। श्चुत्व
स्यासिद्धत्वात् स्कोः संयोगाद्योरिति (८।२।२९) सकारस्य संयोगाद्यस्य लोपः। ततः
संयोगान्तस्य लोप इति यलोपः (८।२।२३)। तत चोःकुरिति (८।२३०) कुत्वम्।
मधुगित्येतदिष्टरूपं भवति। तदर्थं सकारादिः पठ्यतेऽयमित्यभिप्रायः। स्यादेतत्।
शकारादावप्येतस्मिन्नेतद्रूपं भवत्येवेत्यत आह शकारादौ पुनरेतस्मिन्नित्यादि।
पूर्वं तावद् यकारस्य संयोगान्तस्य लोप इति (८।२।२३) लोपः। (H) लुप्ते यकारे
चकारः संयोगान्तो जात इति तस्यापि लोपः। ततः शकारस्य व्रश्चादिसूत्रेण
(८।२।३६) षत्वे सति झलां जशोऽन्त इति (८।२।३९) षकारस्य डकारे
मधुड़ित्यपि नित्यं स्यात्। बभणतुर्बभणुरिति। अण रण भणेत्यस्माल् लिट्।
तस्य तावद्द्विर्वचनेऽभ्यासे चर्चे इति (८।४।५४) जश्त्वं बकारः। तस्यासिद्धत्वा-
दनादेशादिरेवायमित्यत एकहल्मध्येऽनादेशादेर्लिटीत्येत्त्वं (६।४।१२०) प्राप्नो-
तीति। विचिच्छित्सतीति। छिदेः सन्। द्विर्वचनञ्छिदित्यस्य। अभ्यासे चर्चेति
(८।४।५४) चर्त्वं चकारः। तस्य सिद्धत्वादभ्यासे परे (I) चिशब्दस्य छे चेति
(६।१।७३) तुङ् न भवति। उचिच्छिषतीति। उछी विवासे। सन्। अजादेर्द्वितीय
(६।१।२) स्येत्युच्छेरन्तरङ्गत्वात् तुकि कृते त्छिस्शब्दो द्विरुच्यते। तत्र खर्-
पूर्वाः खय इति (७।४।६१, वा) छकारः शिष्यते। पूर्ववच्चर्त्वम्। तस्य सिद्धत्वा-
दुकारस्य तुङ् न भवति। संय्यन्ता सँव्वत्सर इत्यादि। समित्येतस्य
यन्तेत्येतस्मिन् परतो वत्सरशब्दे च परतो यँल्लोकं तँल्लोक मित्यत्रापि यत्तदो

---

(H) चिन्त्यमेतत्। संयोगान्तस्य लोपे यणः प्रतिषेध (८।२।२३, वा) इति वक्तव्यात्। श्चुतिर् चरण इति यकाररहितोऽयं धातुरिति केषाञ्चिन्मतम्। तत्र मधुग् मधुड़ित्यत्र न कश्चिद् दोषः।

(I) यदि ह्यभ्यासस्थचकारोऽवासिद्धः स्यात् पूर्वस्थे कृत्वान्न उपसर्गादौ पदे सति चकारस्य छकारत्वात् तुग्निवृत्तिर्न स्यादिति भावः।

द्वितीयैकवचनान्तयो र्लकिशब्दे परतो मोऽनुस्वारे ( ८।२।२३ ) तस्यानुस्वारस्य ययि परसवर्णं ( ८।४।५५ ) इति परसवर्ण आन्तर्य्यतः सानुनासिके ययि कृते तस्यासिद्धत्वाद् यरोऽनुनासिकेऽनुनासिको वेति ( ८।४।४५ ) वर्त्तमानेऽनचि चेति ( ८।४।४७ ) यरो द्विर्वचनं न प्राप्नोतीति। ततश्च पक्षे त्रयाणां यकारादीनां द्वित्वं न स्यात्। पदाधिकारश्चेदित्यादि। यदि लत्वादिषु पदस्येति ( ८।१।१६ ) नानुवर्त्तते तदा पदस्य द्विर्व्वचनमपदस्य द्विर्वचनेन तुल्यत्वाद् द्विर्वचनस्य बहिरङ्गत्वम्। लत्वादीनाञ्चान्तरङ्गत्वम्। असिद्धं बहिरङ्गमन्तरङ्ग इति ( प,५१ ) लत्वादिषु कर्त्तव्येषु द्विर्वचनस्यासिद्धत्वात् पूर्वत्रासिद्धमित्येतन्न ( ८।२।१ ) प्रवर्त्तते। ततश्च लत्वादिभिरेव तावद् भवितव्यम्। तेषु सत्सु पश्चाद् द्विर्वचनेनेति सिध्यत्येवेष्टम्। पदाधिकारे सति लत्वादीनामपि बहिरङ्गत्वादसत्या बहिरङ्गपरिभाषया ( प,५१ ) तेषु सत्सु द्विर्वचनं सिद्धम्। लत्वादय स्त्वस्मिन् कर्त्तव्येऽसिद्धाः। पूर्वत्रा-सिद्धत्वात् ( ८।२।१ )। ततश्च पूर्वं द्विर्वचने कृते पश्चाल्लत्वादिषु विधीयमानेषु परतश्चानिष्टमपि प्रसज्येत। तस्माद् यदि पदाधिकार स्ततो लत्वादीनि सिद्धानि वक्तव्यानि। गल्लो गल इति। गॄ निगरणे। नुन्न इति। नुदविदेत्यादिना (८।२।५६) नकारः। पक्षे तकारश्च। अभिनोऽभिन इति। भिदेर्लङ्। सिप्। श्नम्। हल्ङ्यादिलोपः ( ६।१।६८ )। सिपि धातो रुर्वा ( ८।२।७४ )। दश्चेति ( ८।२।७५ ) वा रुत्वम् पूर्व्ववदेव। अतो रोरप्लुतादप्लुत ( ६।१।११३ ) इत्युत्वम्। आद् गुणः ( ६।१।८७ )। मातुष्ष्वसा। पितुष्ष्वसेति। मातुः पितुर्भ्यामन्य-तरस्यामिति ( ८।३।८५ ) पक्षे षत्वम्। माषवापाणीति। वा भावकरणयो रित्यनुवर्त्तमाने ( ८।४।१० ) प्रातिपदिकान्तनुम्विभक्तिष्विति ( ८।४।११ ) पक्षे णत्वम्। वाङ्नयनमिति। यरोऽनुनासिकेऽनुनासिको वेति ( ८।४।४५ ) पक्षेऽ-नुनासिकः। वाकछयनमिति। झयो होऽन्यतरस्यामिति ( ८।४।६२ ) वर्त्तमाने शश्छोऽटीति ( ८।४।६३ ) वा छत्वम्। लत्वादीनामित्यादि। एतेनासिद्धत्वे सति लत्वादीनां यो दोषस्तं दर्शयति। लत्वादीनामसिद्धत्वात् पूर्वं द्विर्वचने कृते सतुत्तरत्र काले विकल्पविधित्वादयमर्थः प्रवर्त्तमानो यथा पूर्वत्र वर्त्तते तथा नियो-गतः परत्रापि न प्रवर्त्तेत इत्यनियोगो लभ्यते। नियमकारणाभावात्। ततश्चा-निष्टो विकल्पः स्यात्। पूर्वपरयोरेकत्र प्रवृत्तेरपरत्राप्यप्रवृत्तेः। नेष्टोऽनिष्टो विकल्पः। तथा सति गरो गलो गलो गर इत्येवमाद्यनिष्टमापद्यते। तत्र नेत्ये-तावदनिष्टविषये सूत्रं कर्त्तव्यम्। किमर्थम्? अनिष्टविषये पूर्वत्रासिद्धत्वस्य

प्रतिषेधार्थम्। यत्र पूर्वत्रासिद्धत्वं नेष्यते स पूर्वत्रासिद्धत्वस्यानिष्टविषयः। ततो मु न इत्येतदध्यत्र वचनेऽनुवर्त्तते। यद्येवं किमर्थमिदम्? पूर्वसूत्रेणैव सिद्धः प्रतिषेधः। सर्वत्र तत् सूत्रं नास्तीति ज्ञापनार्थम्। तेन यत्रासिद्धत्वमिष्यते तत्रैवासौ प्रवर्त्तते। तदन्यत्र विपर्य्ययस्तु न भवति। योगविभागादस्मिन् सूत्रे।

## ४। उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य।

उदात्तयणः स्वरितयणश्चेति। उभयत्रापि षष्ठीसमासः। उदात्तस्थाने यो यण् स उदात्तयण्। स्वरितस्थाने यो यण् स स्वरितयणित्यर्थः। कुमार्य्यौ। कुमार्य्य इति। अत्रानुदात्तौ सुप्पितावित्यौजसावनुदात्तौ (७।१।४)। तयो रुदात्तयणोः परयोः (J) स्वरितो भवति। उदात्तनिवृत्तिस्वरेणेति। उदात्तलोपनिमित्तस्वरः पूर्वमुदात्तस्य लोपो यस्मात् स पुनरुदात्तनिवृत्तिस्वरोऽनुदात्तस्य च यत्रोदात्तलोप (६।१।१६१) इत्यत्र यो विहितः स वेदितव्यः। कृत्स्वरेणान्तोदात्ताविति। स्वेरति प्वेरति लूपूभ्यां धातुस्वरेणान्तोदात्ताभ्यां क्विप्। उपपद मतिङ्ङिति (२।२।१९) समासः। गतिकारकोपपदात् कृदिति (६।२।१३९) कृदन्तस्योत्तरपदस्य प्रकृतिभावविधानादेतौ कृत्स्वरेणान्तोदात्तौ भवतः। उदात्तयणादेशश्चेति। इहानेन सूत्रेणानुदात्तस्यादात्तयणः परस्य स्वरितो विधीयते। स्वरितयणश्च परस्य सप्तम्येकवचनस्य पूर्वेण प्रकारेण स्वरितो विधीयतइति दर्शयति। तस्य यो यणिति। तस्येत्यनेन सप्तम्येकवचनस्य परामर्शः। आशाशब्दाकारस्यानुदात्तस्येति। आशाया अदिगाख्या चेदि त्याशाशब्द (फिट्, १।१८) आद्युदात्तः। तेनानुदात्तं पदमेकवर्जमित्याकारस्यानुदात्तत्वम् (६।१।१५८)। ननु चेत्यादि। सप्तम्येकवचनस्योदात्तयण इत्येवमनेन सूत्रेण यत् स्वरितत्वं विहितं तत् षाष्ठिकयणादेशे कर्त्तव्येऽसिद्धम्। ततश्च नैवायं स्वरितस्य स्थाने यणादेशइति सकृल्ल्वाशा खलप्वाशेत्यत्र स्वरितत्वं न भवतीत्यभिप्रायः। आश्रयादित्यादि। आहायं स्वरितयणइति। न क्वचित् सिद्धः स्वरितः। तत्राश्रयात् सिद्धत्वं भविष्यति यथात रोरप्लुतादप्लुत (६।१।११३) इत्यत्र रुत्वस्य। यद्येवमित्यादि। एतेनाश्रयात् सिद्धत्वे समाश्रीयमाणेऽतिप्रसङ्ग मुद्भावयति। दध्याशेति। दधिशब्दो नब्विषय-

(J) कुमारशब्दः प्रातिपदिकस्वरेणान्तोदात्तः। ङीप्, पित्त्वादनुदात्तः। वयसि प्रथमइति (४।१।२०) ङीपि यस्येति चेत्यनेन (६।४।१४८) कुमारशब्दान्तस्योदात्ताकारस्य लोपेनात्रोदात्तलोपः। तत एकादेश उदात्तेनोदात्त (८।२।५) इति कुमारीशब्दस्येकारस्योदात्तत्वम्। तत्स्थानिको यणुदात्तयणित्यर्थः।

स्थानिमन्तस्येत्याद्युदात्तः ( फिट्, २६ )। शेषस्यानुदात्तत्वम्। उदात्तानुदात्तस्य स्वरितइति (८।४।६६) धकारात् परस्यैकारस्य स्वरितत्वम्। तस्याश्रयात् सिद्धत्वे तत्स्थानिकाद् यण उत्तरस्याशाशब्दाकारस्य स्वरितत्वं स्यात्। तस्मादित्यादि। यत एवमाश्रयात् सिद्धत्व आश्रीयमाणेऽयमतिप्रसङ्गो भवति तस्मादयमेव यण्स्वरो योऽनेन सूत्रेण विधीयते ; तस्य यणादेशे कर्त्तव्ये सिद्धत्वं वक्तव्यम्। वक्तव्यमित्यस्य व्याख्यानमर्थः। तत् तु पूर्ववदेव योगविभागमाश्रित्य कर्त्तव्यम्। केचित्त्वित्यादि। यद्येवमित्यादिना योऽतिप्रसङ्गदोष उद्भावित स्तं केषाञ्चिन्मतेन परिहरति। अनिष्टेऽपि विषये प्रवृत्तिरतिप्रसङ्गः। नचोदात्तादनुदात्तस्य स्वरित ( ८।४।५६ ) इत्यनेनोदात्तात् परो यः स्वरितो विधीयते तस्याश्रयात् सिद्धत्वमनिष्टम्। यस्मादुदात्तात् परो यः स्वरितयण् तत्परस्यानुदात्तस्य स्वरितत्वम्। ततः स्थानित्वाद् यणः परस्याशाशब्दाकारस्य स्वरितत्वं तैत्तिरीयके शाखान्तरे पठ्यते। तदनुदात्तत्वं पुनरग्निशब्दस्याकारस्य। तस्य प्रातिपदिकस्वरेणान्तोदात्तत्वात्। तथा ब्राह्मणेऽपि। तदेकदेशविशेषो ब्राह्मणशब्देनेह विवक्षितः। दध्याशयतीति। अश्नोतेर्णिजन्तस्य धातुस्वरेण चित्स्वरेण वान्तोदात्तादाकारोऽनुदात्तः। तस्य स्वरितयणः परस्य ब्राह्मणे स्वरितत्वं पठ्यते। यथा त्वित्यादि। एतेन तमेवातिप्रसङ्गं समर्थयते। वार्त्तिककारेणोक्तमाश्रयात् सिद्धमिति चेदुदात्तात् स्वरिते दोषइति। अस्यायमर्थः। यद्याश्रयात् स्वरितस्य सिद्धत्वमुदात्तात् परो यः स्वरितस्तस्य यो यण् ततः परस्यानुदात्तस्य स्वरितत्व मिष्टं स्यात् तत्र दोषः। तेनानेन सूत्रेण स्वरितत्वं न भवतीति स्थितम्। अनेन हि वार्त्तिकेनोदात्तात् परो यः स्वरितयण् तस्मात् परस्यानुदात्तस्य स्वरितो भवतीत्येषोऽर्थो न प्रतीयते। तस्मादेतच्च न। यथा भाष्यं तथोदात्तस्यानेन स्वरितयणः परस्यानुदात्तस्य स्वरितो न भवतीति सिद्धम् भवतीति। तथेत्यादिनानन्तरमेवार्थं द्रढयति। भाष्ये हि स्वरितग्रहणं न करिष्यत इत्यादिना ग्रन्थेन स्वरितग्रहणमिद्धत्वे सूत्रे प्रत्याख्याते। एवञ्च तत्प्रत्याख्यान मुपपद्यते यद्युदात्तात् स्वरितयणः परस्यानुदात्तस्य स्वरितत्वं नेष्यते। अन्यथा तन्निमित्तस्य स्वरितस्येष्टौ सत्यां प्रत्याख्यानमुपपन्नमेव न स्यात्। पुनर्भाष्ये स्वरितयणो ग्रहणं प्रत्याख्यायते। यावता तस्मिन् प्रत्याख्याते सक्तल्-वाशेत्येवमादावनुदात्तस्य स्वरितो न सिध्यतीत्यत आह सक्तल्वाशेत्येवमादावित्यादि। उदात्तयण् पुनरत्रोकारवकारेको यकारः। ननुच योऽसौ सप्तम्येकवचनस्य स्थाने जायते तेन व्यवधानान्न सिध्यतीत्यत आह स्वरितयणित्यादि।

अत्रैव कारणमाह स्वरविधावित्यादि। इतिकरणो हेतौ। यदि स्वरितग्रहण मन्तरेणापि सिध्यति कस्मात् सूत्रे तद्ग्रहणं क्रियत इत्यत आह तत् तु क्रियत इत्यादि। अचः परस्मिन् पूर्वविधावित्यस्य (१।१।५७) हि पूर्वस्माद् विधौ कर्त्तव्येऽजादेशः स्थानिवद् भवतीत्येषोऽर्थोऽभिमतः। उदात्तयणः परस्यानुदात्तस्य स्वरितविधौ कर्त्तव्ये सप्तम्येकवचनस्थाने यो यणादेश स्तस्य स्थानिवद्भावादिकारेण व्यवधानमस्ति। व्यञ्जनस्य स्वरविधात्रविद्यमानवद्भावात् (प, ६०)। तेनव्यवधाने सति सकलल्व्याशेत्यत्रोदात्तयण इत्येव न सिध्यतीति स्वरितग्रहणं क्रियते। ननुच न पदान्तद्विर्वचनेत्यादिना (१।१।५८) स्वरविधौ प्रतिषिध्यते स्थानिवद्भावः। तत् कुतो व्यवधानमित्यतआह स्वरदीर्घयलोपेष्वित्यादि। अचो हि लोपादेशस्य स्वरविधौ स्थानिवद्भावः प्रतिषिध्यते। तथाहि तत्रोक्तं स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवद् भवतीति (१।१।५८, वा) वक्तव्यमिति। नचात्राचो लोपादेशः। किं तर्हि? यणादेशः। तस्मान्नास्ति स्थानिवद्भावप्रतिषेधः। बैद्याशेति। बिद-स्यापत्यमित्यनृष्यानन्तर्येत्यादिना (४।१।१०४) बिदादित्वादञ्। तदन्ताच्छार्ङ्गर-वाद्यञो ङीनिति (४।१।७३) ङीन्। अत्र नित्स्वादाद्युदात्तत्वे कृते शेषस्यानु-दात्तत्वमिति बैद्याशाशब्दे ऽत्रानुदात्तस्थाने यण्। नोदात्तस्य। नापि स्वरितस्य। अत्रेति। अयमाद्युदात्तो लित्स्वरेणेति। सप्तम्यास्त्रलिति (५।३।१०) त्रल् प्रत्ययान्तत्वात्। हलि लोप (७।२।११३) इतीद्रूपस्य लोपः।

## ५। एकादेश उदात्तेनोदात्तः।

अनुदात्तस्येति। उदात्तेन सहानुदात्तस्य यस्मिन्नेकादेशः स उदात्तः स्यात्। नतु स्वरितः। स्वरिते प्राप्त इदमारभ्यते। उदाहरणेष्वग्निप्रभृतयः प्रातिपदिक स्वरेणान्तोदात्ताः (फिट्, १।१)। विभक्तिस्त्वनुदात्तौ सुप् पितावित्यनुदात्ता (३।१।४)। अग्नी वायूइति। प्रथमयोः पूर्वसवर्णइति (६।१।१०२) दीर्घः। वृची वृचाविति। वृद्धिरेचीति (६।१।८८) वृद्धिः। पचन्ति यजन्तीति। अतो गुणे (६।१।९७) पररूपत्वम्। द्वयोरनुदात्तयोरयमेकादेश इति। ननु चोदात्तादनु-दात्तस्य स्वरित (८।४।६६) इति शबकारस्य स्वरितत्वे कृते स्वरितानुदात्तयोरय मेकादेशः। तत् कथं द्वयोरनुदात्तयोरिति? एवमाह पररूपे कर्त्तव्ये स्वरितस्या-सिद्धत्वात्।

## ६। स्वरितो वानुदात्ते पदादौ।

सूत्थित इति। कुगतिप्रादय (२।२।१८) इति समासः। अत्र सुशब्दः कर्मप्रवचनीय इति। अनेन सुशब्दस्य गतित्वमपनयति। गतित्वे हि सति गतिर्गताविति (८।१।७०) निघातः स्यात्। ततश्चोदात्तेनानुदात्तस्यायमेकादेशो न स्यात्। प्रादिसमास इत्यादि। सुशब्द आद्युदात्तः। तत्र हि प्रादिसमासे कृते तत्पुरुषतुल्यार्थेत्यादिना (६।२।२) पूर्वपदप्रकृतिस्वरत्वादाद्युदात्तत्वं भवति। अत एतेन प्रकृतिस्वरत्वेन हेतुनायमादेशः। यतोऽकः सवर्णेदीर्घत्वमनुदात्ते पदादौ भवति। सुशब्दस्य ह्याद्युदात्तस्य प्रकृतिस्वरत्वे सति शेषस्यानुदात्तभावोपपत्तेः। ननु प्रादिसमासे कर्मप्रवचनीयानां प्रतिषेधो वक्तव्य (२।२।१८, वा) इत्युक्तम्। तत् कथमिह प्रादिसमासः? नैष दोषः। तस्य प्रतिषेधस्यानित्यत्वात्। अनित्यत्वं तु सुशब्दस्य सुषामादिषु (८।३।९८) प्रयोगाद् विज्ञेयम्। तस्य हि तत्रोपसर्गात् सुनोतीत्यादिनेव (८।३।६५) सिद्धेऽनुपसर्गार्थः पाठः। अनुपसर्गत्वञ्च सोः सुः पूजायामिति (२।३।१८, वा) कर्मप्रवचनीयत्वात्। अथवा स्वतिभ्यामन्ये ये प्रादय एतत्रायं प्रतिषेधः। तथाहि तत्र स्वती पूजायामिति (२।२।१८) पूजायां स्वतिशब्दयोः प्रादिसमास उक्तः। पूजायाञ्च तयोः कर्मप्रवचनीयत्वं विवक्षितम्। वीक्षतइति। विशब्दो निपातस्वरेणाद्युदात्तः। अत्रापि तिङ्ङतिङ इति (८।१।२८) निघाते कृत एकादेशइत्यनुदात्ते पदादौ भवतीति सम्बन्धनीयम्। वसुकोऽसीति। वसुशब्दः प्रातिपदिकस्वरेणान्तोदात्तः। ततः सुप्रत्ययान्तत्वात् कस्य ह्यसिशब्दे परतोऽ तो रोरप्लुतादप्लुत (६।१।११३) इत्युत्वम्। तस्य स्थानिवद्भावेन सुप्त्वादनुदात्तत्वम्। पूर्वेण सहाद् गुणः (६।१।८७)। स च पूर्वसूत्रेणान्तोदात्तः (८।२।५)। असीति। तासस्त्योर्लोप (७।४।५०) इति सकारलोपे कृते लटि सिपि रूपम्। अत्र तिङ्ङतिङ (८।२) इति निघातेनाकारोऽनुदात्तः। तस्याकारेण सहैङः पदान्तादतीति (६।१।१०९) परपूर्वत्वम्। स्वरितग्रहणमित्यादि। कथं पुनरसति स्वरितग्रहणे स्वरित आदेशो भवति? पुनः स्वरितग्रहणं विस्पष्टार्थम्। न पुनः पक्षे स्वरितविधानार्थमित्यत आह उदात्ते हीत्यादि। उदात्ते हि विकल्पिते यस्मिन् पक्षे स न भवति तस्मिन्नुदात्तानुदात्तयोरन्तरतमो य एतेनैव भवितव्यम्। स च स्वरित एव (K)। अतोऽन्तरेणापि स्वरितग्रहणं स्वरित एव भविष्यति।

---

(K) समाहारः स्वरित इति (१।२।३१) उदात्तानुदात्तयोः समाहारेणान्तरतम्यादित्यर्थः।

## ७। नलोपः प्रातिपदिकान्तस्य।

प्रातिपदिकस्येति पदस्येति। समानाधिकरणे षष्ठी। अहन्नहिमिति। हन्तेर्लङ्। तिप्। हल्ङ्यादिलोपः (६।१।६८)। अदादित्वाच्छपो लुक्। अधातुरिति (१।२।४५) प्रतिषेधादिह प्रातिपदिकत्वं नास्ति। राजा राजानौ राजान इति। असर्वनामस्थाने पदसंज्ञा प्रतिषेधादिह (१।४।१७) प्रातिपदिकस्यावयवोऽन्तो नकारो भवति। प्रातिपदिकान्तस्येति। षष्ठीतत्पुरुषेऽत्रोत्तरपदप्रधानत्वादस्यैव पदस्य तद्विशेषणं युक्तम्। न तु गुणभूतस्य। प्रातिपदिकेनान्तशब्देन चात्र नकारो विशेषितः। स च नकारः प्रातिपदिकस्यान्तभूतः। पदस्येति। अनिष्टयोरपि व्यधिकरणयोः पदप्रातिपदिकान्तयोर्विशेषणविशेष्यभावेन भवितव्यम् प्रातिपदिकान्तस्येति पदस्येति। पदस्य योऽवयवः सोऽपि प्रातिपदिकस्येत्यर्थः। एवञ्च सति क्रियमाणेऽप्यन्तग्रहणे राजानौ राजान इत्यत्र प्राप्नोत्येव नलोपः। भवति ह्यत्रापि पदावयवः प्रातिपदिकस्यान्तो नकार इत्येतच् चोद्यमपाकर्त्तुमाह प्रातिपदिकग्रहण मसमस्तमेवेति। ततश्च तस्य पदस्येत्येतत् समानाधिकरणविशेषणं युक्तमेवेत्यभिप्रायः। यदि तर्ह्यसमस्तमेव प्रातिपदिकग्रहणं षष्ठ्याश्रयणं प्राप्नातीत्यभिप्राय इत्यत आह सुपां सुलुगित्यनेन (७।१।३९) यत् षष्ठ्या लुक् तेन लुका निर्द्दिष्टं प्रातिपदिकग्रहणम्। अतो न भवति षष्ठ्याः प्रसङ्गः। अहरिति। स्वमोर्नपुंसकादिति (७।१।२३) सोर्लुक्। रोऽसुपीति (८।२।६९) नकारस्य रेफः। प्रत्ययलक्षणेनाङ्गः (१।१।६) सुप्परता नास्ति। लुमता लुप्ते (१।१।६३) प्रत्ययलक्षणं नास्तीति वचनात्। अहोभ्यामहोभिरिति। अहन्निति (८।२।६८) रुत्वम्। हशि चेत्युत्वम् (६।१।११४)। आद् गुणः (६।१।८७)। ननु च प्राप्तिपूर्व्वकः प्रतिषेधो भवति। इह च रेफरुत्वयोः कृतयोर्नलोपस्य प्राप्तिरेव नास्ति। नकाराभावात्। तत् किं प्रतिषेधेनेत्यत आह अहन् (८।२।६८) रोऽसुपीत्यादिश्येते (८।२।६९)। तद्रेफो रुत्वञ्च द्वयमप्येतदनवकाशम्। अतो लोपो न भवति। अन्यथा हि तयोर्विधानमनर्थकं स्यादित्यत आह सावकाशमित्यादि। सम्बुद्धौ हि लोपो न। न ङिसम्बुद्ध्योरिति (८।२।८) प्रतिषेधात्। अत स्तत्रोभय मप्येतत् सावकाशम्। हे दीर्घाह्नो निदाघेति। दीर्घाण्यहानि यस्मिन्निदाघ इति बहुव्रीहिः। तत्सम्बुद्धिः। हल्ङ्यादिलोपः (६।१।६८) सत्यपि लोपे प्रत्ययलक्षणेन सुप्परतास्तीति रोऽसुपीतिरत्नत्र (८।२।३९)

प्रवर्त्तते। अहन्निति (८।२।६८) रुत्वमेव भवति। अहन्निति प्रथमैकवचनान्तमित्यादि। तत्राहन्निति (८।२।६८) रुत्वविधौ यदुपादीयते तदावर्त्तत इत्येतावति वक्तव्येऽहन्नित्येतेन (८।२।६८) सूत्रेण केवलं रुत्वमादेशो न विधीयते। अपि त्वावृत्तिन्यायादहन्नित्येतच्छन्दरूपमन्वाख्यायत इत्यतोपपत्तिप्रदर्शनार्थं प्रथमैकवचनान्तमकृतनलोपमित्युक्तम्। यदि ह्यादेशमात्रमहन्नित्यनेन (८।२।६८) विधीयते तदादेशसम्बन्धे षष्ठ्या भवितव्यमिति षष्ठ्युपादीयेत। न प्रथमा। प्रथमया ह्युपादीयमानं कृतनकारलोपमुपादीयेत। नकारलोपलक्षणस्य भावात्। नचैवं कृतम्। तस्मात् प्रथमान्तस्याकृतनकारलोपस्योपादानादवसीयतेऽहन्निति रूपस्यान्वाख्यानं क्रियत इति। अन्वाख्यायते साधुत्वेन प्रतिपाद्यत इत्यर्थः। किमर्थम्? नलोपाभावार्थम्। नलोपः प्रातिपदिकान्तस्येत्यनेन लोपो मा भूदित्येवमर्थम्।

## ८। न ङिसम्बुद्ध्योः।

चर्मन्निति। सुपां सुलुगिति (७।१।३९) ङे लुक्। ननु च सुराजन्निति प्रातिपदिकसंज्ञा हि विद्यते। प्रत्यय (१।१।६२) लक्षणेनाप्रत्यय इति (१।२।४५) न प्रतिषेधात्। आर्द्रे चर्मन्निति। अत्र तु न केवलं प्रातिपदिकसंज्ञा पूर्वोक्तादेव हेतो र्नास्ति ङौ तु पदसंज्ञापि नास्ति। प्रत्ययलक्षणेन प्रवृत्तया भसंज्ञया बाधितत्वात्। अतो नलोपप्राप्ति र्नास्त्येवेत्यर्थः। कथं प्रतिषेध इत्यत आह एतस्मादेवेत्यादि। भसंज्ञा च न भवतीति। अत्राप्येतस्मादेव प्रतिषेधवचनात् प्रत्ययलक्षणेन च ज्ञाप्यत इति सम्बध्यते। तथाचेत्यादिना ज्ञापनप्रयोजनं दर्शयति। तदेवमेतस्मात् प्रतिषेधादर्थद्वयं ज्ञाप्यते। एवञ्च कृत्वा राजपुरुष इत्यत्र प्रातिपदिकसंज्ञायां (L) सत्यां नलोपश्च भवति। भसंज्ञायामसत्यामल्लोपोऽन (६।४।१३४) इत्यल्लोपश्च न भवति। न भसंज्ञाभावश्चेत्यस्येह यथोद्देशं संज्ञापरिभाषमित्यस्मिन्दर्शने प्रयोजनं (प,३) वेदितव्यम्। कार्य्यकालं हि संज्ञापरिभाषमित्यस्मिन्दर्शने (प, ४) भसंज्ञाया मङ्गकार्य्यं भवतीति न लुमताङ्गस्येति (१।१।६३) प्रत्ययलक्षणप्रतिषेधादेव भसंज्ञा न भवतीति नार्थस्तत्र भसंज्ञाया अभावज्ञापनेन। ङावुत्तरपद इत्यादिनायं ङौ परतो नलोपप्रतिषेधस्य प्रतिषेध उक्तः। तस्योत्तरपदे परतो यो ङि स्तत्र प्रतिषेधो वक्तव्यः। वक्तव्य इति। व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्। स्वरितो

---

(L) कृत्तद्धितसमासाश्चेत्यनेन (१।२।४६)।

वानुदात्ते पदादावित्यतो ( ८।२।६ ) वेत्यनुवर्त्तते। सा च व्यवस्थितविभाषा। तेन ङावुत्तरपदे न भविष्यतीति। चर्मणि तिला अस्य चर्मतिल इति। वैयधिकरण्येऽपि गमकत्वात् समासः। ननु चात्यल्पमिदमुच्यते ङावुत्तरपदे प्रतिषेधो वक्तव्य इति। सम्बुद्धावपि ह्युत्तरपदे प्रतिषेधो वक्तव्य एव। अन्यथा हि हे राजन् वृन्दारकेति विगृह्य वृन्दारकनागकुञ्जरैरिति ( २।१।६२ ) समासे कृते हे राजन् वृन्दारकेत्यत्र नलोपो न स्यादित्यत आह हे राजन् वृन्दारकेत्यत्र त्वित्यादि। समानार्थेन वाक्येन समासेन भवितव्यम्। एवं हि सामर्थ्यं भवति। नान्यथा। तथाचोक्तं ग्रहणवाक्यार्थाभिधाने यः शक्तः स समर्थो वेदितव्य इति। यश्चेहार्थो हे राजन् वृन्दारकेति वाक्येन गम्यते स न ज्ञायते हे राजवृन्दारकेति समासेन। वाक्येन ह्येकार्थीभावाभावात् संबोधनं गम्यते। समासे तु विपर्य्ययात् समुदायार्थः सम्बोधनम्। तस्माद्राजा चासौ वृन्दारकश्चेत्येवमेव विगृह्य समासः कर्त्तव्यः। ततः सम्बुद्धिः। एवञ्च सम्बुद्ध्यन्तं पूर्वपदम्। हे राजन् वृन्दारकेत्यत्र समासो भविष्यत्येव। ततश्चोत्तरपदे परतः सम्बुद्धेरभावान्नलोपप्रतिषेधस्य प्राप्तिरेव नास्तीति नार्थं स्तत्प्रतिषेधेन। वा नपुंसकानामित्यादि। नपुंसकलिङ्गानां वा नलोपप्रतिषेधो भवतीत्येदर्थरूपं व्याख्येयमिति। अत्र व्याख्यानं त्विहापि वाग्रहणानुवृत्तिं व्यवस्थितविभाषात्वञ्चाश्रित्य कर्त्तव्यम्।

## ९। मादुपधायाश्च मतोर्वोऽयवादिभ्यः।

मकारान्तान् मकारोपधादवर्णान्तादवर्णोपधाच्चोत्तरस्य मतुपो मकारस्य वइत्ययमादेशो भवतीत्ययमर्थोऽभिमतः। स एव यथा सम्पद्यते तथा दर्शयितुमाह मतोरित्यादि। अत्र मतुप् कार्यित्वेनोपात्तः। स च नास्त्यन्तरेण प्रातिपदिकत्वम्। तद्विधौ प्रातिपदिकाधिकारात् ( ४।१।१ )। तस्मान् मतुपः पूर्वं सामर्थ्यलभ्यं प्रातिपदिकम्। तन् मकारावर्णाभ्यां मादिति विशिष्यते। मकारोऽन्तो यस्यावर्णोऽन्तो यस्येति। मकारावर्णविशिष्टा या चोपधेति सामर्थ्यम्। कथम्? पूर्वं प्रातिपदिकान्तं विशिष्यत इति सम्बन्धनीयम्। मकारेण विशेषणेनावर्णेन विशेषणेन च विशिष्टा योपधा सा च विशिष्यते। मकार उपधा यस्यावर्ण उपधा यस्येति। मकारावर्णविशिष्टस्येति मतुपो विशेषणे उपधायाश्चेत्यत्र मा भूदिति? अस्यापेक्षितत्वाल्लभ्यत इत्ययमर्थो भवतीति। इतिकरणो हेतौ। यस्मात् सामर्थ्यप्राप्तं प्रातिपदिकमेव विशिष्यते तस्मादयं वक्ष्यमाणोऽर्थः सूत्रस्यापि भविष्यतीति।

किंवानिति। किमस्यास्तीति मतुप्। उगिदचामित्यादिना ( ७।१।७० ) नुम्। हल्ङ्यादि ( ६।१।६८ ) संयोगान्तलोपौ ( ८।२।२३ )। अत्वसन्तस्य चाधातोरिति ( ६।४।१४ ) दीर्घः। नार्मतमिति। नरोऽसत्र सन्तीति नृमान्। नृमतइदमिति तस्येदमित्यण् (४।३।१२०)। तत्र वृद्धौ कृतायां नार्मतमित्यत्रा-वर्णोपधमतुप् प्रातिपदिकं जातमिति वत्वं प्राप्नोति। तत् कस्मान्न भवतीत्याह इहेत्यादि। नार्मतमित्यत्र ह्यवर्णोपधमतुप्त्वं वृद्धेरेव। सा च बाह्यतद्धित-निमित्ता। अतोऽवर्णोपधत्वस्य बहिरङ्गत्वम्। वत्वं तु प्रवृत्तिनिवृत्ति-निमित्तमिति तस्यान्तरङ्गत्वम्। असिद्धं च बहिरङ्गमन्तरङ्गइति ( प, ५१ )। तेन नार्मतमित्यत्र वत्वं न भवति।

## १० । झयः ।

अग्निचित्वानिति। तसौ मत्वर्थइति ( १।४।१९ ) भसंज्ञा। तेन पदसंज्ञा-निबन्धनं झलाञ्जशोऽन्तइति ( ८।२।३९ ) जश्त्वं न भवति।

## ११ । संज्ञायाम् ।

अहीवतीति। नद्यां मतुबिति चातुरर्थिको मतुप् ( ४।२।८५)। शरादी-नाञ्चेति ( ६।३।१२० ) दीर्घः।

## १२ । आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवद्रुमण्वच्चर्मण्वती ।

अथाष्ठीवदिति किमर्थं निपात्यते। यावत्योर्वष्ठीमित्यस्मादेव निपातनादेतत् ( ५।४।७७ ) सिद्धम्। एवं मन्यते। द्वन्द्व एवैतन्निपातनमिति तत्रैव स्यात्। इह तु निपातनं क्रियमाणं सर्वविषयं भविष्यतीति। कथं पुनर्ज्ञायत आसन्दीशब्दः प्रकृत्यन्तरं विद्यतइत्याह तथाचोक्तमित्यादि। यदि तर्हि तत्रैव संज्ञायामिति वत्वे च ( ८।२।११ ) सिद्धमासन्दीवदिति तत् किमर्थमिह पठ्यत इत्याह आसन्दीवदि-त्यादि। तत् प्रपञ्चार्थमिति। यदि तर्हि चक्रीवदिति संज्ञायामेतन्निपातनं कथं चक्रीवन्ति सदो हविर्धानानि भवन्तीति? नह्ययं संज्ञेत्यतआह चक्रीवन्तीत्यादि। छन्दसि ह्ययं प्रयोगः। तत्र व्यत्ययो बहुलमिति ( ३।१।८५ ) वर्णव्यत्ययेना-कारस्येकारे कृते छन्दसीर इति (८।२।१५) मतोर्वत्वे चक्रीवन्तीत्येतत् सिध्यति। तस्माच्छान्दसत्वादेवमेतत् साधुत्वेनानुगन्तव्यम्। कक्षीवानिति। हलइति

( ८।२।७७ ) दीर्घः । नलोपाभावार्थमिति । नलोपः प्रातिपदिकान्तस्येति (८।२।७) नकारलोपः प्राप्नोति । स मा भूदित्येवमर्थम् । णत्वार्थञ्चेति । पदान्तस्येति ( ८।४।३९ ) णत्वप्रतिषेधः प्राप्नोति । अतो णत्वार्थञ्च निपातनम् । मतोर्वा नुड़र्थमितीति । वाशब्दो विकल्पार्थः । अथवा नैव नकारलोपाभावार्थं निपातनम् । नापि णत्वार्थम् । किं तर्हि ? मतोर्नुड़र्थम् । नुटि कृते नलोपे सत्यपि सिध्यत्येवेष्टम् । णत्वप्रतिषेधस्य प्राप्तिर्नास्त्येव । अपदान्तत्वात् । अट्कुप्वाङिति ( ८।४।२ ) णत्वं भवति ।

## १३ । उदन्वानुदधौ च ।

उदधावर्थइति । यस्मिन्नुदकं धीयते तस्मिन्नर्थइत्यर्थः । तथाह्युदकं कर्मण्युपपदे कर्मण्यधिकरणे चेति ( ३।३।८३ ) किप्रत्यये कृते पेषंवासवाहनधिषु चेत्युदकस्योदभावे ( ६।३।५८ ) कृत उदधिशब्दो व्युत्पाद्यते । चकारेण संज्ञायामित्यनुकृष्यत इति दर्शयति । संज्ञायाञ्चेत्यादि । उदधावर्थइत्यादि । उदधिग्रहणञ्च संज्ञार्थम् । उदन्वानित्युदकं धेयमस्मिन्नस्तीत्यर्थविवक्षायां मतुप् । स एवमुच्यतइति । ननु गङ्गादिः (M) । यदि यस्मिन्नुदकं धीयते स एवमुच्यत उदकवान् घट इत्यभिधानं प्राप्नोति । घटेऽप्युदकं धीयत इत्यत आह उदकवान् घट इत्यादि । इह विवक्षा शब्दव्युत्पत्तेः (N) प्रधानं कारणम् । न वस्तुनः सत्ता । स च येन दधात्यर्थेनोदधिरित्युच्यते सोऽस्मिन् प्रयोगे घटे न विवक्षितः । किं तर्हि ? उदकसत्तायाः सम्बन्धमात्रम् । उदकमस्मिन्नस्तीत्येतावन्मात्रं विवक्षितम् । अतो दधात्यर्थस्याविवक्षितत्वाद् घटस्योदधित्वं विद्यमानमप्यसंकल्पश्मिवेति नायं निपातनस्य विषयः । तेन घट उदकवानित्युच्यते । यदा तु दधात्यर्थो विवक्ष्यते तदोदन्वानित्येवं वक्तव्यम् ।

## १४ । राजन्वान् सौराज्ये ।

राजन्वानिति निपात्यतइति । किमत्र निपात्यते ? नलोपाभावो नुड् वा । सौराज्यमिति । शोभनो राजा यस्मिन् देशे स सुराजा । तद्भावः सौराज्यम् । ब्राह्मणादित्वात् ष्यञ् । न स्तद्धित ( ६।४।१४४ ) इति नलोपः । तत् पुनः सौराज्यं यत्र शोभनेन राज्ञा देशस्य सम्बन्धः । समासकृत्तद्धितेषु सम्बन्धाभि-

---

(M) ननु तड़ागादिरिति बरदापुस्तके पाठः । (N) शब्दप्रवृत्ताविति पाठान्तरम् ।

धानमिति वचनाद् राजन्वानित्यस्य शब्दस्य देश एव वाच्यः। न सौराज्यम्। स तु देशः शब्दात् प्रतीयमानः। सौराज्येनाविनाभावित्वात्। तच्च गमयतीत्याह गम्यमान इति। राजन्वानिति पुंलिङ्गम्। तस्यातन्त्रतां दर्शयितुं राजन्वती पृथ्वीत्यस्योदाहरणस्योपन्यासः।

## १५। छन्दसीरः।

हरिवो मेदिनमिति। न मु न इत्यवैतद् ( ८।२।३ ) व्युत्पादितम्। आरेवानेतु मा विशदिति। रयिशब्दस्य रयेर्मतौ बहुलमिति ( ६।१।३७, वा ) सम्प्रसारणम्। परपूर्वत्वम्। आद् गुणः ( ६।१।८७ )। अथेह कस्मान्न भवति सप्तर्षिमन्तं द्यावापृथिवीमन्तमितयाह। द्यौश्च पृथिवी चेति द्वन्द्वे कृते दिवसश्च पृथिव्यामिति ( ६।३।३० ) दिवो द्यावादेशः। गीर्वान् धूर्वान् आशीर्वानिति ? गॄ शब्दे। धुर्वी हिंसार्थः। आङःशासु इच्छायाम्। एषां सम्पदादित्वात् क्विप्। गृणातेर् ऋत इद्धातोरितीत्त्वम् ( ७।१।१०० )। धुर्वं राल्लोपइति ( ६।४।२१ ) वकारलोपः। शास इदङ्हलोरित्यत्र ( ६।४।३४ ) शासइत्त्वे आशासः क्वौ ( ६।४।३४, वा ) उपसंख्यानमित्याङ्पूर्वस्य शासइत्त्वम्। मतुपि कृते ससजुषो रु ( ६।२।६६ ) रिति रुत्वम्।

## १६। अनो नुट्।

अक्षण्वन्तइति। अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः (७।१।७५)। छन्दस्यपिदृश्यत इत्यनङ् ( ७।१।७६ )। नुट्। अनङो नकारस्य लोपः। नुमो णत्वम्। अस्थन्वन्तमिति। अस्थिशब्दस्य णत्ववर्जं पूर्ववदनङादि कर्त्तव्यम्। शीर्षण्वतीति। शीर्षं श्छन्दसीति ( ६।१।६० ) निपातितम्। ननुच नुटोऽनन्तरत्वात् तस्यैव वत्वेन भवितुंयुक्तम्। नतु तद्व्यवहितस्य मकारस्य। तत् कथमिह नुटो वत्वं न भवति ? ततस्तु परस्य च भवतीत्याह नुटोऽसिद्धत्वादित्यादि। अथायं नुट् परत्वादपवादएव कस्मान्न भवति ? भिन्नजातीयत्वात्। समानजातीयकार्य्यापन्नो हि विशेषः सामान्यस्य बाधको भवति। इह कार्य्यभेदोऽस्ति। वत्वस्यादेशत्वान्नुटस्त्वागमत्वादिति नास्ति बाध्यबाधकभावः। नुटः परादिकरणं णत्वं यथा स्यादित्येवमर्थम्। अन्यथा हि पदान्तस्येति (८।४।३७) प्रतिषेधः स्यात्।

## १७। नाद् घस्य।

सुपथिन्तरइति। शोभनः पन्था इति प्रादिसमासः सुपन्थाः। सुशब्दाच्च पूजनादिति (५।४।६९) प्रतिषेधादृक्पूरब्धूरित्यादिना (५।४।७४) समासान्तो न भवति। तरप्। दस्युहन्तमः। दस्युं हतवानिति क्विप्। तदन्तात् तरप्। भूरिदावत्तरइति। भूरि ददातीत्यातो मनिन्नित्यादिना (३।२।७४) वनिप्। तदन्तादुत्तरपदस्य तुट्। रथीतर इति। रथिन्नित्येतस्मान् मत्वर्थीयेनिप्रत्ययान्तात् तरप्। नकारस्य लोपः। ईकारः। अथवा (*) नकारस्यैवेकार। सवर्णदीर्घत्वम्।

## १८। कृपो रो लः।

इह रइति वर्ण उपादीयते। लइत्यसयादेशस्तादृश एव। ततश्च केवलो यो रेफवर्णो नावयवभूतस्तस्यैव तथाभूतएव लकारादेशः स्यात्। ऋकारस्य तु लकारो न स्यात्। तयो स्थान्यादेशभावेन सूत्रेऽनुपादानात्। ततश्च क्लृप्तः क्लृप्तवानित्यादि न सिध्येदिति य श्चोदयेत् तं प्रत्याहर इति सामान्यमुपदीयत इति। वर्णत्वावर्णत्वकृतं भेदमुत्सृज्य यत् सामान्यं वर्णात्मिकायामवर्णात्मिकायाञ्च रेफव्यक्तौ वर्त्तते यतस्तयोर्वर्णत्वावर्णत्वादिभेदभिन्नयोर्द्वयोरपि रइत्यभिधानप्रत्ययावभिन्नौ भवत स्तदुपादीयते। ननु वर्णात्मक एवं विशेषः। तेर्नेति। सामान्योपादानेन द्वयोरपि ग्रहणं भवतीति। तस्य सामान्यस्य द्वयोरपि भावान्नइत्यपि सामान्यमेवेति उपादीयत इत्यपिच्चते। अत्रापि तेन यश्च केवलो लकारो यश्च लृकारस्थ स्तयो र्द्वयोरपि ग्रहणमित्येतद्वाच्यम्। पूर्वानुसारेण गम्यमानार्थत्वान्नोक्तम्। ततोऽयमित्यादि। यत एवं द्वयोरपि रेफयोर्लकारयोश्च ग्रहणं तस्मात् केवलस्य रेफस्य केवलो लकार आदेशो विधीयते। आन्तरतम्यादृकारस्यापि लृकारः। ननुच सत्यपि द्वयोरपि ग्रहणे ऋकारस्य स्थान ऋकारो विधीयत इत्येतन्न लभ्येत। न हि ऋकारस्थो रेफ ऋकारो भवति। किं तर्हि? तदवयवः। तत्र द्वयोरपि ग्रहणे सति ऋकारस्थस्यापि रेफस्य लृकारस्थो लकारस्तत्सदृश एवान्तरतम्याद् भवतीत्येषोऽर्थो लभ्यते। ननु ऋकारस्यापि स्थाने लृकारो भवतीत्येषोऽर्थोऽपीतिरतस्य चोद्यस्य निराकरणार्थमेकदेशविकारद्वारेणेत्युक्तम्। एकदेश ऋकारस्यावयवो रेफ

---

(*) एतत्तु चिन्त्यम्। ईकारस्यासिद्धत्वेन सवर्णदीर्घत्वस्याप्रवृत्तेः।

स्तस्य विकार ऌकारावयवो लकारः। अथवैकदेश ऌकारस्यावयवो लकारः। स एव विकारः। ऋकारस्य रेफस्यैकदेशविकारः। द्वारं मुखमुपाय इति यावत्। तेन ऋकारस्य स्थान ऌकारादेशो विधीयते। यदि ऋकारऌकारस्थयो रेफलकारयोर् ऋकारऌकाराभ्यां पृथग्भावः सम्भवेत् तदा ऋकारस्यैकदेशस्य रेफस्य ऌकारस्यैकदेशो लकारः शक्यो विधातुम्। नतु तयो स्ततः पृथग्भावः सम्भवति। तस्मान्नान्तरीयकत्वादेकदेशविकारद्वारेण समस्तस्यैव ऋकारस्य समस्तएव ऌकारादेशो विधीयते। अस्यैवार्थस्य द्रढ़ीकरणायाह एवञ्चेत्यादि। यतएव मेकादेशविकारद्वारेण ऋकारस्य स्थाने ऌकारो विधीयत एवञ्च लुटि च क्लृप (१।३।९३) इत्येवमादयो निर्देशा उपपद्यन्ते। नान्यथा। आदिशब्देन ऋदुपधाच्चाक्लृपि चृते (३।१।११०) रित्येवमादीनां ग्रहणम्। तदेवं चोद्यं परिहरता यदुक्तं नुड्विधिलादेशविनामिष्वृकारः प्रतिविधातव्यइति तत्रावसरे प्राप्ते लादेशे प्रतिविहितम्। कल्प्ता। कल्प्तारौ। कल्प्तारइति। व्रच्। अथवा लुट्। चिक्लृप्सतीति। सन्। हलन्ताच्चेति (१।२।१०) कित्त्वाद् गुणाभावः। क्लृप्तः क्लृप्तवानिति। क्तक्तवतू। क्लपेति। एतत् कथं सिध्यति? यावतात्रापि लत्वेन भवितव्यमित्यतश्चाह क्लपेत्येतदित्यादि। एतेन क्रप कृपायां गतावित्यस्मात् षिद्भिदादिभ्योऽङित्यङि ( ३।३।१०४ ) तत्सन्नियोगेन च संप्रसारणे कृते क्लपेत्येद् भवतीति दर्शयन् क्लपेत्यस्य रूपस्य लाक्षणिकत्वं दर्शयति। यद्येवं ततः किमित्यत्र लत्वं न भवतीत्याह तस्य हीत्यादि। यतस्तस्य कृतसंप्रसारणस्य क्रपेः क्लपेत्येतद् रूपं भवति तस्माल्लाक्षणिकत्वम्। अतो लक्षणप्रतिपदोक्तपरिभाषयैव (प, ११४) न गृह्यतइति न भवति लप्रसङ्गः। कृपणकृपीट कर्पूरादिषु ह्यौपदेशिकमेव क्लपेत्येतद्रूपम्। न लाक्षणिकम्। तथाहि रच्चेः क्विन्निति ( उण्, २।२२७ ) यः क्वन् विहित स्तस्मिन् बहुलवचनात् क्रपेरेव विहिते कृपणइति भवति। कॄतॄकृपिभ्यः कीटन्निति (उण्, ४।६२४) क्रपेरेव कीटनि विहिते कृपीटइति भवति। खर्जिपिञ्जादिभ्य ( उण्, ४।५३० ) ऊरोलचावितूरप्रत्यये कृते कर्पूरइति भवतीत्याह कृपणकृपीटेत्यादि। एवं मन्यते। बहुलवचनात् क्रपेरेव क्वन् भवति। तत्र चास्य संप्रसारणं कृतम्। कॄतॄकृपिभ्यः कीटन्नित्यत्रापि ( उण्, ४।६२४ ) कृपिग्रहणमपनीय क्रपिग्रहणं करिष्यते। संप्रसारणं तु बहुलवचनादेव भविष्यति। खर्जिपिञ्जादिभ्य ऊरोलचावित्यत्रापि ( उण्, ४।५३० ) आदिग्रहणेन क्रपिरेव ग्रहीष्यते। संप्रसारणञ्च पूर्ववदेव भविष्यतीति। यद्यपि कृपणकृपाणेत्येवमादीनि रूपाणि स्यु स्तदास्य दोष इति

दर्शयितुमाह उणादयो बहुलमिति (३।३।१) वेत्यादि। अत्यन्तभिन्नरूपयोरभिन्नस्वभावत्वमसम्भावयन् पृच्छति किमिदमित्यादि। समानविषयत्वमिति। अभिन्नविषयत्वमेकशब्देनात्र विवक्षितम्। नत्वभिन्नस्वभावत्वमिति दर्शयति। किमर्थं पुनः ऋ्रूपमुद्दिश्य लादेशो विधीयते? न ऌ्रूपिरेवोद्दिश्येत? गुणस्थाने लत्वमात्रं कर्त्तव्यम्। तच्चावश्यकर्त्तव्यमुपल्कारीयतीत्येवमर्थम्। तथाच ऋदुपधाच्चाऌ्पिचृतेरित्यत्र (३।१।११०) ऌ्पिप्रतिषेधो न कर्त्तव्यो जायते। तेनैवं शक्यम्। इहह्यचौऌपदिति ऋकारऌकारयोः सवर्णसंज्ञाविधानादृकारस्य विधीयमानमुरत्वं (७।४।६६) ऌकारस्यापि स्यात्। तथाच ऌकारस्यापि ऋवर्णः प्रसज्यते। ऋकारान्तं तूपदिश्य लत्वे विधीयमाने तस्यापि ऌकारस्य लत्वं सिद्धं भवति।

## १९। उपसर्गस्यायतौ।

इह द्वौ पक्षौ सम्भवतः। अयतिग्रहणं रेफविशेषणमितेएकः पक्षः। उपसर्गस्य विशेषण मिति द्वितीयः। तत्राद्ये पक्षेऽयतौ परत इत्येवमादिको वृत्तिग्रन्थ एवं नेयः। अयतौ परतो यो रेफ उपसर्गस्यस्तस्य लकारादेशो भवतीति। द्वितीये त्वेवं नेयः। अयतौ परतो य उपसर्गस्तस्योपसर्गस्य यो रेफ स्तस्य लकारादेशो भवतीति। प्लायते पलायत इति। अय णयेत्यस्मादनुदात्तेत्वादात्मनेपदम्। कथमत्राद्ये पक्षे लत्वम् भवति? यावता तस्मिन् कर्त्तव्येऽचः परस्मिन् पूर्वविधाविति (१।१।५७) स्थानिवद्भावेन भवितव्यम्। ततश्च प्रकृत्युपसर्गयो विभागे सत्यवर्णन व्यवधानाद्रेफस्यायतिपरता न संभवतीत्याह अत्र योऽयमित्यादि। विभागे विश्लेष इत्यर्थः। एकग्रहणं प्रत्यय इत्यत्र संघाते व्यवधाने लत्वं न भवतीति प्रदर्शनार्थम्। येन हि व्यवधानमेव नाव्यवधानं तेन व्यवधाने वचनप्रामाण्याल्लत्वेन भवितव्यम्। केन व्यवधान मेवम्? एकेन वर्णेन। संघातेन पुन र्व्यवधानमस्ति नास्ति चेति तेन व्यवधाने न भवति। तथाचेत्यादि। एव माद्ये पक्ष एकेन वर्णेन व्यवधाने लत्वं भवति वचनप्रामाण्यादित्यस्मिन्नर्थे व्यवस्थिते सति पल्ययत इत्यत्रापि लत्वं प्रवर्त्तते। अत्राप्येकेन वर्णेन व्यवधानात्। न केवलं पल्ययत इत्यत्र प्रवर्त्तते यत्र स्थानिवद्भावद्वारेणाशास्त्रीयं व्यवधानं यत्रापि तु श्रूयमाणेनेव वर्णेन लौकिकं व्यवधानं तत्रापि प्रवर्त्तत इत्येषोऽपिशब्दस्यार्थः। ननुच निरःकुष (७।२।४६) इत्यत्र निरइति निर्देशेन ज्ञापितमेतन् निरिति रेफान्त-

मुपसर्गान्तरमस्तीति। ततश्च निलयद्गत्यत्र वचनस्यावकाशे सति कथं येन ना व्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यादित्युक्तम्। एवं मन्यते ? नैकमुदाहरणं सामान्यलक्षणं प्रयोजयति। यदि ह्येतावत् प्रयोजनं स्यात् निरएवग्रहणं कुर्य्यादित्येवं प्रथमे पक्षे सर्व्वस्य सिद्धतां प्रतिपाद्य द्वितीये पक्षे प्रतिपादयितुमाह उपसर्गविशेषणे त्वित्यादि। तुशब्दोऽयमपिशब्दस्यार्थे वर्त्तते। न केवलं रेफविशेषणेऽयतिग्रहणे पल्ययत इत्यादि सर्वं सिद्धमपितूपसर्गविशेषणेऽपि तस्मिन् सर्वमेतत् सिद्धम्। अथवा तुशब्दः पूर्वस्मात् पक्षादस्य विशेषं द्योतयति। तत्र हि व्यवधानाल्लत्वं प्राप्नोतीत्येतच्चोद्यमवतरति। अतो यद्येतत् प्रतिपाद्यमेतत् सर्वम्। इह त्वस्य चोद्यस्यावतार एव नास्तीति सिद्धमेवैतत्। न यत्नसाध्यमित्यर्थः। प्रतेरपि प्राप्नोतीति चोदकः। तुशब्दः पूर्वस्माद् विशेषणार्थः। पूर्वत्र प्रतेर्न प्राप्नोति। संघातेन व्यवधानात्। इह तु नास्ति केनचिद् व्यवधानम्। अतः प्रतेरपि प्राप्नोतीति मन्यन्ते। अपर इति। द्वितीयपक्षाभिनिविष्टानामन्यतमे। निस्दुसित्येतयोरिति। यद्ययतिग्रहणं रेफस्य विशेषणम्। अथाप्युपसर्गस्य विशेषणं सर्व्वथा कृत्वे कृते लत्वं प्राप्नोतीति यश्चोदयेत् तंप्रत्याह निस्दुसित्यादि। गतार्थम्।

## २० । ग्रो यङि ।

निजेगिल्यतइति। ऋतइद्धातोरितीत्त्वम् (७।१।१००)। द्विर्वचनम्। अभ्यासकार्य्यम्। भावगर्हायां ग्रो यङ् विहितइति। लुपसदचरेत्यादिना (३।१।२४)। गिरतेरिति। गृ निगरणइत्येतस्य तौदादिकस्य। गृणातेरिति। गृ शब्दइत्यस्य क्र्यादिकस्य। सामान्येन ग्रहणमिच्छन्तीति। विशेषानुपादानात्। अपरे त्वित्यादि। कथं पुनः सामान्योपादानेऽपि गिरतेरेव ग्रहणं लभ्यत इत्याह गृणातेरित्यादि। किं कारणं यङेव नास्तीत्याह अनभिधानादिति। निगीर्य्यत इति। सार्वधातुके यक् (३।१।६७)। हलि चेति (८।२।७७) दीर्घः।

## २१ । अचि विभाषा ।

गिरतीति। निगरणार्थस्य रूपम्। निगरणमिति। ल्युट्। निगारक इति। ण्वुल्। निगार्य्यतइति। अत्र यदि णिलोपे कृते विकल्पो न सिध्यत्य-

चः परस्याभावादितिग्रतच्चोद्यमपाकर्त्तुमाह निगार्य्यते निगाल्यतइति। स्थानिवद्भावस्तु पूर्ववत्। स्यादेतत्। नास्त्येवात्र स्थानिवद्भावः। पूर्वत्रासिद्धे न स्थानिवदिति (१।१।५८, वा) प्रतिषेधादित्यतआह पूर्वत्रासिद्ध इत्यादि। अपवादो दोषः। सह तेन वर्त्ततइति सापवादम्। दोष एवायमस्याः परिभाषाया इत्यर्थः। अपिशब्दः समुच्चये। न केवलं तच्चोद्यं सापवादमपितु पूर्वत्रासिद्धे न स्थानिवदित्येतदपि वचनं सापवादमेव। तदेव सापवादत्वमाप्तवचनेन प्रतिपादयितुमाह तस्येत्यादि। तत्र संयोगादिलोपविधावयं दोषः। काक्यर्थौ वास्यर्थइति। अत्रासति यणादेशस्य स्थानिवद्भावे स्कोः संयोगाद्योरिति (८।२।२९) ककारसकारयोर्लोपः प्रसज्येत। लत्वविधौ निगार्य्यते निगाल्यत इति। णिलोपस्य सति स्थानिवद्भावे विकल्पेन लत्वं न स्यात्। णत्वविधौ प्रहिणोति प्रमीणोत इति। अत्र गुणेत्त्वयोरसति स्थानिवद्भावे हिनुमीनेति (८।४।१५) णत्वं न प्राप्नोति। अन्तरङ्गत्वादित्यादि। परिहारान्तरम्। अन्तरङ्गत्वं तु लत्वविकल्पस्य वर्णाश्रयत्वात्। णिलोपस्य तु बहिरङ्गत्वमार्धधातुकाश्रयत्वात्। अथ गिरौ गिर इत्यत्र लत्वं कस्मान्न भवतीत्याह गिरौ गिर इत्यादि। इतिकरणो हेतौ। धातोः स्वरूपेण ग्रहणे सति तत्प्रत्यये धातोरित्येव प्रत्ययो यो विहितस्तत्र तत् कार्य्यं विज्ञायते। तस्माद् गिरौ गिरइत्यत्र न भवति। नह्यत्र धातोरित्येव (३।३।९१) गिरतेः क्विबन्तादौजसौ विहितौ। किं तर्हि? प्रातिपदिकाधिकारात् (४।१।१)।

## २२। परेश्च घाङ्कयोः।

परिघइति। पर उपपदे हन्तेर्धातोरप्प्रत्ययः। हलोपो घत्वञ्च निपात्यते। उपपदसमासः। पर्य्यङ्कइति। अकि लक्षणइत्यस्मात् पचाद्यच्। हलश्चेति (३।३।२१, वा घञ्)। प्रादिसमासः। परिगतोऽङ्कः पर्य्यङ्कः। ननुच घ इति तरप्तमपोरपीयं संज्ञा। स्वंरूपं शब्दस्येति (१।१।६८) स्वरूपग्रहणं प्रतिषिध्यते। तत् किमिति घरूप एव लत्व मुदाक्रियत इत्याह घइति स्वरूपग्रहणमत्रेति। एवं मन्यते। अङ्कइत्यनेनासंज्ञाशब्देन साहचर्य्याद् घइत्यस्याप्यसंज्ञाशब्दस्यैव ग्रहणमिति। योगे चेति वक्तव्यमिति। योगशब्दे च परतः परेर्विकल्पेन लत्वं भवतीत्येतदर्थरूपं व्याखेयमित्यर्थः। तत्रेदं व्याख्यानम्। चकारोऽनुक्तसमुच्चयार्थः क्रियते। तेन योगेऽपि भविष्यतीति।

## २३ । संयोगान्तस्य लोपः ।

संयोगान्तस्येति । संयोगोऽन्तो यस्य तत् तथोक्तम् । अन्तग्रहणं विस्पष्टार्थम् । पदस्येति (८।१।१६ ) हि वर्त्तते । तत्र संयोगेन पदे विशिष्यमाणे येन विधिस्तदन्तस्येत्येव ( १।१।७२ ) संयोगान्तता पदस्य लभ्यते । गोमानिति । हल्ङ्यादिलोपे (६।१।६८ ) कृतेऽलोऽन्त्यस्य लोपः ( १।१।५२ ) । अत्वसन्तस्य चाधातोरिति ( ६।४।१४ ) दीर्घः । श्रेयान् भूयानिति । अत्र संयोगान्तलोपो न प्राप्नोति परत्वाद्रुत्वेन बाध्यत इति यो मन्येत तं प्रत्याह श्रेयान् भूयानित्यादि । यदि तर्हि परमपि रुत्वमसिद्धत्वात् संयोगान्तलोपस्य बाधकं न भवत्येवं सत्यत एव हेतो र्जश्त्वस्यापि बाधकं न स्यात् । ततश्च यशः पय इति जश्त्वमेव स्यात् । न रुत्वमित्यतश्चाह जश्त्वे त्वित्यादि । संयोगान्तलोपे हि प्राप्ते चाप्राप्ते च रुत्वमारभ्यते । श्रेयानित्यादौ प्राप्ते । पयइत्यत्र त्वप्राप्तइति युक्तं यद्रुत्वं न बाधते । जश्त्वे तु सर्व्वत्र प्राप्त एव तदारभ्यते । तस्माद् बाधकलक्षणयोगाद् रुत्वं जश्त्वस्य बाधकं भवत्येव । श्रेयानिति । प्रशस्यस्य श्र इतीयसुनि श्रभावः ( ५।३।६० ) । आद् गुणः (६।१।८७) । सान्तमहतः संयोगस्येति (६।४।१०) दीर्घः । भूयानिति । बहोर्लोपो भू च बहोरितीयसुनि (६।४।१५८) ईकारस्य लोपः । बहोश्च भूभावः । अथ दध्यत्र मध्वत्रेत्यत्र संयोगान्तलोपः कस्मान्न भवतीत्याह दध्यत्रेत्यादि । बहिरङ्गत्वन्तु यणादेशस्य द्विपदाश्रयत्वात् । संयोगान्तलोपस्य त्वेकपदाश्रयत्वा दन्तरङ्गत्वम् । पदस्येति किम् ? गोमन्तौ । गोमन्तः ।

## २४ । रात् सस्य ।

संयोगान्तस्य पदस्येत्यादि । अत्र संयोगान्तं पदं रेफस्य विशेषणम् । रेफोऽपि सकारस्य । संयोगान्तस्य पदस्य योऽवयवो रेफस्तस्मादुत्तरो यः सकार स्तस्यालोऽन्त्यस्य लोपो भवति । अचारत्सारीति । त्सर सञ्चलने । त्सर च्छद्मगतौ । लुङ् । अतो लरान्तस्येति (७।२।२) वृद्धिः । तिपो हल्ङ्यादिलोपः (६।१।६८) सिचः सकारस्याप्यनेन । अड़ागमः । रेफस्य विसर्जनीयः ( ८।३।१५ ) । ननु चैतत् पूर्व्वेणैव सिद्धम् । तत् किमर्थमिदमारभ्यत इतयाह सिद्धइतप्रादि । रात् सस्य वेति नियमस्य स्वरूपं दर्शयति रादेव सस्येति । एष तु विपरीतनियमोऽत्र नाशङ्कनीयः । उरः प्रभृतिषु ( ५।४।१५१ ) पुमानिति कृतसंयोगान्तस्य लोपस्य पुमस्शब्दस्य पाठात् । नहि विपरीतनियमे तस्य संयोगान्तलोप उपपद्यते । ऊर्गिति ।

ऊर्ज बलप्राणनयोः । भ्राजभासेत्यादिना ( ३।२।१७७ ) क्विप् । अत्र नियमाज्ज्-कारस्य लोपो न भवति । तस्मिन्नसति चोः कुरिति ( ८।२।३० ) कुत्वं जकारस्य गकारः । वावसान इति ( ८।४।५८ ) चर्त्वं ककारः । न्यमार्डिति । मृजू शुद्धौ । अदादित्वाच्छपो लुक् । तिपो हल्ङ्यादिलोपः (६।१।६८) मृजेर्वृद्धिः ( ७।२।११४ ) । व्रश्चेत्यादिना ( ८।२।३६ ) षत्वम् । तस्य च जश्त्वं डकारः । तस्यापि चर्त्वं टकारः ।

## २५ । धि च ।

अलविध्वमलविढ्वमिति । लुङ् । च्लेः सिच् ( ३।१।४४ ) । सस्य धि चेति-लोपः । विभाषेट इति ( ८।३।७९ ) पक्षे मूर्धन्यः । यद्यत्रेत्यादिना सति सकार-लोपे यदिष्टं प्राप्नोति तद् दर्शयति । असति हि सकारलोपे सिच आदेशप्रत्यययो रिति ( ८।३।५९ ) षत्वे कृते झलाञ्जशिति ( ८।४।५३ ) जश्त्वे च डकारे ष्टुना ष्टु रिति ८।४।४१ ) धकारस्य ष्टुत्वे ढकारेण भवितव्यम् । ततश्च मूर्धन्याभाव-पक्षेऽपि धकारो न श्रूयते । विभाषाग्रहणं तु सिद्धं लिड्थं लिङर्थश्च स्यात् । तस्मादमूर्धन्यपक्षे धकारस्य श्रवणं यथा स्यादिति लोपो विधीयते । इतः प्रभृति सिचः सकारस्य लोप इष्यत इति । स चापि विभाषेतयतो (८।२।२१ ) विभाषा-ग्रहणानुवृत्ते र्व्यवस्थितविभाषाविज्ञानाच्च लभ्यते । चकाद्धीति । चकासृ दीप्तौ । लोट् । सिप् । सेह्यपिच्चेति ( ३।४।८७ ) हिरादेशः । हुझल्भ्यो हेर्धिरिति ( ६।४।१०१ ) हे धिभावः । पूर्ववच्छपो लुक् । पूर्ववज् जश्त्वं सकारस्य दकारः । पयो धावतीति । पयः शब्दस्य रुत्वम् । हशि चेतुत्वम् ( ६।१।११४ ) । आद् गुणः ( ६।१।८७ ) । यदीतः प्रभृति सिचो लोप इष्यते सग्धिश्वबब्धामित्यत्र झलो झलीति ( ८।२।२६ ) सकारस्य लोपो न प्राप्नोतीति चोद्यमाशङ्क्याह सग्धिश्च बब्धा-मित्यादि । अद भक्षणे । स्त्रियां क्तिन् । बहुलञ्छन्दसीति घस्लादेशः (२।४।३९) । घसिभसोर्हलि चेत्युपधालोपः (६।४।१००) । सकारस्य बहुलं छन्दसीति च्छान्दसो लोपः । क्वचिदन्यदेवोच्यते । एषोऽपि बहुलस्यार्थः । इष्यते झषस्तथोर्धोऽध इति ( ८।२।४० ) तकारस्य धत्वम् । पूर्ववज् जश्त्वं घकारस्य गकारः । समा-ना ग्धिरिति विशेषणसमासः । समानस्य च्छन्दसीति ( ६।३।८४ ) सभावः । बब्धामिति । भस भर्त्सनदीप्त्योः । लोट् । तस्य लोटो लङ्वदित्यतिदेशात् ( ३।४।८५ ) तसस्ताम् । जुहोत्यादित्वाच्छपः श्लुः । श्लाविति ( ६।१।१० )

द्विर्वचनम्। पूर्ववदुपधासलोपौ। पूर्ववदेव तकारस्य दत्वञ्च। भकारस्य बकारः। अभ्यासे चर्च इति ( ८।४।५४ ) जश्त्वम्। एवमिदं तावच् श्लोकवार्त्तिककारस्याभिमतं दर्शितम्। इदानीं भाष्यकारस्य मतं दर्शयितुमाह भाष्यकारस्त्वाहेत्यादि। एतेनाविशेषेणैव सकारमात्रस्य भाष्यकारो लोप मिच्छतीति दर्शयति। तेनेत्यादि। अविशेषेण हि सकारमात्रस्य यो लोप मिच्छति तस्य पयो धावतीत्यत्रापि प्राप्नोति। तस्मादिह मा भूदिति यत्नान्तर माश्थेयम्। यत्नान्तरं तु व्यवस्थितविभाषाश्रयणमेव पूर्ववत्। अयं तु विशेषः। पूर्वत्र व्यवस्थितविभाषया धि चैव सिचो भविष्यति। नान्यस्य। इह तु यत्र समानपदस्थौ निमित्तनिमित्तिनौ तत्रैवाविशेषेण सकारमात्रस्य लोपो भवति। अत्र तु भिन्नपदस्थौ पयो धावतीत्यादौ। तत्र न भवत्येवेति। एतावता विशेषेण व्यवस्थितविभाषा यत्नान्तर मित्युच्यते। संक्षिप्तमेतमर्थं विस्तरेण सचोद्यपरिहारं वक्तुमाह धि सकारे सिचो लोप इत्यादि। धीत्येतद् यत्र परभूतं सकारलोप इत्यतः प्रभृति विधातव्य स्तदुपलक्षणं वेदितव्यम्। कुत एतत्? इतः प्रभृति सिचः सकारस्य लोप इष्यत इति प्राग् वचनात्। लोपं प्रति सकारस्याधिकरणत्वेन विवक्षितत्वात् सप्तम्या निर्देशः। किं प्रयोजनमित्याह चकाद्धीत्यादि। यदि सिचो लोप आशाध्वं तु कथम्? आङः शासु इच्छायाम्। लोट्। ध्वम्। टेरेत्वम्। सवाभ्यां वामावित्यमादेशः ( ३।४।९१ )। पूर्ववच्छपो लुक्। अत्र सकारस्य लोप इष्यते। स न प्राप्नोति यदि सिच एव सकारस्य लोपो विधीयते। जश्त्वं सकारस्य भविष्यतीति। झलाञ्जश् झशीत्यनेन ( ८।४।५३ ) जश्त्वं सकारस्य दकारो भविष्यतीति सिद्धमाशाद्ध मित्येतत्। इतः सकारलोपशास्त्रं प्रत्याख्यातु माह सर्वमेवं प्रसिद्धं स्यादिति। यदि सकारस्य भवति। एवं सति तेनैव जश्त्वेन सर्वं लक्ष्यं प्रसिद्धं स्यात्। ततश्च सकारलोपशास्त्रमेतन्न कर्त्तव्यमेवेत्यभिप्रायः। तत्रैतत् स्यात्। जश्त्वे सति श्रुतिभेदो भव[ति]। तथाह्यनचि चेति (८।४।४७) सकारस्य द्विर्वचने कृते सकारयोश्च जश्त्वे दकारद्वयस्य श्रवणं प्रसजतीत्याह श्रुतिश्चापि न भिद्यत इति (P)। नहि व्यञ्जनपरस्यैकस्यानेकस्य वा हलः श्रुतिं प्रति विशेषोऽस्तीति भावः। लुङश्चापि न मूर्धन्ये ग्रहणमिति। कर्त्तव्यं भवतीति शेषः। अयश्चान्यो जश्त्व सति गुणः। इणःषीध्वं लुङ्लिटान्धोऽङ्गादि-

(P) मुद्रितकाशिकायान्तु श्रुतिश्चापि न विद्यत इति पाठः। पदमञ्जर्यामपि न्यासारूढः पाठ एव गृहीतः।

त्यत्र (८।३।७८) मूर्धन्ये कर्त्तव्ये लुङ उपादानं कर्त्तव्यं न भवतीति। अथोद्वम-म्नोढ्वमित्यादौ षत्वजश्त्वष्टुत्वैरेव मूर्धन्यस्य सिद्धत्वात्। ष्वुङ ष्ठुङ प्लुङ प्लुङ् गतौ। लुङ्। ध्विम्। सिच्। आदेशप्रत्यययोरिति (८।३।५९) षत्वम्। झलाञ्जश् झशीत्यनेन (८।४।५७) षकारस्य जश्त्वं डकारः। धकारस्य ष्टुत्वं ढकारः। एवं षत्वादिकार्य्यक्रमेण लुङि धकारस्य मूर्धन्यः सिद्ध इति। किं लुङ्ग्रहणेन? एवं लुङ् प्रत्याख्यायते। सलोपे परे लुङ्ग्रहणं कर्त्तव्य मिति यस्याभिमतं स आह सेटि दुष्यतीति। यदि मूर्धन्यविधौ लुङ्ग्रहणं न क्रियेत ततो विभाषेट इत्यत्र (८।३।७९) मूर्धन्यो न प्राप्नोति। ततश्च पूर्व्ववत् षत्वादिषु कृतेष्वलविध्वमित्येव नित्यं स्यात्। न तु कदाचिदप्यलविढ्वमिति। तस्मादुक्तार्थं लुङ्ग्रहणं कर्त्तव्यम्। धि चेति सकारलोपो वक्तव्यः। अलविढ्वमित्यस्य सिद्ध्यर्थम्। न ह्येतदसति सकारलोपे सिध्यति। ततश्च यदुक्तं सर्वमेवं प्रसिद्धं स्यादिति तदयुक्तम्। धि चेत्येतस्मिंश्च क्रियमाणे चकाद्धीति मा भूदिति सिज्-ग्रहणं कर्त्तव्यम्। एवं श्लोकवार्त्तिककारमतेन सिज्ग्रहणं कर्त्तव्यमिति स्थितः। इतरस्तस्मिन् क्रियमाणेऽपरं दोषं दर्शयितुमाह घसिभसोर्न सिध्येत् त्वित्यादि। तुशब्दो हेतौ। यस्मात् सिज्ग्रहणस्य हि घसिभसोः सकारलोपः सग्धिर्बब्धामित्यत्र न सिध्यतीत्येष हेतुरुक्तः। स चायमहेतुः। यस्माद् यद्यपि सिज्ग्रहणे क्रियमाणे घसिभसोर्झलो झलीत्यनेन (८।२।२६) लोपो न भविष्यति तथापि च्छान्दसो वर्ण-लोपो भविष्यति। तेनापि सग्धिर्बब्धामित्येतदुभयं सिध्यत्येव। क्व यथा च्छान्दसो वर्णलोप इत्याह यथेत्यादि। यथाध्वरविषये प्रयोगे इष्कर्त्तारमध्वरस्येत्यत्र च्छान्दसो वर्णलोपो भवति तथा सग्धिर्बब्धामित्यत्रापि घसिभसोर् भविष्यति। वाशब्दोऽत्रैवोपपत्त्यन्तरं सूचयति। तत्रेदमुपपत्त्यन्तरम्। सग्धिरिति नैतद् घसे रूपम्। किं तर्हि? षघ हिंसायामित्यस्य। ननु चार्थभेदो भवति। स्वरभेदश्च। पूर्वस्यां व्युत्पत्तौ समानादनमित्येषोऽर्थो भवति। समासस्वरेणान्तोदात्तत्वश्च। षघिस्तु क्तिनि विहिते हिंसार्थो भवति। नित्स्वरेणाद्युदात्तश्च। अनेकार्थत्वाद्धा-तूनां षघिश्च समानादनमित्यस्मिन्नर्थे वर्त्तिष्यते। स्वरव्यत्ययेन चान्तोदात्तत्वं भविष्यतीत्यदोषः। बब्धामिति च। नैतद् भसे रूपम्। किं तर्हि? बध बन्धन इत्यस्माल् लोटि तसस्ताम्। व्यत्ययो बहुलमिति (३।१।८५) विकरणस्य लुक्यनिदितामित्यनुनासिकलोपे (६।४।२४) झषस्तथोर्धोऽध इति (८।२।४०) धत्वे तकारस्य व्यत्ययो बहुलमिति (३।१।८५) धातुधकारस्य

बकारे च कृते बभ्धामिति भवति। एवञ्च सिजग्रहणे क्रियमाणे घसिभसोर्यदि न सिध्यति नाम तथापि नैव किञ्चिदनिष्टम्। यस्मादनयापि व्युत्पत्त्या तदपाकृतं भवति। तदुक्तं घसिभसोर्न सिध्येत् तस्मात् सिजग्रहणं न तदिति। ततश्च धि सकारे सिचो लोपश्चकाद्धीति प्रयोजन मित्येतदवस्थितं श्लोकवार्त्तिककारस्य मतम्।

## २६। झलो झलि।

अभित्त। अभित्थादिति। भिदेर्लुङि स्वरितेत्त्वादात्मनेपदम्। तथासी। दकारस्य खरि चेति (८।४।५५) चर्त्वं तकारः। अवात्तामिति। वसेर्लुङि तसस्ताम्। अवात्तेति। थस्य तः। वदव्रजेत्यादिना (७।२।३) वृद्धिः। अत्र सकारलोपे कृते सःस्यार्धधातुकइति (७।४।४९) तकारो न प्राप्नोतीति यस्य भ्रान्तिः स्यात् तं प्रत्याह अवात्तामित्यादि। अमंस्तामंस्थादिति। मन ज्ञाने। अनुदात्तेत्वादात्मनेपदम्। अभित्सातामिति। भिदेराताम्। अभित्सतेति। आत्मनेपदेष्वनत इति (७।१।५) झस्यादादेशः।

## २७। ह्रस्वादङ्गात्।

अलविष्टामिति। तसस्ताम्। सिचि वृद्धिः। अत्र श्रुतिकृते पौर्वापर्य्ये सति ह्रस्वादिटः परः सकारो भवति। न त्वङ्गात्। इड़ागमः प्रत्ययभक्तत्वेनानङ्गत्वात्। अलाविषुरिति। सिजभ्यस्तविदिभ्यश्चेति झेर्जुस् (३।४।१०९)। अकृषातामिति। उश्चेति (१।२।१२) कित्त्वाद् गुणाभावः। द्विष्टरामिति। द्वित्रिचतुर्भ्यः सुच् (५।४।१८)। तदन्तादतिशायने तरप्। किमेत्तिङव्ययादिनामुः (५।४।११)। ह्रस्वात् तादौ तद्धित इति (८।३।१८) सकारस्य मूर्धन्यः।

## २८। इट ईटि।

अदेवीदिति। नेटीति (७।२।४) वृद्धिप्रतिषेधे कृते लघूपधगुणः। अस्तिसिचोऽपृक्ते (७।३।९६) इतीट्।

## २९। स्कोः संयोगाद्योरन्ते च।

झलीति वर्त्तते। संयोगाद्योरिति षष्ठीसमासः। अत्र यद्यपि संयोग उत्तरपदार्थं गुणभूत स्तथापि संयोगाद्योः स्कोरन्तग्रहणं विशेषणं न भवतीति गुणभूतोऽपि तेन संयोगएव विशिष्यत इति विज्ञायत इत्याह पदस्यान्ते यः संयोग इति। अन्तइति। अवसान इत्यर्थः। झलि परत इति। पदस्येत्यपेक्ष्यते। तदाद्योरिति। तस्यैवंभूतस्य संयोगस्यादिभूतयोरित्यर्थः। लग्न इति। ओलजो ओलस्जो व्रीडे। निष्ठा। अत्र जकारे झलि परतः सकारजकारयोर्यः संयोगः पदस्यावयवस्तदादेः सकारस्य लोपः। ओदितश्चेति (८।२।४५) नत्वम्। श्वीदितो निष्ठायामितीट्प्रतिषेधः (७।१।१४)। चोः कुरिति (८।२।३०) कुत्वं गकारः। साधुलगिति। साधु लज्जत इति क्विप्। अत्र पदस्यावसाने संयोगः। मग्न इति। टुमस्जो शुद्धौ। एकाचइतीट्प्रतिषेधः (७।२।१०)। मस्जिनशोर्झलीति (७।१।६०) नुम्। स च भवन् मस्जेरन्त्यात् पूर्वो नुमनुषङ्ग-संयोगादिलोपार्थमिति वचनाद् (१।१।४७, वा) अन्त्याज्जकारात् पूर्वो भवति। तस्य चानिदितामित्यनुनासिकलोपः (६।४।२४)। तष्ट इति। तक्षू त्वक्षू तनू-करणे। ऊदित्त्वात् स्वरत्यादिसूत्रेण (७।२।४४) विभाषितेट्। तेन निष्ठायां यस्य विभाषेतीट्प्रतिषेधः (७।२।१५)। काष्ठशक्स्थातेति। काष्ठं शक्नोतीति क्विप्। काष्ठशकि स्थातेति सप्तमीति (२।१।४०) योगविभागात् समासः। तदत्रेत्यादिना झलि सङ्गीति वक्तव्यमिति यदुक्तं तत् प्रत्याचष्टे। तदिति वाक्योपन्यासार्थः। शकेः क्विबन्तस्य प्रयोग एव नास्तीति। शकेरन्येभ्योऽपि-दृश्यत इति (३।२।१७८) क्विप् स्यात्। इह च दृश्यत इत्यस्य ग्रहण एवाय-मर्थः। यत्र लौकिके प्रयोगे क्विबन्तस्य प्रयोगो दृश्यते तत्र यथा स्यादिति। न च लोके काष्ठशगित्येवंविधः शकेः क्विबन्तस्य प्रयोगो दृश्यते। ततः शकेः क्विबन्तस्य प्रयोग एव नास्ति। अत एतोर् झलि सङ्गीति वक्तव्यमित्येतत् प्रत्याख्यातुमाह भाष्यकारः काष्ठशगेव नास्ति। कुतोऽयं काष्ठशकि तिष्ठेदिति। आधारपरतन्त्र उदघनादावस्य वृत्तिः। अतो यत्र काष्ठशगाधारएव नास्ति तत्र तदाधेयःस्थाता सुतरामेव नास्ति। तस्मान्न झलि सङ्गीति वक्तव्यम्। व्यावर्त्त्या-भावात्। इह कस्मान्न भवति वाक्स्थातेति ? संयोगादिलोपे कुत्वस्यासिद्धत्वात्। अथेह कस्मान्न भवति वास्यर्थं काक्यर्थमित्याह वास्यर्थं काक्यर्थमित्यादि।

अथ स्कोरिति किमर्थम्। नर्नत्तीत्यत्र मा भूत्। नृतेर्यङ्लुगन्तस्य रुग्रिकौ च लुकोऽभ्यासस्य (७।४।९१) रुकि कृते रूपमेतत्। संयोगाद्योरिति किम्? पयः मगिति। क्विबन्तमेतत्। सोपपदस्य हि शकेः क्विबन्तस्य प्रयोग एव नास्ति। केवलस्य तु स्यादेव। अन्ते चेति किम्? तक्षिता। तक्षकः।

## ३०। चोः कुः।

झलि च पदान्ते चेति। परत इति प्रत्येकमभिसम्बध्यते। ननु च पूर्वसूत्रे चकारेण झलनुकृष्ट इति तस्येहानुवृत्तिरयुक्ता। नैतदस्ति। नहि तत्र चकारेण झलनुकृष्टः। किं तर्हि? स्वरितत्वादेवानुवर्त्तमानस्यान्तग्रहणं न बाधकमित्येतावच्चकारेण व्याख्यातम्। वागिति। वचेः क्विब् वचिप्रच्छ्यादिना (३।२।१७८, वा) क्विब् दीर्घश्च। क्रुञ्चेति। इह केचित् क्रुञ्च कौटिल्याल्पीभावयोरिति सरेफं ञकारोपधं धातुं पठन्ति। कुञ्च कौटिल्याल्पीभावयोरित्यरेफं नकारोपधं परे। तत्र पूर्वपाठं गृहीत्वा यश्चोदयेदथ क्रुञ्चेत्यत्र कस्मान्न भवतीति तं प्रत्याह क्रुञ्चेत्यादि। अनेन झलि सङ्गोति न वक्तव्यमिति यत् पूर्वं प्रत्याख्यातं तस्येहार्थतां दर्शयति। युजिक्रुञ्चाञ्चेति (३।२।५९) निपातनाद्वेति। क्रुञ्चेत्यत्र ञकारस्य चकारे कुत्वं न भवतीति सम्बन्धः। ञकारिपदस्य सरेफस्य पाठमभ्युपेत्य प्राप्तौ तस्यामेवं परिहारद्वयमुक्तम्। इदानीं कुत्वस्य प्राप्तिरेव नास्ति। यस्मान्नायं ञकारोपधः पठ्यते। किं तर्हि? नकारोपधइति दर्शयितुमाह नकारोपधो वेत्यादि। किं पुनः कारणं नकारोपधः पठ्यत इत्याह सकारलोपे हीत्यादि। निकुचितइत्येष प्रयोगोऽस्त्येव। धातोर्निष्ठान्तस्य श्नान्नलोपइत्यनुवर्त्तमाने (६।४।२३) ऽनिदितामिति (६।४।२४) नलोपादिह नकारलोपस्य दर्शनान्नकारोपधोऽयं पठ्यते। अन्यथा ह्येष प्रयोगो नोपपद्यते। नहि ञकारलोपस्य किञ्चिल्लक्षणमस्ति। यदि तर्हि कुञ्चेति रेफरहितो नकारोपधः पठ्यत एवं सति क्रुङ् क्रुञ्चौ क्रुञ्च इति न सिध्यति। ऋत्विगित्यादिना सूत्रेण (३।२।५९) हि क्विनि कृतेऽनिदितामिति (६।४।२४) नलोपे कुक् कुचौ कुच इत्येवं प्राप्नोतीत्यत आह युजिक्रुञ्चामित्यादि। स्यादेतत्। यद्यपि नकारलोपाभावो निपात्यते तथापि नकारस्यानुस्वारे तस्य ययि परसवर्णे (८।४।५८) ञकारे स्यादेव कुत्वमित्यत आह तत्रेत्यादि। गतार्थम्।

## ३१। हो ढः।

सोढ़ेति। हो ढ इति ढत्वे कृते झषस्तथोर्धोऽध इति त्वचत्कारस्य धत्वम्। ष्टुत्वम्। ढो ढे लोपः (८।३।१३)। सहिवहोरोदवर्णस्येत्योत्त्वम् (६।३।११२)। जला-षाड़िति। जलं सहत इति। भजो ण्विः (३।२।६२)। छन्दसि सह (३।२।६३) इति ण्विः। उपधावृद्धिः। उपपदसमासः। अन्येषामपि दृश्यत इति (६।३।१३७) पूर्वपदस्य दीर्घः। ढकारस्य जश्त्वं डकारः। तस्य चर्त्वं टकारः। सहेः साड़ः स इति (८।३।५६) मूर्धन्यः। प्रष्ठवाड़िति। वहश्चेति (३।२।६४) ण्विः। चुहोः कुढावित्येकयोगएव कर्त्तव्ये पृथग् योगकरणं समसंख्यात्वप्रतिषेधार्थम्। एकयोगे तु समसंख्यत्वाज्झलादौ कुत्वं पदान्ते ढत्वं स्यात्।

## ३२। दादेर्धातोर्घः।

दग्धा दग्धुमिति। पूर्ववद्धत्वम्। घकारस्य झशि जश्त्वं गकारः। काष्ठध-गिति। क्विबन्त मेतत्। एकाचो बशो भषित्यादिना (८।२।३७) दकारस्य भष् धकारः। घकारस्य जश्त्वं गकारः। तस्य चर्त्वं ककारः। दादेरित्युच्यते। तेनाधोगित्यत्र घत्वं न सिध्यति। अदकारादित्वेऽस्याविहितत्वादित्यतश्चाह धातोरित्यादि। तद्विशेषणमिति। दादेर्विशेषणमित्यर्थः। किं विशिष्टम्? अवयवषष्ठ्यन्तमिति। अवयवसम्बन्धिनी या षष्ठी तदन्तमित्यर्थः। किं कृतं भवतीति? एवं सति किमिष्टं साधितं भवतीत्यर्थः। अधोगित्यत्रापि घकारः सिद्धो भवतीति। अत्रापि धातोरवयवो यो दादिशब्दस्तदवयवत्वाद्धकारस्य। दुहे लङ्। तिप्। अदादित्वाच्छपो लुक्। हल्ङ्यादिलोपः (६।१।६८)। पूर्ववद्भष्भावः। अट्। कथमित्यादि। धातोरवयवो यो दादिशब्द स्तद-वयवस्य हकारस्य घत्वं भवति। एवं सति दग्धा दग्धुमित्यत्र घत्वं न कथञ्चि-दित्यर्थः। तथाह्यत्र धातोरवयवो यो दादिशब्दो न तस्यावयवो हकारः। यस्य तु समुदायस्य हकारोऽवयवः स धातुरेव। न हकारावयवः। अतोत्तरमाह व्यपदेशिवद्भावादिति। एषोऽपि व्यपदेशिवद्भावेन धातो र्दादिरवयवो भवति। अभेदेऽपि व्यपदेशिवद्व्यवहारो लोके दृश्यते। तथाहि शिलापुत्रकस्य शरीरं राहोः शिरइति च। अथवेत्यादि। धातूपदेशो धातुपाठः। तत्र यो दादि रित्येवं विज्ञायते। कथं पुनर्धातुपाठे दकारादित्वं विशेषणं लभ्यते। धातु-

ग्रहणसामर्थ्यात्। तस्य चेदं प्रयोजनं स्यादधातो र्मा भूदिति। एतच्चाप्रयोजनम्। नह्यधातोर्धकारादेर्झलि वा पदान्ते च हकारोऽवयवः सम्भवति यन्निवृत्त्यर्थं धातुग्रहणम्। तदतिरिच्यमानं धातूपदेश एव दकारादित्वं विशेषणम् भवतीत्यमुमर्थं गमयति। एवं विज्ञायमाने यद्यपि धातोरित्यस्य दादेरित्यनेन सामानाधिकरण्यं तथाप्यधोगित्यत्र घत्वं प्रवर्त्तत एव। धातुपाठे दुहे दंकारादित्वात्। तथाचेत्यादि। एवञ्च विज्ञायमाने यद्यपि दामलिह्यते दंकारादित्वं तथापि दामलिड़ित्यत्र न भवति घत्वम्। धातूपदेशे तस्यादकारादित्वात्। धातुत्वं तस्य सनाद्यन्ता धातव इति ( ३।१।३२ )। न केवलमधोगितत्र घत्वं भवत्यपितु दामलिहेरपि भवतीत्यपिशब्दो द्योतयति। दाम लेढ़ीति दामलिड़िति क्विप्। तदन्ताद् दामलिहमिच्छतीति सुप आत्मनः क्यजिति ( ३।१।८ ) क्यच्। क्यजन्तात् क्विप्। अतो लोप ( ६।४।४८ ) इत्यकारलोपः। क्यस्य विभाषेति ( ६।४ ५० ) यकारस्य च। हो ढ़ इति ( ८।२।३१ ) ढत्वम्। ढकारस्य जश्त्वम्।

## ३३। वा द्रुहमुहष्णुहष्णिहाम्।

द्रुहेरिति। द्रुह जिघांसायामित्यस्य। इतरेषामिति। मुह वैचित्त्ये। ष्णुह उद्गरणे। ष्णिह प्रीतावित्येतेषामप्राप्तेः। पुनरेषां घत्वं स्याददकारादित्वात्।

## ३४। नहो धः।

उपानदिति। णह बन्धने। क्विप्। नहिवृतीत्यादिना दीर्घः ( ६।३।११६ )। एवं परीणदिति। अत्र णत्वं तूपसर्गादसमासेऽपीत्यादिना ( ८।४।१४ )। प्रक्रियालाघवार्थं दकारे विधातव्ये धकारविधानं नद्धेतत्र झषस्तथोर्धोऽध इति धत्वं ( ८।२।४० ) यथा स्यादित्येवमर्थम्। दकारे हि तन्न स्यात्। दकारस्याझष्त्वात्। रदाभ्यां निष्ठा तो न इत्येवमर्थं ( ८।२।४२ ) च। नकारो यथा न स्यादिति।

## ३५। आहस्थः।

आत्थेति। ब्रुवः पञ्चानामादित आहो ब्रुव ( ३।४।८४ ) इति लड़ादेशस्य सिप स्थल् ब्रुवश्चाहादेशः। तस्यानेन थकारः। तस्य खरि चेति ( ८।४।५५ )

चर्त्वं तकार। किमर्थमादेशान्तरं क्रियते? न प्रकृतेर्विकारएव विधीयत इत्यतआह आदेशान्तरकरणमित्यादि। यदि धकार आदिश्येत ततो झष-स्तथोर्धोऽध इति (८।२।४०) धत्वं स्यात्। अत स्तन्निवृत्त्यर्थं मादेशान्तरं क्रियते। हृग्रहोरित्यादि। हरतिग्रहेश्च यो हकार स्तस्य च्छन्दसि विषये भकारो वक्तव्यः। हकारस्येति वचनं हरत्यर्थम्। ग्रहे स्त्वलोऽन्त्यस्येत्येव (१।१।५१) भविष्यति हकारस्य। ग्रभीतेति। हन्। इट्। ग्रहोऽलिटि दीर्घः (७।२।३७)। जभ्रिर इति। हृञो लिट्। लिट स्तझयोरेशिरेजिति (३।४।८१) झस्येरच्। यणादेशः। द्विर्वचनमभ्यासकार्य्यम्। उद्ग्राभं निग्राभमिति। ग्रहेर् हलश्चेति (३।३।१२१) घञ्। एतत् तु सर्वं व्यतयो बहुलमिति (३।१।८५) वर्णव्यत्ययेनैव सिद्धम्। वक्तव्यग्रब्दस्य व्याख्येयमित्येषोऽर्थो वेदितव्यः।

## ३६। व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः।

ओव्रश्चू छेदने। भ्रस्जो पाके। सृज विसर्गे। मृजू शुद्धौ। यज देवपूजा-सङ्गतकरणदानेषु। राजृ दीप्तौ टुभ्राजृ टुभ्राशृ टुभ्लाशृ दीप्तौ। छ इतिच्छकारा-न्तानां ग्रहणम्। श इति शकारान्तानाम्। अत्र च शकारस्य जश्त्वे प्राप्त इतरेषां तु कत्वे तदपवादः षकारो विधीयते। व्रष्टेति। स्कोः संयोगाद्योरिति (८।२।२९) सकारलोपः। ऊदित्त्वात् पक्ष इड़भावः। मूलवृड़् धानाभृड़िति। ग्रहिज्येति सूत्रेण (६।१।१६) संप्रसारणम्। स्रष्टेति। सृजिदृशोर्झल्यमकिती-(६।१।५८) त्यमागमः। मार्ष्टीति। मृजेर्वृद्धिः (७।२।११४)। उपयड़िति। यजेर्विजुपे छन्दसीति (३।२।७३) विच्। सम्राड़िति। मो राजि समः क्वाविति (८।३।२५) समो मकारस्य मकारादेशः। किं पुनः कारणं राजभ्राजोर्झल्युदा-हरणं न प्रदर्शितमित्याह राजभ्राजोरित्यादि। झलत्वं कस्मान्न भवतीत्याह झलादिराभ्यामित्यादि। आभ्यां परो यो झलादिः स इटा पर्य्यवपद्यत इतीड़् विधीयते (Q)। सेट्त्वादनयोः। इतरेष्वाद्यचतुर्थौ विभाषितेटौ। स्वरतीत्यादि-सूत्रेण (७।२।४४)। शेषास्त्वनिटः। एकाच इतीट्प्रतिषेधात् (७।२।१०)। तस्मात् तेषामुभयार्थमेव ग्रहणम्। राष्टिभ्राष्टिरिति। क्तिन्नाबादिभ्यश्चेति (३।३।९४, वा) क्तिन्प्रत्ययः। तुतन्वेत्यादिनेट्प्रतिषेधः (७।२।९)। शब्दप्राड़िति। शब्दं पृच्छतीति क्विब्वचीत्यादिना (३।२।१७८, वा) क्विप्।

(Q) पर्य्यवपद्यते व्यवधीयत इत्यर्थः।

दीर्घश्च। अथ किमर्थं छग्रहणम्? यावता च्छ्वोः शूडनुनासिके चेति (६।४।१९) च्छकारस्य शकारे कृते शकारान्तत्वादेव पृष्टइत्यादौ षत्वं भविष्यतीत्यतआह च्छ्वोः शूड़ित्यादि। अत्रेत्यादि। इतिकरणो हेतौ। तत्र ह्यनुनासिकस्य क्वि-झलोः क्ङितीत्यनुवर्त्तते (६।४।१५)। तेन च्छग्रहणं क्रियते। अन्यथा पृष्टः पृष्टवानित्याद्येव सिध्येत्। नतु प्रष्टा प्रष्टुमित्यादि। हजादावक्ङिति शत्वाभावात्। एतच्च सूत्रकारमतेनोक्तम्। केचिदाचार्य्या च्छग्रहणमिह सूत्रे प्रत्याचक्षत एव। तथाहि च्छ्वोः शूड़नुनासिके चेत्यत्रोक्तं (६।४।१९) केचिदिह क्ङितीत्येतन्नानु-वर्त्तयन्ति। कथं द्युभ्यां द्युभिरित्यूठ कृते दिवउदिति (६।१।१३१) तपरकरणान् मात्राकालो भविष्यतीति? छशां ष इत्यत्र च्छग्रहणं न कर्त्तव्यम्। अनेनैव हि सर्वत्र शकारो विधीयतइति। लेष्टेति। लिश अल्पीभावे। वेष्टेति। विश प्रवेशने।

## ३७। एकाचो बशो भष् झषन्तस्य स्ध्वोः।

धातोरिति यदीहानुवर्त्तते तदवयवषष्ठ्यन्तमेकाचो विशेषणम्। झषन्तस्येत्येत-तदपि समानाधिकरणं तस्यैव विशेषणम्। एकाच इतीतदवयवषष्ठ्यन्तम् बशः। तदवयवस्येति। तस्यावयवस्तदवयवः। योऽसौ धातोरवयव एकाज् झषन्तस्तस्य तदित्यनेनाभिसम्बध्यते। झलि परत इत्यनेन झलीत्यनु-वर्त्तते। तस्य सकारो विशेषणमिति दर्शयति। किमर्थं पुनर्झलीत्यनुवर्त्तते? पदान्तस्येत्यनुवृत्ति यथा स्यात्। अन्यथा झलीत्यस्मिन् निवर्त्तमाने तत्सम्बद्धं पदान्तग्रहणमपि निवर्त्तते। ततश्च पदान्ते न सिध्येत्। ननुच स्वरितत्वात् पदान्तस्येत्यस्यानुवृत्ति भविष्यति। तद्यनेनापि प्रकारेणाख्यायते मन्दधियां सुखप्रतिपत्तये। ध्वशब्दे चेति। अत्र झलीतीतन्नापेक्षते असम्भवात्। नहि कश्चिज् झल् ध्वशब्दोऽस्ति। तस्य प्रत्याहारेष्वसन्निवेशात्। भोत्स्यतइति। बुध अवगमने। लृट्। स्यः। खरि चेति (८।४।५५) चर्त्वं तकारः। अनुदात्त-त्वादात्मनेपदम्। अत्र बुधेर्धातौ व्यपदेशिवद्भावेन स्वरूपमेवैकाजवयवो झषन्तः। तदवयवो बकारो बश्। अस्यान्तरतम्यादोष्ठस्य स्थान ओष्ठ एव भकारो भविष्यति। एवमन्यत्रापि विज्ञेयम्। अबुद्धेति। लुङ्। धि चेति (८।२।२५) सकारलोपः। लिङ्सिचावात्मनेपदेष्विति (१।२।११) कित्त्वाद् गुणाभावः।

अर्थभुदिति। क्विप्। निघोक्ष्यत इति। गुहू संवरणे। हो ढ इति (८।२।३१) ढत्वम्। षढोः कः सीति (८।२।४१) कत्वम्। आदेशप्रत्यययो-(८।३।५९) रिति षत्वम्। न्यघूढ़मिति। ढ़लोपे पूर्वस्य दीर्घोऽणः (६।३।११)। धोक्ष्यत इति। दुहो लृट्। दादेर्धातोर्घः (८।२।३२)। तस्य खरि चेति (८।४।५५) चर्त्वं ककारः। अजघर्घेरिति। गृधु अभिकाङ्क्षायाम्। यङ्। द्विर्वचनम्। हलादिशेषः। उरदित्यत्त्वम् (७।४।६६)। कुहोश्चुरिति (७।४।६२) चुत्वम्। यङोऽचि चेति (२।४।७४) यङ्लुक्। रुग्रिकौ च लुकीति (७।४।९१) रुक्। जगृध् इति स्थिते लङादयो विधेयाः। अत्र मुख्यएव गृध इत्ययं धातोर्झषन्तोऽवयवः। गर्दभयतेरिति। गर्दभशब्दात् तदाचष्ट इति णिच्। णाविष्ठवत् प्रातिपदिकस्येति (५।४।१५५ वा) टिलोपः। अत्र गर्द्दभीत्ययं मुख्यएव धातोर्भ्झषन्तोऽवयवः। अप्रत्यय इति। अश्वाविप्रत्ययः क्विबादिरप्रत्यय इत्युच्यते। (R) दामलिडिति। अत्र हो ढ इति (८।२।३१) ढत्वे कृते झषन्ततायामुपजातायामेकाज्ग्रहणाद् भष्भावो न भवति। ननु चात्र द्वावेकाजवयवौ दकारादिर्मकारान्तो लकारादिर्झषन्तश्च। तयो श्चासत्यप्येकाज्ग्रहणे नैव भष्भावः प्रसज्यते। तथाहि यो झषन्तस्तस्य बश् न विद्यते। यस्तु दकारादिर्मकारान्तस्तस्य बश् विद्यते। झषन्तता तु नास्ति। तदनर्थक मेकाज्ग्रहणमित्यत आह असत्येकाज्ग्रहण इत्यादि। बशो विशेषणं व्यवच्छेदार्थम्। व्यवच्छेदोऽर्थः प्रयोजनं यस्य तत् तथोक्तम्। यद्येकाज्ग्रहणं न स्यात् ततोऽन्यस्येह श्रुतत्वाद बशस्तु श्रुतत्वाच्च स एव धातोरित्यनेन विशेष्यते। न धातोरवयवो बशिति। एवञ्च बशो झषन्तता न सम्भवतीति झषन्तस्येत्यनेन धातुरेव विशेष्यते। अन्यस्येहासम्भवात्। तथाचायं सूत्रार्थः स्यात्। झषन्तस्य धातो र्योऽवयवो बश् तस्य झलि सकारे ध्वे च परतः पदान्ते च भष् भवतीति। अस्मिंश्च सूत्रार्थे दामलिड़ित्यत्रापि प्रसज्येत। भवति दकारोऽत्र बश् झषन्तस्य धातोरवयवः। एकाचइत्येतस्मिन् सति धातोर्झषन्तस्येत्येतदुभयास्तस्यैव विशेषणं भवति। तदपि बशः। तेन वृत्तिकारोपदर्शित एव सूत्रार्थो जायते। ततश्च न किञ्चिदनिष्टमापद्यते। दामलिड़िति। अत्र हि यो झषन्त एकाजवयवो लकारादिर्न तस्य बश् विद्यते। यस्य तु विद्यते दकारादिर्मान्तस्य स झषन्तो न भवति। क्रोत्स्यतीति। क्रुध कोपे। दादशेति।

(R) अविद्यमानः प्रत्ययोऽप्रत्ययइत्यर्थः।

दीर्घोऽकित इत्यभ्यासस्य (७।४।८३) दीर्घत्वम्। अन्तग्रहणमसन्देहार्थम्। असति हि तस्मिन् सन्देहः स्यात् किमत्र बशः (S) स्थानित्वमथ झषइति। (T)

## ३८। दधस्तथोश्च।

दधातेरप्येतत् कृतद्विर्वचनस्य रूपमस्ति। दध धारण इत्यस्य चाकृतद्विर्वचनस्य रूपम्। तत्र तु शपा व्यवहितत्वादनन्तरौ तथौ न सम्भवतः। तस्माद् दधातेरेव ग्रहणं विज्ञायत इत्याह दध इति कृतद्विर्वचनो दधातिः परिगृह्यत इति। धत्तो धत्थ इति। लटस्तस्थसौ। शपः श्लुपि द्विर्वचनम्। अभ्यासे चर्च (८।३।५४) इति जश्त्वं दकारः। श्नाभ्यस्तयोरातः (६।४।११२) इत्याकारलोपः। अभ्यासदकारस्य भष् धकारः। धातुधकारस्य चर्त्वं तकारः। धत्सइति। थासः से (३।४।८०)। धध्वेइति। टेरेत्वम्। धध्वमिति। लोटि सवाभ्यां वामावित्यमादेशः (३।४।९१)। कथं पुनरत्र भष्भावः? यावता दधातेर्झषन्तस्य यो बश् तस्य भष् भवतीत्युच्यते। अत्र नापि झषन्तताऽस्ति। आकारलोपस्याचः परस्मिन् पूर्वविधाविति (१।१।५७) स्थानिवद्भावात्। नापि बश्। अभ्यासजश्त्वस्यासिद्धत्वादित्यत आह वचनसामर्थ्यादित्यादि। अभ्यासजश्त्वस्यासिद्धत्वमिति वचनसामर्थ्यान्न भवतीत्यपेक्षते। यद्याकारलोपस्य स्थानिवद्भावः स्यादभ्यासजश्त्वस्यासिद्धत्वम्। एवं सत्यपार्थकतैवास्य वचनस्य स्यात्। नहि दधातेराकारलोपेन विना बश् स्यात्। तस्माद् वचनप्रामाण्यादुभयं न भवति। इह झलीत्यनुवर्त्तते। झषन्तस्येति च। तकारथकाराभ्यामन्यः स झलस्ति यत्र दधातेर्झषन्तस्य भष्भावो नेष्यते। तस्मात् तथोरिति वचनमन्तरेणापि

---

(S) बशो भष्विधौ स्पर्शबकारप्रकरणस्योपयोगः। तदत्र प्रदर्श्यते—

बुक्किबिन्दिबलिबाहिबाड़यो बर्हिबल्हिबधबंहियोजिताः।
अम्बिलम्बिबुधरम्बिलुम्बयः चीबितुम्बिबहिचुम्बिकुम्बयः॥१॥
क्लीबिबाधिकबयो बुधिर्बदिः स्थं थ्यकं बिटबणौ च भूगणे।
ब्रूअदादिषु मतो बुधिस्तथा केवलो हि गणितो दिवादिषु॥२॥
एक एव बिलतिस्तुदादिषु क्र्यादिगेष् किल बन्धिरेव च।
धुल्बशम्बबहिबर्हिबुस्तयः सम्बलुम्बबुसतुम्बिकुम्बयः॥३॥
प्राणने च बलति श्चुरादिषु स्थापिता ब इति तेषु वर्गगः।
भष्त्वजश्त्वविधिवाञ्छया पृथक् स्यात् ततो यणि धृतो हि वोऽन्यतः॥४॥ इति।

(T) बशो भष्—यथा भोत्स्यते। घोत्स्यते। डुण्डुभ माचचाणो डुण्ढुप्। धोत्स्यते। एवं हि "चत्वारो भष आदेशाः स्थानिनस्तु वशस्त्रयः। डकारस्य तु न क्वापि सम्भवोऽस्ति कथञ्चन॥१॥" इति मिश्रवाक्यं तु विचार्य्यमेव। तुन्दिभ इति केचिन् मूर्धन्यमध्यं पठन्ति तुण्डिभ इति। तस्माच्च तुण्टिबिति स्यात्।

सिद्धमिष्टमितरभिप्रायेणाह तयोरिति किमिति। आनन्तर्यादित्यादि। अनन्तर-सूत्रे हि सध्वोरित्युक्तम्। तत्र आनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति (प,६२) सध्वोरेव भष्भावो विज्ञायते। न तयोः। अतस्तयोरित्युच्यते। यद्येवं निमित्तान्तरोपादाने पूर्वस्य निमित्तस्य निवृत्त्या भवितव्यम्। ततश्च तयोरेव स्यात्। न भध्वोरित्यत आह चकारइत्यादि। परिहारः।

## ३९। झलां जशोऽन्ते।

श्वलिड़िति। ढत्वे कृते जश्त्वम्। अथान्तग्रहणं किमर्थम्? ननु स्कोः संयोगाद्योरन्ते चेत्यतो (८।२।२९) ऽन्तग्रहणमनुवर्त्तत एवेत्यतआह अन्तग्रहण-मित्यादि। तद्ध्यन्तग्रहणं झलीत्यनेन सम्बद्धम्। अत स्तदनुवृत्तौ झलीत्येतद-प्यनुवर्त्तेत। तस्मादेतन्निवृत्त्यर्थमन्यदेवान्तग्रहणं क्रियते। तेन च वसते र्वस्ता वस्तुमित्यत्र न भवति।

## ४०। झषस्तथोर्धोऽधः।

अधइति। अनेन धातुप्रतिषेधोऽयं न धकारप्रतिषेध इति दर्शयति। यदि हि धकारप्रतिषेधः स्याद् धकारात् परयोस्तथोर्धकारो न भवतीति। ततो मति-बुद्धिपूजार्थेभ्यश्च (३।२।१८८) वृद्धिर्यस्याचामादिस्तद्वृद्ध (१।१।७३) मित्येवमादयो निर्देशा नोपपद्येरन्। अलब्ध। अलब्धा इति। लुङ्। तस्य तआसौ। झलो झलीति (८।२।२६) सकारलोपः। अलीढ़। अलीढ़ा इति। ढत्वष्टुत्वढ़लोप-दीर्घत्वानि कर्त्तव्यानि।

## ४१। षढोः कः सि।

पेक्ष्यतीति। पिष्लृ सञ्चूर्णने। लृट्। अपेक्ष्यदिति। लृङ्। पिपिक्ष-तीति। सन्। हलन्ताच्चेति (१।२।१०) कित्त्वाद् गुणाभावः। पिनष्टीति। रुधादित्वात् श्नम्। लेढीति। अदादित्वाच्छपो लुक्।

## ४२। रदाभ्यां निष्ठातो नः पूर्वस्य च दः।

आस्तीर्णमिति। स्तृञ् आच्छादने। ऋत इद्धातो (७।१।१००) रिती-त्वम्। हलि चेति (८।२।७७) दीर्घः। विशीर्णमिति। शॄ हिंसायाम्।

निगीर्णमिति। गॄ निगरणे। एषु श्र्युकः क्तितीतीट्प्रतिषेधः ( ७।२।११ )। अवगूर्णमिति। गुरी उद्यमने। श्वीदितो निष्ठाया मितीटप्रतिषेधः (७।२।१४)। अथ यथा क्रपो रो लइत्यत्र ( ८।२।१८ ) रइति वर्णत्वावर्णत्वकृतं भेदमुत्सृज्य सामान्यस्योपादानं तथेहापि। अस्ति च ऋकारे रेफः। ततश्च कृतः कृतवानित्यत्र भवितव्यमेव नत्वेनेति यो मन्यते तं प्रत्याह र इत्यत्रे त्यादि। यद्यत्र र इति सामान्यमुपादीयेत तस्मादेषः प्रसङ्गः। न तु रश्रुतिसामान्यमुपादीयते। किं तर्हि ? व्यञ्जन मर्द्धमात्रात्मकम्। न च समानाकारोऽस्तीति कुतो नत्वप्रसङ्गः ? भवतु नाम सामान्यस्योपादानम्। तथापि नैवात्र नत्वं प्रसज्यत इति दर्शयितुमाह सामान्यनिर्देशेऽपीत्यादि। ऋकारेऽत्र ये भागा स्तन्मध्यवर्त्ती रेफो मात्राचतुर्भागात्मकः। तत्र योऽसौ रेफात् परस्तृतीयो भागस्तेन व्यवधानान्न भवति। चरितं मुदितमिति। चर गत्यर्थः। मुद हर्षे। असति हि तइति ग्रहणे रदाभ्यामित्यनेन निष्ठा विशेष्यते रदाभ्यां परा या निष्ठेति। ततश्चरित मित्यादावादेः परस्येति ( १।१।५४ ) इटएव नत्वं स्यात्। तस्य निष्ठाभक्तत्वात्। अथ तइतुच्यमाने चरितमित्यादौ तकारस्य कस्मान्न भवति ? इटा व्यवहितत्वात्। स हि प्रत्ययभक्तत्वात् प्रत्ययमेव न व्यवदध्यात्। तदवयवत्वं तु व्यवदध्यादेव। परस्य मा भूदिति। असति हि पूर्वग्रहणे यदि हि सन्निहितया निष्ठया दकारो विशेष्येत—निष्ठाया यो दकारइति—ततो जश्त्वे कृते परस्यैव स्याद् भिन्नवद्भ्यां भिन्नर्भङ्गिरित्यादौ। अथ न विशेष्येत ततो विशेषानुपादानाद् यथा पूर्वस्य भवति तथा परस्यापि। तस्मात् परस्य मा भूदित्येवमर्थं पूर्वग्रहणं कृतम्। अथ कृतस्यापत्यमतइञ् ( ४।१।९५ ) कार्त्तिरित्यत्र कस्मान्न भवतीत्याह इहेत्यादि। वृद्धिर्हि तद्धितं निमित्तमाश्रित्य भवतीति बहिरङ्गा। नत्वं तु न किञ्चिद् बाह्यं निमित्तमाश्रित्य भविष्यतीत्यत स्तदन्तरङ्गम्। तस्माद् वृद्धेर्बहिरङ्गत्वान्नत्वे कर्त्तव्ये रेफस्यासिद्धत्वम्। ननु च यदि तर्हि बहिरङ्गलक्षणा सा तस्य एवासिद्धत्वेन भवितुं युक्तम्। न तु रेफस्यापि। नहि रेफो वृद्धि र्भवति। नैष दोषः। वृद्ध्याश्रितो हि रेफः। ततो वृद्धेर्बहिरङ्गत्वाद्रेफस्यापि बहिरङ्गत्वेन भाव्यम्।

## ४३। संयोगादेरातो धातो र्यण्वतः।

प्रद्राण इति। द्रा कुत्सायां गतौ। कृत्यच इति ( ८।४।२९ ) णत्वम्।

म्लानइति। म्लै गात्रविनामे। च्युतः प्लुतइति। च्युङ् प्लुङ् गतौ। निर्यात इति। या प्रापणे। निर्वात इति। वा गतिगन्धनयोः। अत्र र्या र्वा इत्येतयो र्धातुत्वं न भवति। र्या इत्ययं हि समुदायः संयोगादिः। न चायं धातुः। किं तर्हि? या इत्ययम्। एवं र्वा इतग्रयं संयोगादिः। न चैष धातुः। किं तर्हि? वा इतग्रयम्। ननु च बहिरङ्गमत्र संयोगादित्वम्। द्विपदाश्रयत्वात्। नत्वं तु विपर्य्ययादन्तरङ्गम्। असिद्धं बहिरङ्गमन्तरङ्गे (प, ५१) इतासिद्धत्वादेव संयोगादित्वस्य नत्वं न भवतीति किं धातुग्रहणेन? एवं तर्ह्येतज् ज्ञापयति। उपसर्गसम्बन्धेन यो धर्म उपजायते धातूपसर्गसमुदायस्य स धातोरतद्धर्मेवतोऽपि कार्य्याणि प्रापयन्तीति। तेनोपास्यते गुरुरभिभूयते शत्रुरिति कर्मणि लकारः सिद्धो भवति। अत्र ह्युपसर्गसम्बन्धेन सकर्मकत्वधर्मो जातः। स च धातूपसर्गसमुदायस्य। न धातुमात्रस्य। तत्र यद्ययमर्थो न ज्ञाप्येत कर्मणि लकारो न स्यात्। धातोरकर्मकत्वात्। अस्मिंस्त्वर्थे ज्ञापिते तु भवति। स्नात इति। ष्णा शौचे।

## ४४। ल्वादिभ्यः।

जीन इति। ज्या वयोहानौ। ग्रहिज्येतादिसूत्रेण (६।१।१५) संप्रसारणम्। हल इति (६।४।२) दीर्घः। ऋकारल्वादिभ्य इतग्रादि। ऋकारान्तेभ्रा ल्वादिभग्रश्च परो यः क्तिन् स निष्ठा भवतीतेग्रतदर्थरूपं व्याख्येय मितग्रर्थः। व्याख्यानन्त्वोदितश्चेतग्रत्र (८।२।४५) चकारस्यानुक्तसमुच्चयार्थत्वात्। यथा ऋकारल्वादिभग्रो निष्ठा तकारस्य नत्वं भवति तथा क्तिनोऽपि तकारस्य नत्वं भवतीति। दुग्वोरिति। दु उपतापे। गु पुरीषोत्सर्गे। पूना इति। विनष्टा इतग्रर्थः। पूतं धान्यमिति। विधूतमितग्रर्थः। सिनोतेरिति। षिञ् बन्धन इतेग्रतस्य। ग्रासकर्मकर्त्तृकस्येति। ग्रासः कर्मकर्त्ता यस्य स तथोक्तः। अर्थद्वारकश्चेदम्। तस्य-ग्रासकर्मकर्त्तृकत्वं विशेषणं वेदितव्यम्। यथा सिनो ग्रासो बन्धनक्रियायां व्यञ्जनविशेषयोगादानुकूल्यं प्रतिपद्यते तथा कर्मणोऽपि सतस्तस्य कर्त्तृत्वं विवक्षित मिति कर्मकर्त्तासौ भवति। सिनो ग्रास इति। स्वयमेव बद्ध इतग्रर्थः। सिता पाशेन शूकरीति। समुदायप्रतुग्रदाहरणमेतत्। अवयवप्रतुग्रदाहरणं दर्शयितु माह ग्रासोऽपीतग्रादि। ग्रासोऽपि यदि कर्मैव भवति न कर्मकर्त्ता तदापि न

भवति। ग्रासकर्मकर्त्तृकत्वस्य तदाभावात्। ग्रासकर्मतो हि स तदानीं भवति ग्रासकर्मकर्त्तृकः।

## ४५। ओदितश्च।

आपीन इति। प्यायः पीति ( ६।१।२८ ) पीभावः। स्वादय ओदित इति। ते पुनः षूङ् प्राणिप्रसव इत्यादयो व्रीङ् प्रीणातर्य्थ इत्येवमन्ता दिवादिषु पठ्यन्ते।

## ४६। क्षियो दीर्घात्।

क्षिय इति। क्षि क्षये क्षि निवासगत्योरिति द्वयोरपि ग्रहणम्। विशेषानुपादानात्। क्षीणाः क्लेशा इति। क्तोऽधिकरणे चेत्यादिनाकर्म-( ३।४।७६ ) कत्वात् कर्त्तरि निष्ठा। निष्ठायामण्यदर्थ इति ( ६।४।६० ) दीर्घः। क्षीणो जाल्मः क्षीण स्तपस्वीत्यादि। वाक्रोशदैन्ययोरिति ( ६।४।६१ )। ननु च क्षिय इति निर्द्देशादेव दीर्घस्य ग्रहणं विज्ञायते। तत् किं दीर्घग्रहणेन? यदि ह्रस्वस्येदं ग्रहणं स्यादेवं सति परत्वाद् घेर्ङितीति ( ७।३।१११ ) गुणे कृते क्षेरिति निर्देशः स्यादित्यत आह ह्रस्वस्यापि हीत्यादि। यदि नियोगतो दीर्घस्यैव धात्वनुकरणस्येयङा निर्देशः स्यात् ततोऽस्मान्निर्देशाद् दीर्घस्येदं ग्रहणमिति विज्ञायते। नच दीर्घस्यैवेयङा निर्द्देशो भवति। तथाहि ह्रस्वान्तस्यासौ दृष्ट क्षियः। निष्ठायामण्यदर्थ इत्यत्रावसितं ( ६।४।६० ) ह्रस्वान्तस्येदमनुकरणम्। न दीर्घान्तस्येति। उच्यते। यथाभूतस्यैवानुकर्त्तुं युक्तम्। ह्रस्वान्तस्य च दीर्घत्वं विधेयम्। अतस्तस्यैवानुकरणमिदमिति विज्ञायते। यदि तर्हि ह्रस्वान्तस्यापि धात्वनुकरणस्येयङा निर्देशो भवति विपराभ्यां जे ( १।३।१९ ) विभाषा चेः ( ७।३।५८ ) रित्येवमादावपि कस्मान्न भवति? इह विपराभ्यां जे ( १।३।१९ ) रित्येवमादावित्यादि। अत्रासंकल्पमित्येतदध्याहार्य्यम्। धात्वनुकरणस्य हि प्रकृतिवदनुकरणं भवतीतीयङा निर्द्देशो भवति। धात्वनुकरणञ्च किं भवितु मर्हति येन धातावनुकार्य्यत्र स्थितम्? धातुत्वं क्रियावाचित्वलक्षणं विवक्ष्यते। विपराभ्यां जे रित्येवमादौ ( १।३।१९ ) त्वनुकार्य्यगतं धातुत्वं सदप्यविवक्षितत्वादसङ्कल्पम्। तस्मान्नात्र धात्वनुकरणम्। अपितु ङीप्रभृतेः क्रियावाचिनश्च तत्सादृश्यशब्दान्तरस्य ङीत्येवमादे यद्रूपसामान्यमर्थशून्यं तदनुकरणं

द्रष्टव्यम्। तस्मादधात्वनुकरणत्वान्न भवतीयङादेश इत्यभिप्रायः। यदि तर्हि धात्वनुकरणं स्यात् प्रकृतिवदनुकरणं भवतीति। एवं सत्यधातोरिति (१।२।४५) प्रातिपदिकसंज्ञाप्रतिषेधोऽपि स्यात्। ततश्च विभक्ति नोपपद्यते। वत्करणेना नुकार्य्येणार्थेनार्थवत्त्वस्याश्रयात् प्रातिपदिकसंज्ञा भविष्यतीत्यदोषः।

## ४७। श्योऽस्पर्शे।

शीनमिति। श्यैङ् गतौ। द्रवमूर्त्तिस्पर्शयोः श्य इति (६।१।२४) संप्रसारणम्। हलइति (६।४।२) दीर्घः। शीतं वर्त्तत इति। भावे निष्ठा। पूर्वत्र तु कर्त्तरि। एवं शीतो वायुरित्यादौ(U)। शीतमुदकमित्यत्रेत्यादि। गुणभूतोऽपीति। अप्रधानभूतोऽपीत्यर्थः। ननु च प्रधाने कार्य्यसंप्रत्ययादप्रधानस्य नत्वप्रतिषेधादि कार्य्यं प्रति निमित्तभावो नोपपद्यते। नैष दोषः। अस्पर्श इति हि यद्ययं पर्य्युदासः स्यादेवं सति शीतो वायुरित्यादौ स्पर्शादन्यद्द्रव्यमस्तीति नत्वं स्यात्। नत्वयं पर्य्युदासः। किं तर्हि? प्रसज्यप्रतिषेधः। तेन यत्र स्पर्शगन्धोऽस्ति तत्र तदाश्रयेण नत्वप्रतिषेधेन भवितव्यम्। अस्ति चेह गुणभूतः स्पर्शः। तेन तदाश्रयो नत्वप्रतिषेधो भवत्येव। भवत्वेवं नत्वप्रतिषेधः। संप्रसारणस्य तु गुणभूतः स्पर्शः कथं कारणं भवति? नियमस्य त्यागात्। इहाल्पाच्तरमिति (२।२।३४) नियमः। अल्पाच्तरं इन्द्वे पूर्वमेव प्रयोक्तव्यमिति द्रवमूर्त्तिस्पर्शयोः श्य इत्यत्र (६।१।२४) स्पर्शशब्दस्याल्पाचतरस्य परनिपातं कुर्वताऽस्य नियमस्य त्यागः कृतः। स किमर्थं कृतः? स्पर्शोऽत्रानियमेन प्रधानभूत उपसर्जनभूतो वा संप्रसारणस्य कारणमित्यस्यार्थस्य सूचनार्थः। तेन गुणभूतोऽपि स्पर्शः संप्रसारणस्य निमित्तं भवति। स्पर्शशब्दोऽयमस्ति गुणवचनः। अस्ति च रोगवचनः। तदिह विशेषानुपादानादुभयोरपि ग्रहणम्। ततो रोगेऽपि प्राप्नोतीति प्रतिशीन इत्येतन्न सिध्येदिति चोद्यमाशङ्क्याह गुणे चेत्यादि। गुण एवेत्यर्थः। कथं पुनर्गुण एव प्रतिषेधो लभ्यते? ज्ञापकात्। यदयं द्रवमूर्त्तिस्पर्शयोः श्य इत्यत्र (६।१।२४) संप्रसारणं विधाय पुनः प्रतेश्चेति (६।१।२५) विधत्ते तज्ज्ञापयति श्यायतेर्यत्र ग्रहणं तत्र स्पर्श उपादीयमानो रोगं न प्रत्याययतीति। यदि हि प्रत्याययेत् पुनर्विधानमनर्थकं स्यात्। पूर्वेणैव सिद्धत्वात्। प्रतिपूर्वो हि रोग एव श्यायतिर्वर्त्तते। नान्यत्र।

---

(U) शीतो वायुः परिणमयिता काननोदुम्बराणामिति।

## ४८ । अञ्चोऽनपादाने ।

न चेदपादानं तत्र भवतीति । तत्रेत्यनेनाञ्चतिः परामृश्यते । शब्दद्वारेणाञ्चत्यर्थ एवाय मपादानस्य प्रतिषेधसामर्थ्याद् विज्ञायते । नह्यञ्चतावपादानत्वं सम्भवति । किं तर्हि ? तदर्थे क्रियाविषयत्वात् कारकाणाम् । तदेतदुक्तं भवति नचेदञ्चत्यर्थ विषयभूतेऽ पादानं न भवतीति । समक्तावित्ति । सङ्गतावित्यर्थः । अञ्चु गतिपूजनयोरित्युदित्त्वाद् विभाषितेट् । तेन यस्य विभाषेति ( ७।२।१५ ) निष्ठायामिट्प्रतिषेधः । अनिदितामित्यनुनासिकलोपः ( ६।४।२४ ) । उदक्तमुदकमिति । उद्धृतमुदकमित्यर्थः । अथ व्यक्तमित्यत्र नत्वं कस्मान्न भवतीत्याह व्यक्तमित्येतदित्यादि । अञ्जू व्यक्तिम्रक्षणकान्तिगतिष्वित्यस्यैतद्रूपम् । नाञ्चतेः । ततो नत्वमिह न भवतीति भावः ।

## ४९ । दिवोऽविजिगीषायाम् ।

आद्यूनः परिद्यून इति । अविजिगीषुरित्यर्थः । च्छ्वोः शूडनुनासिके चेति ( ६।४।१९ ) ऊठ् । द्यूतं वर्त्तत इति । विजिगीषार्थोऽत्र विवक्षित इति नत्वं न प्रवर्त्तते । कथं पुनरिह विजिगीषार्थः ? यावताक्षपातनलक्षणक्रीडा न प्रतीयत इत्याह विजिगीषायां हीत्यादि । विजेतुमिच्छा विजिगीषा । तस्यां तत्र क्रीडायामक्षपातनादि क्रियते । तस्माद् विजिगीषार्थेऽ वतिष्ठत इति भावः । आदिशब्देन शलाकापातादेर् ग्रहणम् ।

## ५० । निर्वाणोऽवाते ।

वातिरुत्तरस्येति । वा गतिगन्धनयोरित्येतस्मात् । न चेत्यादि । वातमधिकरणमाधारो यस्य स तथोक्तः । एतदुक्तं भवति । वातेर्धातोर्योऽर्थः स यदि वातेन समवेतो भवतीत्यर्थः । निर्वाणोऽग्नि निर्वाणः प्रदीप इति । अत्र स्वरूपस्य यः प्रशम उपरतिलक्षणः स धात्वर्थः । एष निर्वाणो भिक्षुरिति । अत्रापि । अथवा रागादिप्रहाणं धात्वर्थः । निर्वातो वात इति । अकर्मकत्वात् कर्त्तरि निष्ठा । निर्वातं वातेनेति । अत्र भावे । उभयत्राप्यत्र गतिनिरोधो धात्वर्थः । निर्वाणः प्रदीपो वातेनेति । अत्र वातेनेति कर्त्तरि तृतीया । तस्माद् वात एव वात्यर्थस्याधारस्ततश्च नत्वेन न भवितव्यमिति कस्यचिद् व्यामोहः स्यात् । अत

स्तन्निराकरणायाह निर्वाणः प्रदीप इत्यादि। अत्र निर्वाणं धात्वर्थः। तच्च प्रदीपाधारम्। न वाताधारम्। वाताधारे हि तस्मिन्निर्वाण इति यदि कर्त्तरि निष्ठा तदा तयैवाभिहितत्वात् कर्त्तुर्वातात् तृतीया न स्यात्। अथ नपुंसके भावे क्त इति (३।३।११४) भावे? एवं सति निर्व्वाण इति पुंलिङ्गं न स्यात्। तस्मात् प्रदीपएव कर्त्ता धात्वर्थस्याधारः। यद्येवं कथं वातेनेत्यत्र तृतीयेत्यत आह वातस्त्वित्यादि। एतेनेषा तृतीया न कर्त्तरीति दर्शयति।

## ५१। शुषः कः।

शुष शोषण इत्यस्मात् परस्य निष्ठातकारस्य ष्टुत्वे प्राप्ते ककारो विधीयते। अकार उच्चारणार्थः। शुष्कः शुष्कवानिति। युक्तं शुष्कवानित्येतदुदाहरणम्। शुष्कइत्येतत् त्वयुक्तम्। न ह्येतदर्थेऽस्य सूत्रस्यारम्भो युज्यते। शुष्कधृष्टाविति (V) (६।१।२०६) निपातनेनैव सिद्धत्वात्। नैतदस्ति। निपातनेन हि ककारे सति शुष्किकेत्यत्रोदीचामातः स्थाने यकपूर्वाया (७।३।४६) इति विभाषेत्त्वं स्यात्। शुष्कजङ्घेत्यत्र च न कोपधाया (६।३।३७) इति पुंवद्भावप्रतिषेधः स्यात्। इह तु ककारस्य विधाने सति तस्यासिद्धत्वादेतदुभयं न भवति। तस्माच्छुष्कइत्येतदर्थोऽप्यस्यारम्भो युक्तः।

## ५२। पचो वः।

पक्वः पक्ववानिति। डुपचष् पाके। यद्येवं पक्व इत्येतत् सिद्धशुष्कपक्वबन्धेष्वेति (२।१।४१) निपातनादपि हि सिध्यति। तथापि पक्ववानित्येतदर्थमिद मवश्यमारब्धव्यम्। अन्यार्थं ह्यारभ्यमाणं पक्व इत्येतदर्थरूपमपि भवतीति पक्वशब्दोऽप्यस्योदाहरणमुपन्यस्तम्। निपातनद्वारेण हि तद्व्युत्पत्तौ प्रतिपत्तिगौरवं स्यादित्यभिप्रायः।

## ५३। क्षायो मः।

क्षै जै षै क्षये।

---

(V) सिद्धशुष्कपक्वबन्धेष्वेति (२।१।४१) शुष्कचूर्णरूक्षेषु पिष इति (३।४।३५) शुष्कधृष्टाविति (६।१।२०६) च प्रयोगः।

## ५४। प्रस्तोऽन्यतरस्याम्।

प्रस्तीम इति। ष्टै स्त्यै संघातशब्दयोः। स्त्यः प्रपूर्वस्येति (६।१।२३) संप्रसारणम्। पूर्ववद् दीर्घः। इह यदा मत्वं न भवति तदा संयोगादे (८।२।४३) रित्यनेन नत्वेन भवितव्यम्। ततश्च प्रस्तीनः प्रस्तीनवानितीष्टं स्यादिति कस्यचिद् भ्रान्तिः स्यात्। अत स्तान्निराकर्त्तुमाह यदा मत्वं नास्तीत्यादि। कृते तर्हि प्रथमं संप्रसारणे नत्वं कस्मान्न भवतीत्याह तत्र कृतेत्यादि।

## ५५। अनुपसर्गात् फुल्लक्षीबकृशोल्लाघाः।

फुल्लइति। ञिफला विशरणे। आदितश्चेतीट्प्रतिषेधः (७।२।१६)। उत्परस्यात (७।४।८८) इत्युत्वम्। क्तवत्वन्तस्याप्येतल् लत्व मिष्यत इति। कथं पुनरिष्यमाणमपि लभ्यते? नहि क्तवत्वन्तः शब्दः सूत्र उपात्तः। उच्यते। इह निष्ठाया स्तकारान्तं यच्छब्दरूपं तस्य फुल्ल इत्येतन् निपात्यते। क्तवतोश्च तत् तुल्यम्। परस्तु यदि क्तवतोऽर्थो वा विशेष्यते? विशेष्यताम्। नहि तेन समानेनासमानेन वा प्रयोजनमस्ति। तस्मात् क्तवत्वन्तस्याप्येतल्लत्वं भवति। एवमनयैव युक्त्या क्षीबकृशोल्लाघादिष्वपि यन्निपात्यते तदपि क्तवत्वन्तस्य प्रसज्यते। नैष दोषः। वक्ष्यमाण मन्यतरस्यांग्रहणमुभयोर्योगयोः शेषः। व्यवस्थितविभाषा च न ज्ञायते। तेनातिप्रसङ्गो न भविष्यतीति। क्षीबिकृशिभ्यामिति। क्षीबृ मदे। कृश तनूकरणे। इड़भावश्च निपात्यत इति। क्तलोपस्यासिद्धत्वाद् वलादि रार्द्धधातुको भवतीतीट् प्राप्नोति। अत स्तदभावश्च निपात्यते। कृते वा इटि इच्छब्दलोप इति। निपात्यत इति सम्बन्धः। इड़भावापेक्षो विकल्पः। अथवा नेड़भावो निपात्यते। किं तर्हि? कृत इटोच्छब्दलोपः। लाघेरुदोऽन्य उपसर्गः प्रतिषिध्यत इति। उत्पूर्वस्य ग्रहणसामर्थ्यात्। अन्यथा ह्युत्पूर्वस्योपादानमनर्थकं स्यादित्यभिप्रायः। अनुपसर्गादित्युच्यते। तत्र परिकृश इति न सिध्यतीत्यतश्चाह परिकृश इत्यत्रेत्यादि। तनूकरणलक्षणक्रियाया अन्यक्रिया गमनलक्षणा क्रियान्तरम्। तेन योगोऽयम्। न परिशब्दोऽत्र कृशिं प्रत्युपसर्गसंज्ञा भवतीति कृत्वा। परिगतः कृश इति। अनेन तं क्रियान्तरयोगं दर्शयति। अथ किमर्थं निपातनम्? यावता फुल्ल इति फुल्ल विकसनइत्यस्मात् पचाद्यचि सिध्यति। क्षीबेरिगुपधलक्षणे के क्षीब इति। कृश इत्यपि कृशेरचेव। उल्लाघ इति। लाघ इत्येव पचाद्यचि सिद्धात्येव। सत्य

मेवमेतत् । निष्ठायां तु फलतिप्रभृतीनामसत्यस्मिन्ननिष्टं रूपं प्राप्नोति । अत स्तन्निवृत्त्यर्थमारब्धव्यमेतत् ।

## ५६ । नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम् ।

समुन्नः समुत्तइति । अनिदिता ( ६।४।२४ ) इति नलोप । ह्रीत्यस्येति । ह्री लज्जाया मित्यस्य । अप्राप्त इति । केनचिदविधानात् । इतरेषामिति । तत्र नुद प्रेरणे । उन्दी क्लेदने । तयो रदाभ्यामिति (८।२।४२ ) नित्यं प्राप्तम् । त्रैङ् पालने । घ्रा गन्धोपादाने । एतयोः संयोगादेरित्यादिना ( ८।२।४३ ) । विद विचारण इत्यस्य विदेरिह ग्रहणमिष्यत इति । कथं पुनरस्य ग्रहण मिष्यते ? श्लुविकरणेन ह्रीणा साहचर्य्यात् । नैतदस्ति । अविकरणेन नुदिना साहचर्य्या-ल्लाभार्थस्य विदेर्ग्रहणप्रसङ्गात् । एवं तर्ह्यन्यतरस्यामित्येषा व्यवस्थितविभाषा । तेन विचारणार्थस्यैव भवितव्यम् । नान्यस्य । यस्यैवं भवितव्यं तस्यैव ग्रहणं युक्तमिति स एव गृह्यते । कथं पुनर्ज्ञायते विचारणार्थस्य विदेर्ग्रहणमिष्यत इत्याह एवं ह्रीत्यादि । इष्यत इति वक्ष्यमाणं प्रत्येकमभिसम्बध्यते । निष्ठेत्यनेन निष्ठान्तमुपलक्षयति । वेत्तेरित्यादि । विद ज्ञान इत्यस्य विदित इत्येतद्रूप मिष्यते । नित्येट्त्वात् तस्येटा निष्ठातकारस्य व्यवधाने सति नत्वस्यासंभवात् । विद्यतेरिति । विद सत्तायामित्यस्य श्यन्विकरणस्य निष्ठान्तस्य विन्न इत्येत द्रूपमिष्यते । एकाच ( ७।२।१० ) इतीट्प्रतिषेधात् । रदाभ्यामित्यादिना च नित्यं नत्वविधानात् । विन्तेर्विन्नश्च वित्तश्चेति । (W) विद विचारण इत्यस्य निष्ठान्त-स्यैतद्रूपद्वय मिष्यते । पूर्ववदिट्प्रतिषेधात् । अनेन च सूत्रेण ( ८।२।५६ ) पक्षे नत्वविधानात् । भोगवित्तश्च विन्दते रिति । (X) विन्दते रित्यनेन लाभार्थविदिं दर्शयति । तस्य हि शे मुचादीनामिति ( ७।२।५८ ) नुमि कृते विन्दतीत्येतद्रूपं

---

(W) "सत्तायां विद्यते ज्ञाने वेत्ति विन्ते विचारणे ।
विन्दते विन्दति प्राप्तौ श्यल्लुक्श्नंशेष्विदं क्रमात्" ॥१॥ इति ।

(X) मुद्रितकाशिकायां तु पाठः
वेत्तेस्तु विदितो निष्ठा विद्यतेर्विन्न इष्यते । वित्ते र्विन्नश्च वित्तश्च भोगे वित्तश्च विन्दतेः ॥१॥ इति ।
स च स्खलित एव प्रतीयते । भाष्येलयं श्लोकोऽत्र पठितः ।
परन्तु न्यासपदमञ्जर्यो विन्तेर्विन्नश्च वित्तश्च भोगवित्तश्च विन्दतेरिति पाठो गृहीतः ।
"वेत्तेस्तु विदितो निष्ठा विद्यते विन्न इष्यते ।
विन्ते र्विन्नश्च वित्तश्च वित्तो भोगेषु विन्दतेः ॥१॥" इति ।

भवति। भोगवित्तइति। भोगे वित्तो भोगवित्तः। सप्तमीति ( २।१।४० ) योगविभागात् समासः। भोगग्रहणं चोपलक्षणमात्रम्। प्रत्ययोऽपि गृह्यते। विद्लृ लाभ इत्यस्य भोगे प्रत्यये चार्थे वित्त इतेरतद्रूपं निष्ठायामिष्यते। वित्तो भोगप्रत्यययोरिति ( ८।२।५८ ) नत्वाभावस्य निपातनात्। यस्य विभाषेति ( ७।२।१५ ) निष्ठायामिट्प्रतिषेधाच्च। विन्दतेर्हि क्त्वासौ विभाषा गमहनविद-विशामितीड् विभाषितः ( ७।२।६८ )। भोगवित्तश्च विन्दतेरिति ब्रुवताऽर्थतो भोगप्रत्ययाभावमन्यत्र विन्न इतेरतद्रूप मिष्यत इत्युक्तं भवति।

## ५७। न ध्याख्यापॄमूर्च्छिमदाम्।

ध्यै चिन्तायाम्। ख्या प्रकथने। चक्षिङः ख्याञितिं ( २।४।५४ ) च। द्वयोरपि ग्रहणम्। ननु च चक्षिङादेशस्य सानुबन्धकत्वान्निरनुबन्धकग्रहणपरिभाषया (प,८२)। न प्राप्नोतीति? नैष दोषः। इह हि निष्ठातकारस्य परत्वप्रतिपादने पञ्चमी युक्ता। यथा रदाभ्यामिति ( ८।२।४२ )। तत्र पञ्चमीनिर्देशे कर्त्तव्ये यः षष्ठीनिर्देशः क्रियते स सम्बन्धसामान्यं प्रतिपादयितुम्। न च सम्बन्धिनमन्तरेण सम्बन्धसामान्यमुपपद्यते। न च सानुबन्धके परित्यज्यमाने सम्बन्धिभेदः सम्भवतीति युक्तं तस्यापि ग्रहणम्। पॄ पालनपूरणयोः। मुर्च्छा मोहसमुच्छ्रययोः। मदी हर्षे। एषु ध्याख्याप्रभृतिषु। आद्ययोः संयोगादेरित्यादिना ( ८।२।४३ ) नत्वे प्राप्त इतरेषामपि रदाभ्यामित्यादिना ( ८।२।४२ ) प्रतिषेधोऽयमारभ्यते। पूर्त्त इति। श्र्युकः कितीतीट्प्रतिषेधः ( ७।२।११ )। उदोष्ठ्यपूर्वस्येत्युत्त्वम् ( ७।१।१०१ )। पूर्ववद्दीर्घः। मूर्त्तइति। राल्लोप ( ६।४।२१ ) इति च्छकार-लोपः। आदितश्चेतीट्प्रतिषेधः ( ७।२।१६ )। मत्त इति। अत्रापि श्वीदितो निष्ठायामिति ( ७।२।१४ )।

## ५८। वित्तो भोगप्रत्यययोः।

धनमस्य बह्वित्यर्थ इति। कथं पुनर्भोगे व्युत्पादितस्य धने वृत्तिरर्थो भवतीत्याह धनं ह्रीत्यादि। अनेन कर्मसाधनत्वं भोगशब्दस्य दर्शयन् धनेऽस्य वृत्तिं दर्शयति। प्रतीत इत्यर्थ इति। एतेन प्रत्ययशब्दस्य कर्मसाधनतामाचष्टे। प्रतीत इति कर्मणि निष्ठा। प्रतीत आख्यात इत्यर्थः। स चायमर्थः प्रत्यये व्युत्-

पाद्यमानेऽस्य कथं भवति ? यदि प्रत्ययशब्दोऽपि कर्मसाधनो भवति । प्रतीयत इति प्रत्ययः । तेन प्रत्ययशब्दस्य कर्मसाधनता वेदितव्या ।

## ५९ । भित्तं शकलम् ।

भित्तमिति निपात्यत इति । किं निपात्यते रदाभ्यामिति ( ८।२।४२ ) नत्वे प्राप्ते तदभाव इति । शकलञ्चेत् तद् भवतीति । शकलशब्दस्य योऽर्थः खण्ड इति यस्यापरमभिधानं भित्तशब्दस्यापि यदि स एवार्थो भवतीत्यर्थः । कथं पुनर्भित्तशब्दस्य शकलमर्थो भवतीत्याह शकलपर्य्यायोऽयमिति । भित्तशब्दः शकलस्यैव पर्य्यायः । तस्माद् यथा शकलशब्दस्य शकलमभिधेयं भवत्येवं भित्तशब्दस्यापि । ननु च शकलशब्दोऽयं जातिशब्दः । जातिप्रवृत्तिनिमित्त मुपादाय स्वाभिधेये प्रवृत्तत्वात् । भित्तशब्दस्तु क्रियाशब्दः । क्रियाप्रवृत्तिनिमित्तत्वात् । तथाहि भिदेर्विदारणार्थात् क्ते विहिते भित्तमिति निपात्यते । न च क्रियाशब्दो जातिशब्दपर्य्याय उपपद्यत इत्याह अत्रेत्यादि । शब्दव्युत्पत्तिः शब्दसंस्कारः । तस्या एवात्र भित्तशब्दे भिदिक्रियानिमित्तत्वम् । नतु तत्प्रवृत्तेः । असत्त्वात् । जातिरेव तु तत्प्रवृत्तिं प्रति निमित्तम् । तस्या विद्यमानत्वात् । तस्माच्छकलशब्दवद् भित्तशब्दोऽपि जातिशब्द एव । न क्रियाशब्द इति युक्ता तस्य तत्पर्य्यायता । यदि तर्ह्यसत्येवात्र भिदिक्रिया शब्दसंस्कारत्वस्यापि सा निमित्तं नोपपद्यते । नैतदस्ति । नह्ययं नियोगोऽभिधीयते विद्यमानैव क्रिया शब्दसंस्कारस्य निमित्तं भवतीति । तथाहि तैलपायिकाशब्दो यत्र प्राणिविशेषे रूढस्तत्र तैलपानक्रियाशब्दोऽपि नास्ति । तथापि तैलपानक्रिया तत्संस्कारनिमित्तत्वेनाश्रीयते । कथं पुनर्भित्तशब्दो भिदिक्रियाप्रवृत्तिनिमित्तं न भवतीत्याह भिदिक्रियाविवक्षायां हीत्यादि । अत्र भिन्न मित्यस्य च भित्तशकलशब्दाभ्यां प्रत्येकमभिसम्बन्धः । तेन भिन्नं भित्तमित्येव भवतीति । एतत् प्रयोगद्वयमपि भिदिक्रियाविवक्षायां सिद्धम् भवति । विदीर्णं हि शकले तस्य विदीर्णतां प्रतिपादयितुं भिन्नं भित्तमित्येष प्रयोगो भिदिक्रियाविवक्षायां क्रियते । यदि च भित्तशब्दः क्रियाप्रवृत्तिनिमित्तं स्यात् ततो भित्तशब्देनैव भिदिक्रियानिमित्तकेन विदीर्णता शकलस्य प्रतिपाद्यत इत्येष प्रयोगो नोपपद्यते । नहि तदस्ति यस्य भित्तशब्देनाप्रतिपादितस्य भिन्नशब्दयोगो भवेत् । भिन्नं शकलमित्येष च प्रयोगो नोपपद्यते । शकलव्युत्पादितेन भित्तशब्देन

भिदिक्रियानिमित्तकेन भिन्नशब्दस्य बाधितत्वात्। अस्ति चायं द्विविधोऽपि प्रयोगः। तस्माद् भित्तशब्दस्य भिदिक्रियानिमित्तत्वं न गम्यते।

## ६० । ऋणमाधमर्ण्ये ।

ऋ इत्येतस्मादिति। ऋ गताविन्येतस्माद्ध गतिप्रापणयोरित्येतस्माद्वा। अधम ऋणेऽधमर्ण इति। केन पुनरत्र समास इति? यावता नात्र किञ्चित् समासलक्षण मस्ति। सप्तमीति योगविभागात् समास इति। एतच्च न वक्तव्यम्। सप्तम्याः पूर्वनिपातप्रसङ्गादित्यत आह एतस्मादेवेत्यादि। तद्भाव आधमर्ण्यमिति। तत् प्रतिदास्यतीति तस्य ग्रहणक्रियाभिसम्बन्धः। तद्योगाद् भावेऽ साधमर्ण्यं इत्युच्यते। कालान्तर इत्यादि। यस्मिन् कालेऽधमर्णो गृह्णाति तस्मात् काला-दन्य आगामी कालः कालान्तरम्। तत्र यद् देयं तत् कालान्तरदेयम्। तेन यो विनिमयो विपरिवर्त्तनं तदुपलक्षणार्थमेवाधमर्णग्रहण मेवमुपात्तम्। नच स्वार्थप्रतिपादनार्थमेव। किं कारणमेवं व्याख्यायत इत्याह उत्तमर्णेऽप्यपि भवतीति। ऋणे ह्येकोऽधमर्णो भवति यो गृहीत्वा प्रतिपादयतीति। यस्तु दत्त्वा ग्रहीष्यति स उत्तमर्णः। तत्र यद्याधमर्ण्यग्रहणं स्वार्थप्रतिपादनार्थमेवोपात्तं तदोत्तमर्ण इति न सिध्येत्। नह्यत्राधमर्ण्यं विवक्षितम्। तत् तर्हीदं चोत्तमर्णेऽपि कालान्तरदेयविनिमयोपलक्षणार्थत्वादाधमर्ण्यग्रहणे सत्येतदपि सिध्यति। अस्ति ह्यत्र कालान्तरदेयविनिमयः। तथाह्युत्तमर्णोऽपि प्रयच्छन् कालान्तरे यद् देयं तेन विनिमयं करोति।

## ६१ । न सत्तनिषत्तानुत्तप्रतूर्त्तसूर्त्तगूर्त्तानि छन्दसि ।

सदेरिति। षद्लृ विशरणगत्यवसादनेष्वित्येतस्मात्। निषत्त इति। सदिर-प्रतेरिति ( ८।३।६६ ) षत्वम्। अनुत्तमिति। उन्दी क्लेदने। अनिदितामिति ( ६।४।२४ ) नलोपः। प्रतूर्त्तमिति। यदा ञित्वरा सम्भ्रमइत्यस्य निपात्यते तदा ज्वरत्वरेत्यादिना ( ६।४।२० ) रकारस्योपधायाश्चोत्वम्। यदा उर्वी तुर्वी थुर्वी हिंसार्थाइत्यस्य तदा राल्लोप इति ( ४।४।२१ ) रकारलोपः। पूर्ववद् दीर्घः। सूर्त्तमिति। सृ गतौ। उत्वसन्नियोगे रपरत्वम्। पूर्ववद् दीर्घः। गूर्त्तमिति। गूरी उद्यमने।

६२। क्विन्प्रत्ययस्य कुः।

घृतस्पृगिति। अत्र शकारस्य विवृतकरणस्य श्वासानुप्रदानस्याघोषस्य तादृश एव षकारः। तस्य जश्त्वं गकारः। गकारस्यापि चर्त्वं ककारः। अथ प्रत्ययग्रहणं किमर्थम्? न क्विन इत्येवोच्येत। नहि क्विन् प्रत्ययत्वं व्यभिचरति। एवमुच्यमाने लोपापवादः क्विन एव कुत्वं स्यादित्येतच्च नाशङ्कनीयम्। तथाहि क्विन्निति प्रत्ययग्रहणे यत्र प्रत्ययग्रहणं तत्र प्रत्ययग्रहणपरिभाषया (प, २४) क्विन्नन्त उपस्थापिते क्विनो लोपे कर्त्तव्ये कुत्वस्यासिद्धत्वात् पूर्वं लोपेनैव भवितव्यम्। तस्मिन् सति पश्चात् भवत् कुत्वं परिशिष्टस्य धातोरेव भविष्यतीत्यतश्चाह क्विनः कुरिति वक्तव्यइत्यादि। (Y) असति हि प्रत्ययग्रहणे क्विन्प्रत्ययान्तस्यैव पदान्तस्य स्यात्। नान्यप्रत्ययान्तस्य। तस्यापि चेष्यते। तस्मात् प्रत्ययग्रहणं क्रियते। प्रत्ययग्रहणे सति बहुव्रीहि लंभ्यते। तेन बहुव्रीहिणा यस्माद् विहितः स धातु रुपलक्ष्यत इति सर्वस्य सिध्यति। मा नो अस्राक्। मा नो अद्राक्षीति। सृज विसर्गे। दृशिर् प्रेक्षणे। लुङ्। च्लेः सिच् (३।१।४४)। तिप्। सृजिदृशो-र्झल्यमकितीत्यमागमः (६।१।५८)। वदव्रजेत्यादिना (७।२।३) वृद्धिः। हल्ङ्यादिलोपः (६।१।६८)। अड़ागमः। अनेन कुत्वम्। सृजिदृशिभ्यां क्विन् विहित इति। ऋत्विगित्यादिना (३।२।५९) सृजेः क्विन् विहितः। दृशेरपि त्यदादिषु दृशेरनालोचने कञ्चेत्यनेन (३।२।६०)। कथं पुनरत्राड़ागमः? यावता न माङ्योग इति (६।४।७४) प्रतिषिद्धोऽसावित्यत आह माङ्योगेऽपी-त्यादि। छान्दसौ ह्येतौ प्रयोगौ। तेन सत्यपि माङ्योगे बहुलञ्छन्दस्यमाङ्-योगेऽपीत्यड़ागमो (६।४।७५) भवत्येव। अस्तिसिचोऽपृक्त इतीट् (७।३।९६) तर्हि कस्मान्न भवतीत्याह इट् च न भवतीत्यादि। प्रत्ययग्रहणाद् यथा क्विन्-प्रत्ययस्य लुगन्तस्य कुत्वं भवति तथा दृग्भ्यामित्यादौ दृशेः क्विबन्तस्यापि। एव मित्यादि। प्रत्ययग्रहणात् क्विन् प्रत्ययो यस्माद् विहित स्तस्यान्यप्रत्ययान्तस्यापि कुत्वं भवतीत्यस्मिन्नर्थे व्यवस्थिते रज्जुसृड्भ्यामित्यत्रापि व्रश्चादिसूत्रेण (८।२।३६) षत्वं यत् प्राप्नोति तद् बाधित्वा कुत्वेन भवितव्यम्। अथ तु नेष्यते प्रतिविधानं कर्त्तव्यम्। प्रतिविधानमुत्तरसूत्रे वाग्रहणं यत् तदुभयोर्योगयोः शेषः। व्यव-

(Y) अत्र काशिकायामेकः श्लोको विच्छिन्नः पठितः। स च—
"क्विनः कु रिति वक्तव्ये प्रत्ययग्रहणं कृतम्।
क्विन्प्रत्ययस्य सर्व्वत्र पदान्ते कुत्व मिष्यते ॥१॥" इति।

स्थितविभाषा च। तेनेह न भविष्यतीति। एवञ्च सति रज्जुसृड्भ्यां रज्जुसृड्भ्य इति भवितव्यम्।

## ६३। नशेर्वा।

जीवनड़ाडुतिरिति। अत्राकुत्वपक्षे व्रश्चादिसूत्रेण ( ८।२।३६ ) षत्वे कृते जश्त्वं डकारः।

## ६४। मो नो धातोः।

पदस्येति वर्त्तते। तच्च धातुसमानाधिकरणम् मकारेण विशेष्यते मकारान्तस्य पदस्य धातोरिति। प्रशान् प्रतानिति। शमु उपशमे। तमु काङ्क्षायाम्। क्विप्। अनुनासिकस्य क्विझलोः क्ङितीत्युपधादीर्घत्वम् ( ६।४।१५ )। हल्ङ्यादिलोपः (६।१।६८)। अथेह नलोपः प्रातिपदिकान्तस्येति ( ८।२।७ ) नकारलोपः कस्मान्न भवतीत्याह नत्वस्येत्यादि।

## ६५। म्वोश्च।

अगन्म इति। स उत्तमस्येति ( ३।४।९८ ) सकारलोपः। जगन्वानिति। गमेर्लिट्। क्वसुः। हल्ङ्यादि-( ६।१।६८ ) संयोगान्तलोपौ ( ८।२।२३ )। सान्तमहत इति ( ६।४।१० ) दीर्घः। गमहनेत्यादिनोपधालोपः ( ६।४।९८ )। छन्दस्युभयथेति ( ३।४।११७ ) सार्वधातुकत्वं न भवति। चकारो धातोरित्य-नुकर्षणार्थः।

## ६६। ससजुषो रुः।

सजूरिति। (Z) जुषी प्रीतिसेवनयोः। सह जुषत इति क्विप्। उपपदसमासः। सहस्य सः संज्ञायामिति ( ६।३।७८ ) सभावः। रुत्वे कृते र्वोरुपधाया इति ( ८।२।७६ ) दीर्घः। सजुषो ग्रहणमसकारान्तार्थम्। योगश्चायं जश्त्वापवादः।

---

(Z) सजूरिति सप्रीतिः विद्यमानप्रीतिरित्यर्थः। सेवमान इति वा। खेलायमानिशं नापि सजूःकृत्य रतिं वसेदिति भट्टिः। स च सजूरित्यूर्य्यादिषु सहार्थे पठ्यते। सजूःकृत्य सहायीकृत्येत्यर्थः।

## ६७। अवयाः श्वेतवाः पुरोडाश्च।

दाशेरिति। दाश्ट दान इत्यस्माण्णिवनि कृत इति। वहिदाशिभ्यां मन्त्रे-श्वेतवहोक्थशस्पुरोडाशो ण्विन्नित्यनेन (३।२।७१) यजेश्चावे यज इति (३।२।७२) ण्विन्प्रत्ययान्तेभ्यः सम्बुद्धिः। तस्य हल्ङ्याबिदिलोपः (६।१।६८)। ततः श्वेत-वहादीनां डस् पदस्येति (३।२।७१, वा) डस्प्रत्ययः। टिलोपः। किमर्थमिते निपात्यन्ते? यावता श्वेतवोभ्यां श्वेतोवोभिरित्येवमाद्यर्थं श्वेतवहादीनां डस् पदस्येत्यवश्यमिदं वक्तव्यम्। डसि च कृते ससजुषोरुरित्येव (८।२।६६) सिद्ध-मित्याह श्वेतवहादीनामित्यादि। नैते रुत्वार्थं निपात्यन्ते। किं तर्हि? सम्बुद्धौ दीर्घत्वार्थम्। ननु च दीर्घत्वमप्येषामत्वसन्तस्य चाधातोरित्येव (६।४।१४) सिद्धमित्यत आह अत्वसन्तस्य चेत्यादि। तत्र हि सर्वनामस्थाने चासम्बुद्धावित्यतो (६।४।८) ऽसम्बुद्धावित्येतदनुवर्त्तते। तेन सम्बुद्धौ दीर्घत्वं न प्राप्नोतीति तदर्थमिते निपात्यन्ते। पुरोडा इति। मन्त्रे श्वेतवहोक्थशसित्यादिनैव (३।२।७१) सूत्रेण दकारस्य डकारो निपात्यते। उक्थशा इति। शन्सु स्तुतौ। उक्थानि शंसतीति मन्त्रे श्वेतवहेत्यादिनैव (३।२।७१) ण्विन्। ततः पूर्व्ववत् सम्बुद्ध्यादिः।

## ६८। अहन्।

नलोपः प्रातिपदिकान्तस्येति (८।२।७) नलोपे प्राप्ते रुत्वं विधीयते। अहो-भ्यामहोभिरिति। हशि चेत्युत्त्वम् (६।१।११४)। आद्गुणः (६।१।८७) दीर्घाहा निदाघ इति। बहुव्रीहिः। हल्ङ्याबिदिलोपः (६।१।६८)। रुत्वस्या-सिद्धत्वात् सर्वनामस्थाने चेत्यादिना (६।४।८) दीर्घः। भो भगो अघो इत्यादिना (८।३।१०) रेफस्य यकारः। तस्य हलि सर्वेषामिति (८।३।२२) लोपः। हे दीर्घाहोऽत्रेति। अतो रोरप्लुतादप्लुत इत्युत्वम् (६।१।११३)। आद्गुणः (६।१।८७)। एङः पदान्तादतीति (६।१।१०९) पररूपत्वम्। हन्तेर्लङि तिपा हल्ङ्यादिलोपे (६।१।६८) कृते तिपश्च लुक्यडागमे चाहन्नित्येतद्रूपं सम्पद्यते। तस्मात् तस्य रुत्वेन भवितव्यमिति कस्यचिद् भ्रान्तिः स्यात्। अत स्तान्निरासायाह अहन्नित्यादि। उपसंख्यानशब्दोऽत्र प्रतिपादने वर्त्तते। अह्नो रुविधौ कर्त्तव्ये रूपादिषु रुत्वस्य प्रतिपादनं कर्त्तव्यमित्यर्थः। तत्रेदं प्रतिपादनम्। पूर्वसूत्रादिह चकारोऽनुवर्त्तते। स चानुक्तसमुच्चयार्थः। तेनाह्नो रूपादिषु रुत्वं भविष्यतीति।

अहोरूपमिति। अह्नो रूपमिति षष्ठीसमासः। अहोरात्र इति। अहश्च रात्रिश्चेति द्वन्द्वः। अहः सर्वैकदेशेत्यादिना ( ५।४।८७ ) ऽच् समासान्तः। कथं पुना रात्रिशब्द उच्यमानं रुत्वं रात्रशब्दे भवति ? स्थानिवद्भावात्। एकदेश-विकृतस्यानन्यत्वाद्वा (प, ३८)। रात्रशब्दस्य तु ग्रहणं न कृतम्। रात्रिशब्दस्यापि यथा स्याद् गतमहो रात्रिरागतेति। अहो रथन्तरमिति। षष्ठीसमासः। अथवाऽसमासएव। रोऽसुपीत्यस्यापवादो ( ८।२।६९) रुत्वमित्यादि। अहोरूप-मित्यादि। यदि समासो यद्यसमासो वा सर्वथा विभक्तेर्लुका भवितव्यम्। लुकि सत्यह्नो रविधौ लुमता लुप्ते ( १।१।६३ ) प्रत्ययलक्षणस्य प्रतिषेधः। तेन सुप्पर-त्वस्याभावाद् रोऽसुपीत्येतत् (८।२।६९ ) प्राप्नोतीति रुत्वं विधीयते। किमर्थम् ? हशि चेत्युत्वं ( ६।१।११४ ) यथा स्यात्। यदि रुरुदुत्पन्नः स्यात् (AA)। उत्वविधौ रोरित्युकारानुबन्धविशिष्टस्य रेफस्यानुवृत्तेः।

## ६९। रोऽसुपि।

पूर्वस्यायमपवादः। रेफेऽकार उच्चारणार्थः। अहर्ददातीति। यद्यत्र रुत्वं स्याद् हशि चेत्युत्वं ( ६।१।११४ ) प्रसज्येत। तस्माद् रो विधीयते। ननु चात्रापि प्रत्ययलक्षणेन सुबस्ति। नैष दोषः। अह्नो रविधौ लुमता लुप्ते प्रत्ययलक्षणस्य प्रतिषेधः। लोपशब्देन यत्र लोप स्तत्र हि प्रत्ययलक्षणम्। यथा हे दीर्घाहोऽत्र। हे दीर्घाह निदाघेति। अत्र हल्ङ्यादिलोपः ( ६।१।६८ )।

## ७०। अम्नरूधरवरित्युभयथा छन्दसि।

नित्यं रुत्वे प्राप्ते पक्षे रोऽपि यथा स्यादित्येवमर्थमिदम्। सकारस्य रुत्वं कृत्वा निर्देशो यस्मिन् प्राप्ते रेफ उच्यते तस्य रुत्वस्योभयथाग्रहणेन पक्षेऽभावो विज्ञायेतेत्येवमर्थश्च। इतरथा हि द्वैध्यमपि विज्ञायेत। यस्मिन् प्राप्ते रुत्व-मारभ्यते तस्य जश्त्वं पक्षेऽभ्यनुज्ञायत इति। अम्न एवेति। रुत्वपक्षे भो भगो इत्यादिना ( ८।३।१७ ) यकारः। तस्य लोपः शाकल्यस्येति ( ८।३।१९ ) लोपः। प्रचेतस उपसंख्यानम्। अहरादीनां पत्यादिषूपसंख्यानमिति। उभयत्रोपसंख्यान-

(AA) यदि रु स्तर्हि उत् ससजुषोरुरित्यनेन ( ८।२।६६ ) उत्पन्नः स्यादित्यस्य वाक्यस्यार्थः।

शब्दस्य प्रतिपादनमर्थः। तत्रेदं प्रतिपादनम्। इतिकरणः प्रदर्शनार्थः। एवम्प्रकारेष्वन्येष्वप्युभयथा भवति रुत्वं वा रेफो वेति। तेन प्रचेतः शब्दस्य राजन्यहरादीनाञ्च पतयादिषूभयथा भवति। प्रचेतो राजन्निति। प्रकृष्टं चेतो यस्येति बहुव्रीहिः। आमन्त्रितैकवचनम्। रुत्वम्। हशि चेत्युत्वम् (६।१।११४)। आद् गुणः (६।१।८७)। प्रचेता राजन्निति। रेफे कृते तस्य रो रीति (८।३।१४) लोपः। ढ्रलोप (६।३।१११) इत्यादिना दीर्घः। सम्बुद्ध्यन्तोदाहरणम्। रुत्वरेफयोर्विशेषसंप्रतिपादनार्थम्। असम्बुद्धौ हि रुत्वरेफयो रसिद्धत्वादत्वसन्तस्य चाधातोरिति (६।४।१४) दीर्घत्वे तुल्यमेव रूपम् भवति। अहर्पतिरिति। षष्ठीसमासः। रोऽसुपीति (८।२।६९) रेफे कृते तस्य पक्षे रेफो विधीयते। अहᳲपतिरिति। रेफस्य विसर्जनीये कृते कुप्वोः ᳲकᳲपौ चेति (८।३।३७) पक्ष उपध्मानीयः। गीर्पतिरिति। गॄ शब्दे। सम्पदादित्वात् क्विप्। ऋतइद्धातोरितीत्वम् (७।१।१००)। रपरत्वम्। धूर्पतिरिति। धुर्वैः क्विप्। राल्लोप (६।४।२१) इति वकारलोपः। अथ किमर्थं रेफस्यैव रेफो विधीयतइत्याह विसर्जनीयबाधनार्थमित्यादि। खरवसानयोरिति (८।३।१५) विसर्जनीयः प्राप्नोति। तद्बाधनार्थं रेफस्यैव रेफो विधीयते।

## ७१। भुवश्च महाव्याहृतेः।

भुवः शब्दः षष्ठ्यन्तप्रकृतिरूपकमव्ययम्। तस्य नित्यं रुत्वे प्राप्ते पक्षे रेफो यथा स्यादित्येवमर्थमिदम्। चकार उभयथेत्यस्यानुकर्षणार्थः। तेनोत्तरत्रानुवृत्तिर्न भवति। भुवो विश्वस्येति। भूशब्दस्य षष्ठ्यन्तस्य पञ्चम्यन्तस्य (BB) वा प्रयोगः। यद्येवं लाक्षणिकत्वादिनास्य न भविष्यति। तत् किमेतन्निवृत्त्यर्थेन महाव्याहृतिग्रहणेन? एवं तर्ह्येतज् ज्ञापयति। अनित्यलक्षणा प्रतिपदोक्तपरिभाषेति (प, ११४)। तेन ज्ञापयतीत्यत्र (CC) पुगागमः सिद्धो भवति। नित्यत्वे तु तस्य न स्यात्। अस्याकारान्तस्य लाक्षणिकत्वात्। कीदृशो भुवः शब्दो महाव्याहृति भवतीत्याह भुवसित्येतदित्यादि। अन्तरिक्षं हि महत्। तस्य व्याहृतिरुक्तिर्यस्मात् तस्मान् महाव्याहृति भवति।

---

(BB) तिङन्तमेतत्। भवते श्छन्दसि लङि सिप्। गुणाभावोऽड़भावश्च च्छान्दस इति तु हरदत्तः।

(CC) क्रीङ्जीनां णाविव्यनेन (६।१।४८) क्रीणातेरात्वं लाक्षणिकम्। तथापि पुक् ज्ञापयतीति।

## ७२। वसुस्रंसुध्वंस्वनडुहां दः।

विद्वद्भ्यामिति। विदेः शतुर्वसुरिति (७।१।३६) वसुरादेशः। पपिवद्भ्यां पपिवद्भिरिति। पिवतेः पाते र्वा लिट्। क्वसुः। वस्वेकाजाद्घसामितीट् (६।२।६७)। आतो लोप इटि चेत्याकारलोपः (६।४।६४)। स्थानिवद्भावेन पा इत्येतद् द्विरुच्यते। उखास्रत् पर्णध्वदिति। स्रंसिध्वंसिभ्यामुखायाः स्रंसते पर्णानि ध्वंसत इति क्विप्। अनिदितामिति (६।४।२४) नलोपः। इहेदं वसोर्दत्वमनवकाशम्। सर्व्वस्य विषयस्य विध्यन्तरेणावष्टब्धत्वात्। तथापि विद्वानित्यादौ संयोगान्तलोपः प्राप्नोति। विद्वद्भ्यामित्यादौ तु रुत्वम्। अत स्तदनवकाशत्वाद् यदा रुत्वं बाधते तदा संयोगान्तलोपोऽपि तेन बाधितव्यः। ततश्च विद्वानिति न सिध्यतीति यस्य व्यामोहः स्यात् तं प्रत्याह रुत्वेनाप्राप्तइत्यादि। यस्मिन्नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति (प,५८)। न चाप्राप्ते रुत्व इदमारभ्यते। अत स्तदेव दत्वेन बाध्यते। संयोगान्तलोपस्तु नेवमिति। तुशब्दो रुत्वाद् विशेषं दर्शयति। इतिकरणो हेतौ। यथा रुत्वं सर्वत्र प्राप्नोति नेवं संयोगान्तलोपः। सह्रि विद्वानित्वादावेव प्राप्नोति। न विद्वद्भ्यामित्यादौ। तस्मात् तेनैव दत्वं बाध्यते। नत्वसौ दत्वेन। संयोगान्तलोपे कर्त्तव्ये दत्वस्या-सिद्धत्वादित्यभिप्रायः। अथ यथा हो ढ इत्यस्य (८।२।३१) दकारोऽत्रापवादः स तथा सावनडुह (७।१।८२) इत्यस्यापि कस्मान्न भवति? यथा ह्यवकाशत्वाद् दकारो ढत्वस्य बाधक स्तथा नुमोऽपि बाधकएव युक्त इत्यतआह नुमस्तु विधान-सामर्थ्यान्न भवतीति। प्रतिपदं हि सावनडुहो नुम् विधीयते। तस्य यद्ययं दकारोऽपवादः स्यात् नुम्विधानमनर्थकं स्यात्। अनड्वानिति। चतुरन-डुहोरामुदात्त इत्याम् (७।१।९८)। यणादेशः। हल्ङ्यादि- (६।१।६८) संयोगान्तलोपौ (८।२।२३)। हेऽनड्वन्निति। अम् सम्बुद्धावित्यम् (७।१।९९)। शेषं पूर्ववत्।

## ७३। तिप्यनस्तेः।

अचकादन्वशादिति। चकासृ दीप्तौ। शासु अनुशिष्टौ। लङ्। तिप्। अदादित्वाच्छपो लुक्। हल्ङ्यादिलोपः (६।१।६८)। भवानित्यनुपयोगस्तिपोऽ-भिव्यक्तये। भा इति। आड़जादीनामित्याट् (६।४।७२)। आटश्चेति (६।१।९०) वृद्धिः। तिपो लोपे कृते धातुसकारस्य रुत्वम्। तस्य विसर्जनीयः।

## ७४। सिपि धातो रुर्वा।

अचकास्त्वमिति। रुत्वे कृते तस्य विसर्जनोयः। तस्य विसर्जनोयस्य स इति (८।३।३४) सकारः। त्वमित्यनुप्रयोगः सिपोऽभिव्यक्तये। अथ धातुग्रहणं किमर्थम्? यावता सकारान्तस्यापि रेफदकारावुच्येते। नच सिपि सकारान्ताद् धातोरन्यदस्तीत्यतआह धातुग्रहणमित्यादि। उत्तरार्थता चास्य वोरुपधाया इत्यत्र (८।२।७६) दर्शयिष्यते। क्रियतामुत्तरार्थं धातुग्रहणम्। रुग्रहणं तु न कर्त्तव्यम्। अनर्थकत्वात्। दकारे हि विकल्पिते यथाप्राप्तं रुत्वं पक्षे लभ्यत एवेत्यत आह रुग्रहणञ्चेति। उत्तरार्थमित्यपेक्षते। दश्चेति (८।२।७५) वक्ष्यति। तत्र पक्षे रुत्वं यथा स्यादित्येवमर्थम्। असति हि तस्मिन् यदा दत्वं न भवति तदा यथाप्राप्तं चर्त्वं स्यात्।

## ७५। दश्च।

चकारेण द इत्यनुकृष्यते (८।२।७२)। तेनोत्तरत्र तस्यानुवृत्ति (प, ७९) र्न भवति। अभिनस्त्वमिति। लङ्। रुधादित्वाच् श्नम्।

## ७६। र्वोरुपधाया दीर्घ इकः।

पदस्येत्येव। धातोरिति च। तदुभयमिह समानाधिकरणं रेफवकाराभ्यां विशेष्यते। विशेषणेन च तदन्तविधि र्भवतीत्याह रेफवकारान्तस्येति। वकारस्योदाहरणं कस्मान्न प्रदर्शित मित्याह वकारग्रहणमुत्तरार्थमिति। तेन वकारान्तस्योदाहरणं न प्रदर्शितमिति भावः। एतदर्थं तु तत्र भवति। वकारान्तस्य पदस्य धातोरसम्भवात्। अबिभरिति। भृञो लङ्। तिप्। गुणः। रपरत्वम्। जुहोत्यादिभ्यः श्लुः (२।४।७५)। द्विर्वचनम्। उरदित्यत्त्वम् (७।४।६६)। भृञामिदितीत्त्वम् (७।४।७४)। हल्ङ्यादिलोपः (६।१।६८)।

## ७७। हलि च।

दिव्यति। चतुर्य्यतीति। दिव् चतुरित्युभयं प्रातिपदिकमत्र। तेन न भवति। स्मर्य्यत इति। भावे यक्। गुणोर्त्तिसंयोगाद्योरिति (७।४।२९) गुणः। भव्यमिति। अचो यत् (३।१।९७)। गुणः। धातो स्तन्निमित्तस्यैवेत्यवादेशः (६।१।८०)।

## ७८। उपधायाञ्च।

पूर्वं रेफवकारान्तस्य धातो दीर्घत्वविधानादरेफवकारान्तार्थमिदम्। उपधायामिति सुब्व्यत्ययेन षष्ठीद्विवचनस्य स्थाने सप्तम्येकवचनम्। उपधाभूताविति। उपधात्वं प्राप्ताविल्यर्थः। अलोऽन्त्यात् पूर्वौ इति यावत्। हल्पराविति। हल् पर आभ्यामिति बहुव्रीहिः। स पुनर्हल् धात्ववयव एव वेदितव्यः। यत्र हि प्रत्ययावयवो रेफवकाराभ्यां हल्परस्तत्र पूर्वेणैव सिद्धः। हूर्च्छितेति। हुर्च्छ कौटिल्ये। मूर्च्छितेति। मुर्च्छा मोहसमुच्छ्राययोः। ननु चाचो रहाभ्यां द्वे इति ( ८।२।४६ ) द्विर्वचने कृते रेफोऽत्रोपधा न भवति। नैतदस्तीति। दीर्घत्वे कर्त्तव्ये द्विर्वचनस्यासिद्धत्वाच् छकारोऽत्रैक एव हलिति भवत्येवोपधात्वं रेफस्य। चिरिणोति जिरिणोतीति। रि क्षि चिरि जिरि दाश दृ हिंसायाम्। स्वादित्वाच् श्नुः। इह री गतौ वी गतिप्रजनादिषु। एताभ्यां लिट्। अतुसि उसि च एरनेकाच इति ( ६।४।८२ ) यणादेशः। तस्य स्थानिवद्भावाद् द्विर्वचने कृते रिय्रतु रिय्रुर्विव्यतुर्विव्युरिति स्थितेऽभ्यासेकारस्य दीर्घत्वं प्राप्नोति। हल्परयो रेफवकारयो रुपधाभूतत्वात्। एतत् कस्मान्न भवतीत्याह रिय्रतूरिय्रुरित्यादि। स्थानिवद्भावोऽचः परस्मिन्नित्यादिना (१।१।५७)। ननु च स न पदान्तेत्यादिना ( १।१।५८ ) दीर्घविधौ प्रतिषिध्यते स्थानिवद्भावः। तत् कुतस्तस्येह सम्भवः? नैतदस्ति। परिगणनं हि तत्र क्रियते। स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवदिति (१।१।५८,वा)। असिद्धत्वाद्वेत्यादि। अत्र बहिरङ्गत्वं यणादेशस्य। अङ्गाधिकारे विधीयमानस्य प्रत्ययाश्रितत्वात्। दीर्घत्वस्य त्वन्तरङ्गत्वम्। प्रकृत्याश्रयत्वात्। असिद्धञ्च बहिरङ्गमन्तरङ्ग इति ( प, ५१ ) दीर्घत्वे कर्त्तव्ये यणादेशस्य सिद्धत्वाद् रेफवकारौ हल्परौ न भवतः। तत् कुतो दीर्घत्वस्य प्राप्तिः? इह तर्हि चतुर्य्यितेति दीर्घत्वं कस्मान्न भवति? अत्र हि चतुर्य्य इत्यस्य क्यजन्तस्य धातो स्तृचि परतोऽतो लोप ( ६।४।४८ ) इत्यकारलोपे कृत उपधाभूतो रेफो हल्परो भवतीत्यस्ति दीर्घत्वस्य प्राप्तिरित्याह चतुर्यितेत्यत्रापीत्यादि। बहिरङ्गत्वमतो लोपस्यार्धधातुकाश्रयत्वात्। दीर्घस्यान्तरङ्गत्वं पूर्ववत्। तर्हि प्रतिदीव्नेत्यत्रापि दीर्घत्वं न स्यात्। यथैव हि चतुर्यितेत्यत्र धातोरुपधा रेफो न भवति तथा प्रतिदीव्नेत्यत्रापि वकारः। तथाहि दीव्येत्येतावान् धातुः। नकारस्तु प्रत्ययसम्बन्धी। न च दिवेर्धातोर्वकार उपधा-

भूतः। किं तर्हि ? अन्तभूत इत्यत आह प्रतिदीव्नेत्यादि। प्रतिपूर्वाद् दिवः कनिन् युवृषीत्यादिना (उण्, ११५४) कनिन्। अल्लोपोऽन इत्य- (६।४।१३४) कारलोपः। ननु चाचः परस्मिन् पूर्वविधावित्यल्लोपस्य (१।१।५७) स्थानिवद्भावाद् हलि परतो वकारान्तोऽत्र धातु र्न भवति। तत् कथं हलि चेति (८।२।७७) दीर्घत्व मित्याह दीर्घविधावित्यादि। स्थानिवद्भावप्रतिषेधस्तु न पदान्तेत्यादिना (१।१।५८)। नन्वेवपि बहिरङ्गलक्षणसिद्धत्वादल्लोपस्य नैवात्र हलि परतो वकारान्तो धातुरुपपद्यत इत्याह असिद्धं बहिरङ्गमित्यादि। अनाश्रयणस्य तु हेतुरनित्यत्वमस्याः परिभाषायाः (प,५१)। अनित्यत्वं तु नलोपः सुप् स्वरेत्यादौ सूत्रे (८।२।२) तुग्विधिग्रहणाज् ज्ञापितम्। अथ जिव्रिः किर्यो- रित्यादौ हलि चेति (८।२।७७) दीर्घत्वं कस्मान्न भवति ? जिव्रिशब्दोऽप्ययमेवं व्युत्पाद्यते। जीर्यतेः क्रिन् रश्च व इति (उण्, ५।७२)। जॄष् झॄष् वयोहाना इत्यस्मात् क्रिन् प्रत्ययः। ॠत इद् धातोरितीत्त्वम् (७।१।१००)। रपरत्वम्। रेफस्य वकार आदेश इत्येवं व्युत्पत्तौ जिव्रिरित्येतस्य वकारान्तस्य धातो रेफे हलि परतो हलि चेत्यस्ति (८।२।७७) दीर्घत्वस्य प्राप्तिः। किरिर्गिरिरित्येव- मादीनामपि शब्दानामेवं व्युत्पत्तिः क्रियते। अचइरित्यत (उण्, ४।५७८) इप्रत्ययेऽनुवर्त्तमाने भुजेः किच्चेति च (उण्, ४।५८१) कॄगॄशॄपॄकुटि- भिदिच्छिदिभ्यश्चेति (उण्, ४।६८२) किरतिप्रभृतिभ्यो धातुभ्य इप्रत्ययं विधाय व्युत्पाद्यन्त एते। एवं हि व्युत्पत्तावोर्स यणादेशे कृते यकारे हलि परतो रेफान्तानां किरिप्रभृतीनां हलि चेति (८।२।७७) दीर्घत्वं प्राप्नोतीत्यत आह उणादयोऽव्युत्पन्नानीत्यादि। ननु च किर्योर् गिर्योरित्यत्र व्युत्पत्तिपक्षेऽपि दीर्घत्वं न प्रसजति। नह्यत्र हलि परतः किरतिगिरती रेफान्तौ। दीर्घत्वे कर्त्तव्ये यणादेशस्य स्थानिवद्भावात् स्वरादिलोपेषु हि लोपाजादेशो न स्थानिवत्। अन्यस्तु स्थानिवदेव। सत्यमेतत्। अभ्युपगम्यैवं परिहार उक्तः। एवं मन्यते। भवत्व- विशेषेण स्थानिवद्भावप्रतिषेधः। तथापि नैवात्र दीर्घत्वं प्रसज्यते। अव्युत्- पन्नत्वात्। उणादीनामिति। यद्युणादयोऽव्युत्पन्नानि प्रातिपदिकानि प्रति- दीव्नेत्यत्रापि दीर्घत्वं न सिध्यति। प्रतिदिवन्शब्दस्याप्यौणादिकत्वात्। अयं कनिन् युवृषीत्यादिना (उण्, ११५४) कनिन्प्रत्ययान्तो व्युत्पाद्यते। न तर्हि वक्तव्यमुणादयोऽव्युत्पन्नानि प्रातिपदिकानीति। न हि तत्रैव सूत्रे व्युत्पत्तिपक्ष आश्रयितुं युक्तः! योऽप्यातो मनिन्क्वनिब्वनिपश्च (३।२।७४)

तान्येभ्योऽपि दृश्यन्त इति क्वनिप्प्रत्ययान्तं प्रतिदिवन्शब्दं व्युत्पादयेत् तस्यापि नैव दीर्घत्वं सिध्यति। लोपो व्योर्वलीति ( ६।१।६६ ) वकारलोपे कृते धातोरवकारान्तत्वादिति। कर्त्तव्योऽत्र यत्नः। एष क्रियते। हलि चेत्यत्र ( ८।२।७७ ) व्यक्तिः पदार्थ इत्येतद् दर्शनमाश्रीयते। अस्मिंश्च दर्शने प्रतिलक्ष्यं लक्षणभेदो भवतीति यावन्ति लक्ष्याणि तावन्त्येव लक्षणान्युपदिश्यन्ति। तत्र भिन्नेषु लक्ष्यानुरोधात् क्वचित् प्रतिदीव्नेत्यादौ व्युत्पत्तिपक्ष आश्रीयते। क्वचित् पुनर्जिन्विः किर्व्योः गिर्व्योरित्यादावव्युत्पत्तिपक्ष इति। चकारो हलीत्यस्यानुकर्षणार्थः।

## ७९। न भकुर्छुराम्।

हलि चेति ( ८।२।७७ ) दीर्घत्वे प्राप्ते प्रतिषेधोऽयमारभ्यते। धुर्य्य इति। धुरं वहतीति धुरो यड्ढकाविति ( ४।४।७७ ) यत्। कुर्य्यादिति। करोतेर्लिङ्। तनादिकृञ्भ्य उः ( ३।१।७९ )। धातो गुणः। रपरत्वम्। अत उत् सार्वधातुक इत्युत्त्वम् ( ६।४।११० )। ये चेत्युकारलोपः ( ६।४।१०९ )। कुर्य्यादिति। आशिषि लिङ्। करोतेर्विकरणेन निर्देश चिकीर्षतीत्यत्र प्रतिषेधो मा भूदित्येवमर्थः।

## ८०। अदसोऽसेर्दादु दो मः।

असेरितीकार उच्चारणार्थः। अविद्यमानः सकारो यस्य स तथोक्तः। यश्चैवंविधः स सकारान्तो न भवतीत्याह असकारान्तस्येत्यादि। अमुमित्यादि। अदसोऽमादिषु त्यदाद्यत्वेऽतो गुणे (६।१।९७) पररूपत्वे च कृतेऽमि पूर्वत्वम् (६।१।१०७)। औटि वृद्धिरेचीति ( ६।१।८८ ) वृद्धिः। शसि प्रथमयोः पूर्वसवर्णदीर्घत्वम्। अत्र स्थानेऽन्तरतमपरिभाषयैकवचने (१।१।५०) मात्रिकस्य मात्रिक एव भवति। अन्यत्र द्विमात्रिकस्य द्विमात्रिकः। ननु च मात्रिकः सूत्र उपात्तः। तत् कथं द्विमात्रिको लभ्यते ? अणुदित् सवर्णस्य चाप्रत्यय (१।१।६९) इति सवर्णग्रहणादिति चेत् ? न। भाव्यमानोऽण् सवर्णान् न गृह्णातीति (प,२०) प्रतिषेधादित्यत आह भाव्यमानोऽपीत्यादि। एतच्च ऊत उदित्यत्र (DD) ( ६।४।१११ ) तपरकरणेन ज्ञापितम्। अदस्यतीति। सुप आत्मनः क्यच् ( ३।१।८ )। अदसोऽनोस्र इति वक्तव्यमिति। ओकारसकाररेफाणां द्वन्द्वः। अविद्यमाना ओस्रोऽसेरति बहुव्रीहिः। अदोऽत्रेति।

(DD) हरदत्तस्तस्य समर्थनार्थं दिव उदिति ( ६।१।१३१ ) सूत्रमुद्धृतवान्।

नपुंसकत्वात् स्वमोर्नपुंसकादिति सोर्लुक् (७।१।२३)। सकारस्य रुत्वेऽतो रोरप्लुतादप्लुत (६।१।११३) इति रोरुत्वम्। आद् गुणः (६।१।८७)। एङः पदान्तादतीति (६।१।१०९) पररूपत्वम्। इदमोकारप्रतिषेधस्य प्रत्युदाहरणम्। अद इति। एतत्तु रेफप्रतिषेधस्य। रुत्वे कृते विसर्जनीयः। तदर्थमिति। सकार-रेफयोरपि प्रतिषेधो यथा स्यादित्येवमर्थम्। अः से यस्येति। सकार उच्चारणार्थः। अकारः सकारस्य यस्येत्यर्थः। कथमित्यादि। यदादसोऽद्र्यादेशः क्रियते तदेदमदसोऽद्रेश्च पृथग् मुत्वं भवति? उतान्यस्यदेशस्य? आहोस्विदद्र्यादेशविषये न भवत्येवेत्येतत् पृच्छति। अदसोऽद्रेरित्यादि। मश्च उश्च मुः। तस्य भावो मुत्वम्। अदसोऽद्रेश्चोभयोरपि केचिन् मुत्वमिच्छन्तीत्यर्थः। विनापि हि चकारेण तदर्थो गम्यते। तद् यथा अहरहर्नयमानो गामश्वं पुरुषं पशुमित्यादौ वाक्ये। कथम्? यथेत्याह लत्ववदिति। यथा चलीक्लृप्यत इत्यत्र कृपो रो ल (८।२।१८) इति धातो रेफस्य रीशब्दस्य चोभयोरपि लत्वमिच्छन्ति तद्वददसोऽद्रेश्च मुत्वम्। केचिदन्यसदेशस्येति। अद्र्यादेश इकारान्तः। तस्य केचिदुत्वमिच्छन्ति। स पुन रद्र्यादेशसम्बन्धी दकारो रेफश्च। नैतेक इति। अपरे तु यदादसोऽद्र्यादेशः क्रियते तदा न भवितव्यमेव मुत्वेनेतीच्छन्ति। अत्रैव कारणमाह असेर्हि दृश्यत इति। अः से यस्य सोऽयमसिः। तस्यासेः। हिशब्दो यस्मादर्थे। यस्मात् सकारस्य स्थाने यस्यादसोऽकारो भवति तस्य पण्डितै मुत्वं दृश्यते। न च कृताद्र्यादेशस्यादसः सकारस्य स्थानेऽत्वं भवति। विभक्तेः परस्य निमित्तस्या-भावात्। तस्मात् न तस्य मुत्वेन भवितव्यमिति। येरित्यादिना श्लोकस्य पूर्वार्द्धं व्याचष्टे। असेरिति सकारस्य प्रतिषेधः क्रियते। नास्य सि विद्यत इत्येवं व्याचक्षाणैः। उभयोरपीति। अदसोऽद्रेश्च। अमुमुयङित्यादि। अदोऽ-ञ्चतीति ऋत्विगादिना (३।२।५९) सूत्रेणाञ्चतेः क्विन्। अनिदितामिति (६।४।२४) नलोपः। उपपदसमासः। उगिदचामिति (७।१।७०) नुम्। हल्ङ्यादि (६।१।६८) संयोगान्तलोपौ (८।२।२३)। एकवचने क्विन्प्रत्य-यस्य कुरिति (८।२।६२) कुत्वं नकारस्य ङकारः। अन्यत्र नश्चापदान्तस्य झलीत्यनुस्वारः (८।३।२४)। अनुस्वारस्य ययि परसवर्णः (८।४।५८) इति परसवर्णो ञकारः। आ सर्वनाम्न इत्यतः (६।३।९१) सर्वनाम्न इत्यनुवर्त्तमाने विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये (६।३।९२) इत्यदःशब्दस्य टेरद्र्यादेशः। पूर्वस्माद् दकारादुत्तरस्योत्वम्। दकारस्य मत्वम्। द्वितीयस्मादपि दकाराद्रेफ-

स्योत्वम्। दकारस्य च मत्वम्। अमुमुयङ्। अमुमुयञ्चाविति भवति। यथेत्यादिना लत्ववदित्यस्यार्थमाचष्टे। चलीक्लृप्यत इति। क्लृपू सामर्थ्ये। अत्यन्तं कल्पत इति यङ्। द्विर्वचनम्। उरदित्यत्त्वम् (७।४।६६)। हलादिःशेषः (७।४।६०)। रीगृदुपधस्य चेति (७।४।९०) रीक्। कुहोश्चुरिति (७।४।६२) चुत्वम्। कृपो रो ल (८।२।१८) इत्युभयोरपि लत्वम्। अनन्त्यविकारेऽन्त्यसदेशस्येति (प, १०४) परिभाषानाश्रयणात्। ये त्वित्यादिना केचिदन्त्यसदेशस्येत्यस्यार्थं कथयन्ति। अदमुयङ्। अदमुयञ्चाविति। अत्राद्रिदकारादेरुत्तरस्योत्वम्। अद्रिदकारस्यैव च मत्वम्। शेषं पूर्ववत्। तेषां त्वित्यादिनैक इत्यादेर्व्याख्यानम्। केषां पुन स्त्यदाद्यत्वविषय एव मुत्वेन भवितव्यम्? ये अः से येस्य सोऽयमसिस्तस्यासे रित्येवं वर्णयन्ति तेषाम्। अत्रेति। अद्र्यादेशविषये नैव भवितव्यमिति। त्यदाद्यत्वाभावात्। अदद्र्यङ्। अदद्र्यञ्चौ। अदद्र्यञ्च इति। पूर्ववत्। मुभावस्तु विशेषः। अमुया। अमुयोरिति। अदसस्तृतीयैकवचन ओसि च परत स्त्यदाद्यत्वम् (७।२।१०२)। टाप्। एकादेशः। तस्यान्तादिवच्चेति (६।१।८५) पूर्वं प्रत्यन्तवद्भावो दादुदोग्रहणेनैव ग्रहणम्। अत्र यदि दादिति नोच्येत तदाङि चाप (७।३।१०५)। ओसि चेति (७।३।१०४) ङितेत्वे कृते तस्य चायादेशेऽलोऽन्त्यपरिभाषया (१।१।५२) यकारस्यैवोत्वं स्यात्। दादिति वचनान्न भवति। उदिति तपरकरणं मुखसुखार्थम्। (EE)

## ८१। एत ईद्बहुवचने।

बहुवचन इत्यर्थनिर्देशोऽयमिति। अन्वर्थनिर्देश इत्यर्थः। एतदुक्तं भवति। नेदं पारिभाषिकस्य बहुवचनस्य ग्रहणम्। किं तर्हि? अन्वर्थस्य ग्रहणं बह्वना-मर्थाना मुक्ति र्बहुवचनमिति। किं कारणमेवं व्याख्यातमित्याह पारिभाषिकस्य हीत्यादि। यदि पारिभाषिकस्य बहुवचनस्येदं ग्रहणं स्यादमी इत्यत्र न स्यात्। न ह्यत्रैकारात् परं पारिभाषिकं बहुवचनमस्ति। अन्वर्थग्रहणे त्वत्रापि बह्वना-मर्थाना मभिधानमस्तीति सिध्यति। अन्वर्थग्रहणं तु व्याप्तिन्यायाल्लभ्यते। एत

(EE) उदिति तु अदसोऽसेर् दादुद दो म इति पाठे द्रष्टव्यम्। अत्र हरदत्तः—"केचिदत्राप्युकारं दपरं पठन्ति उद् दो मइति। तेषामयमौत्पत्तिको दकारो मुखसुखार्थः। न पुनस्तकारस्य जश्त्वम्। तथाहि सति सवर्णग्रहणं न स्यात्। अदपरपाठस्तु भद्रः।" इति।

इति। एकारस्य स्थानिवत्त्वं यथा विज्ञायेत। एरित्युच्यमान इकारस्यापि स्थानित्व माशङ्क्येत। किञ्च स्यादद्र्यादेशे कृते तदवयवस्यैकारस्य यणादेशं बाधितं स्यात्। ईदिति। तकारो मुखसुखार्थः।

## ८२। वाक्यस्य टेः प्लुत उदात्तः।

वाक्यग्रहणमित्यादि। असति हि वाक्यग्रहणे वाक्ये यावन्ति पदानि तेषां सर्वेषामेव प्लुतः प्रसज्येत। वाक्यग्रहणे त्वन्त्यस्यैव भविष्यति। नानन्त्यस्य। अन्त्यस्यैव हि पदस्य यष्टिः स वाक्यटि र्भवति। नत्वितरस्य। तस्मादनन्त्यस्य पदस्य प्लुतो मा भूत्। अन्त्यस्यैव यथा स्यादित्येवमर्थम्। अनन्त्यस्य कस्मान्न भवति ? अनिष्टत्वात्। नहि पदाधिकारस्य निवृत्तिरिष्यते। तथाहि प्रागुक्तं पदाधिकारः प्रागपदान्ताधिकारादिति। असमर्थत्वाच्च। नहि वाक्यग्रहणेन वाक्ये यावन्ति पदानि तेषां सर्वेषाम्। एकएव हि वाक्यस्य टिः। स नियोगतः पदस्यापि भवति। अतो न युक्ता वाक्यस्य पदाधिकारनिवृत्त्यर्थता। अथ टिग्रहणं किमर्थम् ? यावतालोऽन्त्य- (१।१।५२) परिभाषयैवायुष्मानेधि देवदत्ता॒३ इत्यत्र टेः प्लुतो भविष्यतीत्यत आह टिग्रहणमित्यादि। असति हि टिग्रहणे यथा ह्रस्वो नपुंसके प्रातिपदिकस्येति (१।२।४७) ह्रस्वग्रहणेन समुत्थापितेऽच इत्येतस्मिन्-(१।२।२८) नचा प्रातिपदिके विशेषिते तस्याजन्तस्यैव ह्रस्वत्वं भवति नानजन्तस्य सुवाग् ब्राह्मणकुलमिति तथेहापि प्लुतग्रहणेनाच इत्येतस्मिन्नुपस्थापिते (१।२।२८) सताचा वाक्ये विशेषितेऽजन्तस्यैव प्लुतः स्यात्। न व्यञ्जनान्तस्य। टिग्रहणे तु सति टिसंज्ञकेनाज् विशेष्यते। नत्वचा टिसंज्ञकः। यदि ह्यचा टिसंज्ञको विशेष्येत ततोऽजन्तो यष्टि स्तस्य प्लुतः स्यात्। तथा चानर्थकं हि टिग्रहणं स्यात्। विनापि तेनाचा वाक्ये विशेषिते तस्याजन्तस्य प्लुतो भवन्नलोऽन्त्यपरिभाषयान्त्यस्याचः (१।१।५२) सिध्यति। तस्माट्टिग्रहणस्य नानर्थक्यमिति। टिसंज्ञकेनाज् विशेष्यते टिसंज्ञकस्य योऽजिति। एवञ्च सति व्यञ्जनस्यापि टे र्योऽच् तस्यापि प्लुतः सिध्यति। अग्निचो॒३ दिति। अव्यञ्जनान्तस्यापि व्यपदेशिवद्भावेन देवदत्ता॒३ इति। तस्माद्व्यञ्जनान्तस्यापि टेरचः प्लुतो यथा स्यादित्येवमर्थं टिग्रहणं कृतम्। उदात्तग्रहणं तु स्वरान्तरनिवृत्त्यर्थम्। तच्चानन्तोदात्तः प्रयोजयति। यो ह्यन्तोदात्तस्तत्र स्थानिवद्भावादेवान्तोदात्तो भवति।

## ८३। प्रत्यभिवादेऽशूद्रे।

यदभिवाद्यमानो गुरुरित्यादि। अत्र सामान्योपक्रमेण विशेषस्यानभिधानाद् यदिति नपुंसकलिङ्गेन निर्देशः। आयुष्मानेधि देवदत्त३ इति। इदमत्रोदाहरणं प्रत्यभिवादवाक्यत्वात्। अत्राभिवादये देवदत्तोऽहमित्येतत्तु गुरोरभिवाद्यमानतां दर्शयितु मुपन्यस्तम्। अभिवाद्यमानो गुरुर्यामाशिषं प्रयुङ्क्ते स प्रत्यभिवादः। तत्रावश्यं गुरोरभिवाद्यमानता दर्शयितव्या। अन्यथा प्रत्यभिवादो न गम्येत। एधीति। भवेत्यर्थः। अस भुवि। लोट्। मध्यमपुरुषैकवचनम्। से ह्यपिच्च (३।४।८७)। घ्वसोरेद्धावभ्यासलोपश्चेत्येत्त्वम् (६।४।११९)। श्नसोरल्लोप (६।४।१११) इत्यकारलोपः। हुझल्भ्यो हेर्धिरिति (६।४।१०१) धिरादेशः। वक्तव्य इति। व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्। सिपि धातो रुर्वेत्यतो (८।२।७४) मण्डूकप्लुतिन्यायेन वेत्यनुवर्त्तते। सा च व्यवस्थितविभाषा। तेन स्त्रियां न भविष्यतीति। असूयकेऽपीति। असूयतीत्यसूयकः। यो गुरुमसाध्व्या प्रवृत्त्या सामर्षं करोति स उच्यतेऽसूयक इति। तस्मिन्नित्यादिना प्रतिषेध इष्यमाणोऽपि न वक्तव्य इति दर्शयति। यदा ह्यसावभिवादयिताऽसूयकत्वेन न निर्ज्ञायते तदा तेनाभिवाद्यो गुरुः प्रत्यभिवादने तस्य प्लुतं करोत्येव। यदा त्वसूयकोऽयं मां विहेडयितुकाम (FF) इत्येवं विज्ञातो भवति तदात्र प्रत्यभिवादना नास्त्येवेति किं प्रतिषेधेन? कथं पुनर्ज्ञायते तत्रासूयकत्वेन निर्ज्ञाते प्रत्यभिवादो नास्तीत्याह तथाचेत्यादि। केनाप्यविनीतेनोपगम्याविधिनाभिप्रायेणाभिवादयेऽहं भोः स्थालीत्येवमभिवादिते गुरुस्तस्यासूयकत्व मज्ञात्वा स्थालिन्शब्दोऽयमस्य संज्ञेति मत्वा प्रत्यभिवादयन् प्लुतं प्रयुक्तवान् आयुष्मानेधि स्थाली३न्निति। अथ सोऽविनीत उक्तवान्। नैषा मम संज्ञा। मया दण्डिन्यायो (GG) विवक्षितः। ततो गुरुः प्लुतरहितं प्रत्यभिवादनं कृतवान् आयुष्मानेधि स्थालिन्निति। पुनः स उक्तवान् न मया दण्डिन्यायो विवक्षितः। संज्ञा ममैषेति। अथ स गुरुरसूयकत्व मस्य विज्ञायोक्तवान् असूयक स्त्वं जाल्म। न त्वं प्रत्यभिवादमर्हसि। भिद्यस्व वृषल स्थालिन्निति। अथाभिवाद्यमानो यदा देवदत्तः कुशल्यसि देवदत्तायुष्मानेधीत्येवं प्रत्यभिवादं प्रयुङ्क्ते तदा कस्मात् प्लुतो न भवतीत्याह अभिवादनवाक्यइत्यादि। अभिवाद्यतेऽनेनेत्यभिवादनम्। अभि-

---

(FF) हेडृ होडृ अनादरे। प्रहसितुमिच्छन्नित्यर्थः।

(GG) दण्डिन्यायो दण्डीऽस्यास्तीत्यस्यर्थावलम्बनम्। स्थालमस्यास्तीति स्थालीति।

वादनञ्च तद् वाक्यञ्चेत्यभिवादनवाक्यम्। तत्र तावत् संकीर्त्तितं संशब्दितं नाम देवदत्तोऽहमित्येवं गोत्रं वात्स्योऽहमितेत्रवं यद् यत्र प्रत्यभिवाद-वाक्यस्यान्तेऽवसाने प्रयुज्यत उच्चार्य्यते तत्रायं प्लुत इष्यते। देवदत्त कुशल्य-सीत्यादौ तु यदभिवादनवाक्ये संकीर्त्तितं नाम देवदत्तशब्दस्तत् प्रत्यभिवादन-वाक्यस्यादौ प्रयुक्तम्। नावसाने। तस्मात् प्लुतो न भवति। कुतः पुनरेतल्लभ्यते ? वेत्यनुवृत्ते र्व्यवस्थितविभाषाविज्ञानाच्च। प्राधान्याद्वा। इह हि प्रधाने कार्य्य-संप्रत्ययात् ( प, १०६ ) प्रधानस्य वाक्यस्यान्ते वर्त्तमानस्य टेः प्लुतेन भवितव्यम्। प्राधान्यञ्च पदस्यार्थद्वारकम्। प्रधानस्यार्थस्य यद्वाचकं पदं तत् प्रधानञ्चार्थोऽ-भिवादयिता। तदनुग्रहार्थत्वात् प्रत्यभिवादस्य। तथाह्यभिवादयितु रनुग्रही-तार्थं गुरुः प्रत्यभिवादं प्रयुङ्क्ते। तस्मादभिवादयिता संस्कार्य्यः। कुशलिताऽ-युष्मत्तादीनि तस्यैव संस्कारकाणि। अतोऽभिवादयिता संस्कार्य्यत्वात् प्रधानम्। तस्य वाचकं पदं संज्ञाशब्दो गोत्रशब्दश्चेति तस्यैव वाक्यान्ते वर्त्तमानस्य टेः प्लुतो भवति। यद्यपि तिङन्तवाच्योऽर्थः साध्यो न तु तस्य साध्यत्वमिह प्राधान्येना-श्रितम्। किं तर्हि ? संस्कारकत्वमेव। तस्मान्न तस्यापि प्राधान्यम्। भो राजन्यविशामित्यादि। भो इति स्वरूपग्रहणम्। राजन्य इति क्षत्रियनाम्नः। विश इति वैश्यनाम्नः। अत्र भोःशब्दस्याप्राप्ते विभाषा। असंज्ञागोत्रशब्दत्वात्। इतरेषां तु प्राप्ते। संज्ञाशब्दत्वात्।

## ८४। दूराद्धूते च।

दूरादिति। आरात्। दूरान्तिकेभ्यो द्वितीया चेति ( २।३।३५ ) पञ्चमी। ह्वानं हूतम्। भावे निष्ठा। दूरादित्युच्यते। दूरञ्चानवस्थितम्। यदेवालस्यापहृतं प्रति दूरं भवति तदेवोत्साहसम्पन्नं प्रत्यन्तिकम्। एवं हि कश्चित् कञ्चिदाह य एष पार्श्वतः करक स्तमानयेति। स आह्योत्थाय गृहाण। दूरं गन्तुं न शक्नो-मीति। अतो दूरस्यानवस्थितत्वान् न ज्ञायते कस्यामवस्थायां प्लुत्या भवितव्यमिति। अत आह दूरमित्यादि। हूतं ह्वानम्। तदपेक्षं यद् दूरं तदिहाश्रीयते। इतिकरणो हेतौ। यस्माद् धूतापेक्ष मिह दूरमाश्रीयते तस्मात् प्राकृतात् प्रकृतौ भवात् प्रयत्नाद् यः प्रयत्नविशेषः प्राकृतयत्नादधिक स्तस्मिन्नाश्रीयमाणे यत्र शब्दाह्वानं तच् श्रूयते तद् दूरम्। ततो न भवति दूरस्यानवस्थितत्वमित्यभिप्रायः। अथेह कथं प्लुतः स्यात् सक्तून् पिब देवदत्ता३ इति ? न शब्दमात्रं हूतम्। अपितु

शब्दविशेषः। येन परत आगमने नियुज्यते स शब्दविशेषो हूतम्। न च तदिहास्तीत्यत आह हूतग्रहण चेत्यादि। सम्बोधनं शब्दसाधनं हूतम्। चशब्द स्तस्मादित्यर्थे। तेन तत् साध्यं सम्बोधनं लक्ष्यत इति हूतग्रहणं सम्बोधनमात्रो-पलक्षणं वेदितव्यम्। इहायं प्लुतोऽपि दूरात् सम्बोधने विधीयते। एकश्रुति-रपि। एकश्रुति दूरात् सम्बुद्धाविति (१।२।३३)। तत्रैवमेकत्र प्राप्नुवतामनेके-षां बाधाविकल्पसमुच्चयानामन्यतमेन भवितव्यम्। अत्र न ज्ञायते किमेतयोः समुच्चयो भवत्वुत विकल्पः। आहोस्विदन्यतरस्य बाधेति। तत् परिज्ञानायाह अस्याश्चेत्यादि। बाधया तावन्न भवितव्यम्। समानविषयत्वात्। विषय-भेदे हि सति बाध्यबाधकभावो भवति। तद् तथा कर्मण्यण् (३।२।१)। आतोऽनु-पसर्गे क इति (३।२।३)। अत्र ह्येकस्य विशेषो विषयः। अपरस्य सामान्य-मित्यस्ति विषयभेदः। अनयोस्तु विशेषो नास्तीत्ययुक्ता बाधा। विकल्पोऽ-प्ययुक्तः। असहप्राप्तेः। सहप्राप्तयोर्हि विकल्पो भवति यथा तव्यदादीनाम्। न चैकश्रुत्यपेक्ष्येह सहप्राप्तिरस्ति। प्लुतस्यासिद्धत्वात्। तस्मात् पारिशेष्यात् समावेश एव भवति। समावेशः पुनरत्रैकस्मिन् वाक्ये प्रवृत्तिः। नत्वेकस्मि न्नवयवे। विरुद्धयो रेकस्मिन् प्रवृत्ते रसम्भवात्। वाक्यस्य त्वनेकावयवात्मक त्वात्। टेरचः प्लुतो भवति। अवशिष्टस्य त्वेकश्रुतिरिति युज्यते समावेशः।

## ८५। हैहेप्रयोगे हैहयोः।

पूर्वसूत्रेण प्राधान्याद् हूयमानस्यैव प्लुतो विहितः। प्राधान्यं तु तस्य तदभि-मुखीकरणाय वाक्यप्रयोगात्। अतो हैहयोर्न प्राप्नोति। एतदर्थोऽयमारम्भः। अथ पुनर्हैहयो र्ग्रहणं किमर्थम्? यावता विनापि तेन श्रुतत्वात् तयोरेव भविष्य-तीत्याह पुनरित्यादि। हैहेप्रयोग इत्युच्यमाने वाक्यस्य टेः प्लुत उदात्त इत्यधि-कारादन्त्ययोरेव स्यात् (८।२।८२)। नानन्त्ययोः। तयोरपि यथा स्यादित्येव-मर्थं पुनर्हैहेग्रहणम्। हैहेग्रहणे प्रयोगग्रहणं चानर्थकयोरपि यथा स्यात्। तदा चेतावनर्थकौ यदामन्त्रितान्तम्। तेनैवामन्त्रितार्थस्यावगमितत्वादर्था-न्तरस्य द्योत्यस्याभावात् तावनर्थकौ भवतः। अन्ये त्वाहुर् निपातसमाहारावपि तौ स्तो हन्त हैहेइति। तत्रासति प्रयोगग्रहणे तयोर्न स्यात्। लाक्षणिकत्वात्। तस्मात् प्रयोगमात्रे लाक्षणिकयोरपि यथा स्यादित्येवमर्थं प्रयोगग्रहणमिति।

## ८६। गुरुरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम्।

प्रत्यभिवादादिषु वाक्यटेः प्लुत उदात्तः। स एव तु ऋकारवर्जितस्य गुरोरनन्त्यस्य प्लुत उच्यते। अन्त्यस्यापि टेरिति। अनेनापिशब्दः टेः समुच्चयं करोतीति दर्शयति। यदि ह्यपिशब्देन गुरोः समुच्चयः क्रियतेऽनन्त्यस्यापि गुरोरन्त्यस्यापीति तदानेन गुरावनन्त्ये प्लुतः। लघुरन्त्यः पूर्वेण प्लुत एव। ततश्च द्वयोः प्लुतयोः श्रवणं युगपत् प्रसज्येत। न चानुदात्तं पदमेकवर्जमिति (६।१।१५८) वचनान्न भविष्यतीति शक्यं वक्तुम्। तस्मिन् कर्त्तव्ये प्लुतस्यासिद्धत्वात्। यदा टिसंज्ञकोऽपिशब्देन समुच्चीयते तदानेनैव सूत्रेणानन्त्यस्य गुरोरनन्त्यस्य च टेः प्लुतो विधीयते। तत्रैकैकस्येति वचनाद् यथानन्त्यस्य पर्य्यायो न भवति तथान्त्यस्यापीति न भवति यौगपद्यप्रसङ्गः। एकैकग्रहणमित्यादि। यद्येकैकग्रहणं न क्रियेत तदा पक्षे युगपदेव सर्वेषां प्रसज्येत। तस्मात् पर्य्यायेण यथा स्यादित्येवमर्थमेकैकग्रहणम्। एतच्च यथोद्देशं संज्ञापरिभाषमित्याश्रित्य(प,२)कृतमिति वेदितव्यम्। दर्शनान्तरे (HH) ह्यनुदात्तं पदमेकवर्जमित्यस्योपस्थाने (६।१।१५८) सति न प्लुतयोर्द्वयोर् यौगपद्यप्रसङ्गः। अथ प्राचामिति किम्? यावतैकैकग्रहणादेव विभाषा सिध्येदित्यत आह प्राचामिति। सर्वस्य प्लुतस्येत्यभिप्रायः। अत एवाह तदनेनेत्यादि। अपायहेतुमविमृश्य प्रवृत्तिः साहसम्।

## ८७। ओमभ्यादाने।

प्रारम्भ इति। कस्य प्रारम्भे? स्वाध्यायादेः।

## ८८। ये यज्ञकर्मणि।

यज्ञकर्मणीति। कर्मशब्दः क्रियावाची। यज्ञक्रियायामित्यर्थः। ये३ यजामह इत्यत्रैवायं प्लुत इष्यत इति। एतच्च प्राचामित्यस्यानुवृत्तेर्व्यवस्थितविभाषाविज्ञानाच्च लभ्यत इति वेदितव्यम्।

## ८९। प्रणवष्टेः।

क एष प्रणवो नामेति। इह शास्त्रे प्रणवस्यापरिभाषितत्वाल्लोके चाप्रसिद्ध

(HH) कार्य्यकालं संज्ञापरिभाषमिति (प,३)।

त्वात् प्रश्नः। पादस्य चेत्यादिना शास्त्रान्तरपरिभाषया प्रणवस्वरूपं दर्शयति। वान्त्यमक्षरमिति। स्वरोऽत्राक्षरशब्देन विवक्षितः। अन्त्यत्वं पुनस्तस्येतरस्वरापेक्षया। उपसंगृह्येति। गृहीत्वेत्यर्थः। तदन्त्यमक्षरमादौ यस्याक्षरशेषस्य तत् तदादि। अक्षरञ्च शेषश्च। समाहारे द्वन्द्वः। अक्षरं स्वरः। तस्य शेषः व्यञ्जनम्। तदादि च तदक्षरशेषश्च।तदक्षरशेषं यत्रान्त्यात् स्वरात् परं व्यञ्जनं नास्ति तत्र स एव। तदादि तस्य बहुव्रीहे रन्यपदार्थः। व्यपदेशिवद्भावेन तत्रापि हि तदादिव्यपदेशो भवति। यत्रान्त्यात् स्वरात् परं व्यञ्जनमस्ति तत्र सह स्वरेण व्यञ्जनमन्यपदार्थः। तद्गुणसंविज्ञानस्य बहुव्रीहेरिहाश्रितत्वात्। योऽयमनेन ग्रन्थेन टिसंज्ञक एवोक्तो भवति तद्यक्षरशेषस्य स्थाने यत् त्रिमात्र मोकारमोङ्कारं वा विदधाति तत् प्रणवं कथयन्ति। जिन्वतो॒३मिति। जयतेः परस्य लट्। तस्य शत्रादेशः। व्यत्ययेन श्नुप्रत्ययः। यणादेशः। जिन्वन्निति स्थितेऽनुशब्दस्यान्त्याक्षरादेः प्रणवः। सुम्नयो॒३मिति। सुम्नशब्दात् क्यच्। क्याच्छन्दसीति ( ३।२।१७० ) उप्रत्ययः। देवसुम्नयोर्यजुषि काठक इति ( ७।४।३८ ) आभावः। सुम्नआयुस् इति स्थिते उसित्यस्यान्त्याक्षरादेः प्रणवः। ननुच टिस्थानिकयोरेव त्रिमात्रयोरोकारौकारयोः प्रणव इति परिभाषा कृता। तन्त्रान्तरेणापि टिग्रहणं टेरेव भविष्यति। तत् किं टिग्रहणेनेत्यत आह टिग्रहणमित्यादि। असत्यत्र टिग्रहणे व्यञ्जनान्तेष्वलोऽन्त्य ( १।१।५२ ) परिभाषयाऽन्त्यस्यैव स्यात्। अतष्टिग्रहणं क्रियते सर्वस्यैव टेर्यथा स्यादिति। अन्त्यस्य मा भूदिति। ओङ्कारस्यानेकाल्त्वात् सर्वादेशो भविष्यतीत्योकारार्थं टिग्रहणम्।

## ९० । याज्यान्तः ।

इहान्त्यग्रहणं टेरितेयत्तस्य निवर्त्तकं वा स्याद् विशेषणं वा ? पूर्वस्मिन् पक्षेऽचाऽन्ते विशेषिते ऽजन्ताया एव याज्यायाः प्लुतः स्यात्। इतरस्मिंस्त्वन्त्यग्रहणमनर्थकम्। नह्यनन्त्यष्टिः सम्भवति। अलोऽन्त्यादि टीत्यस्यैव ( १।१।६४ ) टिशब्दरूपविशेषसंज्ञाविधानादित्यभिप्रायेणाह अन्त्यग्रहणं किमिति। इतरोऽपि विदिताभिप्रायोऽन्यदेवान्त्यग्रहणस्य प्रयोजनं दर्शयितुमाह याज्यानामित्यादि। गतार्थम्।

## ९१ । ब्रूहिप्रेष्यश्रौषड्वौषडावहानामादेः ।

श्रौषड् वौषडिति निपातौ । इतराणि लोण्मध्यमपुरुषैकवचनानि । केचित्त्वावहशब्दोऽपि निपात इत्याहुः । प्रेष्येति । ईषु गतौ । दिवादित्वाच्छ्यन् । उपसर्गाकारेण सहाद् गुणः (६।१।८७) । अथेह कस्मान्न भवति आवह देवान् यजमानाय आवह जातवेदः सुयजा यजेत्याह आवह देवानित्यादि । आदिग्रहणं वाक्यादेर्मा भूदिति ।

## ९२ । अग्नीत्प्रेषणे परस्य च ।

अग्निमिन्ध इत्यस्मिन्नर्थेऽग्नीद् ऋत्विग्विशेषः । तस्य प्रेषणं नियोजनमग्नीत्प्रेषण मित्यर्थः । आदेः सन्निहितत्वात् तदपेक्षयैव परोऽपि ज्ञायत इत्याह तस्मादेवादेरित्यादि । अत्रैवेति । अनन्तरोक्त उदाहरणद्वय एवकारेण यद् व्यवच्छिन्नं तद् दर्शयितु माह अग्न३दग्नीन् विहर बर्हिस्तृणीहीति । कथं पुनरेतल्लभ्यत इत्याह तदर्थमित्यादि । यथा च सर्वत्र प्लुतो विभाषा शक्यो विज्ञातुं तथा गुरोरनृतोऽनन्त्यस्येत्यादौ (८।२।८६) सूत्रे प्रतिपादितम् । यदि तर्हि सर्वत्र प्लुतो विभाषा विज्ञायेतोत्तरत्र विभाषाग्रहणमनर्थकम् । न ; प्रपञ्चार्थत्वात् । अथेह कथं प्लुतः ? उद्धरा३ उद्धर । अभिहरा३ अभिहरेति ? स्वाध्यायकाले ह्ययं प्लुतः । नाग्नीत्प्रेषणे । नचायमादेः । नाप्यादेः परस्य । किं तर्हि ? ततोऽन्यस्यैवेत्यत आह इह त्वित्यादि । विस्पष्टार्थम् ।

## ९३ । विभाषा पृष्टप्रतिवचने हेः ।

पृष्टप्रतिवचनमिति । पृष्टस्य प्रतिवचनमाख्यानं पृष्टप्रतिवचनम् । प्रतिवचनशब्दोऽयं विरुद्धेऽपि वचने प्रवर्त्तते विरुद्धं वचनं प्रतिवचनमिति । प्रतिशब्दो ह्यत्र विरोधं द्योतयति यथा प्रतिमल्लः प्रतिगज इति । वीप्सायामपि वर्त्तते वचनं वचनं प्रतीति प्रतिवचनम् । यथार्थे यदव्यय मिति (२।१।६) वीप्सायामव्ययीभावः । समाधानेऽपि वर्त्तते । यदनेनाभिहितं तस्य मया प्रतिवचनं विहितमिति । समाधिर्विहित इति गम्यते । तत्र प्रतिवचन इत्युच्यमाने सर्वत्र प्रसज्येत । तस्मात् प्रतिवचनविशेषार्थं पृष्टग्रहणम् । पृष्टस्य यत् प्रतिवचन मर्थाख्यानं तत्रैव यथा स्यात् । अन्यत्र मा भूदिति ।

## ९४। निगृह्यानुयोगे च।

निगृह्येति। ल्यबन्तमेतत्। स्वमतादिति। स्वावगमात्। प्रच्याचनमिति। अपनयनम्। आविष्करण मिति प्रकाशनम्। आड्मिति कर्मविशेषः। एवमनुयुज्यत इति। एवमाविष्कृतस्वमतः क्रियत इत्यर्थः। चकारो विभाषेत्यस्यानुकर्षणार्थः। तेनोत्तरविधि र्नित्यो भवति।

## ९५। आम्रेडितं भर्त्सने।

चोर चोरा३ इति। वाक्यादेरामन्त्रितस्येत्यादिना (८।१।८) भर्त्सने द्विर्वचनम्। यद्यपि वाक्यग्रहण मेतदन्त्यस्य पदस्य प्लुतनिवृत्त्यर्थं तथापीह वचनसामर्थ्यादनन्त्यस्यापि भवति। न हि वाक्यान्ते भर्त्सन आम्रेडितं सम्भवति। वाक्यादेरेव पदस्य भर्त्सने द्विर्वचनविधानात्। तदर्थमिति। पर्य्यायेण पूर्वोत्तरयोः पदयोर्यथा स्यादित्येवमर्थम्। द्विरुक्तोपलक्षणार्थञ्च। आम्रेडितस्य भर्त्सनग्रहणाद् विज्ञायते तद्विरुक्तस्य हि यत् परं तदाम्रेडितम्। नच तावता भर्त्सने प्रवृत्तिः सम्भवति। भर्त्सनस्य द्विरुक्तिद्योत्यत्वात्। तस्माद् द्विरुक्तोपलक्षणार्थ माम्रेडितग्रहणं विज्ञायते। तद्विरुक्तिश्च पूर्वोत्तरविषयेऽपीति द्वयोरपि प्लुतो भवति। स च पर्य्यायेण भवति। न यौगपद्येन। भर्त्सनद्योतनफलत्वात् प्लुतेः। अन्यतरप्लुत्यैव च तद् भर्त्सनस्य द्योतितत्वात्।

## ९६। अङ्गयुक्तं तिङाकाङ्क्षम्।

आकाङ्क्षमिति। आकाङ्क्षत्यपेक्षत इत्याकाङ्क्षम्। पचाद्यच्। अङ्ग कूजा३ इत्यादि। अङ्ग कूजा३ अङ्ग व्याहरा३ इत्येतदुभयमपोदानीं ज्ञास्यसि जाल्मेत्येतदपेक्षते। अङ्ग देवदत्तेत्येतदपि मिथ्या वदसीत्येतत्। अधीष्वेत्येतदप्योदनं ते दास्यामीत्येतत्। नैतदपरमाकाङ्क्षतीति। विवक्षितार्थस्य परिसमाप्तत्वात्। अथ युक्तग्रहणं किमर्थम्। यावता पदविधित्वादेव योगो विज्ञास्यते। एवं तर्हि युक्तग्रहणं कुर्वन्नेतज् ज्ञापयति समर्थः पदविधिरित्येषा (२।१।१) परिभाषाऽनित्या। तेनासूर्य्यम्पश्यानि मुखानीति नञोऽसत्यपि सूर्य्यशब्देन सामर्थ्ये समासः सिद्धो भवति।

## ९७। विचार्य्यमाणानाम्।

प्रमाणेन वस्तुपरीक्षणं विचारः। तेन विषयीक्रियमाणानि विचार्य्यमाणानि। बहुवचननिर्देशो येषामर्थगत एव विचारो न स्वरूपगत स्तेषामपि यथा स्यादित्येवमर्थः। इतरथा हि येषां स्वरूपगतो विचार स्तेषामेव स्यात्। नहि मुख्ये वाक्ये विचार्य्यमाणे सत्यर्थद्वारकं गौणं यस्य विचार्य्यमाणत्वं तस्य ग्रहणं युक्तम्। गृह्वा३ इइति। गृह इत्यत्र एकारः। तस्येचोऽप्रगृह्यस्येत्यादिना (८।२।१०७) पूर्वार्द्धस्याकारः। उत्तरार्द्धस्य त्विकारः। तस्याकारस्यानेन प्लुतो भवति।

## ९८। पूर्वं तु भाषायाम्।

पूर्वेणैव सिद्धे नियमार्थमेतत्। तुशब्द स्त्विष्टतोऽवधारणार्थः। असति हि तस्मिन् विपरीतोऽपि नियमो विज्ञायेत भाषायामेव पूर्वमिति। पूर्वत्वञ्च प्रयोगापेक्षम्। अहि नु रज्जुनु इत्येतयोर्वाक्ययोर्यत् पूर्वं प्रयुज्यते तस्यैव टेः प्लुतो भवति। इह तु भाषाग्रहणात् पूर्वयोग श्छन्दसीति विज्ञायते।

## ९९। प्रतिश्रवणे च।

प्रतिश्रुतिः प्रतिश्रवणम्। प्रतिपूर्वाच्छृणोतेर्भावे ल्युट्। कुगतीत्यादिना (२।२।१८) तत्पुरुषः। प्रतिपूर्वस्य शृणोति र्यदा परानुग्रहो विवक्ष्यते तदाभ्युपगमे वर्त्तते। अथ त्वविवक्षा परानुग्रहस्य तदा प्रतिज्ञाने। यदा श्रुतिः श्रवणमिति भावसाधनेन श्रवणशब्देन प्रतिशब्दस्य लक्षणेनाभिप्रती आभिमुख्ये (२।१।१४) इत्यव्ययीभावः क्रियते तदा श्रवणाभिमुख्ये श्रवणं प्रति प्रवृत्त इत्यर्थः। तदिह विशेषानभिधानात् सर्वस्मिन् प्रतिश्रवणे वाक्यस्य टेः प्लुतो भवति। देवदत्त भोः किमात्था३ इति। एतच्छ्रवणाभिमुख्य उदाहरणम्। देवदत्त भो इत्यामन्त्रितम्। तत्र श्रवणार्थमेवमाह किमात्था३ इति। एकत्र श्रवण मुद्दिश्य प्रवृत्तत्वादभिमुखं भवति। अभ्युपगमे तूदाहरणं गां मे देहि भोः। अहं ते ददामी३ इति। प्रतिज्ञाने नित्यः शब्दो भवितुमर्हतीति। चकारो भाषाया मित्यनुकर्षणार्थः।

## १०० । अनुदात्तं प्रश्नान्ताभिपूजितयोः ।

अगमा३ इति । गमेर्लुङ् । पुषादिसूत्रेण ( ३।१।५५ ) ऌदित्वादङ् । सिप् । अग्निभूता३ इ इति । पटा३ उ इति । सम्बुद्धौ परतो ह्रस्वस्य गुण ( ७।३।१०८ ) इति गुणः । एचोऽप्रगृह्यस्येत्यादिनाऽ कारः ( ८।२।१०७ )। इदुतौ च । उदाहरणवाक्ये पूर्वं पदानामितिनैव प्लुतः कृत इति गृहीत्वा यश्चोदयेदथ कथमिहानन्त्यस्यापि प्लुतो भवति ? यावता वाक्यस्य टेरित्यनुवर्त्तत इति तं प्रत्याह अग्निभूते पटो इत्येतयोरित्यादि ।

## १०१ । चिदिति चोपमार्थे प्रयुज्यमाने ।

चिदितीति । इतिकरणः प्रयुज्यमान इत्येतच्छब्दस्य विशेषणमित्यस्यार्थस्य द्योतनाय । असति ह्येतदर्थ इतिकरणे ह्युपमार्थेऽन्यस्मिन् प्रयुज्यमाने चिच्छब्दः प्रवत इति विज्ञायेत । तत्प्रयुज्यमानतयात्र तस्मिन् विशेषिते वाक्यस्य टेः प्लुतः सिद्धो भवति । कथञ्चिदाहुरिति । अत्र कृच्छ्रे चिच्छब्दो वर्त्तते । अग्निर्माणवको भायादिति । अग्निरिव माणवको दीप्येतेत्यर्थः । अस्तीह्योपमार्थः । तथापि चिच्छब्दस्य प्रयोगो नास्तीति न प्लुतो भवति । असति तु प्रयुज्यमानग्रहण इहोपमानगतौ सत्यां यद्यप्यन्येषामपि सर्व्वेषामुपमानार्थानां प्रयोगो गम्यते तथापि योऽत्र चिच्छब्दस्य प्रयोग स्तदाश्रयः प्लुतः स्यादेव । चकारोऽस्यैव प्लुतस्य समुच्चयार्थः । समुच्चयश्च भेदाधिष्ठान इति प्लुतान्तरमेवेदमाख्यातं भवति । अन्यथा पूर्व्वेष्वेव प्लुतनिमित्तेष्वेतस्मिन् विषयेऽनुदात्तत्वमात्रं विधीयत इति विज्ञायेत ।

## १०२ । उपरिस्विदासीदिति च ।

इतिकरणः कार्यिणो निर्द्देशार्थः । कार्य्यं हि विधातु मवश्यं षष्ठ्यासौ निर्द्देष्टव्यः । इतिकरणेन वेति वाथः प्रत्यवमृश्यते । शब्दप्रधानस्त्विहोपरिस्विदादिशब्दः कार्य्य इष्यत इतीतिकरणेन निर्दिष्टः प्लुतो यथा विज्ञायेत । अधः स्विदासीदित्यत्रेत्यादि । अत्राधःस्विदासीदुतोपरिस्विदासीदित्येतद् विचार्य्यते । तत्र पूर्वस्मिन् वाक्ये विचार्य्यमाणानामित्यादिनोदात्तः प्लुतः ( ८।२।९७ )। इतरस्मिंस्त्वनेनानुदात्त स्तस्यैवापवादः । चकारस्य पूर्ववदेव प्रयोजनम् ।

## १०३ । स्वरितमाम्रेडितेऽसूयासम्मतिकोपकुत्सनेषु ।

असूयादिशब्दानां वाक्यादे रामन्त्रित इत्यादौ ( ८।१।८ ) सूत्रेऽर्थ आख्यातः । माणवका″ माणवकेत्यादौ द्विवचनं तेनैव सूत्रेण वेदितव्यम् । वावचनं कर्त्तव्यमिति । वेत्येतद् विकल्पोपलक्षणम् । वचनं व्याख्यानमित्यर्थः । अत्र तदुक्तं भवति विकल्पव्याख्यानं कर्त्तव्यमिति । तत्रेदं व्याख्यानम् । विभाषा पृष्टप्रतिवचने हेरित्यतो ( ८।२।९३ ) मण्डूकप्लुतिन्यायेन विभाषाग्रहणमनुवर्त्तते । तेन विकल्पो भविष्यतीति ।

## १०४ । क्षियाशीः प्रैषेषु तिङाकाङ्क्षम् ।

क्षिया आचारभेदः । इष्टाशंसनमाशीः । नियोगः प्रैषः । आकाङ्क्षत्यपरं तिङन्तमेव । कुत एतत् ? आकाङ्क्षाग्रहणादेव । सुबन्ते हि साधनादायिनो तिङन्तस्यावश्यम्भाविनो अपेक्षेति । धनञ्च तातेति । अत्र लप सौष्टे त्येतदपेक्षते । व्याकरणञ्चेति । अत्राप्यध्येषौष्टे त्येतत् । लुनीहो″ इति । ईहल्यघो ( ६।४।११३ ) रितीत्वम् । पिबेति । पाघ्रादिसूत्रेण ( ७।३।७८ ) पिबादेशः । अस्त्विति । अस्तेर्लोट् । एरुरित्युत्वम् ( ३।४।८६ ) । अदादित्वाच्छपो लुक् । एतच्चापरं तिङन्तं नापेक्षते । एवं विहरेतीतरदपि ।

## १०५ । अनन्त्यस्यापि प्रश्नाख्यानयोः ।

अन्त्यस्य त्वित्यादि । तुशब्दः पदान्तरेभ्यो विशेषं दर्शयति । अन्त्यस्यानेनापि स्वरितः । अनुदात्तं प्रश्नान्ताभिपूजितयोरित्यनेनाप्यनुदात्तः (८।२।१००) । तयोश्चैकत्र यौगपद्यं न सम्भवति । तत्र वचनप्रामाण्यादनुदात्तोऽपि पक्षे न भवति । स्वरितोऽपि ।

## १०६ । प्लुतावैच इदुतौ ।

दूराद्धूते चेत्येवमादिभि र्लक्षणैः ( ८।३।८३ ) प्लुतो विधीयमानोऽचश्चेत्य( १।२।२८ ) स्योपस्थाने सति यत्रैव प्लुत उक्तस्तत्र तस्यैचः समुदायात्मनः स्यात् । तदवयवयोरेवेष्यते । स च वचनमन्तरेण न सिध्यतीतीदमारभ्यते । तस्य तु प्लुतस्य

निमित्तं दूराद्धूतादेवैच: प्रसङ्ग इति पूर्वेण प्रकरणेन प्लुतस्य प्राप्तौ सत्यामित्यर्थः।
ए३तिकायन ओ३पमन्यवेति। अत्र गुरोरनृतोरित्यादिना ( ८।२।८६ ) ऐचः प्लुते प्राप्तेऽनेन तदवयवयोरिदुतोः प्लुतः क्रियते। ए३तिकायन ओ३पमन्यवेत्यत्र यद्येचो रवयवयो रिदुतोः प्लुतः क्रियते तत्रैकारौकारौ चतुर्मात्रौ मार्द्धत्रिमात्रौ वा प्राप्नुतः। इह ह्यैचौ समाहारवर्णौ मात्रावर्णस्य मात्रे वर्णावर्णयोः। अपरे त्वाहुरर्द्धमात्रावर्णस्याध्यर्द्धमात्रे वर्णोवर्णयो रिति। अत्र पूर्वस्मिन् दर्शनेऽनेन प्लुते कृते सति इदुतो स्तिस्रो मात्राः। अवर्णस्य चैकमात्रेति चतुर्मात्रः प्राप्नोति। इतरत्र तु दर्शनेऽवर्णस्यार्द्धमात्रा। इदुतो स्तु ता एव तिस्र इति सार्धत्रिमात्रः प्राप्नोतीत्यत आह अत्र यदेत्यादि। ननु च त्रिमात्रस्य प्लुत इति संज्ञा कृता। तत् कथं द्विमात्रावपि प्लुतौ शक्यावनेन कर्त्तुमित्यत आह प्लुताविति ह्रीत्यादिना। एतेन लौकिकस्यात्र प्लुतस्य ग्रहणम्। न पारिभाषिकस्येति दर्शयति। कुतः पुनरेतल्लभ्यते ? पुनः प्लुतग्रहणात्। शास्त्रीये हि प्लुते गृह्यमाणे प्लुतग्रहणे प्रकृते पुनः प्लुतग्रहण मनर्थकं स्यात्। लोके हि च प्लुतो वृद्धिमानुच्यते। अतएवाह इदुतौ वृद्धिं गच्छत इत्यर्थ इति। अनेकार्थत्वाद्धातूनां प्लवति र्वृद्धावपि वर्त्तते। नन्वेवमप्यनियमेन वृद्धिः प्रसज्यते। इयत्तानभिधानात्। ततश्च यावती वृद्धिः स्याद् यावत्या चतुर्मात्रावैचौ सम्पद्येयातामित्यत आह तावती चेत्यादि। प्लुति र्वृद्धिरित्यर्थः। कथं पुनरयं नियमो लभ्यते ? एवं मन्यते। एच इति प्लुतापेक्षया षष्ठी। इदुतौ तथा प्लवेते यथा स प्लुत एङो भवति। एवञ्चैचो भवति यदि तावती वृद्धि र्भवति यावत्या तावैचौ त्रिमात्रौ सम्पद्येते। अकृतायां हि वृद्धौ ऐच्त्वमेव स्यात्। युक्तपरिमाणत्वादैचाम्। ततश्चैच्सम्बन्धी प्लुतो न स्यादिति। अर्द्धतृतीयमात्राविति। अर्द्धतृतीयं ययो र्मात्रयो स्तेऽर्द्धतृतीय-मात्रे। ते ययो स्तावर्द्धतृतीयमात्रौ। इदं तावद् वार्त्तिककारमतमाश्रित्य समाधानमुक्तम्। भाष्यकारस्य त्विष्टैव चतुर्मात्रता प्लुतस्येति दर्शयन्नाह भाष्ये तूक्तमित्यादि। तत् कथमिति। यदि तद् भाष्यकारस्य मतं तत् केन प्रकारेण सम्पद्येतेत्येतत् पृच्छति। समप्रविभागपक्ष इत्यादिना यथा तत् सम्पद्यते तथा दर्शयति। समप्रविभागपक्षे ह्यनेन सूत्रेणेदुतो स्त्रिमात्रः प्लुतः क्रियते। ततश्च तत् सम्बन्धिन्यो या स्तिस्रो मात्रा या च पूर्वाकारमात्रा ताः सर्वाः समाहृता स्तत्स्रो मात्रा भवन्ति। एवञ्च चतुर्मात्रः प्लुतो भवति। अत्र भाष्यकारदर्शने पुनः प्लुतग्रहणं सर्वत्र प्लुतोपसंग्रहार्थम्। अन्यथा स्वरितप्रकरणात् तस्यैव प्रसङ्गे

सत्येवेदुतोरियं प्लुतिः स्यात्। पुनः प्लुतग्रहणे तूदात्तानुदात्तयोरपि भवति। तपरकरणं मुखसुखार्थम्।

## १०७। एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्द्धस्यादुत्तरस्येदुतौ।

एचः समाहारवर्णाः। तत्र एकारस्य ओकारस्य च पूर्वेण प्रकरणेन समुदायस्यैव प्लुतः। एचोः पुनरवयवयोरिदुतौ। अनन्तरसूत्रेणेदमारभ्यते विषयपरिगणनं कर्त्तव्यमिति। एतद् ग्रहणवाक्यम्। अस्य प्रश्नान्ताभिपूजितेत्यादिना विवरणं करोति। कर्त्तव्यमिति। व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्। अनुदात्तं प्रश्नान्ताभिपूजितयोरित्यादयो (८।२।१००) योगा इहानुवर्त्तन्ते। तेनान्यत्र न भवति। यथाविषयमिति। यो यस्य विषयो यथाविषयम्। यथाऽसादृश्य इत्यव्ययीभावः (२।१।७)। प्रश्नान्ताभिपूजितयो (८।२।१००) रनुदात्तः प्लुतः। प्रश्ने त्वनन्त्यस्यापि प्रश्नाख्यानयोरिति स्वरितः (८।२।१०५)। शेषेषूदात्तः। इदुतौ पुनरुदात्तावेताविति। टेरुदात्त (८।२।८२) इति चाधिकारात्। विष्णुभूते विष्णुभूते॰॰॰ इति। अत्राम्रेडितं भर्त्सन इति प्लुतः (८।१।९५)। आगच्छ भो माणवक विष्णुभूते॰॰॰ इति। अत्र दूराद्धूते चेति (८।२।८४)। ननु चासत्यपि परिगणने नैव प्लुतः प्राप्नोति। अदूराद्धूत इति वचनात्। तत् किमर्थमिदं परिगणनस्य प्रत्युदाहरणमित्याह परिगणने चेत्यादि। असति परिगणनेऽदूराद्धूत इत्युच्यते। अस्मिंस्तु सत्येतन्न वक्तव्यम्। परिगणनादेव हि दूराद् धूतेन भविष्यतीति। कर्त्तव्यमिति। व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्। याज्यान्त (८।२।९०) इत्यतोऽन्तग्रहणमनुवर्त्तते। तेनान्तस्यैव भविष्यतीति। भद्रं करोषि गौरिति। अभिपूजित इति (८।२।१००) प्लुतः। अन्तग्रहणानुवृत्तेरत्रायं विधि र्न भवति। नह्यत्रैतच्छब्दोऽन्ते। किं तर्हि? व्यञ्जनम् (II)। शोभने खलु स्थः खट्वे॰॰॰ इति। अत्राप्यभिपूजित (८।२।१००) इत्येव प्लुतः। आमन्त्रिते चेत्यादि। प्लुत श्चासौ विकारश्चेति प्लुतविकारः। प्लुतव्यपदेशस्त्विदुतोः प्लुतसाहचर्य्याद् वेदितव्यः। इदुतोर्ग्रहणमैचः पूर्वस्योत्तरस्य चैत आदेशा मा भूवन्नित्येवमर्थम्। तपरकरणमिहापि मुखसुखार्थम्।

---

(II) अथात्र विसर्जनीयः। एच् त्वत्रान्त्यात् पूर्वः। विसर्जनीय एवात्रान्त इत्यर्थः।

## १०८। तयोर्य्वावचि संहितायाम्।

तयोरिति। अनन्तरविहिताविदुतौ प्रत्यवमृश्येते। अग्ना३ याशा पटा३ वाशा इति। अग्ने आशा पटो आशा इति स्थिते प्रश्नान्ताभिपूजितविचार्य्यमाण-(JJ) प्रत्यभिवादयाज्यान्तेष्वित्येतेषामन्यतमस्मिन् ( ८।२।९७, वा ) विवक्षित एचः पूर्वस्याद्धस्याकारः प्लुतः। उत्तरस्याद्धस्येदुतौ। तयोरनेन ( ८।२।१०८ ) य्वौ। किमर्थं पुनरेतदारभ्यते? एतावेको यणचीत्येव ( ६।१।७७ ) सिध्यतइत्यत आह इदुतोरसिद्धत्वादित्यादि। ननु च सिद्धः प्लुतः स्वरसन्धिषु (KK)। यणादेशादिषु यदयं प्लुतः प्रगृह्या अचीति ( ६।१।१२५ ) प्लुतस्य प्रकृतिभावमाह। मतो हि कार्य्येण भवितव्यम्। नामतः। प्लुतस्य चेकः। अत एतावपि स्वरसन्धिषु सिद्धावेवेत्यत आह अथापीत्यादि। यदीदं नोच्येत तदाग्ना३ इ इन्द्रम पटा३ उ उदकमिति स्थिते षाष्ठिकं यणादेशं बाधित्वाऽकः सवर्णे दीर्घत्वं ( ६।१।१०१ ) स्यात्। इह चाग्ना३ इति आशा इति स्थित (LL) इकोऽसवर्णे शाकल्यस्य ह्रस्वश्चेति ( ६।१।१२७ ) प्रकृतिभावः स्यात्। तस्माद् यथानयोः सिद्धत्वं स्यात् तथापि दीर्घत्वं शाकलविधिश्च मा भूदित्येवमर्थमिदं वक्तव्यमेव। ननु चान्यदेव तन्निवृत्त्यर्थं यत्नान्तरमस्ति। किं पुनस्तदिति चेत्? उच्यते। इको यणचीत्य-( ६।१।७७ ) त्रोपसंख्यायते इकः प्लुतपूर्वस्य यणादेशो वक्तव्यः शाकलदीर्घनिवृ-त्त्यर्थमिति। तस्योपसंख्यानमवश्यं कर्त्तव्यम्। य इक् प्लुतपूर्वो न च प्लुतविकार स्तदर्थम्। भो३ इइन्द्रं भो३ यिन्द्रमिति। दूराद्धूते चेति भोःशब्दस्य प्लुतः ( ८।२।८४ )। अत्र भोःशब्दात् पर इकारो निपातः। न प्लुतविकारः। तस्य यणादेश इष्यते। सोऽसति तस्मिन्नुपसंख्याने न स्यात्। तस्मादवश्यं तत् कर्त्तव्यम्। यस्मिंश्च क्रियमाणे प्लुतविकारयोरपीदुतो स्तेनैव भवितव्यम्। ततो नेदं वक्तव्यमित्यत आह तथापीत्यादि। अग्ना३ इति आशा इति स्थिते यदि तेन षाष्ठिकेनोपसंख्यानेन यणादेश इहोदात्तस्येकारस्य स्थाने क्रियेत तस्योदात्तयण्-स्वरे कर्त्तव्ये सिद्धत्वादाशाशब्दाकारस्यानुदात्तस्योदात्तस्वरितयो र्यणः स्वरितोऽनु-दात्तस्येति ( ८।२।४ ) स्वरितः प्रसज्येत। आशाशब्द आशाया अदिगाख्याया

---

(JJ) इदमेकं वार्त्तिकमस्मिन् सूत्रे पठितम्।

(KK) एतच्च ( ६।१।११३ ) सूत्रस्थभाष्यम्।

(LL) अग्ने आशा इति स्थिते अग्न इत्यस्यैचः पूर्वस्याद्धस्यादुत्तरस्येदिति अग्ना३ इ आशेति स्यात्। ततो यण्। अत्र शाकलविधिना प्रकृतिभावमाशङ्कते।

( फिट्, १।१८ ) इत्यन्तोदात्तः। शेषमप्यनुदात्तमित्याकारोऽ ( ६।१।१५८ ) नुदात्तः। तस्मादस्ति स्वरितत्वप्रसङ्ग इति तन्निवृत्त्यर्थमिदमुच्यते। किन्तु यणेत्यादि। संग्रहश्लोकद्वयम्। (MM) किमिति प्रश्ने। तु इति वितर्के। इको यणचीति ( ६।१।७७ ) यणादेशेन किं न सिद्धं भवतीत्याग्ना" याशीत्येवमादावुदाहरणे ? यदाचार्य्य इदुतोर् यौ विदधाति ? सर्वमेव सिद्धमित्यभिप्रायः। स्यादेतत्। यणादेशो न प्राप्नोति। तस्मिन् कर्त्तव्ये इदुतोरसिद्धत्वादित्यत आह तौ चेत्यादि। तुशब्दो हेतौ। यदा इक् प्लुतपूर्वो भवति तदा तस्य स्यात्। यस्मादिकः प्लुतपूर्वस्य यणादेशो वक्तव्यः शाकलदीर्घनिवृत्त्यर्थमित्युपसंख्याने ( ६।१।७७, वा ) यणादेशमपवादं करोति शाकलदीर्घविध्योः। तेन हेतुना तयोरिदुतोः शाकलदीर्घविधौ न भविष्यतः। चशब्दः समुच्चये भिन्नक्रमश्च प्रतिषेधानन्तरं द्रष्टव्यः। तौ च मम (NN) स्वरसन्धिषु सिद्धौ। नच शाकलदीर्घविधौ प्रयोजयतः। एवमपवादः। तेषां शाकलदीर्घनिवृत्तेः प्रयोजनत्वे प्रयोजनान्तरमाह यण्स्वरबाधनमेव तु हेतुरिति। यणादेशाश्रयः स्वरो यण्स्वरः। तस्य बाधनं हेतुः कारणम्। कस्य ? प्रकरणात् सूत्रारम्भस्येति गम्यते। तुशब्दोऽवधारणे। यण्स्वरबाधनमेव तु सूत्रारम्भस्य हेतुरित्यर्थः।

इति बोधिसत्त्वदेशीयाचार्य्यश्रीजिनेन्द्रबुद्धिपादविरचितायां
काशिकाविवरणपञ्जिकायामष्टमाध्यायस्य
द्वितीयः पादः ॥८।२॥

---

(MM) एतत् सूत्रभाष्ये दीधिकच्छन्दसा ग्रथितं श्लोकद्वयमिदं श्लोकवार्त्तिकरूपेण भाष्यकृता पठितम्। नचैतत् कात्यायनस्य। अन्यो हि कश्चिदत्र श्लोकवार्त्तिककारो यदि न भाष्यकारः स्वयम्।

(NN) ममेति सूत्रकारायमाणस्येत्यर्थः।

अथ

# काशिकाविवरणपञ्जिका।

## अष्टमाध्यायः।

## तृतीयः पादः।

### १। मतुवसो रु सम्बुद्धौ छन्दसि।

युवोरित्यत्र यत् ह्येयपरोक्षारायोक्तं तन्मतुवसोरित्यत्रापि द्रष्टव्यम्। इन्द्र मरुत्व इति। मरुच्छब्दान्मतुप्। झय इति (८।२।१०) वत्वम्। उगिद्‌चामिति (७।१।७० नुम्। हल्ङ्यादि (६।१।६८) संयोगान्तलोपौ (८।२।२३)। नकारस्य रुत्वम्। तस्य भोभगोइत्यादिना (८।३।१७) यकारः। तस्यापि लोपः शाकल्यस्येति (८।३।१९) लोपः। हरिवो मेदिनं त्वेति! हरिशब्दान्मतुप्। छन्दसीर इति (८।२।१५) वत्वम्। पूर्ववन्नुमादि। अयन्त्वत्र विशेषः। हशि चेति (६।१।११४) रोरुत्वम्। पूर्वेण सहाद् गुणः (६।१।८७)। मीढ्स्तोकायेति। मिह सेचने। लिटः क्वसुः। दाश्वान् साह्वान् मीढ्वांश्च (६।१।१२) त्यद्वित्व मनिट्त्वमुपधादीर्घत्वञ्च निपात्यते। हो ढइति (८।२।११) ढत्वम्। रो विसर्जनीये कृते तस्य विसर्जनीयस्य स इति (८।३।३४) सकारः। शत्रादेशस्य वसोः सम्बुद्धौ छन्दसि विषये प्रयोगो नास्तीति तस्यानुदाहरणम्। अतएवैकानुबन्धकग्रहणे न द्व्यनुबन्धकस्येत्येषा परिभाषा (प,८२) नोपतिष्ठते। एकानुबन्धकस्य सम्बुद्धिपरस्य च्छन्दसि वसोः प्रयोगादर्शनात्। विद्वानिति। विदेः शतुर्वसुः (७।१।३६)। हे पपिवन्निति। पातेः पिबतेर्वा परस्य क्वसो वस्वेकाजाद्‌घसा मितीट् (७।२।६७)। आतो लोप इटि (६।४।६४) चेत्याकारलोपः।

स्थानिवद्भावाद्द्विर्वचनम्। वनउपसंख्यानमिति। अननुबन्धकस्य वनोऽसम्भवात् सामान्येन क्वनिब्वनिपो ग्रहणम्। यश्च मत्वर्थे क्वनिब्वनिपौ छन्दसि वक्तव्या- (५।२।१०९, वा) वित्योपसंख्यानिकस्तस्यापि ग्रहणम्। प्रातरित्व इति। इण् गतौ। प्रातः पूर्वः। आतो मनिन् क्वनिब्वनिपश्चेत्यनुवर्त्तमानेऽ-(३।२।७४) न्येभ्योऽपि दृश्यन्त इति (३।२।७५) क्वनिप्। ह्रस्वस्य पिति कृति (६।१।७१) तुक्। इदन्तु सम्पदादित्वादिनः क्विपि तुकि तदन्तान्मतुपि झय इति (८।२।१०) वत्वे मत्वन्तादेव सिध्यतीति नोपसंख्यानं प्रयोजयति। विभाषेत्यादि। भवच्छब्दो भाते र्डवतुरिति डवतुप्रत्ययान्तो व्युत्पादितः। अव्युत्पन्नं वोकारानुबन्धं प्रातिपदिकम्। इतरौ तु मत्वन्तौ। हे भो इति। नुमो रुत्वे कृतेऽवशब्दस्य सर्वस्यैव स्थान ओकारः क्रियते। नाल्लोऽन्तस्य। नानर्थकेऽलोऽन्त्यविधिरिति (प, १०५) कृत्वा। निपातविज्ञानात् सिद्धमिति। एतद् ग्रहणकवाक्यम्। अथवेत्यस्यैव विवरणम्। असम्बुद्धावपीत्यादि। एतेन निपातत्वे हेतुं दर्शयति। यद्युपसंख्या- नादेव भो इत्येवमादिकं स्याद् द्विवचनबहुवचनयो र्न स्यात्। सम्बुद्ध्यभावात्। स्त्रियाञ्च सम्बुद्धावपि न स्याद् भो ब्राह्मणीति। अत्र स्त्रीलिङ्गविशिष्टानामनुपादा- नात्। प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति (प, ७२) चेत्? न। विभक्तौ तत्प्रतिषेधात्। विभक्तौ यत् कार्य्यं विधीयते तत्रेयं परिभाषा प्रति- षिध्यते। विभक्तौ लिङ्गविशिष्टस्याग्रहणमिति (प.७३) वचनात्। अथापि न प्रतिषिध्यत एवमपि भवतीति स्थित ईकारस्य रुत्वे कृतेऽवशब्दस्य चौकारे कृते रुत्वस्यासिद्धत्वात् संयोगान्तलोपाभावे सति विसर्जनीये कृतेऽनिष्टं रूपं स्यात्। तस्मादसंबुद्धौ स्त्रियाञ्च दर्शनान्निपाता एवेति वेदितव्याः। निपातत्वं पुनरेषां विभक्तिप्रतिरूपकत्वात्। विभक्तिस्वरप्रतिरूपकाश्चेति चादिषु (१।४।५७) पाठात्। एवञ्च भोःशब्दस्य निपातत्वं स्यात्। भवतेर्विचि कृते गुणे च विभक्त्यन्ते भोःशब्दस्यैव विद्यमानत्वात्। इतरयोस्तु न स्यात्। नह्यसत्य- स्मिन्नुपसंख्याने भगोःशब्दोऽघोःशब्दस्य विभक्त्यन्तोऽस्ति यत्प्रतिरूपकौ निपातौ स्याताम्। तस्मात् सौत्रा एवेते निपाता वेदितव्याः। भोभगोअघो- अपूर्वस्येत्यत्र (८।३।१७) सूत्र एषां पाठात्। अथवोपसर्गविभक्तिस्वरप्रतिरूपका- श्चेति चकारस्यानुक्तसमुच्चयार्थत्वान्निपातत्व मेषां वेदितव्यम्। यदि तर्हि निपातत्व मेषामाश्रित्योपसंख्यानं प्रत्याख्यायते तदा भोःशब्दप्रयोगे सभो स्ततोभो स्तत्रभो इत्यत्रेतराभ्योऽपि दृश्यन्त (५।३।१४) इति भवदादियोगे विधीयमाना स्तसि-

लादयो न सिध्यन्ति। अनिष्टत्वाददोषः। यो हि निपातत्वादुपसंख्यानं प्रत्याचष्टे स भोःशब्दप्रयोगी तसिलादीनिच्छत्येव।

## २। अत्रानुनासिकः पूर्वस्य तु वा।

पूर्वत्वमिदमापेक्षिकम्। रुरिहानुवर्त्तते। न च तदपेक्षं पूर्वत्वमस्य विज्ञातुं शक्यते। इतउत्तरं ह्यनुनासिको रुश्च समनुवृत्तेरेककालं विधीयत इत्यनुनासिकविधानकाले रोरनिष्पन्नत्वम्। अतस्तदपेक्षया पूर्व्वत्वमिदमशक्यं विज्ञातुम्। तस्माद् यस्य स्थाने रुत्वं विधीयते तदपेक्षया पूर्वत्वं विज्ञायत इत्याह यस्य स्थाने रुर्विधीयते ततः पूर्वस्येति। तुशब्दः परस्मात् कार्य्यिणः पूर्वस्य विशेषं दर्शयति। परस्य रुत्वकार्य्यं पूर्वस्य त्वनुनासिक इति। अथवा रुत्वादनुनासिकस्य विशेषं दर्शयति। रुत्वं नित्यमनुनासिकस्तु विभाषेति। अथात्रग्रहणं किमर्थम्? अत्र रुप्रकरणे यथा स्यादिति चेत्? न। अधिकारादेव तत् सिद्धम्। यथा ह्यनुनासिकः पूर्वस्येत्यधिकृत मुत्तरत्रानुवर्त्तते तथा रुरित्येतदपि। तत्रान्तरेणाप्यत्रेति वचनं रुप्रकरणे भविष्यतीत्यत आह अत्रेत्यादि। सन्नियोगो यौगपद्यम्। रुणा सह कथं नाम स प्रतीयेतेत्येवमर्थमत्रग्रहणम्। अवधारणञ्चात्र द्रष्टव्यम्। रुणैवेति। सन्नियोगमात्रं हि रुत्वानुनासिकयोः। उत्तरत्र द्वयोरप्यनुवृत्तेः। स्थानिभेदेन विरोधाभावाद् विनाप्यत्रग्रहणेन लभ्यत एव। ननु रुप्रकरणादूर्ध्वमनुनासिकस्यास्वरितत्वादेव सन्नियोगो न विज्ञास्यते। तत् किं तदर्थेनात्रग्रहणेनेत्यत आह अधिकारपरिमाणापरिग्रहे हीत्यादि। अधिकारस्य परिमाणमियत्ता तस्य परिग्रहः परिज्ञानं निश्चयः। तस्मिन्नसति मन्दधीभिः प्रतिपत्तृभिः किमुत्तरत्रानुनासिकस्य स्वरितत्वमस्त्याहोस्विन्नास्तीति जातसन्देहैः ढो ढे लोपः (८।३।१३) इत्यादावपि यस्य स्थाने ढलोपादिकार्य्यं विधीयते तस्मात् पूर्वस्यानुनासिक आशङ्क्येत। अथ वाग्रहणं किमर्थम्? यावतोत्तरसूत्रे नित्यग्रहणादेव विकल्पोऽस्य विज्ञास्यते? नैतदस्ति। एवं हि पूर्वसूत्रे विकल्पो विज्ञायेत। तस्माद्वेति वक्तव्यम्। न वक्तव्यम्। आचार्य्यप्रवृत्तिर्ज्ञापयति विकल्पेनायं विधिर्भवतीति यदयमुत्तरसूत्रे यस्यानुनासिको न कृत स्तस्माद्रोः पूर्वस्मात् परमनुस्वारागमं शास्ति। नहि नित्येऽस्मिन् विधौ तत् सम्भवति रोः पूर्वस्य यस्यानुनासिको न कृत इति। एवं तर्हि विस्पष्टार्थं वाग्रहणम्।

## ३ । आतोऽटि नित्यम् ।

देवाँ अच्छादीध्यदिति । अत्र योऽकारस्तस्मिन्नटि परतो दीर्घादटि समानपाद (८।३।९) इति नकारस्य रुत्वे कृते तस्मात् पूर्वस्याकारस्यानेनानुनासिकत्वम् । पूर्ववद्रो यंकारः । तस्य पूर्ववदेव लोपः। यदि महाँ इन्द्रो य ओजसेति केचिदनुस्वारमधीयत इति (A) वक्तव्यं तर्हि तद् यथासो सिध्यतीत्यत आह स इत्यादि । व्यत्ययस्तु व्यत्ययो बहुलमित्यनेन (३।१।८५) बोद्धव्यः । ये वा वनस्पतीं रन्विति । वनस्पतीन् अन्विति स्थिते दीर्घादटि समानपाद (८।३।९) इति नकारस्य रुत्वे कृतेऽनुनासिकात् परोऽनुस्वार (८।३।४) इतीकारात् परोऽनुस्वारः । भवांश्चरतीति । नश्छव्यप्रशानिति (८।३।७) नकारस्य रुत्वम् । तस्य विसर्जनीयस्य सकारः । तस्य स्तोः श्चुना श्चुरिति (८।४।४०) श्चुत्वम् । नित्यग्रहणं स्पष्टार्थम् । पूर्वेणैव विकल्पे सिद्धे सत्यारम्भसामर्थ्यादेव नित्योऽयं विधि विज्ञास्यते । ननु चातएवात्ऽथवाऽव्येवात इत्येष नियमो यथा स्यादित्येवमर्थः, सिद्धे सत्यारम्भः स्यात् । नैतदस्ति । असति हि विधेये नियमो भवति । इह त्वस्ति विधेयम् । किं तत् ? नित्योऽनुनासिकः । तस्माद्विधिरेव युक्तः । न नियमः । तथाचोक्तं विधिनियमसम्भवे विधिरेव ज्यायानिति (प, १०९)। आत इति तकारोऽसन्देहार्थः । आदित्युच्यमाने संदेहः स्यात् किमयं षष्ठ्यन्तस्याकारस्य कार्यिणो निर्देश उतादेशान्तरस्य प्रथमान्तस्येति ।

## ४ । अनुनासिकात् परोऽनुस्वारः ।

अन्यशब्दोऽत्राध्याहार्य्य इति । असति ह्यन्यशब्दस्याध्याहारे परशब्दस्य श्रुतत्वात् तदपेक्षयैवानुनासिकादितीयषा पञ्चमी स्यात् । अन्यस्येह पञ्चमीहेतोरसम्भवात् । ननु तस्मादित्युत्तरस्योपस्थान (१।१।६७) उत्तरशब्दापेक्षयैव पञ्चमी स्यात् । नैतदस्ति । यदि ह्यस्याः परिभाषाया इहोपस्थानं स्यात् परग्रहणमनर्थकं स्यात् । तस्मात् परशब्दापेक्षयैव पञ्चम्या भवितव्यम् । सा भवन्ती चान्यारादितरर्त्ते इत्यादिना सूत्रेण (२।३।२९) परशब्दयोगे दिग्वृत्तिना

(A) महाँ इन्द्र इत्यनुस्वार तैत्तिरीयैः पठ्यते । स च व्यत्ययेन छन्दस्येव समर्थ्यमानः कथञ्चित् सोढव्यः । बह्वृचास्तु महानिन्द्र इति नकारमेव पठन्ति । अनुस्वारे नकारे वा पठिते सूत्रस्य नित्यत्व मुभयथा व्याहतं भवति । अतएवं पाठोऽपाणिनीय एव । अचः पूर्वेऽनुस्वारस्थापनस्य मुनित्रयमतविरुद्धत्वात् । अथवा सूत्रस्य त्यागात् । विकल्पाभावेऽप्यस्य कार्य्यतो विकल्पमाहा ।

वा स्यादन्यार्थवृत्तिना वा ? तत्र पूर्वस्मिन् पक्षे रोः पूर्वस्मादनुनासिकादेव परोऽनुस्वारो विज्ञायेत। न च तस्मात् पर इष्यते। इतरस्मिंस्त्वयमर्थ आपद्येत। अनुनासिकात् परो भवति। अनुनासिकादन्योऽनुस्वारो भवतीत्यर्थः। एवञ्च परग्रहणमनर्थकं स्यात्। नह्यनुनासिकापेक्षयानुस्वारोऽन्यत्वं व्यभिचरति। किञ्च श्रुतत्वात् तस्यैवानुनासिकस्यानुस्वारो विज्ञायेत। प्रकृतत्वाद्रोर्वा। अनिष्टञ्चैतत्। अन्यशब्दाध्याहारे तु यस्यानुनासिको न कृतस्तस्मादेव पर इति विज्ञायते। तस्मादन्यशब्दोऽत्राध्याहार्यः। सत्यप्यन्यशब्दाध्याहारे यदि परशब्दापेक्षयैवानुनासिकादित्येषा पञ्चमी स्यात् स दोष स्तदवस्थ एव स्यादिति मत्वाह तदपेक्षया चेयमित्यादि। चशब्दोऽवधारणे। अन्यशब्दापेक्षयैव न परशब्दापेक्षयेत्यर्थः। अनुनासिकादन्या य इत्यनेन तदेवान्यशब्दापेक्षत्वं पञ्चम्या दर्शयति। रोः पूर्व-इत्यनेनापि पूर्वग्रहणानुवृत्तिम्। पूर्वत्वञ्च रुत्वापेक्षम्। यस्यानुनासिको न कृत इत्यनेनाप्यन्यशब्दाभिधेयमर्थं दर्शयति। तत इत्यनेनापि पूर्वग्रहणस्यार्थादिह पञ्चम्यन्ततया विपरिणामम्। अन्यशब्दस्य चाध्याहृतस्य पञ्चम्यन्ततां पर इत्यनेनापि। तस्या अन्यशब्दस्य सम्बन्धिन्याः पञ्चम्याः परशब्दापेक्षताम्। आगम इत्यनेनाप्यादेशाभावम्। परग्रहणं शक्यमकर्त्तुम्। अन्यशब्दस्य पञ्चम्यन्तस्याध्याहारे सति पूर्वग्रहणस्य चार्थात् प्रथमान्ततया विपरिणामे सत्येवं विज्ञास्यते। अनुनासिकाद् योऽन्य स्तस्मादुत्तरो यो रुस्ततः पूर्वोऽनुस्वारागमो भवति। एवञ्च विज्ञायमानेऽसत्यपि परग्रहणे संस्कर्त्तेत्यादि सिध्यत्येव। किं परग्रहणेन ? एतत् क्रियते विस्पष्टार्थम्।

## ५। समः सुटि।

मोऽनुस्वार इत्यनुस्वारे ( ८।३।२३ ) प्राप्ते वचनम्। संस्कर्त्तेत्यादि। करोतेः सम्पूर्वात् तृजादयः। संपर्य्युपेभ्यः करोतौ भूषणे सुट् ( ६।१।१३७ )। समो मकारस्यालोऽन्त्यस्येत्यनेन (१।१।५२) रुत्वे ततः पूर्वस्यानुनासिकः। रोर्विसर्जनीयः। तस्य वा शरीति ( ८।३।३६ ) विकल्पेन सकारे प्राप्ते विसर्जनीये च यथा नित्यं सकारो भवति तथा वृत्तौ दर्शितम्। कथं पुनरस्मिन् सूत्रे मकारो निर्दिश्यत इत्याह समः स्सुटीत्यादि। यस्मिन् पक्षे विभक्तिमकारस्य विसर्जनीये कृते वा शरीति (८।३।३६) सकारो न क्रियते तं पक्षमाश्रित्येद मुक्तम्। अन्यथा हि त्रिसकारकोऽयं निर्देश इति वक्तव्यं स्यात्। त्रयाणां सकाराणां सन्निपातात्।

एको हि विभक्तिसम्बन्धो सकारः। द्वितीय स्त्वादेशसम्बन्धो। तृतीयः सुट्-सम्बन्धो। यदा तु त्रिसकारं कृत्वा सूत्रं पठ्यते तदा द्विशब्दोऽधिकसकारोपलक्षणार्थो द्रष्टव्यः। यदि तर्हि सकार आदेशो विधीयते संस्कर्त्तेत्यत्रानुनासिको न प्राप्नोति। यस्मादत्रात्रग्रहणं रुणैव सह सन्नियोगप्रतिपत्त्यर्थं मुक्तम्। रुग्रहणस्यास्मिन् प्रकरणे यद्विधीयते तदुपलक्षणार्थत्वाददोषः। रुणा सहेति। रुप्रकरणे यद्विधीयते तेन सहेत्यर्थः। यदपि पूर्वस्मिन् सूत्रे वृत्तौ रोः पूर्वं इत्युक्तं तत्रापि रुग्रहणस्यास्मिन् प्रकरणे यद् विधीयते तदुपलक्षणार्थं वेदितव्यम्। अन्यथा हि संस्कर्त्तेति पक्षेऽनुस्वारो न स्यात्।

## ६। पुमः खय्यम्परे।

पुम इति। पुंसः सकारादवशिष्टो यो भाग स्तस्यायं निर्देशः। सकारस्य संयोगान्तलोपे कृते तस्यैव कार्यित्वात्। अम्पर इति। अम् परो यस्मात् स तथोक्तः। अमिति प्रत्याहारस्य ग्रहणम्। न द्वितीयैकवचनस्य। कुत एतत्? व्याप्तिन्यायात्। खयीति प्रत्याहारेण साहचर्याच्च। पुंश्चलीति। चलड़िति पचादौ पठ्यते। तेन चल कम्पन इत्यस्मात् पचाद्यच् टित् भवति। टिड्ढाणञिति (४।१।१५) ङीप्। पुंस्कामेति। पुंसि कामोऽस्या इति बहुव्रीहिः। अथवा पुमांसं कामयत इति शीलिकामिभिक्षाचरिभ्यो णो वक्तव्य इति (३।२।१, वा) णः। ततष्टाप्। अत्र पुंस्कामेत्यत्रोदाहरणे सकार एवादेश इति विसर्जनीयस्येत्यपेक्षते। वक्तव्य इति व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्। कुप्वोः ≍क≍पौ चेत्यत्र (८।३।३७) वा शरीत्यतो (८।३।३६) वाग्रहणमनुवर्त्तते। सा च व्यवस्थितविभाषा। तेनात्रापि विसर्जनीयस्य सकार एव भविष्यति। न विसर्जनीयजिह्वामूलीयाविति। इदं तावत् पूर्वसूत्रे यदा द्विसकारपक्षो नाश्रीयते तदा प्रतिविधानमुक्तम्। यदा तु तत्र द्विसकारको निर्देश इत्येष पक्ष आश्रीयते तदा प्रतिविधातुमाह द्विसकारकनिर्देशपक्षे त्वित्यादि। ननु च रुरप्यनुवर्त्तत एव। तत्र यथा सकारोऽनुवर्त्तमानो भवति तथा रुरपि पक्षे स्यात्। ततश्च रुत्वपक्षे विसर्जनीये कृते जिह्वामूलीयः स्यादेवेत्यतआह रुत्वं त्वनुवर्त्तमानमित्यादि। तत्रेव कारणमाह सम्बन्धानुवृत्ति स्तस्येत्यादि। इतिकरणो हेतौ। स हि मतुवसो रु सम्बुद्धौ छन्दसि इत्यतः (८।३।१) स्वेन सम्बन्धिना मतुपा वसुना च सम्बद्ध इहानुवर्त्तते। तस्मान्नोत्सहते

सम्बन्ध्यन्तरेण सम्बन्धमनुभवितुम्। पुन्दास इति। षष्ठीसमासः। पुंसो दास इति। कर्मधारयो वा। एवं पुङ्गव इति। अत्र तु गोरतद्धितलुकीति (५।४।९२) टच् समासान्तः। पुंश्चोरं पुंस्फुरमिति। षष्ठीसमासः। खय्यमीति वक्तव्ये परग्रहणं विपरीतकल्पनानिरासार्थम्। असति परग्रहणेऽमि खयि पर इति विज्ञायेत। ततश्च पुमाख्यः पुमाचार इत्यत्रापि स्यात्। अतः परग्रहणम्।

## ७। न श्छव्यप्रशान्।

स इति निवृत्तम्। रुरेवानुवर्त्तते। सोऽपि मतुवसुभ्यामसम्बद्ध एव। तयोरपि निवृत्तत्वात्। न इति वर्णग्रहणम्। तच्च प्रकृतस्य पदस्य विशेषणम्। विशेषणेन च तदन्तविधिर्भवतीत्याह नकारान्तस्य पदस्येत्यादि। भवांश्छादयतीति। छद अपवारणे। चुरादिर्णिच्। भवांष्टीकत इति। टिक टीक रघि लघि गत्यर्थाः। अनुदात्तेत्त्वादात्मनेपदम्। प्रशानिति। प्रपूर्वाच्छमेः क्विप्। अनुनासिकस्य क्विझलोः क्ङितीति (६।४।१५) दीर्घः। मो नो धातो-(८।२।६४)रिति मकारस्य नकारः। तस्यासिद्धत्वान्नलोपाभावः। भवान् त्सरुक इति। त्सरौ कुशलः। आकर्षादिभ्यः कन्निति ( ५।२।६४ कन् प्रत्ययः।

## ८। उभयथर्क्षु।

पूर्व्वेण नित्ये प्राप्ते विकल्पार्थं वचनम्।

## ९। दीर्घादटि समानपादे।

समानपाद इति। कर्म्मधारयात् सप्तमी। समानशब्दश्चायमेकार्थे वर्त्तमान इह गृह्यते। समान एकस्मिन् पादे निमित्तनिमित्तिनोराधारभूत इत्यर्थः। तत्रैकग्रहणे कर्त्तव्ये क्वचिदसमानपादेऽपि यथा स्यादिति समानग्रहणं कृतम्। तेनेहापि रुर्भवति यजामहै यज्ञिया इन्द्रदेवाँ इळामहै(B) ईड्याँ अनाज्यति (C)। अत्र भिन्नयोः पादयोर् निमित्तनिमित्तिनौ वर्त्तेते। अथवा सादृश्ये वर्त्तमानः

(B) अज्मध्यवर्त्तिनो ड्कारस्य ढकारस्य च यथाक्रमं ळकारो ळ्हकारश्चादेशः। तथाहि प्रातिशाख्ये—
"द्वयो श्चास्य स्वरयो र्मध्यमेत्य संपद्यते स डकारो ळकारः।
ळ्हकारतामेति स एव चास्य ढकारः सन्नूष्मणा संप्रयुक्तः" ॥१॥ इति।

(C) यजामहे यज्ञियान् हन्त देवान् ईळामहयिति शाखान्तरे पाठः।

समानशब्दो गृह्यते। अन्यथा ह्येकग्रहणं कुर्य्यात्। इह च सादृश्यमुभयोरस्ति पादयोः। क्रियापदयो स्तु ल्यार्थत्वात्। यथा यजामहायित्येतत् क्रियापदं पूजायां वर्त्तते तथेलामहायित्येतदपि। ईड़ स्तुतौ। लोट्। टेरेत्त्वम्। वैतोऽन्यत्रेतीकारस्यैकारः (३।४।९६)। धातोर्वर्णव्यत्ययेन डकारस्य लकारः। छान्दसत्वाद् ह्रस्वत्वम्।

## १०। नॄन् पे।

नॄनिति। सुपां सुलुगित्यादिना (७।१।३९) षष्ठ्या लुकं कृत्वा निर्देशः। अथवा विभक्तिरेवात्र नोत्पद्यते। अनुकार्य्यानुकरणयोर्भेदस्याविवक्षितत्वात्। यथा गवित्ययमाहेत्यादि। प इति पकारमात्रमेव निमित्तत्वेनोपात्तम्। न समुदायः। अकारस्तूच्चारणार्थः। अन्यथा हि यद्यकारसमुदायो निमित्तत्वेनाश्रीयते तदा नॄँः पचतीत्येवमादावेव स्यात्। नतु नॄन् प्रीणीहीत्यादौ। अटीति चेह निवृत्तम्। निमित्तान्तरोपादानात्। अथ तस्यैव निमित्तस्यैतद् विशेषणं कस्मान्न विज्ञायते ? अटि परतो यः पकार इति। अशक्यमेवं विज्ञातुम्। इह न स्यात्। नॄँः प्साति नॄँः प्लावयतीति। तस्मादस्य निवृत्तिरङ्ग्रहणस्य युक्ता।

## ११। स्वतवान् पायौ।

स्वतवानिति पूर्व्ववन्निर्द्देशो वेदितव्यः। तथा कानिति परसूत्रेऽपि। स्वतवाँः पायुरग्न इति। दृक्स्ववःस्वतवसाञ्छन्दसीति नुम (७।१।८३)। हल्ङ्यादि- (६।१।६८) संयोगान्तलोपौ (८।२।२३)।

## १२। कानाम्रेडिते।

कांस्कानिति। किमः शसि किमः कद्दति (७।२।१०३) कत्वम्। प्रथमयोः पूर्वसवर्णं (६।१।१०२) इति दीर्घः। तस्माच्छसो नः पुंसीति (६।१।१०३) सकारस्य नकारः। वीप्सायां द्विर्वचनम्। रुत्वम्। विसर्जनीयः। तस्य विसर्जनीयस्य स इति (८।३।३४) सः। कथं पुनरत्र सकारः? यावता कुप्वोः ≍क ≍पौ चेति (८।३।३७) विसर्जनीयजिह्वामूलीयाभ्यां भवितव्यम् ? अत आह अस्येत्यादि। तत्र यद्यपि न पठ्यते तथापि न भवत्येवानिष्टप्रसङ्ग इति

दर्शयितुमाह समः सुटीत्यादि। यदि मकारोऽत्रानुवृत्तिंश्चेत् पूर्वयोगेऽपि सर्व्वत्र-तस्मादनुवर्त्तमानात् सकारः प्रसज्येतेत्याह पूर्व्वयोगेष्वित्यादि। पूर्वयोगेषु हि समः सुटीति (८।३।५) स्वेन सम्बन्धिना समा सुटा च सम्बद्धस्यैव तस्यानुवृत्तिः। ततो न तस्य सम्बन्ध्यन्तरेण सम्बन्धो भवति। कान् कानिति वक्तव्य आम्रेड़ित-ग्रहणं यत्र द्विर्वचनं तत्र यथा स्यात्। तेनेह न भवति कान् कान् पश्यतीति। एकोऽत्र किंशब्दः प्रश्ने। द्वितीयस्तु कुत्सायाम्। कान् कुत्सितान् पश्यतीत्यर्थः।

## १३। ढो ढे लोपः।

ढइति वर्णमात्रं निमित्तत्वेनाश्रीयते। न वर्णसमुदायः। कुत एतत्? व्याख्या। अकार उच्चारणार्थः। वर्णग्रहणे तु सति लीढ़ा मीढ़ेत्यादावपि भवति। अन्यथा हि यदि वर्णसमुदायो निमित्तत्वेनाश्रीयते तदा लीढ़मीढ़ मित्यादावेव स्यात्। नतु लीढ़ेत्यादौ। लीढ़मित्यादि। लिह आस्वादने। मिह सेचने। गुहू संवरणे। एभ्यः क्तः। हो ढइति (८।२।३१) ढत्वम्। झषस्तथोर्धोऽध (८।२।४०) इति धत्वम्। ष्टुना ष्टुरिति (८।४।४१) ष्टुत्वम्। ढलोपः। ढ्रलोपे पूर्वस्य दीर्घोऽण (६।३।१११) इति दीर्घः। कथं पुनर्लीढ़मित्याद्युदाहरणमुपपद्यते? यावता ढकारोऽत्र परनिमित्तं नास्त्येव। ढलोपे कर्त्तव्ये ष्टुत्वस्यासिद्धत्वादित्यत आह ष्टुत्वेत्यादि। ढकारोऽत्र ढलोपनिमित्तेनाश्रीयते। न चासौ क्वचित् सिद्धः सम्भवति यत्रानेन ढलोपः कर्त्तव्यः। तस्माड् ढकारस्य निमित्तत्वेनाश्रय-णादेव ष्टुत्वस्य सिद्धत्वं वेदितव्यम्। अन्यथा ह्यस्य वचनस्य वैयर्थ्यं स्यात्। अनवकाशत्वात्। स्यादेतत्। श्वलिड् ढौकत इत्यनेन ढलोपो भविष्यति। सिद्धो ह्यत्र ढकारः। तत् कुतो वचनस्य वैयर्थ्यमित्याह श्वलिड् ढौकत इत्यादि। यद्यप्यत्र निमित्तं ढकारः सिद्ध स्तथापि नैव ढलोप उपपद्यते। जश्त्वे कृते कार्यिणो ढकारस्याभावात्। ननु च निर्विषयत्वाड् ढलोपो जश्त्वापवादो भविष्यतीत्याह न चेत्यादि। कुत एतदित्याह तस्य ह्येत्यादि। यदि हि तस्य विषयो न सम्भाव्येत ततो जश्त्वापवादः शक्यते विज्ञातुम्। सम्भवति चास्य विषयो लीढ़ादिः। तस्मान्न शक्योऽसौ जश्त्वापवाद इति विज्ञातुम्। कथं पुनर्लीढ़ा-दिरस्य विषयः? यावता यथा श्वलिड् ढौकत इत्यत्र जश्त्वे कृते कार्यिणोऽसम्भवाड् ढलोपस्याविषय स्तथालीढ़ादावपि ष्टुत्वस्यासिद्धत्वे सति निमित्तस्याभावात्। अथात्र वचनसामर्थ्याड् ढलोपेन ष्टुत्वस्यासिद्धत्वं बाध्यते? इतरत्रापि जश्त्वं

कस्मान्न बाध्यते ? तस्माद् यदि पुनर्लीढादिर्ढलोपस्य विषय इतरेणापि तद्विषयेण भवितव्यम् । ननु लीढादिनैवेतरत्रापीत्यत आह तत्र हीत्यादि । इह ढ इति सप्तमीनिर्देशादानन्तर्यमाश्रितम् । निर्दिष्टग्रहणस्यानन्तर्यार्थत्वात् । ततश्चानन्तर्ये सति ढलोपेन भवितव्यम् । अस्ति च लीढादौ श्रुतिकृतमानन्तर्यम् । उभयो र्निमित्तकार्यिणोर् ढकारयोः श्रूयमाणत्वात् । तस्मादेष एव ढलोपस्य विषयः । सत्यमिहास्त्यानन्तर्यं श्रुतिकृतम् । अनानन्तर्यमप्यस्ति शास्त्रकृतम् । शास्त्रेण ष्टुत्वस्यासिद्धत्वोपादानात् । सति च तस्मिन् सोऽपि न ढलोपस्य विषय इत्यत आह शास्त्रकृतमित्यादि । विद्यमानमपि शास्त्रकृतमनानन्तर्यं ढलोपेन बाध्यते । अन्यथा हि वचनवैयर्थ्यं स्यात् । यथा शास्त्रकृत मनानन्तर्यं वचनसामर्थ्याद् बाधित्वा ढलोपो भवति तथा श्वलिड् ढौकत इत्यत्रापि श्रुतिकृतमनानन्तर्यं बाधित्वा ढलोपः स्यादित्याह श्वलिड् ढौकत इत्यत्र त्वित्यादि । तुशब्दो लीढादेरस्य विशेषं दर्शयति । अत्र लीढादौ हि यद्यपि शास्त्रकृत मानन्तर्यं नास्ति श्रुतिकृतं त्वस्ति । इह तु नापि श्रुतिकृतमानन्तर्यं द्वयो ढकारयो रश्रूयमाणत्वान्नापि शास्त्रकृतम् । शास्त्रेण जश्त्वस्यासिद्धत्वानुपादानात् । तस्मान्नैष ढलोपस्य विषयः ।

## १४ । रो रि ।

किं पुनरिदं सानुबन्धकस्य रेफस्य ग्रहण मुत निरनुबन्धकस्य ? किञ्चात्र यदि सानुबन्धकस्य ग्रहणम् ? सिद्धमग्नीरथ इन्दूरथ इति नीरक्तं दूरक्तमिति तु न सिध्यति । अथ निरनुबन्धकस्य ग्रहणं तदा सिध्यति नीरक्तं दूरक्तमिति । अग्नीरथ इन्दूरथ इति न सिध्यति । नैष दोषः । इह तन्त्रेणाचार्यो रो रिति द्वे सूत्रे उच्चारितवान् । तत्रैकत्र सानुबन्धकस्य ग्रहणमपरत्र निरनुबन्धकस्येति । नीरक्तमित्यादौ ढ्लोपे पूर्वस्य दीर्घोऽण इति ( ६।३।१११ ) दीर्घत्वम् । इह यदि पदस्येति स्थानषष्ठी स्यात् ततोऽलोऽन्त्यस्येति ( १।१।५२ ) पदान्तस्यैव रेफस्य लोपः स्यान् नीरक्त मित्यादौ । अजर्घा इत्यादौ त्वपदान्तस्य न स्यात् । विशेषणषष्ठ्यान्वस्यामिहापि भवतीत्येतच्चेतसि कृत्वाह पदस्येत्यादि । विशेषणषष्ठ्यां हि पदस्येत्यस्यैवमभिसम्बन्धः क्रियते । पदस्यावयवो यो रेफस्तस्य रेफे परतो लोपो भवतीति । तेनापदान्तस्यापि भवति । अजर्घा इति । एकाचो बशो भषित्यादौ सूत्र इदं (८।२।३७) व्युत्पादितम् । अपास्पा इति । स्पर्ध संघर्षे । अस्माद् यङ् ।

द्विर्वचनम्। शर् पूर्वाः खय इति (७।४।६१) खयः शेषः। दीर्घोऽकित (७।४।८३) इति दीर्घत्वम्। यङोऽचि चेति (२।४।७४) यङो लुक्। पास्पर्द् इति स्थिते लङ्। अड़ागमः। सिप्। चर्करीतञ्चेत्यदादिषु (ग,सू)पाठाच्छपो लुक्। सिपो हल्ङ्यादिना (६।१।६८) लोपः। जश्त्वेन धकारस्य दकारः। दश्चेति (८।२।७५) तस्यैव दकारस्य रुत्वम्। तत्रानेन रेफस्य लोपः। पूर्ववद्दीर्घत्वम्। योगविभाग-करणमुत्तरार्थम्। उत्तरसूत्रे रेफस्यानुवृत्तिर्यथा स्यादित्येवमर्थम्। इतरथा हि ढकारस्यापि तत्रानुवृत्तिः स्यात्। ततश्च तस्यापि विसर्जनीयः प्रसज्येत।

## १५। खरवसानयोर्विसर्जनीयः।

यद्यत्र पदस्येति विशेषणषष्ठी स्यात् पदस्यावयवो या रेफ इति तदाऽर्के इत्यादावप्यपदान्तस्य रेफस्यापि विसर्जनीयः स्यात्। स्थानषष्ठ्या न दोषः। अत्र हि पदं रेफेण विशेष्यते। विशेषणेन च तदन्तविधिर्भवति। तेन रेफान्तस्य कार्यमुच्यमानमलोऽन्त्यस्यैव भवतीत्येतदालोच्य पदस्येत्यषा स्थाने षष्ठी। तच्च पदं रेफेण विशिष्यत इत्येतद् दर्शयन्नाह रेफान्तस्य पदस्येति। खरि परतोऽवसाने चेति। परतइत्येतत् पूर्वेणैव सम्बध्यते। न परेणावसानेन। तस्य पौर्वापर्या-भावात्। तथाहि येन वर्णेन विरम्यते सोऽवसानं स्यात्। विरतिर्वा विरामो वर्णस्यानुच्चारणम्। तेन रेफान्तात् पदाद् येन वर्णेन विरम्यते स तावदवसान-संज्ञकः परो न सम्भवति। तन्मात्रस्याप्रयोगात्। अप्रयोगस्तु निरर्थकत्वात्। इतरत्र तु पुनरवसानमभावरूपम्। अभावे च पौर्वापर्यं न सम्भवति। तस्य वर्णधर्मत्वात्। तस्मात् तदपि नैव रेफान्तात् पदात् परमुपपद्यते। केचित्तु बुद्धिकल्पितं पौर्वापर्यमाश्रित्यावसाने चेत्यनेनापि सह परत इत्येतत् सम्बध्नन्ति। तत्र यदि बुद्धिकल्पितं पौर्वापर्यं नाश्रीयते तदा खरवसानयोरित्येकाप्येषा सप्तम्यधिकरणभेदाद् भिद्यते। खय्यौपश्लेषिकेऽधिकरणे सप्तमी भवति खरि परत इति। अवसाने तु वैषयिकेऽधिकरणे सप्तमी भवति। अवसाने विषय इति। यदा तु बुद्धिकल्पितमभावेऽपि पौर्वापर्यमवसानेऽप्याश्रीयते तदोभयत्रापि परसप्तम्येव। उदाहरणेषु खरि विसर्जनीये कृते विसर्जनीयस्य स (८।३।३४) इति सकारः। तस्य चवर्गे परतः श्चुत्वम्। अथेह नृकुम्भ्याश्व—स्तत्र भव (४।३।५३, इत्यणि—नार्कुटो नृपते रपत्यं (४।१।८५) दित्यदित्यादित्यपत्युत्तर-पदाण्ण इति ण्ये (४।१।८५) नार्पत्य इत्यत्र विसर्जनीयः कस्मान्न भवतीत्याह

इत्येतयादि। वृद्धि र्हि भावादावर्थे विहितं तद्धितमाश्रिता भवन्ती बहिरङ्गा। तस्याश्च बहिरङ्गत्वात् तदाश्रयस्यापि रेफस्य बहिरङ्गत्वम्। वृद्ध्याश्रितत्वात्। पुना रेफस्य तद्भक्तत्वात् तन्निमित्ताच्च। विसर्जनीयस्तु खरमात्रमाश्रित्य भवतीत्यन्त-रङ्गः। असिद्धं बहिरङ्ग मन्तरङ्ग इति (प, ५१) विसर्जनीये कर्त्तव्ये रेफोऽसिद्धः। अत इह विसर्जनीयो न भवति। ननु च वृद्धौ कर्त्तव्यायां विसर्जनीयोऽभिमतोऽन्तरङ्गोऽसिद्धः। तदसति तस्मिन् वृद्धे र्बहिरङ्गव्यपदेशो नोपपद्यते। तस्यान्तरङ्गापेक्षत्वात्। असति तस्मिन् वृद्धेर्बहिरङ्गव्यपदेशे रेफस्यापि स न स्यात्। वृद्धेर्बहिरङ्गद्वारकं हि रेफस्य बहिरङ्गत्वम्। ततश्चोभयाङ्गविकलत्वाद् बहिरङ्ग-परिभाषा (प, ५१) नोपतिष्ठत इति यदुक्तं वृद्धे र्बहिरङ्गलक्षणत्वादिति तन्नोपपद्यते। नैतत्। न मु न इति (८।२।३) कार्य्यान्तरार्थं नेति योगविभागः कृतः। तेन वृद्धौ कर्त्तव्यायां विसर्जनीयस्यासिद्धत्वं न भविष्यति। अतएव बहिरङ्गपरिभाषा-यामपि (प, ५१) विसर्जनीयस्यासिद्धत्वं न भविष्यतीति वेदितव्यम्। कार्य्यकालं संज्ञापरिभाषमित्यस्य (प, ३) दर्शनस्येहाश्रितत्वाच्च। युक्तश्चैतत्। कार्य्य-प्रयुक्तत्वाद् हि संज्ञापरिभाषस्य तद्देशतैव न्याय्या। यत्र ह्यनयाऽसिद्धत्वं क्रियते सोऽस्याः कार्य्यदेशः। क्व चानयासिद्धत्वम्? विसर्जनीयविधौ। तस्मात् तद्देशैवेयम्। नतु यत्रोपसख्याता विप्रतिषेधे परं कार्य्यमिति (१।४।२) तद्देशा। नापि यत्र स्थापिता वाह ऊठ्यत्र (६।४।१३२) तद्देशा।

## १६। रोः सुपि।

पयःसु यशःस्विति। क्वचित् सकारद्वयं पठ्यते। तत्र वा शरीति (८।३।३६) विसर्जनीयस्य सकारः। सर्पिःष्विति। यत्र विसर्जनीयः पठ्यते तत्र नुम्विसर्ज-नीयशर्व्यवायेऽपीति (८।३।५८) प्रत्ययसकारस्य षत्वम्। यत्र सर्पिष्ष्विति षकारद्वयं पठ्यते तत्र पूर्व्ववदेव विसर्जनीयस्य सकारे कृते पूर्व्ववदेव प्रत्ययसकारस्य षत्वम्। पूर्वस्य ष्टुत्वम् (८।४।४१)। सुपीति प्रत्याहारग्रहणशङ्कानिरासायाह सुपीत्यादि। एतच्च खरीत्यनुवर्त्तनाल्लभ्यते। नहि सप्तमीबहुवचनादन्यः सुप् खरादिरस्ति। तस्मिन् मा भूत् खरीत्यनुवृत्तेः सप्तम्याः पकारेण प्रत्याहारग्रहणं कपस्तु पकारेण प्रत्याहारग्रहणं कस्मान्न भवतीति? सम्भवति तत्र खरादिः सुप्। यदि स्यात् किञ्च स्यात्? अगोःकः। अधःक इत्यत्र नियमाद् विसर्जनीयो न स्यात्। तस्माद् व्याख्यानमेव शरणम्। किमर्थं पुनरिदम्? यावता ननु सिद्धः

पूर्वेणैव विसर्जनीय इत्याह सिद्धे सतीत्यादि। विपरीतनियमो नाशङ्कनीयः। किमः क्षेप इत्यादौ (५।४।७०) विसर्जनीयनिर्देशात्। गीर्षु धूर्ष्विति। र्वोरुपधाया इत्यादिना ( ८।२।७६ ) दीर्घः।

## १७। भोभगोअघोअपूर्वस्य योऽशि।

भो अत्रेत्यादावोतो गार्ग्यस्येति नित्यो ( ८।३।२० ) यलोपः। गार्ग्यग्रहणं तत्र पूजार्थम्। भो ददातीत्यादावपि हलि सर्वेषामिति ( ८।३।२२ ) नित्य एव यलोपः। अथाश्ग्रहणं किमर्थम्? यावताऽशोऽन्यः खर्यौ भवति तत्र खरवसानयो विसर्गेण भवितव्यम्। कृते विसर्जनीये तस्य स्थानिवद्भावाद् रुग्रहणेन ग्रहणे सति स्यादिति चेत्? न। ज्ञापकात्। यदयमत्रानुनासिकः पूर्वस्य तु वेत्यत्र ( ८।३।२) विसर्जनीययकार मकृत्वा निर्देशं करोति तज् ज्ञापयति विसर्जनीयस्य खरि यकारो न भवति। अवसाने तर्हि स्यादिति चेत्? न। संहितायामित्यधिकारात् (८।२।१०८)। तस्मादन्तरेणाप्यश्वचनमश्येव भवतीत्यत आह अश्ग्रहण मुत्तरार्थमिति। हलि सर्वेषा मित्यादिना ( ८।३।२२ ) तामेवोत्तरार्थतां दर्शयति। वृश्चवृड़िति। ओव्रश्चू छेदने। क्विप्। ग्रह्यादिना ( ६।१।१६ ) संप्रसारणम्। स्कोः संयोगाद्योरन्ते ( ८।२।२९ ) चेति सकारलोपः। चकारस्य व्रश्चादिना ( ८।२।३६ ) षकारः। तस्य जश्त्वेन डकारः। तस्यापि चर्त्वं टकारः। वृश्चवृट्। तमाचष्ट इति णिच्। णाविष्ठवत् प्रातिपदिकस्येतीष्ठवद्भावः (६।४।१५५)। टेरिति (६।४।१५५) टिलोपः। वृश्चवयतेर्ण्यन्तात् क्विप्। णेरनिटीति (६।४।५१ ) णिलोपः। वृश्चव् करोतीति। अत्राश्ग्रहणाद्वकारस्य ककारे परतो लोपो न भवति। अत एवाश्ग्रहणाल् लोपो व्योर्वलीति (६।१।६६ ) लोपो न भवत्येव। अन्यथाश्ग्रहण मनर्थकं स्यात्। यद्युत्तरार्थमश्ग्रहणं स्यात् तर्हि तत्रैव कर्त्तव्यम्। एवं ह्यनुवृत्त्यर्थं स्वरितत्वं न कर्त्तव्यं भवतीत्यभिप्रायेणाह अथेत्यादि। उत्तरार्थमिति। हलि सर्वेषामित्यस्मात् (८।३।२२) सूत्रादुत्तरसूत्रेऽर्थः प्रयोजनं यस्य तत् तथोक्तम्। मोऽनुस्वार ( ८।३।२३ ) इत्यादिना तदेवोत्तरार्थत्वं स्पष्टीकरोति। यदि हि हलि सर्वेषा ( ८।३।२२ ) मित्यत्राश्ग्रहणं क्रियेत ततो मोऽनुस्वार ( ८।३।२३ ) इत्यत्र यथा हल्ग्रहणस्यानुवृत्ति स्तथाश्ग्रहणस्यापि स्यात्। ततश्चाश्येव हलि मोऽनुस्वारः स्यात्। न हल्मात्रे। यदा तु तत्राश्ग्रहणं न क्रियते तदोत्तरत्र

हल्मात्रेऽनुस्वारः सिध्यति । पुनरुत्तरार्थतामस्यग्रहणस्य दर्शयति व्योर्लघुप्रयत्नतर इत्यादि । गतार्थम् ।

## १८ । व्योर्लघुप्रयत्नतरः शाकटायनस्य ।

लघुप्रयत्नतर इति । प्रयत्नः प्रयतनम् । यजयाचेत्यादिना ( ३।३।९० ) नङ् । लघुः प्रयत्नो यस्य स लघुप्रयत्नः । अतिशयेन लघुप्रयत्नो लघुप्रयत्नतरः । किं पुनरिदं लघुप्रयत्नतरत्वम् ? यद् योगाल्लघुप्रयत्नतरो भवतीत्याह लघुप्रयत्नतरत्व मित्यादि । स्थानं ताल्वादि । करणं जिह्वामूलादि । तयोरुच्चारणे शैथिल्यं लघुप्रयत्नतरत्वम् । उदाहरणेष्वान्तरतम्यादिकारस्य वकार एव भवति । यकारस्य यकार एव । शाकटायनग्रहणं पूजार्थम् । अनेन हि व्योर्लघुप्रयत्नतरत्वं विधीयते । उत्तरसूत्रेणापि लोपः । तत्रोभयोर्विधानसामर्थ्यादेव पक्षे विधिर्विज्ञास्यते ।

## १९ । लोपः शाकल्यस्य ।

ओतः परयोर्व्योर्लोपो नित्यं वक्ष्यति । तस्मादवर्णपूर्वयोरयं विधिर्विज्ञायत इत्याह अवर्णपूर्वयोरित्यादि । शाकल्यग्रहणं विभाषार्थम् । ननुच शाकटायनस्य मतेन लघुप्रयत्नतरो विहितः । तत्रान्तरेणापि शाकल्यग्रहणं पाक्षिक एव विधिर्विज्ञास्यते । अन्यथा हि लघुप्रयत्नविधान मनर्थकं स्यात् । तत् किं शाकल्यग्रहणेनेत्यतआह तेनेत्यादि । असति हि शाकल्यग्रहणे विभाषार्थं लघुप्रयत्न-तरेण मुक्ते नित्यो लोपः स्यात् । ततश्चालघुप्रयत्नतरयो व्योंः पक्षे श्रवणं न स्यात् । शाकल्यग्रहणे तु सति लोपो विकल्प्यते । तेन तयोरपि पक्षे श्रवणं सिद्धं भवति । एवञ्च त्रीणि रूपाणि भवन्ति । एकं लघुप्रयत्नतरपक्षे । द्वितीयं लोपपक्षे । तृतीयं तूभयोरभावपक्षे ।

## २० । ओतो गार्ग्यस्य ।

ओकारादुत्तरो वकारो नास्ति पदान्त इति यकारस्यैवायं विधिर्विज्ञास्यत इत्याह ओकारादुत्तरस्य यकारस्येति । ननुच पूर्वसूत्रेणैवोकारादुत्तरस्य यकार-लोपः सिद्धः । तत् किमर्थमिदमारभ्यत इत्यतआह नित्यार्थोऽयमारम्भ इति । गार्ग्यग्रहणं तर्हि किमर्थमित्याह गार्ग्यग्रहणमित्यादि । व्योरिह प्रकरणे लघुप्र-यत्नतरपक्षे विहितो लोपोऽपि । तत् कस्यायं नित्यो लोपो बाधकइत्याह योऽय-

मित्यादि। अथवा यदि नित्यार्थोऽयमारम्भः पक्षे लघुप्रयत्नतरो न स्यादित्यत आह योऽयमित्यादि। लोपविकल्पस्यानन्तरत्वात् तस्यैव निवृत्तिर्युक्ता कर्त्तुमिति भावः। केचित्त्वित्यादि। कथं पुनरिष्यमाणमपि लघुप्रयत्नतरस्य बाधनं भवति। यावतानन्तरत्वाल्लोपविकल्पस्यानेन बाधा युक्ता। व्योः कार्य्यसमुदायस्यापेक्षित त्वाददोषः। यदि लोपविकल्पमात्रमपेक्षते ततः स एव बाध्यते। न लघुप्रयत्नतरः। लोपेन व्यवहितत्वात्। यदा तु व्योर्यदस्मिन् प्रकरणे कार्य्यं विहितं तत् समुदायोऽपेक्ष्यते तदा तस्यानन्तर्य्यात् स एव निवर्त्त्यते। तपरकरणमसन्देहार्थम्। यतो ह्योरित्युक्ते सन्देहः स्यात् किमयमोकारस्य निर्देश आहोस्विदुकारस्येति। नैवम्। भोभगोअघोअपूर्वस्येत्यनुवर्त्तते। न भोःप्रभृतीनामुकारोऽस्ति। तत् कुतः सन्देहः? एवं तर्हि मुखसुखार्थम्।

## २१। उञि च पदे।

लोपः शाकल्यस्येति (८।३।१९) सिद्धे नियमार्थम् उञि पदएव नान्यत्रेति। अवर्णपूर्वयोरिति। ओकारपूर्वस्य वकारस्यासम्भवाद् यकारस्य पूर्वेणैव सिद्धत्वादवर्णपूर्वयोरेवायं लोपो विज्ञायत इत्यवर्णपूर्वयोरित्युक्तम्। स उ इति। तच्छब्दात् सुः। त्यदाद्यत्वम्। तदोः सः सावनन्त्ययोरिति (४।२।१०६) सः। रुत्वम्। तस्य यकारः। तस्यानेन लोपः। तन्वयुतमिति। तन्वे इत्येतस्य सप्तम्यन्तस्य उतशब्दे निष्ठान्ते परतोऽयादेशः। ननु चोञीत्युच्यते। नचायमुञ्। ञकाराभावात्। तत् किमेतन्निवृत्त्यर्थेन पदग्रहणेनेत्यत आह वेञः सम्प्रसारण इत्यादि। संप्रसारणं तु वचिस्वपीत्यादिना (६।१।१५)। एवं तावदुञो निपातस्य प्रतिपदोक्तस्यास्तित्वमनपेक्ष्य पदग्रहणप्रयोजनं दर्शितम्। यदा तु तस्यास्तित्वमपेक्ष्यते तदा प्रयोजनान्तरं दर्शयितु माह उत्तरार्थमिति। ङमो ह्रस्वादचि ङमुण् नित्यमित्येष (८।३।३२) विधिरजादौ पदे यथा स्यात्। इह मा भूत् परमदण्डिनेति। यद्युत्तरार्थं तत्रैव कस्मान्न कृतम्? कः पुनरेवं सति लाभः? स्वरितत्वं न प्रतिज्ञायत इत्येष लाभः। इहापि क्रियमाणे लक्षणप्रतिपदोक्तपरिभाषा (प, ८४) नाश्रयणीया भवतीति समानम्। चकारोऽवर्णपूर्वस्यानुकर्षणार्थः। अन्यथा ह्योतोऽनन्तरत्वात् ततः परस्य यकारस्य लोपो विज्ञायेत। नैतदस्ति। एवं हि विज्ञायमाने निरर्थकमेवेदं सूत्रं स्यात्। पूर्वेणैव सिद्धत्वात्। नानर्थकम्। नियमार्थत्वात्। उञि पदएव यथा स्याद् भो उ पश्यतीति। असति

ह्यस्मिन्नियमार्थे भो युतं भगो युतमित्यत्रापि नित्यो लोपः स्यात्। यदि तु निपातस्येदमुञो ग्रहणं तदा नियमार्थस्य व्यावर्त्त्यत्वं नास्तीति पूर्वापेक्षया चकारः समुच्चयार्थो द्रष्टव्यः। उञोति ञकारोऽसन्देहार्थः। असति हि तस्मिन् सप्तम्या (D) औ इति निर्देशः स्यात्। ततश्च किमयमुकारस्य निर्देश उतैकारस्येति सन्देहः स्यात्। ननुच क्रियमाणेऽपि तस्मिन् किमुञिति निपातस्य ग्रहणमाहो-स्विदुकारादारभ्य झभञिति ( प्र, ८ ) ञकारस्येति सन्देहः स्यादेव। नैवम्। इदं तावद् भवान् प्रष्टव्यः। किमुञिति प्रत्याहारे येऽन्तर्गता हलस्तेष्वेव नित्यो लोप उतान्येष्वपीति ? किमत्र वक्तव्यमन्येष्वपीति ? तथाहि वक्ष्यति हलि सर्वेषा-मिति ( ८।३।२२ )। एवं तर्हि यद्यत्र प्रत्याहारग्रहणमभिमतं स्यादेऔजिति ( प्र, ४ ) चकारेण प्रत्याहारं गृह्णीयादुचि च पद इति। हल्यपि हलि सर्वेषा (८।३।२२) मित्यनेन भविष्यतीति। तत्राप्ययमर्थः। सन्देहः परिहृतो भवति। अथवा यद्यत्रोकारादीनामुञा प्रत्याहारग्रहण मभिमतं स्याद् हलीति लकारेण प्रत्याहारं गृहीत्वैकमेवेमं योगं कुर्य्यादुलि च पदे सर्वेषामिति। नहि योग-विभागस्य किञ्चित् प्रयोजनं पश्यामः। तस्मान्नात्रोकारादीनां प्रत्याहारग्रहण-मिष्टम्। ततश्चोञो निपातस्यैव ग्रहण मित्यसन्दिग्धमेतत्।

## २२। हलि सर्वेषाम्।

भोभगोअघोअपूर्वस्येति। भोभगोअघोपूर्वस्य वकारस्यासम्भवात्। अवर्ण-पूर्वस्तु वकारः सम्भवति। तस्य तु पूर्वमेव हलि सर्वेषामित्यनेन लोपो न भव-तीति दर्शितम्। तेनेह यकारस्यैव ग्रहणं न वकारस्य। तस्य लोपो न भवतीति दर्शितम् भोभगोअघोअपूर्वस्येत्यादौ सूत्रे ( ८।३।१७ )। तत्राशग्रहणं किमर्थं हलि सर्वेषामित्ययं लोपोऽशि हलि यथा स्यादिह मा भूत्। वृक्षं वृश्चतीति वृक्षवृट्। तमाचष्ट इति णिच्। वृक्षवयति। वृक्षवयतेरप्रत्ययः (E) वृक्षव्। वृक्षव् करोतीति। एवमशग्रहणस्य प्रयोजनं दर्शयताऽनेन सूत्रेणाशि हलि वकार-स्यावर्णपूर्वस्य लोपो न भवतीत्युक्तम् भवति। ननु चावर्णपूर्व्वस्येत्यस्यानुवृत्तिर-युक्ता। पूर्वसूत्रे चानुकृष्टत्वात्। तत् कथ मवर्णपूर्वस्य लोपो भवतीति ? नैत-

(D) असति हि तस्मिन्निदुद्भ्यामिति ( ७।३।११८ ) अच्च घेरित्यकारस्यात्वं ( ७।३।११९ ) वृद्धिरेचीति ( ६।१।८८ ) वृद्धौ कृतायामौ इति निर्देशः स्यादिति २०श पुस्तके पाठान्तरम्।

(E) अप्रत्यय इति। अविद्यमानप्रत्यय इत्यर्थः। क्विबादिः।

दश्चि। चानुकृष्टमुत्तरत्र नानुवर्त्तत इति (प,७८) प्रायिकमेतत्। कथं ज्ञायते? एकाजुत्तरपदे ण (८।४।१२) इत्यत्र ण इति प्रकृते पुनर्णग्रहणं वा भावकरणयो (८।४।१०) रित्यत्र वेति यदनुवृत्तं तन्निवृत्त्यर्थं कृतम्। यदि चेदं प्रायिकं न स्यात् पुनर्णग्रहण मनर्थकम्। पूर्वसूत्रे चानुकृष्टत्वादेव हि वाग्रहणस्यानुवृत्तिर्न भविष्यतीति किं पुनर्णग्रहणेन? कृतञ्च। ततोऽवसीयते चानुकृष्टपरिभाषाऽ-(प,७८) नित्येति। शाकटायनस्यापि लोपो यथा स्यादिति। अपिशब्दाच्छाकल्य-स्यापि। असति तु सर्वग्रहणे प्रत्यासन्नस्य गार्ग्यस्य मतेन लोप एव विज्ञायेत।

## २३। मोऽनुस्वारः।

पदस्येति स्थानषष्ठी। तच्च पदं मकारेण विशेष्यते। विशेषणेन च तदन्त-विधिर्भवतीति मकारान्तपदस्यानुस्वारो विधीयमानोऽलोऽन्त्यपरिभाषया (१।१।-५२) मकारस्यैव विज्ञायत इत्याह मकारान्तस्य पदस्येति।

## २४। नश्चापदान्तस्य झलि।

हलीति निवृत्तम्। झल्ग्रहणात्। चकारो मकारानुकर्षणार्थः। असति हि तस्मिन्नकारस्यापदान्तस्य कार्येण इह ग्रहणान् मकारो निवृत्त इत्याशङ्का स्यात्। पयांसीति। जश्शसोः शि (७।१।२०)। नपुंसकस्य (७।१।७२) झलच इति नुम्। सान्तमहतः संयोगस्येति (६।४।१०) दीर्घः। आक्रंस्यत इति। आङ् पूर्वात् क्रमिर्लृट्। आङ उद्गमने (१।३।४०) इत्यात्मनेपदम्। आचिक्रंसत इति। पूर्ववत् (१।३।६२) सन इत्यात्मनेपदम्। एवमधिजिगांसत इत्यत्रापि। इङः सनीङ्श्चेति (२।४।४८) गमिरादेशः। अज्झनगमां सनीति (६।४।१६) दीर्घः। द्विर्वचनम्। अभ्यासकार्य्यम्। राजन्निति। राजतेः शत्रन्तात् सम्बुद्धिः। तस्या हल्ङ्यादिना लोपः (६।१।६८)।

## २५। मो राजि समः क्वौ।

सम्राड़िति। सम्पूर्वाद्राजतेः सत्सूद्विषेत्यादिना (३।२।६१) क्विप्। व्रश्चादिना (८।२।३६) षत्वम्। षकारस्य जश्त्वं डकारः। तस्य चर्त्वं टकारः। साम्राज्यमिति। ब्राह्मणादित्वात् ष्यञ्। किमर्थं पुनर्मकार उच्चार्य्यत इत्याह मकारस्य मकारवचन मित्यादि। मोऽनुस्वार (८।३।२३) इत्यनुस्वारः प्राप्नोति।

स मा भूदित्येवमर्थम् मकारस्य मकारो विधीयते। यद्येवं नेति प्रतिषेधः कर्त्तव्यः। एवं हि लघुसूत्रम्भवति। विभक्त्यनुच्चारणात्। एवं तर्हि निर्देशाधिक्येन तु मकारविधानेनैतत् सूचयति—अत्र प्रकरणेऽधिको हि विधिर्भवतीति। यवल- परे यवला वा भवन्तीत्युपपन्नं भवति। संयदिति। यमेः संपूर्वात् क्विप्। अनुदात्तोपदेशेत्यादिना ( ६।४।३७ ) मकारलोपः। अकारस्य ह्रस्वस्य पिति कृतीति ( ६।१।७१ ) तुक्।

## २६। हे मपरे वा।

मः परो यस्मादिति बहुव्रीहिः। किम् ह्मलयतीति। ह्मल ह्मल चलने। ज्वलह्वलह्मलनमा मनुपसर्गाद्वेति (ग सू ) वा मित्संज्ञा। मितां ह्रस्व (६।४।९२) इति ह्रस्वः। यवलपर इत्यादि यवलाः परे यतः स यवलपर स्तस्मिन् हे मकारस्य वा यवला भवन्तीत्येतदर्थरूपं व्याख्येय मित्यर्थः। व्याख्यानं तु पूर्वं विहितमेव। यवलास्चैते भवन्त आन्तरतम्यात् सानुनासिका एव भवन्ति। वा- वचनात् पक्षेऽनुस्वारो भवत्येव। अथ हे मइत्येवं कस्मान्नोक्तम्? एवं हि परग्रहणं न कर्त्तव्यं भवति। सप्तम्येव हि तदर्थं प्रतिपादयिष्यति मकारे परतो योऽकार इति। नैतदस्ति। हे मइत्युच्यमाने विपर्ययोऽपि विज्ञायेत हकारपरे मकार इति। ततश्च किमह्न इत्यादावेव स्यात्। अकारेण व्यव- धानान्न भविष्यतीति चेत्? न। येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्या- दितेकेन वर्णेन व्यवधान माश्रीयते। न पुनरनेकेनेति। आद्यपक्षे किम् ह्मलयतीत्यादिषु कृतार्थं वचनम्। अतो न शक्यं व्यवधान माश्रयितुमिति चेत्? न। येन हकारपरे मकार इत्येष सूत्रार्थो गृहीतस्तं प्रति पक्षान्तरस्यासम्भवात्। तस्मात् परग्रहणमेव कर्त्तव्यं विपर्ययप्रतीतिर्मा भूदित्येवमर्थम्।

## २७। नपरे नः।

नः परो यस्मादिति बहुव्रीहिः। परग्रहणं नकारपरे यथा स्यादित्येवमर्थम्। अन्यथा हि ने नइत्युच्यमाने नकार एव केवले परतो विज्ञायेत। न इति निमित्तान्तरोपादानाद् हे इत्यस्य निवृत्तिः। नैतदस्ति। एवं हि वचनमिद- मनर्थकं स्यात्। कृते ह्यनुस्वारे नकारे परतोऽनुस्वारस्य ययि परसवर्ण (८।४।५८) इत्यनेन नकारः सिध्यति। सत्यम्। विकल्पार्थमेतत्। अत्र हि यदानेन नकारो

न क्रियते तदा वचनसामर्थ्यात् परसवर्णो न भवतीति विकल्पः सिध्यति । तस्मात् परग्रहणं कर्त्तव्यं नपरे हकारे यथा स्यात् । केवले मा भूदिति । किन् ह्नुत इति । ह्नुङ् अपनयने । अदादित्वाच्छपो लुक् । इह केचिन्नोदयन्ति न इति प्रतिषेधः कस्मान्न विज्ञायत इति ? एतच्चायुक्तम् । सविसर्गस्य पाठात् । प्रतिषेधवाचिनश्च नकारस्य विसर्गानुपपत्तेः । अथाप्यविसर्गः पठ्यत एवमप्ययुक्ता प्रतिषेधाशङ्का । प्राप्त्यभावात् ।

## २८ । ङ्णोः कुक् टुक् शरि ।

ङश्च णश्च तौ ङ्णौ । कश्च टश्च कटौ । तयोरुकारककाराभ्यां प्रत्येकमभिसम्बन्धः कुक् टुगिति । उकार उच्चारणार्थः । ककारो देशविध्यर्थः । प्राङ्क्छेत इति । प्राङिति क्विन्प्रत्ययस्य कुरित्यत्र (८।२।३२) व्युत्पादितम् । वण्ट् छेत इति । वणतेर्विच् । किमर्थं पुनः पूर्वान्तावेतौ क्रियेते इत्याह पूर्वान्तकरणमित्यादि । किं पुनः कारणं पूर्वान्तत्वे च्छत्वं भवति ? न पुनः परादित्व इत्यत आह शश्छोऽटीत्यादि । किमर्थं पुनरेतद्धि विज्ञायत इत्यत आह इहेत्यादि । यदि पदान्ताज् झय (८।२।१०) इत्येवं तत्र न क्रियेत तदा विरप्शिन्नित्यत्र च्छत्वं विज्ञायेत । एवञ्च विज्ञायमाने न भवति । नह्यत्र पदान्ते झय् । विरप्शिनिति । विपूर्वाद्रपेर्लटः मद्वेति (३।३।१४) शत्रादेशः । व्यत्ययो बहुलमिति (३।१।८५) स्यप्रत्ययस्य सकारस्य शकारः । यकारस्य चेकारः । प्राङ्क्साय इति । अत्र परादित्वे सतीण्को (८।३।५७) रादेशप्रत्यययो (८।३।५९) रिति प्राप्तस्य षत्वस्य सात्पदाद्योरिति (८।३।१११) प्रतिषेधो न स्यात् । अपदादित्वात् । वण्ट् साय इति । अत्रापि ष्टुना ष्टुरिति (८।४।४१) प्राप्तस्य ष्टुत्वस्य न पदान्ताट्टोरनामिति (८।४।४२) प्रतिषेधो न स्यात् । अपदान्तत्वात् । तस्मात् प्राङ्क्छेत इत्यादौ छत्वादिसिद्ध्यर्थं पूर्वान्तकरणम् ।

## २९ । डः सि धुट् ।

उभयनिर्देशे पञ्चमीनिर्देशो बलीयानिति (प. ७१) ड इति पञ्चम्या सीत्यस्याः सप्तम्याः षष्ठ्यां परिकल्पितायां सकारस्यैव धुड् विधीयत इत्याह डकारान्तादित्यादि । यद्येवं सप्तमीनिर्देशः किमर्थः ? लाघवार्थः । डः सो धुडित्युच्यमाने मात्राधिक्याद् गौरवं स्यात् । अथ यस्मिन् विधिस्तदादावल्ग्रहण इत्येवमर्थः

( प, ३४ ) सप्तमीनिर्देशः कस्मान्न विज्ञायते ? केवलस्य सकारस्याभावादेव तत् सिद्धेः । पद इत्यधिकाराच्च । श्वलिट्त्साय इत्यत्र धुटि कृते धकारस्य चर्त्वं तकारः । प्रक्रियालाघवार्थं तु तुटि वक्तव्ये धुड्वचन मुत्तरार्थं नश्चेत्यत्र (८।३।३३) धुड् यथा स्यात् । तुग् मा भूदिति । यदि हि स्यात् तर्हि किम् ? भवान्त्साय इत्यत्र न स्क्व्यप्रशानिति ( ८।३।७ ) रुः प्रसज्येत । नैतदस्ति । अम्पर इत्यत्रानुवर्त्तते । न चेहाम्पर स्तकारोऽस्ति । अथेहापि भूतपूर्वगत्याकारेणाम्परः स्यात् ? एवमप्यसिद्धत्वात् तुटा रुत्वं न भविष्यति । तस्मात् तुड़ेव वक्तव्यः । एवं तर्हि वैचित्र्यार्थं धुड्वचनम् । अथ किमर्थं धुट् परादिः क्रियते ? न धुगेव पूर्वान्तः क्रियेत ? एवं हि शि तुगित्यत्र ( ८।३।३१ ) तुग्ग्रहणं न कर्त्तव्यं भवति । धुगेव हि तत्रानुवर्त्तिष्यत इत्यत आह परादिकरणमित्यादि । यदि पूर्वान्तः क्रियेत श्वलिटत्सायइत्यत्र धुकः ष्टुत्वं स्यात् । परादिकरणे तु टकारस्य पदान्तत्वं न विहतमिति न पदान्ताट्टोरनामिति ( ८।४।४२ ) प्रतिषेधः सिध्यति । तदर्थं परादिकरणम् ।

## ३० । नश्च ।

चकारो धुडित्यनुकर्षणार्थः । ननुच स्वरितत्वादेवानुवर्त्तिष्यते । नचोत्तरत्रानुवर्त्तिष्यते । आगमान्तरस्योपादानादस्वरितत्वाद्वा । सत्यमेतत् । प्रतिपत्तिगौरवं तु मन्दधियां स्यात् । अथ भवान्त्साय इत्यत्र धुट स्चर्त्वे कृते न स्क्व्यप्रशानिति ( ८।३।७ ) रुः कस्मान्न भवतीत्याह धुट श्चर्त्वस्यासिद्धत्वादित्यादि । यदि केवलस्य चर्त्वस्य धुटो वा सिद्धत्वं स्यात् तथापि रुत्वप्राप्ते रसम्भव एव । किं पुनरुभयोरसिद्धत्वे सतीति रुत्वप्राप्ते रत्यन्तासम्भवं दर्शयितुमुभयोर् ग्रहणम् । क्वचिद्धुटश्चर्त्वस्यासिद्धत्वादिति पाठः । तत्राप्ययमर्थो वेदितव्यः । विनापि हि चकारेण तदर्थो गम्यते । यथाहरहर्नयमानो वैवस्वतो गामश्वं पुरुषं पशुमित्यादौ वाक्ये । अथवास्मिन् पाठे धुटो यच्चर्त्वं तस्यासिद्धत्वादित्यर्थः । ननु धुड़प्यसिद्ध एव । तत् कुतश्चर्त्वस्यासिद्धत्वमुच्यते ? पुनर्धुटोऽपि ? नैतत् । सत्यपि धुटि विना चर्त्वेन रुत्वप्राप्तिरेव नास्ति । ततो यस्मिन् सति रुत्वमाशङ्क्यते तस्यासिद्धत्वं युक्त मुक्तमिति भावः । कथं पुनः सत्यपि चर्त्वस्य सिद्धत्वे रुत्वमाशङ्कितम् ? यावताऽम्परे छवि तदुच्यते । नचेहाम्परत्वमस्ति । भूतपूर्वगत्याकारेणाम्परत्वमस्तीति युक्त माशङ्कितम् । ननुच साम्प्रतिकाभावे भूतपूर्वगति र्भवति (प, ७७) । अस्ति साम्प्रतिकत्वमन्यत्राम्परत्वं

त्वस्य। सत्यमेतत्। अध्यारोप्यैव मुक्तम्। एवं मन्यते। भवतु नाम। भूतपूर्वणोकारेणाम्परत्वं प्रसज्यतइत्याह धुटश्चत्वंस्यासिद्धत्वादिति।

## ३१। शि तुक्।

शीति सप्तम्यकृतार्था न इति पूर्वसूत्रे कृतार्थायाः पञ्चम्याः षष्ठीत्वं प्रकल्पयति। तस्मिन्निति निर्दिष्टे पूर्व्वस्येति (१।१।६६) वचनात्। तेन नकार एवागमी विज्ञायत इत्याह नकारान्तस्येत्यादि। अथ किमर्थं तुक् पूर्व्वान्तःक्रियते? न प्रकृतो धुड़ेव परादिः क्रियेत। तथापि चर्त्वं न सिध्यतीत्यत आह पूर्वान्तकरणमित्यादि। पूर्व्वान्तः पूर्वस्यान्तः। स पुनः प्रकरणात् तुग् विज्ञायते। तस्य करणं विधानं छत्वं यथा स्यादित्येवमर्थम्। यदि प्रकृतो धुड़ेव विधीयेत शश्छोटीति (८।४।६३) च्छत्वं न स्यात्। तत्र च कारणम् पूर्वमेवोक्तम्। यद्येवमित्यादि। यदि पूर्व्वान्तस्तुक् क्रियते कुर्वञ्छेत इत्यत्र तुका पदान्तताया रहितत्वान्नकारस्याट्कुप्वाङित्यनेन (८।४।२) णत्वं प्राप्नोति। परादित्वे त्वेष दोषो न भवति। पदान्तस्येति (८।४।३७) णत्वप्रतिषेधादिति भावः। तत्रेत्यादिना न भाभूपूकमिगमीत्यादेः (८।४।३४) सूत्रान्नेति वर्त्तमाने स्तोः श्चुना श्चुरिति (८।४।४०) योगविभागः क्रियते। तेन चवर्गयोगे कुर्वञ्छेत इत्यत्र णत्वं न भवत्येव। ननुच क्रियमाणेऽपि योगविभागे णत्वं प्राप्नोत्येव। यस्मादिह चवर्गयोगो नास्त्येव। तुकः श्चुत्वस्यासिद्धत्वात्। योगविभागकरणसामर्थ्यात् श्चुत्वस्यासिद्धत्वेऽपि णत्वप्रतिषेधो भविष्यतीत्यदोषः।

## ३२। ङमो ह्रस्वादचि ङमुण् नित्यम्।

ङमइति ङमुड़िति। उभयमपि प्रत्याहारग्रहणम्। उड़िति प्रत्येकं ङकारादिभिः सम्बध्यते। ह्रस्वादित्येतन् ङमो विशेषणम्। ह्रस्वविशेषितोऽपि ङम् पदस्य विशेषणम्। विशेषणेन च तदन्तविधि र्भवतीति तदन्तात् पदादिति विज्ञायते। यद्यपि पदस्येति षष्ठ्यन्तं प्रकृतं तथापि तदिहार्थात् पञ्चम्यन्ततया विपरिणम्यते। उभयनिर्द्देशे पञ्चमीनिर्द्देशो बलीयानिति (प, ७१)। ङमइति पञ्चम्या अचीत्यस्याः सप्तम्याः षष्ठीं परिकल्पितायामच एवागमित्वं प्रतिपद्यते। सप्तमीनिर्द्देश स्तु लाघवार्थं उत्तरार्थश्चेत्येतत् सर्वं चेतसि कृत्वाह ह्रस्वात् परो यो ङम् तदन्तादित्यादि। संख्यातानुदेशो ह्यत्र वेदितव्यः। आगमिना सागमामाञ्च

समानत्वात् । प्रत्यङ्ङास्त इति । आस उपवेशने । अदादित्वाच्छपो लुक् । कषन्नास्त इति । कष विलेखने । तौदादिकः । शत्रु । अथ परमदण्डिनोत्तम-दण्डिनेति सन्महदित्यादिना (२।१।६१) समासे कृते ङमन्तात् तृतीयैकवचने तस्य नुट् कस्मान्न भवति । अत्र हि यचि भमिति (१।४।१८) भत्वेऽपि समासस्य ह्रस्वादिकारात् परो ङम् नकारः । तदन्ताद् दण्डिनेत्यस्माद् या विभक्ति स्तस्यां लुप्तायामपि प्रत्ययलक्षणेन (१।१।६२) लब्धपदसंज्ञत्वात् तृतीयैकवचन मचपरं भवतीत्यस्ति ङमुट्प्राप्तिरित्याह परमदण्डिनेत्यादि । उत्तरपदत्व उत्तरपद-व्यपदेशे कर्त्तव्ये सत्यपदादिविधौ पदादिविधेरन्यत्र प्रत्ययलक्षणं न भवतीति वाक्यार्थः । असति प्रत्ययलक्षणे दण्डिनेत्यस्य पदसंज्ञा न भवति । ततश्च पदान्तादुत्तरस्योच्यमानो ङमुडागमो न भवति । एवं तावत् कात्यायनमतेन परीहार उक्तः । यस्तु सूत्रकारमतेन तं दर्शयितुमाह अथवेत्यादि । पदइत्यनुवृत्तौ सत्यामचा पदे विशेष्यमाणे यस्मिन् विधिस्तदादावल्ग्रहण (प,३४) इत्यनेनाजादौ पदे कार्य्येण भवितव्यम् । न चात्राजादि पदमस्ति । तत् कुतो नुट् प्रसङ्गः ? अथ नित्यग्रहणं किमर्थम् । यावतोत्तरसूत्रे वाग्रहणादेव नित्यो विधिर् विज्ञास्यते । सत्यमेतत् । पूर्वसूत्रेऽपि नित्यत्वं विज्ञायेत । तस्मात् पूर्वसूत्रेषु द्वे मपरे वेतरतो (८।३।२६) वेतरनुवर्त्तत इति ज्ञापनार्थं नित्यग्रहणम् ।

## ३३ । मय उञो वो वा ।

मय इति प्रत्याहारस्यग्रहणम् । नत्वय वय मयेति धातोः । कुत एतत् ? व्याप्तिन्यायात् । किमर्थमिद मुच्यते ? यावतेको यणचीत्युञो (६।१।७७) वकारः सिद्ध एव । विकल्पार्थमिति चेत् ? स्यादेतत् । यदीको यणचीति (६।१।७७) नित्यं स्यात् तस्माद्विकल्पार्थं वचनमिति । एतच्च न । पदान्ताद्वे-त्यतो (६।१।७६) वेत्यनुवर्त्तिष्यते । सा च व्यवस्थितविभाषा विज्ञायते । तेनोञो विकल्पेन यण् भवतीत्याह प्रगृह्यत्वादित्यादि । प्रगृह्यत्वं पुनरुञ (१।१।१७) इति प्रगृह्यसंज्ञाविधानात् । तस्मिनत् सति प्लुतप्रगृह्या अचीति (६।१।१२५) प्रकृतिभावः प्राप्नोति । तस्मिन प्राप्ते वकारो विधीयते (F) । एवमपीको यणचो (६।१।७७) त्यस्यानन्तरमुञो यण् वकारो विधेयः । एवं हि व इति न

(F) तथाच—"त्रिपादीये वकारे तु नानुस्वारः कृती भवेत् ।
किम्विति स्यात् किमु इति तृतीयन्तु किमूँ इति ॥१॥" इति ।

कर्त्तव्यं भवति। यण: प्रकृतत्वात्। वेतिवचनं न कर्त्तव्यं भवति। पदान्ता-द्वेत्यतो (६।१।७६) वाग्रहणं मण्डूकप्लुत्यानुवर्त्ततइत्याह असिद्धत्वादित्यादि। तत्र ह्युच्यमाने वकारस्य सिद्धत्वाद् हलि विधीयमानोऽनुस्वार: स्यात्। न चेष्यते। तस्मादिहैव क्रियते। इह क्रियमाणे मोऽनुस्वारो न भवति। वत्वस्यासिद्धत्वात्।

## ३४। विसर्जनीयस्य सः।

खरीत्यनुवर्त्तत इति। खरवसानयोर्विसर्जनीय इत्यत: (८।३।१५)। अनुवृत्ति-श्च मण्डूकप्लुतिन्यायेन स्वसम्बन्धानुवृत्त्या वा वेदितव्या। अन्यथा पूर्वसूत्रेऽपि खरि कार्य्यं विज्ञायेत।

## ३५। शर्परे विसर्जनीयः।

शर् परो यस्मादिति बहुव्रीहि:। अथ परग्रहणं किमर्थम्? न शरीत्येवोच्येत। अशक्यमेवं वक्तुम्। एवं ह्युच्यमाने शरएव केवलं निमित्तभावो विज्ञायेत। न खरीत्यनुवृत्ते:। वा शरीति विधानाच्च (८।३।३६)। विपर्य्यय स्तर्हि विज्ञायेत शरीति? तथाच नित्य: स्फोट: पुरुष: स्थल इत्यादावेव स्यात्। वास: क्षौममित्यादौ तु न स्यात्। तस्माद् विपर्य्ययो मा विज्ञायीत्येवमर्थं परग्रहणम्। अथ किमर्थं विसर्जनीय इत्युच्यते? नेत्येवोच्येत। सकारस्य हि प्रतिषेधे कृते विसर्जनीय: स्वेनैव रूपेणावस्थास्यत इत्याह विसर्जनीयस्येत्यादि। तस्य विसर्ज-नीयस्य विकारो जिह्वामूलीयादि:। तन्निवृत्त्यर्थं विसर्जनीयग्रहणम्। अन्यथा यदि नेत्येवोच्येत ततोऽनन्तरस्य विधि र्वा भवति प्रतिषेधो वेति (प, ६२) सकारस्यैव प्रतिषेधो विज्ञायेत। ततश्च जिह्वामूलीयादि र्विसर्जनीयस्य विकार: स्यादेव। विसर्जनीयग्रहणे तु तत्सामर्थ्यादेव न भवति।

## ३६। वा शरि।

## ३७। कुप्वोः ᳵक ᳶपौ च।

विसर्जनीयस्येत्यनेन विसर्जनीयानुकर्षणार्थं सकार इति दर्शयति। अथ वाग्रहणमनुवर्त्त्य जिह्वामूलीयोपाध्मानीयौ कस्मान्न विकल्प्येते। एवञ्च

विसर्जनीयानुकर्षणार्थं चकारो न कर्त्तव्यो भवति। आभ्यां हि मुक्ते पक्षे विसर्जनीय एव भविष्यति। नैवम्। शर्परयोरेव हि कुप्वोरेवं स्यात्। अशर्परयोस्तु पक्षे विसर्जनीयस्य स (८।३।३४) इति सकारः प्रसज्येत। तस्माच्चकारः कर्त्तव्यः। इह ककारपकारयोर् जिह्वामूलीयोपध्मानीययोः सूत्र उच्चारणात् तथाभूतावादेशौ विसर्जनीयस्य विज्ञायेते इति कस्यचिदाशङ्का स्यात्। अत स्तां निराकर्त्तुमाह ककारपकारावुच्चारणार्थाविति। आभ्यां विना तयोरुच्चारयितु मशक्यत्वादिति भावः। कीदृशौ तावादेशावित्यतआह जिह्वामूलीयोपध्मानीयावेव त्वादेशाविति। तुशब्द आशङ्किताभ्यां समुदायरूपाभ्या मादेशाभ्यां विशेषं द्योतयति। एवकारोऽवधारणार्थः। जिह्वामूलीयोपध्मानीयावेव केवलौ। नतु समुदायरूपावित्यर्थः। इह सर्वस्य विषयस्य विध्यन्तरेणावष्टब्धत्वात् कुप्वोः ✕क ✕पौ चेत्यस्यानवकाशत्वम्। अतो यथा वृक्षः करोतीत्यादौ विसर्जनीयस्य स (८।३।३४) इतीमं विधिं बाधित्वा कुप्वोः ✕क ✕पौ चेति प्रवर्त्तते तथा वासः क्षौम मद्भिः प्सात मित्यादौ शर्पर (८।३।३५) इतीममपि विधिं कस्मान्न बाधत इति यो देशयेत् तं प्रत्याह विसर्जनीयस्येतशादि। शर्परे विसर्जनीय (८।३।३५) इत्येतस्मिन् प्राप्ते चाप्राप्ते चेदमारभ्यते। वासः क्षौम मद्भिः प्सात मितशादौ प्राप्ते। वृक्ष✕करोति वृक्ष✕पचतीत्यत्राप्राप्ते। विसर्जनीयस्य स (८।३।३४) इत्येतस्मिंस्तु सर्वत्र प्राप्ते। एवं तस्य विशेषणं खर्मात्रे विधानात्। स्यात् तस्यैवेदं बाधकम्। नेतरस्य विधेः। तं प्रति बाधकलक्षणस्यायोगात्। स्यादेतत्। शर परे विसर्जनीयस्य कवर्गपवर्गाभ्यामन्यः शर्परः खरवकाशः। कुप्वोः ✕क ✕पौ चेत्यस्याशर्परौ कवर्गपवर्गौ। वासः क्षौममद्भिः प्सातमित्यत्रोभयं प्राप्नोति। तत्र विप्रतिषेधे परं कार्य्य मिति (१।४।२) विसर्जनीयं बाधित्वा जिह्वामूलीयोपध्मानीयाभ्यां भवितुं युक्तमित्याह पूर्वत्रासिद्ध इत्यादि। अत्रैवोपपत्तिमाह अभावादुत्तरस्येति। द्वयोस्तुल्यबलयोर्युगपदेकत्र प्राप्तौ विरोधो भवति। न चात्र युगपत् प्राप्तिरस्ति। पूर्वस्मिन् कर्त्तव्ये सत्यसिद्धत्वादुत्तरस्याविद्यमानत्वात्। इति-कारणो हेतौ। यस्मात् पूर्वत्रासिद्धीये नास्ति विप्रतिषेध स्तस्माद्वासः क्षौममद्भिः प्सात मित्यत्र शर्परे विसर्जनीय (८।३।३५) इत्येतदेव भवति। न जिह्वामूलीयोपध्मानीयाविति। केचिदित्यादि। वासः क्षौममद्भिः प्सात मित्यत्र विसर्जनीयो यथा स्यादित्येवमर्थं कुप्वोः ✕क ✕पौ चेत्यत्र योगविभागं कुर्वन्ति। कुप्वोरित्येको योगः। ✕क ✕पाविति द्वितीयः। तत्र पूर्वस्मिन् योगे शर्परे

विसर्जनीय ( ८।३।३५ ) इत्येतदनुवर्त्तते। तेन शर्परयोः कुप्वोर् विसर्जनीय एव भवति। न जिह्वामूलीयोपध्मानीयाविति।

## ३८। सोऽपदादौ।

पूर्वस्यायमपवादः। अपदादाविति सुब्व्यत्ययेन द्विवचनस्य स्थान एकवचनम्। अन्यथा ह्यपदादित्वं कुप्वो विंशेषणमिति नोपपद्यते। द्वित्वे सत्यपदाद्योरिति कुर्य्यात्। पाशकल्पककाम्येष्विति सम्भवदर्शनम्। न परिगणनम्। व्यवच्छेद्याभावात्। पयस्पाशमिति। याप्ये पाशप् (८।३।४७)। पयस्कल्पमिति। ईषदसमाप्तौ कल्पबित्यादिना ( ५।३।६७ ) कल्पप्। पयस्कमिति। अज्ञातं पयः। अज्ञात इति ( ५।३।७३ ) कः। पयस्काम्यतीति। सुप आत्मनः क्यच् ( ३।१।८ ) काम्यच्चेति ( ३।१।९ ) काम्यच्। पयः कामयत इति। कमेर्णिङ् (३।१।३०)। पयः पिबतीति। पा पाने। पाघ्रादिसूत्रेण ( ७।३।१८७ ) पिबादेशः। सोऽपदादावनव्ययस्येति वक्तव्यमिति। सोऽपदादावित्यस्मिन् सूत्रेऽनव्ययविसर्जनीयस्य सकारादेशो भवतीत्येतदर्थरूपं व्याख्येय मित्यर्थः। तत्रेदं व्याख्यानम्। वा शरीत्यतो ( ८।३।३६ ) वाग्रहणमनुवर्त्तते। सा च व्यवस्थितविभाषा। तेनानव्ययस्यैव भविष्यतीति नाव्ययस्य। रोः काम्ये नियमार्थमिति। एतद् ग्रहणकवाक्यम्। रोरेवेत्यस्यैव विवरणम्। वक्तव्यशब्दस्यात्रापि स एवार्थः। व्याख्यानञ्च पूर्ववदेव कर्त्तव्यम्। रोरिति विसर्जनीयापेक्षया स्थानषष्ठी। रो र्यो विसर्जनीय स्तस्येत्यर्थः। उब्जिरुपध्मानीयोपधः पठ्यत इति। इह केषाञ्चिद् दर्शनमिदमुब्ज आर्जव इति। उपध्मानीयस्य त्वश्रवणम्। कृतजश्त्वनिर्देशात्। अन्येषान्तु दर्शनमुद्ज आर्जव इति। तत्राद्यपक्ष उब्जेर्हलश्चेति ( ३।३।१२१ ) घञि चजोः कुघिण्ण्यतो ( ७।३।५२ ) रिति कुत्वे उपध्मानीयस्य झलाञ्जश् झशीति ( ८।४।५३ ) बकारे अभ्युब्गः समुब्ग इत्यनिष्टं रूपं स्यात्। तस्मादुपध्मानीयस्य कवर्गे परतः सकारो वक्तव्यः। सकारे ह्युपध्मानीयस्य कृते तस्य जश्त्वेन दकारः। एवमभ्युद्गः समुद्ग इतीष्टं सिध्यति। द्विर्वचनप्रतिषेधोऽप्युपध्मानीयस्य वक्तव्यएव। अन्यथा ह्युब्जिजिषतीत्यत्राजादेर्द्वितीयस्येत्युपध्मानीयस्य ( ६।१।२ ) द्विर्वचनं प्रसज्येत। इतरस्मिंस्तु दर्शनेऽसिद्धकाण्डे भ उब्जे र्वक्तव्यः। अन्यथोब्जिजिषतुरब्जितेत्यादि न सिध्येत्। तथाचोक्तमसिद्धे भ उब्जेरिति (G) असिद्धवचनमसिद्धत्वाद्भ-

(G) एतद्धि हयवरडिति प्रत्याहारभाष्ये भाष्यकारवचनम्।

कारस्य । उव्जिजिषतीत्यत्र मन्द्राः संयोगादय इति ( ६।१।३ ) द्वितीयस्यैकाचो द्विर्वचनप्रतिषेधो यथा स्यात् । तद्यं भकारो वक्तव्यः । न वक्तव्यः । निपातनेन सिद्धत्वात् । किं पुनर्निपातनम् ? भुजन्युब्जौ पाण्युपतापयोरिति ( ७।३।६१ ) । अत्र हि तर्हि प्राप्नोति ? अभ्युद्गः समुद्ग इति ? अकुत्वविषये निपातन मित्यदोषः ।

## ३९ । इणः षः ।

पूर्वेण सकारे प्राप्ते तदपवादः षकारो विधीयते । सर्पिष्कत्रेति । विसर्जनीयस्य स इति ( ८।३।३४ ) स एव भवति । इतः प्रभृति यदि षकार एवानुवर्त्तते न सकारोऽपि तदा नमस्पुरसोर्गत्यो ( ८।३।४० ) रतः क्तकमिकंसे ( ८।३।४६ ) त्यादौ सकारग्रहणं कर्त्तव्यम् । क्रियमाणेऽपि यदि षकारस्तत्रानुवर्त्तते तदासोऽपि । प्राप्नोति सङ्करः । अथेतः प्रभृति यदि सकार एवानुवर्त्तते न षकारोऽपि तदेदुदुपधस्य चाप्रत्ययस्य ( ८।३।४१ ) द्विस्त्रिश्चतुरिति कृत्वोऽर्थे ( ८।३।४३ ) इसुसोः सामर्थ्ये ( ८।३।४४ ) नित्यं समासेऽनुत्तरपदस्थस्येत्येतेषु ( ८।३।४५ ) योगेषु षकारग्रहणं कर्त्तव्यम् । क्रियमाणेऽपि तस्मिन् यदि सकारोऽप्यनुवर्त्तते तदा सोऽपि प्राप्नोति । एषोऽपि सङ्करः प्रसज्येतेत्याह उत्तरमित्यादि । एतेन सकारषकारयोः करणं यद् दोषितं तन्निरस्तम् । यस्तु सङ्करदोषो दर्शित स्तस्याप्यपाकरणमाह तत्रेत्यादि । कथं पुनरुभयोरुत्तरत्र सममनुवृत्तौ सत्यामेष विषयविभागो लभ्यते ? मण्डूकप्लुतिन्यायेनानुवर्त्तमानत्वात् ।

## ४० । नमस्पुरसो र्गत्योः ।

अपदादाविति निवृत्तम् । नमःशब्दस्य साक्षात्प्रभृतीनि चेति ( १।४।७४ ) गतिसंज्ञा । पुरःशब्दस्य तु पुरोऽव्ययमित्यनेन ( १।४।६७ ) । पूः पुरौ पुरः करोतीति । पॄ पालनपूरणयोः । भ्राजभासेत्यादिना क्विप् (३।२।१७७) । उदोष्ठ्यपूर्वस्येत्युत्त्वम् ( ७।१।१०२ ) । रपरत्वम् । स्वादयः । हल्ङ्यादिलोपः (६।१।६८) । र्वोरुपधाया दीर्घ इत्येकवचने ( ८।२।७६ ) दीर्घः । पूः पुराविव्यत्रागतिसंज्ञकत्वात् पुरः शब्दस्य सत्वं न भवति । तस्मिन्नसति विसर्जनीय एव स्यात् । पक्ष उपध्मानीयोऽपि । पुरः करोतीत्यत्रागतिसंज्ञकत्वात् सकारो न भवति । तस्मिन्न-

सति विसर्जनीय एव भवति। पचे जिह्वामूलीयोऽपि। नमःशब्दस्य तु नमः कृत्वेति प्रत्युदाहरणं वेदितव्यम्। वृत्तिकृता तु सुबोधत्वान्न दर्शितम्। (H)

## ४१। इदुदुपधस्य चाप्रत्ययस्य।

इच्च उच्च तौ इदुतौ। इकारोकारावुपधे यस्य स तथोक्तः। निर्दुर्बहिरित्यादि। सम्भवदर्शनार्थमेतत्। न परिगणनम्। व्यावर्त्त्याभावात्। मातुः करोति पितुः करोतीत्यत्र यथा न भवति तथा वक्ष्यति। पुंस्कामा मुहुःकामेत्यत्रापि यथा न भवति तथा वक्ष्यति। चतुष्कपालं चतुष्कण्टकमिति। चतुःशब्दस्य कपालकण्टकशब्दाभ्यां बहुव्रीहिः। समाहारे द्विगुर्वा। अकारान्तोत्तरपदद्विगुः स्त्रियां भाष्यत इति स्त्रीलिङ्गता ( २।४।३०, वा ) न भवति। पात्रादीनां प्रतिषेध इति ( २।४।३०, वा ) वचनात्। मातुः करोति पितुः करोतीति देश्यम्। मातृपितृशब्दाभ्यां षष्ठ्येकवचनम्। ऋत उदित्युत्त्वम् ( ६।१।१११ )। एकादेशः। रपरत्वम्। रात् सस्येति ( ८।२।२४ ) सलोपः। रेफस्य विसर्जनीयः। स च रेफस्याप्रत्ययत्वात् प्रत्ययविसर्जनीयो न भवति। अतः षत्वं प्राप्नोति। तत् कस्मान्न भवतीत्याह कस्कादिष्वित्यादि। परीहारः। एकादेशश्चासौ निमित्तश्चेति कर्मधारयः। यद्येकादेशादिणो निमित्तभूतात् षत्वं स्यात् कस्कादिषु भ्रातुष्पुत्रशब्दस्य ग्रहणं न कुर्य्यात्। अनेनैव सिद्धत्वात्। कृतञ्च। एतदेव ज्ञापयत्येकादेशनिमित्तात् षत्वं न भवतीति। पुम्मुहुसोरित्यादि। वक्तव्य इति। व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्। उत्तरसूत्रेऽन्यतरस्यांग्रहणमुभयोर्योगयोः शेषभूतं विज्ञायेत। सा व्यवस्थितविभाषा। तेन पुंमुहुसो र्न भवति। अन्येषां तु नित्यमेव भविष्यति। पुमित्यस्य ग्रहणं रुत्वादेशपक्षमाश्रित्य कृतम्। सकारादेशपक्षे हि विसर्जनीयाभावात् प्रतिषेधवचन मनर्थकं स्यात्। पुंस्कामेति। पुमः खय्यम्परे ( ८।३।६ ) इति रुः। तस्य विसर्जनीयः। तस्यापि विसर्जनीय इति सकारः। जिह्वामूलीयस्तु यथा न भवति तथा पूर्वमेव प्रतिपादितम्। मुहु+कामेति। षत्वे प्रतिषिद्धे जिह्वामूलीयो भवति। क्वचिन्

---

(H) कथन्तर्हि—अमुं पुरः पश्यसि देवदारुमिति ? इष्टिं प्रत्यगतित्वात्। अत्र पुरः स्थितमिति नेयम्। एवं पुरःशब्दस्याध्याहार्य्यं क्रियान्तरं प्रति गतित्वे व्यवहितस्थितिश्च। तथाच तस्य स्थित्वा कथमपि पुरः कौतुका- धानहेतोरिति पुरो रामस्य जुहवाञ्चकार ज्वलने वपुरित्यादिप्रयोगः।

(I) मुहुस्कामेति सकारः पठ्यते। तत्र यथा पुंस्कामेत्यत्र जिह्वामूलीयाभावः प्राक् प्रतिपादित स्तथेहापि प्रतिपाद्यः। नैष्कुल्यं दौष्पुरुष्यमिति। ब्राह्मणादित्वात् ष्यञि कृते तन्निमित्तायाश्च वृद्धाविदुदुपधत्वाभावात् षत्वं न प्राप्नोति। नौ///ष्कुलं दू///ष्पुरुष इत्यत्रापि गुरोरनृतेत्यादिना (८.२.८६) प्लुते विहिते नैव तत् प्राप्नोति। इदुदुपधत्वाभावादिति यो दर्शयेत् तं प्रत्याह नैष्कुल्यमित्यादि। वृद्धे स्तावद्बहिरङ्गत्वं तद्धितापेक्षत्वात्। तद्धितो भवाद्यर्थापेक्षत्वाद्बहिरङ्गः। तेन तदाश्रितापि वृद्धिर्बहिरङ्गा भवति। प्लुतोऽपि दूराद्धूतादावर्थे वाक्यस्य विधीयमानत्वाद्बहिरङ्गः। षत्वं तु वर्णस्य पदसम्बन्धिनो विधीयत इत्यल्पापेक्षत्वादन्तरङ्गम्। तेनान्तरङ्गे षत्वे कर्त्तव्ये वृद्धिप्लुतयोर्बहिरङ्गयो रसिद्धत्वात् प्रवर्त्तत एव षत्वम्। तपरकरण माशीः करोति गीः करोति धूः करोतीत्यत्र मा भूदित्येवमर्थम्।

## ४२। तिरसोऽन्यतरस्याम्।

कुप्वोः ≍क≍पौ चेति (८।३।३७) प्राप्त इदं वचनम्। गतिग्रहणञ्चेह स्मर्य्यते। गतिसंज्ञा पुनस्तिरः शब्दस्य तिरोऽन्तर्द्धावित्यनेन (१।४।७१)। तिरः कृत्वा काण्डं गत इति। तत्रान्तर्द्धेरविवक्षितत्वाद् गतिसंज्ञा न भवति।

## ४३। द्विस्त्रिश्चतुरिति कृत्वोऽर्थे।

अन्यतरस्यामिति वर्त्तते। चतुःशब्दस्याप्रत्ययविसर्जनीयत्वान्नित्ये षत्वे प्राप्त इतरयोस्तु विपर्य्ययादप्राप्ते विकल्पोऽयमारभ्यते। इतिशब्दोऽत्र द्विरादीनां विसर्जनीयेन सह सम्बन्धं द्योतयितुमुपात्तः। सम्बन्धो हि षष्ठ्या वा निर्द्दिश्यत इतिकरणेन वा। तदिहेतिकरणेन निर्द्दिष्टः। कृत्वसुचोऽर्थः कृत्वोऽर्थः। स पुनः क्रियाभ्यावृत्तिगणनम्। एतच्च द्विरादीनां विशेषणम्। तेऽपि विसर्जनीयस्येति दर्शयन्नाह द्विस्त्रिश्चतुरित्यादि। द्विष्करोतीति। संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुजित्यतः (५।४।१७) क्रियाभ्यावृत्तिगणनइत्यनुवर्त्तमाने द्वित्रिचतुर्भ्यः सुजिति (५।४।१८) सुच्। तस्य रुत्वम्। तस्य विसर्जनीयः। तस्याप्यनेन पक्षे षत्वम्। चतुष्करोतीति। अत्र सुचः सकारस्य रात् सस्येति (८।२।२४) लोपः। प्रकृतिरेफस्य विसर्जनीयः। शेषं पूर्व्ववत्। चतुष्कण्टकं चतुष्कपाल-

(I) मुद्रितकाशिकायाञ्च। भाष्यवार्त्तिकयोरनिबद्धत्वादेषोऽपपाठ इति तु मिश्रः। एवञ्चात्र विसर्जनीयजिह्वामूलीयाभ्यामेव भवितव्यम्। न सत्वेन।

मिति। अत्र क्रियाभ्यावृत्तिर्नास्ति। चत्वारि कण्टकान्यस्य चत्वारि कपाला-न्यस्येति सम्बन्धमात्रविवक्षितत्वात्। तेनात्र विकल्पो न प्रवर्त्तत इति। इदुदुपधस्य चाप्रत्ययस्येति ( ८।३।४१ ) नित्यमेव षत्वं भवति। ननु चाप्रत्ययस्य विसर्जनीयस्य षत्व मुच्यते। प्रत्ययविसर्जनीयश्चायम्। चतेरुरन्नित्युरन् (उण, ५।७३६) प्रत्ययान्त-त्वाच्चतुः शब्दस्य। नैतत्। उणादयोऽव्युत्पन्नानि (प,२३) प्रातिपदिकानीत्येषोऽभिप्रायो द्रष्टव्यः। ननुच द्विस्त्रिःशब्दौ सुच् प्रत्ययान्तौ कृत्वोऽर्थ एव वर्त्तेते। तत्-साहचर्य्याच्चतुःशब्दोऽपि तादृश एव ग्रहीष्यते। तत् किमर्थमेतत्? ज्ञापनार्थम्। एतदनेन ज्ञाप्यते क्वचित् सहचरितासहचरितयोरित्येषा ( प, ११२ ) परिभाषा नाश्रीयते। तेन दीधीवेवीटामित्यत्र ( १।१।६ ) धातुसाहचर्य्यादिट गतावित्यस्य ग्रहणं न भवति। इदुदुपधस्येत्यादिना द्विस्त्रिश्चतुरिति ग्रहणं प्रत्याचष्टे। एतदेवमर्थं क्रियते। द्विरादीनामेव विसर्जनीयस्य षत्वं यथा स्यात् पञ्चकृत्वः करोतीत्यत्र मा भूदिति। ननु चेदुदुपधस्येत्यस्मिन्ननुवर्त्तमाने कृत्वोऽर्थौ विषयो यस्य पदस्य तस्य यो विसर्जनीय इत्येवं कृत्वोऽर्थविषयेण पदेन विसर्जनीयो यदा विशिष्यते तदान्यस्य न प्राप्नोति। द्विरादेरन्यस्येदुदुपधस्य कृत्वोऽर्थवृत्तेः पदस्या-सम्भवात्। तस्मादन्तरेणापि द्विरादीनां ग्रहणं तेषामेव हि विसर्जनीयस्य षत्वं भविष्यति। द्विस्त्रिश्चतुरिति शक्यमकर्त्तुम्? कृत्वसुजर्थं षत्वं ब्रवीति कस्मा-दिति। (J) अस्मिन् षत्वविकल्पविधाने हेतुं कृत्वोऽर्थवचनस्य पृच्छति। कस्मात् कृत्वोऽर्थइत्येवमुक्त्वा इमं षत्वविकल्पं ब्रवीति? किं तत् प्रयोजनं यतो हेतो रिह षत्वविकल्पविधौ कृत्वोऽर्थग्रहणं करोतीत्यर्थः। अत्र वक्ष्यमाण एवाभिप्रायः। अतो हेतुमाह चतुष्कपाल इत्यादि। असति कृत्वोऽर्थग्रहणे चतुष्कपालेऽपि विभाषा षत्वं स्यात्। नित्यञ्चेष्यते। तस्मादत्र विभाषा षत्वं मा भूदित्येवमर्थं कृत्वोऽर्थं इत्युच्यते। येनाभिप्रायेण परं पृष्टवांस्तमाविष्कर्त्तुमाह ननु सिद्धं तत्र पूर्वेणेति। नन्वित्यभ्युपगमे। एतदनेन दर्शयति। भवत्वनेन षत्वं विभाषा। तथापि पूर्वसूत्रेण नित्यं भविष्यति षत्वस्य श्रवणम्। यस्माद् यदाप्यनेन षत्वं न भवति तदापि पूर्वसूत्रेणेदुदुपधस्य चाप्रत्ययस्येत्यनेन (८।३।४१) चतुष्कपाले सिद्धं षत्वमिति। सिद्धे ह्ययं विधत्त इति। सिद्धे प्राप्त इत्यर्थः। एतदाचष्टे। इदुदुप-धस्येत्यादिना ( ८।३।४१ ) नित्ये षत्वे प्राप्त इमं षत्वविकल्पं विदधाति। नाप्राप्ते

---

(J) भाष्याद् धृतमार्य्यानिबद्धं कात्यायनादन्यस्य श्लोकवार्त्तिककारस्य कस्यचित् श्लोकपद्यकमितो व्याचष्टे।

तस्माद् येन नाप्राप्तिन्यायेन (प,५८)तस्यायं बाधकः स्यादिति तदनेन यदुक्तं सिद्धं तत्र पूर्वेणेति तन्निराकृतम्। तस्माद्विभाषानिवृत्त्यर्थं कृत्वोऽर्थग्रहणम्। स्यादेतत्। कृत्वोऽर्थविवक्षायां सुचि कृते तस्य यदा विसर्जनीयः क्रियते तदा पूर्वेण न प्राप्नोति। अप्रत्ययस्येति (८।३।४१) प्रतिषेधात्। ततश्च सिद्धे ह्ययं विधत्त इति यत् तन्नोपपद्यते। तत् कुतो ह्यनेन विकल्पेन नित्यं षत्वं बाध्येतेत्याह यदापि कृत्वोऽर्थ इत्यादि। चतुःशब्दो वर्त्तत इति शेषः। अस्य च सिद्धे ह्ययं विधत्ते चतुरः षत्व मित्यनेन प्रकृतेन सम्बन्धः। अस्यार्थः। एतदुक्तं भवति। न केवलं यदा कृत्वोऽर्थवृत्ति श्चतुः शब्द स्तदा पूर्वेण प्राप्ते सतीमं षत्वविकल्पं विधत्तेऽपितु यदा कृत्वोर्थस्तदापीति। अत्रैवोपपत्तिमाह लुप्ते कृत्वोऽर्थीय इत्यादि। हिशब्दो हेतौ। कृत्वोऽर्थे भवः कृत्वोऽर्थीयः सुच्। गहादित्वाच्छः। यस्माद्रात् सस्येति (८।२।२४) लुप्ते कृत्वोऽर्थीये रेफस्याप्रत्ययस्य विसर्जनीयो भवति तस्मात् कृत्वोऽर्थेऽपि पूर्वेण नित्ये षत्वे प्राप्त इमं षत्वविकल्पं विधत्ते। ततश्च सर्वत्र कृत्वोऽर्थेऽप्यकृत्वोऽर्थेऽपि नाप्राप्ते पूर्वेण षत्वे विकल्प आरभ्यत इति तस्य बाधक एव स्यात्। एवञ्चासति कृत्वोऽर्थ-ग्रहणे चतुष्कपाले विभाषा षत्वं प्रसज्येत। तस्मात् तन्निवृत्त्यर्थं कृत्वोऽर्थग्रहणं स्थित मेतत्। एवमित्यादि। यदि कृत्वोऽर्थग्रहणं क्रियत एवं तर्हि तस्मिन् सति किमिदानीं द्विस्त्रिश्चतुरित्यनेन कार्य्यम्? न किञ्चित्। व्यावर्त्त्याभावात्। तस्मान्न कर्त्तव्यमिदमेवेत्यभिप्रायः। स्यादेतत्। असत्यस्मिन् पञ्चकृत्वः करोती-त्यादावपि विभाषा षत्वं स्यात्। अत स्तन्निवृत्तिरनेन क्रियत इत्यतआह अन्यो हीत्यादि। इदुदुपधस्येत्यनुवर्त्तते। कृत्वोऽर्थ इति चोच्यते। नच द्विरादिभ्यो-ऽन्य इदुदुपधः कृत्वोऽर्थे वर्त्तते। तस्मात् सामर्थ्यादेषामेव भविष्यति। नान्येषा-मित्यनर्थकं द्विरादीनां ग्रहणम्। अक्रियमाण इत्यादिनाऽसति हि द्विरादि-ग्रहणे यो दोष स्तं दर्शयति। यदि द्विरादिग्रहणं न क्रियेत तदा विसर्जनीयस्य प्रकृतत्वात् स एव कृत्वोऽर्थग्रहणेन विशेष्यते कृत्वोऽर्थे यो वर्त्तते विसर्जनीय इति। कः पुनरेवं सति दोषः स्यादित्यत आह चतुरो न सिध्यतीति। तथेति। तथैवं कृत्वोऽर्थग्रहणेन विसर्जनीये विशेष्यमाणे चतुः शब्दस्य विभाषा षत्वं न सिध्यति। किं कारणं न सिध्यतीत्यतआह रेफस्येत्यादि। हिशब्दो हेतौ। यस्माच्च-तुरो रात् सस्येति (८।२।२४) सुचः सकारे लुप्ते प्रकृत्यवयवस्य रेफस्य विसर्जनीय स्तस्मान्न सिध्यति। नह्यसौ विसर्जनीयः कृत्वोऽर्थे वर्त्तते। अथ क्रियमाणेऽपि तस्मिन् कस्मादेष दोषो न भवतीत्यत आह तस्मिन्नित्यादि। तस्मिन् द्विस्त्रिश-

तुरित्येतस्मिंस्तूपादीयमाने क्त्वोऽर्थग्रहणं चतुः शब्दस्य विशेषणं न्याय्यं भवति। तथाहि तस्य श्रुतत्वात् स एव विशेष्यते क्त्वोऽर्थे यो वर्त्तते चतुः शब्द इति। लुप्तेऽपि क्त्वोऽर्थीये चतुःशब्दः क्त्वोऽर्थे वर्त्तत इति न भवति द्विरादिग्रहणे क्रियमाणेऽपि दोषः। तस्माद् द्विरादिग्रहणं कर्त्तव्यं क्त्वोऽर्थग्रहणं तस्य विशेषणं यथा स्यात्। एतदपि न भवति तस्य प्रयोजन मिति दर्शयन्नाह प्रकृतं पदं तदन्तमिति। तदन्तं विसर्जनीयान्तम्। अतस्तस्यापि तद्विशेषणं न्याय्यम्। उपपत्तिमाह। तदन्तत्वं तु पदस्य विसर्जनीयेन विशेष्यत्वाल्लभ्यते। अपिशब्दोऽवधारणे। तस्यैवेत्यर्थः। कुत एतत्? व्याप्तिन्यायात्। विसर्जनीये हि विशेष्यमाणे चतुरो न सिध्यति। पदे तु विशेष्यमाणे सर्व्वत्र भवति। तस्मात् तदेव विशेषयिष्यामः। क्त्वोऽर्थे यद्वर्त्तते पदमिति पदे विशेष्यमाणे चतुरः षत्वं सिध्यत्येव। लुप्तेऽपि क्त्वोऽर्थीये चतुरित्येतत् पदं क्त्वोऽर्थे वर्त्तत इति। तस्मान्नार्थो द्विरादिग्रहणेनेति श्लोकवार्त्तिककारेण प्रत्याख्यातं द्विरादिग्रहणम्। सूत्रकारस्य त्वयमभिप्रायः। विसर्जनीयस्य कार्यित्वात् पदेन विशेष्यमाणत्वाच्च प्राधान्यम्। तत्रासति द्विरादिग्रहणे प्राधान्याद् विसर्जनीय एव क्त्वोऽर्थग्रहणेन विशेष्यत इति। तस्मिंस्तु सति तदुपादानसामर्थ्यात् साक्षाच्छ्रुतत्वाच्च द्विरादेरेव पदस्येतद्विशेषणम्। नतु स्वरितत्वादनुमितस्य विसर्जनीयस्य। तस्माद् युक्तं द्विरादिग्रहणं कर्त्तुमिति। एवन्त्वित्यादिना ग्रन्थेन द्विस्त्रिश्चतुर्ग्रहणं सूत्रकारमतेन स्थापयति। पूर्वेणेति। इदुदुपधस्येत्यादिना ( ८।३।४१ )। तत्रैतत् स्यात्। इदुदुपधस्येत्यस्यावकाशो निष्कृतं दुष्कृतमिति। अस्यावकाशो द्विष्करोतीत्यादौ। चतुष्करोतीत्यत्र परत्वात् पूर्वविधिं बाधित्वाऽयमेव विकल्पो भविष्यतीत्यत आह पूर्वत्रासिद्धमित्यादि। किं कारणं नास्तीत्यत आह अभावादुत्तरस्येति।

## ४४। इसुसोः सामर्थ्ये।

यद्यपि शुचिदुरुपिच्छादिर्च्छर्दिभ्य इसि ( उण्, २।२६५ जनेरुसि ( उण्, २।२७२) रित्यनुवर्त्तमानेऽर्त्तिपूर्वपियजितनिधनितपिभ्यो नित्-(उण् २।२७४) त्येवं सर्पिर्यजुरादयः शब्दा इसुस्प्रत्ययान्ता व्युत्पाद्यन्त इति दर्शनं ततश्च केनचिद्-प्राप्तएव षत्वे कुप्वोरित्यादिना ( ८।३।३७ ) जिह्वामूलीयादिषु प्राप्तेष्विदं वचनम्। अथोणादयोऽव्युत्पन्नानि प्रातिपदिकानीति (प, २२) दर्शनं ततोऽप्रत्ययविसर्ज-

नीयत्वादिदुदुपधस्य चाप्रत्ययस्येति ( ८।३।४१ ) नित्ये षत्वे प्राप्तेऽस्यारम्भः। सामर्थ्ये सतीति। कुप्वोर्निमित्तत्वेनाश्रयणात् तदादिनैव शब्दान्तरेण सह सामर्थ्यं वेदितव्यम्। सर्पिष्करोतीत्यत्र सर्पिः साधनं करोतीत्येवं साध्यां क्रियामपेक्षते। करोत्यर्थोऽपि साध्यः। साधनं सर्पिरितग्रस्ति सामर्थ्यम्। तिष्ठतु सर्पिः पिब त्वमुदकमित्यत्र सर्पिरित्यत्र पिबेत्यनेन सामर्थ्यं नास्ति। तथाहि पिबेत्येतदुदकमपेक्षते। सर्पिरित्येतत् तु तिष्ठत्विति। अथ परमसर्पिःकुण्डिकेत्यत्र विभाषया षत्वं समासे कस्मान्न भवतीत्याह सामर्थ्यमिहेत्यादि। वाशब्दोऽप्यर्थे वर्त्तते। अनेकार्थत्वादव्ययस्य। न पुनरित्यस्यैकार्थीभाव इत्यनेनोभय इत्यनेन च सम्बन्धः। अवधारणञ्चात्र द्रष्टव्यम्। व्यवच्छेदफलकत्वात् सर्ववाक्यानाम्। तदयमत्रार्थः। सामर्थ्यमिह व्यपेक्षैवाश्रीयते। न पुनरेकार्थीभावो नाप्युभयमिति। तेन समासे न भवति। व्यपेक्षालक्षणस्य सामर्थ्यस्य तत्राभावादिति भावः। ननु चोभयसामर्थ्यवाचित्वात् सामर्थ्यशब्दः सामान्यशब्दः। तत्रेदं युक्तं यदेकार्थीभावलक्षणं सामर्थ्यं नाश्रीयते। उभयन्तु कथं नाश्रयितुं युक्तम्? नहि सामान्यशब्दाः प्रकरणादिकमन्तरेण विशेषेष्ववतिष्ठन्ते। नचेह प्रकरणादिकमस्ति तथाविधं किञ्चिद् येन व्यपेक्षालक्षणमेव सामर्थ्यं ग्रहीतव्यम्। नैष दोषः। कार्य्यकालं संज्ञापरिभाषमिति ( प, ३ )। इह पदस्येति वर्त्तते। तत्र पदाधिकारादेव समर्थपरिभाषाया उपस्थानात् सामर्थ्ये लब्धे यतः सामर्थ्यग्रहणं क्रियते तस्येदं प्रयोजनम्। इष्टसामर्थ्यस्य परिग्रहो यथा स्यात्। इह च व्यपेक्षालक्षणमेवेष्टं सामर्थ्यमिति तदेवाश्रयितुं युक्तम्। नैकार्थीभावो नाप्युभयमिति।

## ४५। नित्यं समासेऽनुत्तरपदस्थस्य।

सर्पिष्कुण्डिकेति। षष्ठीसमासः। एवं धनुष्कपालमित्यादावपि। परमसर्पिःकुण्डिकेति। परमसर्पिःशब्दयोः सन्महदित्यादिना ( २।१।६१ ) कर्मधारयं कृत्वा कुण्डिकाशब्देन सह षष्ठीसमासः। अत्र परमशब्दापेक्षया सर्पिःशब्द उत्तरपदम्। तत्रस्थश्च विसर्जनीय इति षत्वं न भवति। ननु चेसुसोः सामर्थ्ये (८।३।४४) इत्यत्रेसुसोरिति प्रत्ययग्रहणमेतत्। तत्र प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्येति ( १।४।१०, वा ) नियमाद् यत एवेसुसौ विहितौ तदादेरेव ग्रहणेन भवितव्यम्। नाधिकस्य। अधिकश्च परमशब्दः। केवलाच्च सर्पेरिसप्रत्ययो

विहितः। न परमशब्दादेः। एवञ्चोत्तरपदप्रकृतिरेव नास्ति। किं प्रतिषेधे-नेत्यत आह एतदेवेत्यादि। यद्ययमिह नियमः स्यादनुत्तरपदस्थस्येति नोक्तं स्यात्। उक्तञ्च। तस्मादेतज् ज्ञापयति नायमिह नियमो भवतीति। किमस्य ज्ञापकस्य प्रयोजन मित्याह तेनेत्यादि। यस्मादयमिह नियमो न भवति तेन हेतुना वाक्येऽधिकस्यापि ग्रहणे सति परमसर्पिः करोति परमसर्पिष्करोतीत्यत्र पूर्व्वसूत्रेण षत्वविकल्पो भवति। नियमे तु सति न स्यात्। समासेऽपि तर्हि परमसर्पिः कुण्डिकेत्यत्र षत्वविकल्पेन भवितव्यम्? नियमाभावादित्यत आह व्यपेक्षा च तत्रेत्यादि। चकारोऽवधारणार्थः। इतिकरणो हेतौ। तत्रेसु-सोरित्यादौ (८।३।४४) सूत्रे सामर्थ्यग्रहणाद् व्यपेक्षैव सामर्थ्यं षत्वविकल्पस्य निमित्तं यस्मादाश्रितं तस्मात् समासे न भवति। तत्र तदभावात्।

४६। अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य।

कुप्वोः+क≍पौ चेति (८।३।३७) प्राप्ते वचनमिदम्। अयस्कार इति। कर्मण्यण् (३।२।१)। एवमयस्काम इत्यत्रापि। शीलिकामिभक्ष्याचरिभ्यो णो वक्तव्य (३।२।१, वा) इति त्वत्र न प्रवर्त्तते। तत्रोपसंख्याने ण्यन्तस्य कमेरुपा-दानात्। इह त्वण्यन्तस्य। यदायादय आर्धधातुके वेति (३।१।३१) कमेर्णिङ् नास्ति तदा कमेरण्यन्तता। अयस्कंस इति। षष्ठीसमासः। ननु कमेरेव वृतॄवदिहनिकमिकषिभ्यः स इति (उण्, ३।३४२) से कृते कंस इति भवति। तत्र कमिग्रहणेनैव सिद्धत्वात् कंसग्रहणमनर्थकम्? न। ज्ञापनार्थत्वात्। एतदनेन ज्ञाप्यतेऽस्तीदमपि दर्शनमुणादयोऽव्युत्पन्नानि प्रातिपदिकानीति (प, २३)। अयस्कुम्भइति। अयसो विकारःकुम्भ इति समानाधिकरणाधिकारे शाकपार्थिवा-दीनामुपसंख्यान मुत्तरपदलोपश्चेति (२।१।६९, वा) मध्यपदलोपी समासः। षष्ठीसमासो वा। अयस्कुम्भीति। गौरादित्वान् ङीष्। अयस्कुम्भवत् समासः। अयस्पात्रीति। पात्रशब्दः ष्ट्रन् प्रत्ययान्तः। तेन षिद्गौरादिभ्यश्चेति (४।१ ४१) ङीष्। अयस्कुशेति। अयोविकारोऽत्र न विवक्षितः। तेन जानपदादि-(४।१।४२) सूत्रेण ङीष् न भवति। अयइव कर्णावस्या इत्ययस्कर्णी। नासि-कोदरेत्यादिना (४।१।५५) ङीष्। ईकारान्तस्य कर्णशब्दस्य ग्रहणम्। अतः श्वनस्कर्णइत्यत्र सत्वेन न भवितव्यमिति कस्यचिद् भ्रान्तिः स्यात्। अतस्तां निराकर्त्तुमाह श्वनस्कर्णइत्ययं त्वित्यादि। भाः करणमिति। ल्युडन्तेन समासः।

यदि तर्हि तपरकरणं न क्रियेत भासं करोतीति दिवादिसूत्रेन (३।२।२१) टे कृते भास्कर इत्यत्रापि भवति। अत आह भास्कर इतरयं त्वितयादि। सुबोधम्।

## ४७। अधःशिरसी पदे।

अधः शिरसी इति। सुब्व्यत्ययेन षष्ठ्याःस्थाने प्रथमा। पदशब्दे परत इति। एतेन पदइति स्वरूपस्य ग्रहणम्। न पारिभाषिकस्येति दर्शयति। यदि हि पारिभाषिकस्य ग्रहणं स्यात् पदग्रहण मनर्थकं स्यात्। समासाधिकारादेव तस्य लब्धत्वादित्यभिप्रायः। शिरस्पदमिति। षष्ठीसमासः।

## ४८। कस्कादिषु च।

कुप्वोरित्यस्यायमपवादः (८।३।३७)। यथायोगमिति। इणः परो यो विसर्जनीयस्तस्य षकारः। यस्त्वन्यस्तस्य सकार इत्येष यथायोगार्थः। कस्क इति। सौ परत किमः कइति (७।२।१०३) कादेशः। वीप्सायां द्विर्वचनम्। कौतस्कुतइति। पञ्चम्यास्तसिल् (५।३।७)। कु तिहोरिति (७।२।१०४) किमः स्थाने कुभावः। पूर्ववद् द्विरुक्तिः। तत आगत (४।३।७४) इत्यणि कृतेऽव्ययानां भमात्र इति (६।४।१४४, वा) टिलोपः। भ्रातुष्पुत्र इति। यदा समासस्तदा ऋतोविद्यायोनिसम्बन्धेभ्यइति (६।३।२३) षष्ठ्या अलुक्। शुनस्कर्णइति संज्ञायाम् षष्ठ्या आक्रोश (६।३।२१) इत्यलुक्। असंज्ञायान्तु समासे श्वकर्ण (K) इत्येवं भवति। ननुच सर्पिष्कुण्डिकादीनां नित्यं समासेऽनुत्तरपदस्थस्येत्येव (८।३।४५) षकारः सिद्धः। तत् किमर्थमेषामिह पाठ इत्यतआह एषामित्यादि। पारायणेन दीव्यन्तीति पारायणिकाः। तेन दीव्यतीति (४।४।२) ठक्। भाष्ये वृत्तौ (L) चेति। अनुत्तरपदस्थस्येति किम्? परमसर्पिः कुण्डिकेति भाष्ये वृत्तौ च प्रत्युदाहृतम्। अत स्तयोरिह पाठो नाभिमतोऽमीषामिति

---

(K) श्वाकर्ण इति वा। शुनी दन्तद'ष्ट्राकर्णकुन्दवराहपुच्छपदेषु दीर्घो वाच्य इत्यस्य कात्यायनवाक्येष्वनवस्थितेर् ह्रस्वपाठोऽपि नोपेक्षितव्यः। यद्यप्यन्येषामपि दृश्यते इति (६।३।१३७) सूत्रस्यायं प्रपञ्च स्तथापि भाष्येऽस्यानुपलम्भ इति सर्व्वत्रास्य प्रयोग' सर्व्वे नानुमन्यन्ते।

(L) By वृत्तौ च again the वृत्ति is here referred to by the काशिकाकार। Neither जिनेन्द्र nor हरदत्त gives any account of it. On वृत्तौ भाष्ये तथा धातुनामपारायणादिषु it has been explained as चूर्णिभट्टिनिर्लूरादिभिः प्रणीता by the former and कुणिप्रभृतिभिः प्रणीता by the latter.

दर्शयति। अविहितलक्षण इत्यादिना कस्कादेराकृतिगणता माचष्टे। चकारोऽनुक्तसमुच्चायार्थो भवन्नेवमर्थं द्योतयति। विसर्जनीयस्थानिकयोः सकारषकारयोरुपचारइतिसंज्ञा संज्ञा विहिता।

४९। छन्दसि वाऽप्राम्रेडितयोः।

अयस्पात्रमिति षष्ठीसमासे कृते ऽतः कृकमीत्यादिना ( ८।३।४६ ) नित्ये षत्वे प्राप्तेऽनेन विकल्पो विधीयते। एवं विश्वतस्पात्रमित्यादावपि यदा समास स्तदा प्राप्ते। उरुणस्कार इत्यत्राप्यसमासत्वादेवाप्राप्तेः। उरुशब्दात् परस्याम्छब्दस्य बहुवचनस्य वस्नसाविति ( ८।१।२१) नसादेशः। नश्च धातुस्थोरुषुभ्य (८।२।२७) इति णत्वम्। अथेह हरिकेशः पुरस्तात् स नः पावकइत्यादौ च कस्मान्न भवतीत्याह हरिकेश इत्यादि।

५०। कःकरत्करतिकृधिकृतेष्वनदितेः।

वेति निवृत्तम्। करिति। कृञो लुङ्। च्लिः। तस्य मन्त्रे घसेइत्यादिना लुक् (२।४।८०)। तिप्। गुण.। रपरत्वम्। हल्ङ्यादिना (६।१।६८) तिलोपः। रेफस्य विसर्जनीयः। बहुलञ्छन्दस्यमाङ्योगेऽपीत्यड़ागमाभावः (६।४।७५)। करदिति। कृञो लुङ्। कृमृदृरुहिभ्यश्छन्दसीत्यङ्(३।१।५९)। ऋदृशोऽङि गुणइति (७।४।१६) गुणः। पूर्ववदड़ागमाभावः। अथवा लटः शत्रादेशः। व्यत्ययेन शप्। करतीति। लट्। तिप्। पूर्ववच्छप्। कृधीति। कृञो लोट्। सेर्ह्यपिच्चेति (३।४।८७) सिपो हिरादेशः। तस्य श्रुशृणुपृकृवृभ्यश्छन्दसीति (६।४।१०२) धिभावः। बहुलञ्छन्दसीति (२।४।७३) विकरणलुक्। कृतमिति। निष्ठान्तमेतत्। विश्वतस्क इति। पञ्चम्यास्तसिल् (५।३।७)। उरुणस्कृधीति। पूर्ववन्नसादेशः। णत्वञ्च। सदस्कृतमिति। सदसि कृतमिति सप्तमीति योगविभागात् समासः (२।१।४०)।

५१। पञ्चम्याः परावध्यर्थे।

अध्यर्थमिति। परेरिदं विशेषणम्। हिमवतस्परीतिः। हिमवत उपरीत्यर्थः। पञ्चमी च सुब्व्यत्ययेन षष्ठ्याः स्थाने वेदितव्या। दिवः पृथिव्या इत्यादि। सर्वतोभावे परिशब्दोऽत्र वर्त्तते।

## ५२ । पातौ च बहुलम् ।

दिवस्पातिति । पातेर् लोट् । तिप् । एरुरितुत्वम् ( ३।४।८६ ) । अदादित्वाच्छपो लुक् ।

## ५३ । षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु ।

वाचस्पतिमिति । तत्पुरुषे कृति बहुलमिति ( ६।३।१४ ) बहुलवचनाद-कृतप्यलुक् ।

## ५४ । इडाया वा ।

पूर्व्वेण नित्ये प्राप्ते विकल्पार्थं वचनम् । यद्येवं वेत्यनर्थकम् । आरम्भसाम-र्थ्यादेव विकल्पेनायं विधिर्विज्ञास्यते । नैतत् । असति वाग्रहणे पूर्वो विधिर्बहुलं विज्ञायेत । बहुलग्रहणस्य प्रकृतत्वात् । इह तु वाग्रहणे पूर्वो विधिर् नित्यो विज्ञायेतेति नानर्थकम् ।

## ५५ । अपदान्तस्य मूर्धन्यः ।

मूर्धनि भवो मूर्धन्यः । शरीरावयवाद् यत् ( ४।३।५५ ) । ये च भाव-कर्मणोरिति ( ६।४।१६८ ) प्रकृतिवद्भावः । सिषेच सुष्वापेति । षिचिर् क्षरणे । ञिष्वप् शये । धात्वादेः षः स इति ( ६।१।६४) सत्वम् । लिट् । तिप् । णल् । स्वपेर् लिट्यभ्यासस्योभयेषामिति ( ६।१।१७ ) संप्रसारणम् । अथ मूर्धन्यग्रहणं किमर्थम् ? षइत्येवोच्येत । षकारेऽपि कृते सिषेचेत्यादि सिध्यति । लघु च सूत्रं भवतीत्याह षइत्येवं सिद्धइति । यदि षइत्येवोच्येताकृढ्ं चकृढ्वइत्यत्रा-पीणः षीध्वंलुङ्लिटां धोऽङ्गादिति ( ८।४।७८ ) षत्व प्रसज्येत ? ढत्वञ्चेष्यते । तच्च मूर्धन्यग्रहणे सति सिद्धत्येव । अत्र हि सत्यान्तरतम्यात्नादानुप्रदानस्य घोषवतो महाप्राणस्य धकारस्य तादृशो ढकारो भवति । यदि पुनरिणः षीध्वमिति ( ८।३।७८ ) सूत्रे ढग्रहणं क्रियते तदा शक्यत इह सूत्रे मूर्धन्यग्रहणमकर्त्तुम् । तथाच ढग्रहणं न कृतं वैचित्र्यार्थम् । ननुच क्रियमाणेन ढग्रहणेन षकारस्य व्यवच्छिन्नत्वादत उत्तरेषु षग्रहणं कर्त्तव्यं जायेत । जायतां नाम । तथापि मूर्धन्यग्रहणात् स्वरूपग्रहणमेव लाघवं भवति । स्वरूपग्रहणे हि षण्मात्रा भवन्ति । इह ष इत्युक्ते द्वे मात्रे । उत्तरसूत्रे ढइत्युक्ते द्वे । उत्तरत्र ष

इतुग्रहे द्वे। ताः सर्व्वाः संकलिताः षग्मात्रा भवन्ति।. मूर्धन्यग्रहणे सति सप्त। तस्मात् स्वरूपग्रहणे सति लाघवं भवति। यदि तु सन्तावपि षकार-ढकारौ प्रकृतौ तथापि षकारस्य स्वरितत्वात् तस्यैवानुवृत्तिरिति कल्प्यते तदा सुतरां स्वरूपग्रहणे लाघवं भवति। अक्रढ्वमिति। ह्रस्वादङ्गादिति ( ८।२।२७ ) सिचो लोपः। अथान्तग्रहणं किमर्थम्? अपदस्य मूर्धन्यइतुच्यमानेऽपदस्य यः सकार स्तस्य मूर्धन्यो विज्ञायेत। तथाच करिष्यतीत्यादौ न स्यात्। पद-सकारत्वात्। क्व तर्हि स्यात्? करिष्यतीत्यादौ यत्र पदसंज्ञा नास्ति। अत्र हि भसंज्ञा पदसंज्ञां बाधेत। तस्मादन्तग्रहणं क्रियते।

## ५६। सहेः साड़ः सः।

साड्रूपस्येति। साड़ित्येतद्रूपमापन्नस्येत्यर्थः। जलाषाड़िति। जलं सहत इति भजो ण्विरित्यनुवर्त्तमाने ( ३।२।६२ ) छन्दसि सह (३।२।६३) इति ण्विः। अत उपधाया ( ७।२।११६ ) इति वृद्धिः। हो ढइति ( ८।२।३१ ) ढत्वम्। तस्य जश्त्वं डकारः। अन्येषामपि दृश्यत इति ( ६।३।१३७ ) दीर्घः। सकार-स्योष्मणो घोषवत आन्तरतम्यात् तादृश एव षकारः। सह डेनेत्यादि। डोऽ सप्तम्यां जनेर्ड ( ३।२।९७ ) इत्यनुवर्त्तमानेऽन्येष्वपि दृश्यत इति ( ३।२।१०१ ) डप्रत्ययः। अपिशब्दस्य सर्वोपाधिव्यभिचारार्थत्वात्। सह ड़ेन वर्त्तत इति तेन सहेति तुल्ययोग इति ( ३।२।२८ ) बहुव्रीहिः। वोपसर्जनस्येति (६।३।८२) सहशब्दस्य सभावः। सड़स्यापत्यमित्यत इञि ( ३।१।९५ ) यस्येति चेत्यकार-लोपः ( ६।४।१४८ )। आदिवृद्धौ च साड़िरित्येतद्रूपम् भवतीत्यसति सहेरित्ये-तस्मिन् मूर्धन्यः प्रसज्येत। अचः परस्मिन् पूर्वविधावित्यकारस्य ( १।१।५७ ) स्थानिवत्त्वान्नास्ति साड़ित्येतद्रूपमिति चेत्? न। पूर्वत्रासिद्धे न स्थानिवदिति ( १।१।५८, वा ) स्थानिवद्भावनिषेधात्। नन्वेवमपि नेवात्र साड़ित्येतद्रूपमस्ति-षत्वे कर्त्तव्ये बहिरङ्गाया वृद्धेरसिद्धत्वात्। इहापि तर्हि न स्याज् जलाषाड़िति। षत्वे कर्त्तव्ये बहिरङ्गाया वृद्धेरसिद्धत्वादेव। सा ह्यङ्गमाश्रित्य भवति। अङ्गसंज्ञा च प्रत्यये सति। प्रत्ययो ह्युपपदाश्रय इति व्यक्तमुपधावृद्धेर्बहिरङ्गत्वम्। षत्वं त्वन्तरङ्गं साड्भूतस्य विधीयत इत्यसिद्धं बहिरङ्गमन्तरङ्ग (प, ५१) इत्यसिद्धत्वात् षत्वं न भविष्यतीति वचनमिदमनर्थकं स्यात्। तस्मान्मा भूद् वचनस्य वैयर्थ्य-मिति नेयं परिभाषोपतिष्ठते। तुराषाहमिति। द्वितीयैकवचनान्तमेतत्।

क्वचिज् जलाषाहमिति पाठः । स त्वयुक्तः । इष्टत्वादिह षत्वस्य । तथाच वक्ष्यति सवनादिष्वश्वसनिग्रहण मनिणोऽपि षत्वं भवतीति ज्ञापनार्थम । तेन जलाषाह मश्वषाहमित्येतत् सिद्धं भवतीति (८।३।११०)। स इति किमिति? एवं मन्यते। अलोऽन्त्यपरिभाषयान्तस्य (१।१।५२) तावड् डकारेण भवितव्यम्। अन्तस्य भवन्नान्तरतम्याड् डकारः स्यात्। एतच्चायुक्तम्। डकारस्य डकारविधाने प्रयोजनाभावात्। तस्मादन्तरेणापि सग्रहणं सकारस्यैव भविष्यति। इतरस्तु सइत्येतस्मिन्नसत्यनन्त्यविकारेऽन्त्यसदेशस्येत्याकारस्य (प,१०४) हिमालिकस्या स्तरस्यात् तादृश ऋकारो मूर्धन्यः स्यादित्यनेनाभिप्रायेणाह आकारस्य मा भूदिति ।

## ५७। इण्कोः ।

इण्कोरिति द्वन्द्वैकवद्भावं कृत्वैकवचनेन निर्देशः। नुमागमस्तु सत्यपि नपुंसकत्वेऽनित्यमागमशासनमिति न क्रियते। इणिति परणकारेण प्रत्याहार ग्रहणम्। कुइति कवर्गस्य। कुतः पुनरेतदवसितमनयोर् ग्रहणं न पुनरिकारककारोकाराणामिति? व्याख्यानात्। सर्वसन्देहेष्विद मुपतिष्ठते भवति हि व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षणमिति (प,१)। वाक्षु त्वक्ष्विति। चोः कुरिति (८।२।३०) कुत्वम्। दास्यतीति । कथं पुनरिदं प्रत्युदाहरण-मुपपद्यते? यावताणुदित् सवर्णस्य चाप्रत्यय (१।१।६९) इत्यत्र हकारेण गृह्यमाणेन आकारो गृह्यत इति। अस्ति ह्याकारस्य हकारेण सह सवर्णत्वम्। तुल्यस्थानप्रयत्नत्वात्। स्थानमस्ति ह्यनयो स्तुल्यमित्यकुहविसर्जनीयाः कण्ठ्या (शि,सू) इति। प्रयत्नोऽपि तुल्यः। विवृतं करणमूष्मणां स्वराणाञ्चेति। तस्मात् सत्यपीण्कोरिति प्राप्नोत्येव मूर्धन्यः। नाज्झलाविति (१।१।१०) सवर्णसंज्ञा-प्रतिषेधादिति चेत्? न। अगृहीतसवर्णानां प्रतिषेधात्। नैष दोषः। यदयं वयस्यासु मूर्ध्नो मतुबित्यत्राकारादुत्तरस्य (४।४।१२७) सकारस्य मूर्धन्य-मकृत्वा निर्देशं करोति ततोऽवसीयते हकारो गृह्यमाणो नाकारं ग्राहयति। अन्यथा वयस्यास्विति निर्देशं न कुर्यात्। असाविति। तदोः सः सावनन्त्ययो-रिति (७।२।१०६) दकारस्य सकारः। अदस औ सुलोपश्चेत्यौत्वं (७।२।१०७) सुलोपश्च ।

## ५८। नुम्विसर्जनीयशर्व्यवायेऽपि ।

इण्कोरिति पञ्चमीनिर्देशान्निर्दिष्टग्रहणस्यानन्तर्य्यार्थत्वाद् व्यवाये सति पूर्वेण न प्राप्नोतीत्यस्यारम्भः। इण्कोरुत्तरस्य सकारस्य मूर्धन्यो भवति। एवं नुम्व्यवाये। विसर्जनीयव्यवाये शर्व्यवाये। अपीत्येभिः प्रत्येकमभिसम्बध्यते। तेन त्रीणि वाक्यानि सम्पद्यन्ते। वाक्यत्रयस्य प्रयोजनं दर्शयिष्यामः। नुम्ग्रहणं नुम्स्थानिकस्यानुस्वारस्योपलक्षणं द्रष्टव्यम्। नहि नुमा क्वचिद्व्यवायोऽस्ति। सर्वत्र नश्चापदान्तस्य झलीत्यनुस्वारविधानात् (८।३।२४)। सर्पींषीति। नपुंसकस्य झलच इति (७।१।७२) नुम्। सान्तमहतः संयोगस्येति (६।४।१०) दीर्घः। सर्पिःष्विति। वा शरीति (८।३।३६) विसर्जनीयः। सर्पिष्ष्विति। वाग्रहणाद् विसर्जनीयमुक्त्वा विसर्जनीयस्य स इति (८।३।३४) पक्षे विसर्जनीयस्य सकारः। परस्य सकारस्य षत्वे कृते पूर्वस्य ष्टुत्वम् (८।४।४१)। अथेह कस्मान्न भवति निंस्से निंस्स्वेत्यत्र आह नुमादिभिरित्यादि। एतच्च प्रत्येकं हि वाक्यपरिसमाप्तौ लभ्यते। प्रत्येकं हि वाक्यपरिसमाप्तौ त्रीणि वाक्यानि भवन्ति। नुमा व्यवायेऽपीण्कोरुत्तरस्य मूर्धन्यो भवति। एवमन्यत्रापि। नुम्विसर्जनीयशर्व्यवायेऽपीति। एतद् ग्रहणकवाक्यं तेषामेव निबन्धनम्। तत्रैकेन वाक्येन नुमा व्यवाये मूर्धन्यो विधीयते। द्वितीयेन तु विसर्जनीयव्यवाये। तृतीयेन तु शर्भिरिति। तेनेह न भवति नुमा विसर्जनीयादिसहितेन मूर्धन्यः। निंस्स इति। णिसि चुम्बने। इदित्वान्नुम्। लट्। थास्। थासः से (३।४।८०)। अदादित्वाच्छपो लुक्। निंस्स्वेति। लोट्। टेरेत्त्वम्। सवाभ्यां वामाविति एकारस्य (३।४।९१) वकारः। अथापिशब्दः किमर्थः? अव्यवायेऽपि यथा स्यादिति चेत्? नैतदस्ति। सिद्धं ह्यव्यवाये पूर्वेणैव। सिद्धे सत्यारम्भो नियमार्थो विज्ञायेत। नुमादिव्यवाय एव। तथाच सति नुमादिभिरव्यवहितादिण्कोर्न स्यात्। नैतदस्ति। यदि हि नुमादिभिर्व्यवाये मूर्धन्योऽभिमतः स्यादिण्कोर्नुम्विसर्जनीयशर्व्यवाय इत्येकमेव योगं कुर्य्यात्। न कृतवांश्च। तस्माद् योगविभागकरणसामर्थ्यात् पूर्व्वोऽव्यवायार्थो विज्ञास्यते। नार्थोऽपिशब्देन। यस्य त्वेवमर्थमवगच्छतः प्रतिपत्तिगौरवं भवति तं प्रति तत्परीहारार्थोऽपिशब्दः। सकारग्रहण एव कर्त्तव्ये शरिति प्रत्याहारग्रहणं वैचित्र्यार्थम्। नहि शकारषकाराभ्यां निमित्तकार्यिणोर्व्यवधानमस्ति।

## ५६। आदेशप्रत्यययोः।

अत्र चत्वारः पक्षाः सम्भवन्ति। आदेशप्रत्यययोरित्युभयत्र सकारापेक्षयाऽवयवयोगा वेयं षष्ठी स्यात्। आदेशावयवो यः सकारः प्रत्ययावयवो यःसकार इति। समानाधिकरणा वा। आदेशस्य सकारस्य प्रत्ययस्य सकारस्येत्यादेशो यः सकारः प्रत्ययो यः सकार इति। अथवा प्रत्यये समानाधिकरणाऽदेशेऽवयवयोगा। प्रत्ययो यः सकार आदेशावयवो यः सकार इति। तस्य विपर्य्ययो वाऽदेशो यः सकार स्तस्य प्रत्ययावयवो यस्तस्येति। कथं पुनरेका षष्ठी समानाधिकरणा वा स्यादवयवयोगा वा? विषयभेदात्। यथैव हि खरवसानयो-( ८।३।१६ ) रित्यत्रैकापि सप्तम्यधिकरणभेदाद् भिद्यते तथेहाप्येकस्याअपि षष्ठ्या विषयभेदो वेदितव्यः। तत्राद्यपक्ष आश्रीयमाणे नित्यवीप्सयोरिति ( ८।१।४ ) स्थाने द्विर्वचने कृते विसं विसं मुसलं मुसलमित्यत्रापि षत्वं प्राप्नोति। भवति ह्यत्रादेशावयवः सकारः। सर्वस्य द्वे इति ( ८।१।१ ) स्थाने द्विर्वचनपक्षोऽप्याश्रित एव। द्वितीये तु करिष्यतीत्यादौ न स्यात् सकारमात्रस्याप्रत्ययत्वात्। तृतीये तु पक्षे यावाद्ययोर्दोषौ तावुभावपि प्रसज्येते इति त्रिषु पक्षेषु दोषवत्तां दृष्ट्वा चतुर्थं पक्ष माश्रित्याह आदेशो यः सकार इत्यादि। चतुर्थे पक्षेऽप्याश्रीयमाण इन्द्रो मा वक्षत् स देवान् यक्षदित्यत्र न प्राप्नोति। प्रत्ययो ह्यत्र सकारो नतु प्रत्ययावयव इत्यत आह इन्द्रो मा वक्षदित्यादि। इतिकरणो हेतौ। यस्मादिहापि व्यपदेशिवद्भावात् प्रत्ययावयवः सकार स्तस्माद् भवति मूर्धन्यः। वक्षदिति। वहेर्लेट्। तिप्। इतश्च लोपः परस्मैपदेष्वितीकारलोपः ( ३।४।९७ )। लेटोऽडाटावित्यट। ( ३।४।९४ ) सिब् बहुलं लेटीति ( ३।१।३४ ) सिप्। हो ढः ( ८।२।३१ )। षढोः कःसीति (८।२।४१) कत्वम्। यक्षदिति। यजेश्चोः कुरिति ( ८।२।३० ) कुत्वम्। जकारस्य गकारः। तस्य चर्त्वं ककारः। शेषं यथायोगं पूर्ववत्।

## ६०। शासिवसिघसीनाञ्च।

अन्वशिषदिति। शासु अनुशिष्टौ। लुङ्। सर्त्तिशास्त्यर्त्तिभ्यश्चेति (३।१।५६) च्लेरङ्। शास इदङ्हलोरितीत्त्वम् ( ६।४।३४ )। अन्वशिषतामिति। तसस्ताम्। शिष्ट इति। ष्टुत्वम्। पूर्ववदित्त्वम्। उषित इति। वस निवासे।

वसतिक्षुधोरितीट् ( ७।२।५२ )। वच्यादिसूत्रेण ( ६।१।१५ ) सम्प्रसारणम्। जक्षतुजक्षुरिति। घस्लृ अदने। यश्चादेशो घसि स्तयोर्द्वयोरपि ग्रहणम्। ननु चादेशस्य लाक्षणिकत्वाद् ग्रहण मयुक्तम्। नैष दोषः। अनित्या हि लक्षण-प्रतिपदोक्तपरिभाषा (प,११४)। अनित्यत्वं चास्या यावत्पुरानिपातयोर् लट्-(३।३।४) तत्र निपातग्रहणेन ज्ञापितम्। भुवश्च महाव्याहृतेरित्यत्र ( ८।२।७१ ) महाव्याहृतिग्रहणेन च ज्ञापितम्। अपि चात्र घसिवसोरेकतरस्य लघ्वक्षरत्वात् पूर्वनिपाते कर्त्तव्ये शासेः पूर्वनिपातं कुर्वता शास्त्रनिरपेक्षता सूच्यते। किञ्चि-च्छात्रमत्र नापेक्षितव्यमित्यमुमर्थं दर्शयितुम्। तेन लक्षणप्रतिपदोक्तपरिभाषा (प,११४) नाश्रीयत इति। युक्तमादेशस्यापि ग्रहणमिति। अदेर्लिटि कृते लिट्यन्य-तरस्या मिति (२।४।४० ) घस्लादेशः। गमहनेत्यादिनोपधालोपः ( ६।४।९८ )। द्विर्वचनेऽचीति (१।१।५९) स्थानिवद्भावाद् द्विर्वचनम्। कुहोश्चुरिति ( ७।४।६२ ) चुत्वं झकारः। तस्यापि जश्त्वञ्जकारः। घकारस्य चर्त्वं ककारः। तस्य चाश्रयत्वात् सिद्धं भवतीति वेदितव्यम्। अक्षन्निति। लुङ्। बहुलञ्छन्दसीति (२।४।३९) घस्लादेशः। झेरन्तादेशः। संयोगान्तलोपः (८।२।२३)। मन्त्रे घसिह्वरे-त्यादिना ( २।४।८० ) च्लेर्लुक्। घसिभसोर्हलि ( ६।४।१०० ) चेत्युपधालोपः। चर्त्वं ककारः। अनादेशार्थं वचनमित्युक्ते यो देशयेद् युक्तं शासिवसोरनादेशार्थं वचनम्। अनादेशार्थं तु घसिं प्रत्ययुक्तम्। आदेशसकारत्वादिति तं प्रत्याह घसिरित्यादि। घकारादिवर्णसमुदायो हि घसिरादेशः। सकारस्तु तस्यावयवो नादेश इत्यादेशघसि मपि प्रत्यनादेशार्थं वचनम्।

## ६१। स्तौतिण्योरेव षण्यभ्यासात्।

षभूत इति। षद्दतीदं रूपमापन्न इत्यर्थः। तुष्टूषतीति। इको झलिति ( १।२।९ ) सनः कित्त्वम्। अज्झनगमां सनीति ( ६।४।१६ ) दीर्घः। द्विर्वचनम्। शर्पूर्वाः खय इति ( ७।४।६१ ) खयः शेषः। सिषेचयिषतीति। सिचे र्हेतुमति चेति ( ३।१।२६ ) णिच्। सन्। इट्। गुणायादेशौ। णौ कृतं स्थानिवद्भवतीति सिचो द्विर्वचनम्। सिषञ्जयिषतीति। सन्ज सङ्गे। सन्। द्विर्वचनम्। सन्यत ( ७।४।७९ ) इतीत्त्वम्। सुष्वापयिषतीति। स्वापेर्ण्यन्तस्य द्युतिस्वाप्योः सम्प्रसारणमित्यभ्यासस्य (७।४।६७) संप्रसारणम्। ननु च सिद्धोऽत्र मूर्धन्यः पूर्वेणैव। तत् किमर्थोऽस्यारम्भ इत्याह सिद्धे सतीत्यादि। सिसिक्षतीति।

सिचः सन् । इको झलित्यनुवर्त्तमाने ( १।२।९ ) हलन्ताच्चेति ( १।२।१० ) किच्चाद् गुणाभावः । चोः कुरिति ( ८।२।३० ) कुत्वम् । सुसूषत इति । षूङ् प्राणिगर्भविमोचने । पूर्ववत् सन इत्यात्मनेपदम् ( १।३।६२ ) । क्वचित् तिप्-प्रत्ययान्तं सुसूषतीति प्रत्युदाहरणम् । तत् षू प्रेरण इत्यस्य द्रष्टव्यम् । अथैवकार-करणं किमर्थम् ? सिद्धे सत्यारम्भसामर्थ्यादेव नियमो विज्ञास्यत इत्याह एवकार-करणमित्यादि । कः पुनः स्तौतिण्योः षण्येवेत्यस्मिन्नियमे दोषो यतः स नेष्यत इत्यत आह स्तौतिण्योः षण्येवेत्यादि । षण्येवेत्यनेनावधारणेन स्तौतिण्योः सन्-प्रत्ययेन प्रत्ययान्तरस्य व्यवच्छेदः क्रियते । स्तौतिण्यो यदि मूर्धन्यो भवति तदा षण्येव । नान्यस्मिन् प्रत्यय इति । ततश्च तुष्टावेति लिटि न स्यात् । इह तु स्यादेव सिसिचतीति । अवधारणेन षत्वस्याव्यवच्छिन्नत्वात् । अन्यत्रेत्यादि । यदि षणीति नोच्येत ततोऽविशेषेण सर्वत्र नियमः स्यात् । ततश्च नियमेन व्यावर्त्तितत्वाद् यथा सिसिचतीत्यत्र न भवत्यभ्यासादुत्तरस्य सकारस्य षत्वं तथा सिषेचेत्यत्र लिट्यपि न स्यात् । तस्मात् षणोऽन्यत्र लिड़ादौ मा भूदित्येवमर्थं षणीत्युच्यते । को विनतेऽनुरोध इति । विनत इति पूर्वाचार्यसंज्ञा षत्वणत्वयोः । अनुरुध्यत इत्यनुरोधः प्रयोजनम् । किं प्रयोजनं षत्वस्य यतः कृतषत्वस्येहोपादानं कृत-मित्यभिप्रायः । अविनते नियमो मा भूदिति । अविनत इति । अविद्यमानषत्व इत्यर्थः । सनीत्युच्यमाने सन्मात्रे नियमः स्यात् । तत्र यथा षभूते सन्यन्य-धातोरभ्यासाद् मूर्धन्यो न भवत्येवमषत्वभूतेऽपि न स्यात् । तस्मादषत्वभूते नियमो मा भूदित्येवमर्थं विनतस्य ग्रहणम् । सुषुप्सतीति । स्वपिः सन् । रुदवि-देत्यादिना ( १।२।८ ) किच्चाद् वच्यादिसूत्रेण ( ६।१।१५ ) संप्रसारणम् । कः सानुबन्धकेऽनुरोध इति । नकारोऽनुबन्धः । नकारानुबन्धस्य ग्रहणं किमर्थं किं प्रयोजन मित्यर्थः । षशब्दमात्रे नियमो मा भूदिति । षइत्युच्यमाने यो नाम कश्चित् षशब्द स्तत्र सर्वत्र नियमः स्यात् । सानुबन्धकग्रहणे तत्रैव भवति । नान्यत्र । तेन निरनुबन्धकषशब्देऽन्यस्यापि भवत्येव मूर्धन्यः । सुषुपिष इन्द्र-मिति । स्वपेर्लिट् । व्यत्ययेनात्मनेपदम् । थासः से ( ३।४।८० ) । असंयोगा-ल्लिट् किदिति ( १।२।५ ) कित्त्वम् । वच्यादिसूत्रेण ( ६।१।१५ ) संप्रसारणम् । क्रादिनियमादिट् । द्विर्वचनम् । प्रत्ययसकारस्य मूर्धन्यः । इन्द्रशब्दे परतोऽ-यादेशः । लोपः शाकल्यस्येति यकारलोपः ( ८।३।१९ ) । सुषुपिष इन्द्रमिति स्थित इह निरनुबन्धके नियमाभावादभ्यासान्मूर्धन्यो भवत्येव । अभ्यासस्य

या प्राप्तिरित्यादि। असत्यभ्यासग्रहणे धातोर्यं इण् तस्यापि नियमः स्यात्। न चेष्यते। तस्मादभ्यासाद् या प्राप्तिस्तस्या नियमो यथा स्यादित्याभ्यासग्रहणम्। प्रतीषिषतीति। प्रतिपूर्वादिणः सन्। अधीषिषतीति। अधिपूर्वादिकः सन्। अजादित्वाद् द्वितीयैकाच् सन्यङोरिति (६।१।९) द्विरुच्यते। सन्यत (७।४।७९) इतीत्त्वम्। धातूपसर्गयोरेकादेशः। अधीषिषइति प्रतीषिष इति स्थिते धातुप्राप्ति-नियमाभावात् षभूतेऽपि सनि धातोः परस्य सकारस्य मूर्धन्यो भवत्येव।

## ६२। सः स्विदिस्वदिसहीनाञ्च।

स इत्यविभक्तिकोऽयं निर्देशः। नेति प्रतिषेध एव क्रियतामित्यदेशनीयम्। लाघवकृते विशेषाभावात्। सिस्वेदयिषतीत्यादि। ञिष्विदा गात्रप्रक्षरणे। ष्वद स्वर्द आस्वादने। षह मर्षणे। एभ्यो णिच्। ततः सन्। ननुच सकारस्य सकारविधाने न कश्चिद्विशेषः। तत् किमर्थं सकार उच्यत इत्याह सकारस्येत्यादि। य एषां धात्वादेः षः सइति (६।१।६४) सकारः कृत स्तस्यादेशत्वान्मूर्धन्ये प्राप्ते वचनम्।

## ६३। प्राक् सितादड्व्यवायेऽपि।

इण्कोरिति (८।३।५७) पञ्चमीनिर्देशान्निर्दिष्टग्रहणस्यानन्तर्य्यार्थत्वाद् व्यवायेन प्राप्तीतीदमारभ्यते। अड्ग्रहणेनागमस्य ग्रहणम्। न प्रत्याहारस्य। एतच्च व्याख्यानाद् वेदितव्यम्। प्राक्सितसंशब्दनादिति। परिनिविभ्यः सेवसितसयेत्यादितः (८।३।७०)। उदाहरणान्युत्तरत्र व्युत्पादयिष्यन्ते। अव्यवधानेऽपि यथा स्यादित्येवमर्थोऽपिशब्दः। अन्यथा ह्यसति तस्मिन् यस्यापि तावत् पूर्वेण प्राप्तिरादेशसकारस्य तस्याप्यव्यवाये न स्यात्। तक्रकौण्डिन्यन्यायेन बाधितत्वात्। किं पुनरनादेशसकारस्य सेनयादिसम्बन्धिनो यस्य मूर्धन्यप्राप्तेरत्यन्तासम्भवएव।

## ६४। स्थादिष्वभ्यासेन चाभ्यासस्य।

प्राक्सितादिति वर्त्तत इति। स्थासेनयसेधसिचेत्यत्र (८।३।६५) यःस्थाशब्द स्तमादाय प्राक् (८।३।७०) सितसंशब्दनाद् ये धातवः सूत्रे निर्दिष्टा स्ते स्थादयो वेदितव्याः। अथ किमर्थमभ्यासव्यवाये षत्वमुच्यते? यावता परितिष्ठासतीत्या-

दाविण्को ( ८।३।५७ ) रादेशप्रत्ययोरित्येवं ( ८।३।५८ ) सामान्यलक्षणेन सिद्धं षत्वमित्याह अभ्यासेन व्यवाय इत्यादि। अषोपदेशो यस्तस्य सकारः पूर्व्वेण न सिध्यतीति तदर्थमभ्यासेन व्यवाये षत्वमुच्यते। अभिषिषेणयिषतीति। सेनयाऽभियातीति सत्यापपाशेत्यादिना ( ३।१।२५ ) णिच्। इष्ठवद्भावाट्टिलोपः। सन्। पूर्व्ववदिड़ागमः। अवर्णान्ताभ्यासार्थञ्चेति। षोपदेशमधिकृत्य तदुक्तम्। यद्यपि तस्य सकार आदेशो भवति तथापि नैव सामान्यलक्षणेन सिध्यति। अनिणन्तत्वादभ्यासस्य। तेन व्यवधानाच्च। अभितष्टाविति। आतऔणल ( ७।१ ३४ ) इत्यौत्वम्। पूर्ववत् खयः शेषः। षणि प्रतिषेधार्थञ्चेति। स्तौतिण्योरेवेति ( ८।३।६१) नियमेन यत् प्रतिषिद्धं व्यावर्त्तितं तत् षणि यथा स्यादित्येवमर्थं चेत्यर्थः। किं पुनस्तत् प्रतिषिद्धं षत्वम्? अथवा प्रतिषेधः प्रतिषिद्धम्? भावे निष्ठा। अर्थशब्दो निवृत्तौ वर्त्तते। यथा मशकार्थो धूम इति। तदेतदुक्तं यः षणि प्रतिषेधः स्तौतिणिभ्यामन्यस्य धातोः षत्वप्रतिषेधः कृत स्तन्निवृत्त्यर्थञ्चेति। अभिषिषिक्षतीति। अत्र यद्यभ्यासेन व्यवाये नोच्येत तदा षत्वं न स्यात्। यथा सिसिक्षतीत्यत्र। अभ्यासस्येति किमर्थमुच्यते? यावता चशब्दोऽत्र क्रियते। स चापिशब्दस्यानुकर्षणार्थः। तेनायमर्थो भवति। अव्यवाये व्यवायेऽपीति। एव मन्तरेणाप्यभ्यासस्येति वचन मुपसर्गस्थान्निमित्तादुत्तरस्याभ्यासस्य भविष्यति। सात्पदाद्योरिति ( ८।३।१११ ) प्रतिषेधान्न भविष्यतीति चेत्? न। उपसर्गात् सुनोतीत्यस्य (८।३।६५) षत्वविधानार्थस्य प्रतिषेधार्थत्वात्। तस्मिन्नेव हि प्रतिषेधे प्राप्ते तद्बाधनार्थं मुपसर्गात् सुनोतीत्यस्यारम्भः ( ८।३।६५ )। तत् कुतः प्रतिषेधस्य प्राप्तिरित्याह अभ्यासस्य त्वित्यादि। स्थादिष्वभ्यासस्यैवेति विपरीतनियमो नाशङ्कनीयः। विपरीतनियमे सत्यभ्यासव्यवाये स्थादीनां यन्मूर्धन्यविधानं तदपार्थकमेव स्यात्। अभिसुसूषतीति। षू प्रेरणे। अभिसिषासतीति। षो अन्तकर्म्मणि।

## ६५। उपसर्गात् सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम्।

षुञ् अभिषवे। षू प्रेरणे। सुवतीति शविकरणनिर्द्देशान्निरनुबन्धकग्रहणेन सानुबन्धकस्येति (प,८२) च सूङ् प्राणिगर्भविमोचने षूङ् प्रसव इत्येतयोरादादिक-

दैवादिकयोर्ग्रहणं न भवति। षो अन्तकर्मणि। ष्टुञ् स्तुतौ। ष्टभ स्तम्भे। ष्ठा गतिनिवृत्तौ। सेनयतिर्ण्यन्तः पूर्व्वमेव दर्शितः। षिध गत्याम्। षिधु शास्त्रे माङ्गल्ये च। द्वयोरपि ग्रहणम्। एतयोस्तु सेधतेर्गताविति ( ८।३।११३ ) प्रतिषेधाद् गतेरन्यत्र षत्वं भवतीति वेदितव्यम्। शपा निर्द्देशः षिधु संराद्धावित्यस्य दैवादिकस्य निवृत्तये। षिचिर् चरणे। सन्ज सङ्गे। योऽत्र षोपदेश स्तस्यादेशप्रत्यययो ( ८।३।५९ )रिति प्राप्तस्य षत्वस्य सात्पदाद्योरिति ( ८।३।१११ ) प्रतिषेधे प्राप्ते वचनम्। यस्त्वषोपदेश स्तस्यादित एवाप्राप्तिः। सुनोतीतिश्नवमादीनां श्तिपा निर्द्देशो यङ्लुग निवृत्त्यर्थः। उपसर्गस्थान्निमित्तादुत्तरस्येत्यादि। एतेनोपसर्गस्थे मूर्धन्यनिमित्ते तात्स्थ्यादुपचारेणोपसर्गशब्दोऽत्र वर्त्तत इति दर्शयति। भवति हि तात्स्थ्यात् ताच्छब्द्यं यथा मञ्चाः क्रोशन्तीत्यत्र। अभ्यषुणोदिति। लङ्। प्राक्सितादड्व्यवायेऽपीति ( ८।३।६३ ) षत्वम्। अभिषुवतीति। अचि श्नुधातुभ्रु वामित्यादिनोवङ् ( ६।४।७७ )। अभिष्यतीति। ओतःश्यनीत्योकार-(७।३।७१) लोपः। अभिष्टौतीति। अदादित्वाच्छपो लुक्। उतो वृद्धिर्लुकि हलीति (७।३।८९) वृद्धिः। अभिष्टोभत इति। अनुदात्तत्वादात्मनेपदम्। अभिषिञ्चतीति। शे मुचादीनामिति ( ७।१।५९ ) नुम्। अभिषजतीति। दंशसञ्जस्वञ्जां शपीति ( ६।४।२५ ) नकारलोपः। एवमभिष्वजत इत्यत्रापि। पूर्व्ववदात्मनेपदम्। अभिषिष्वङ्क्षत इति। अत्रापि पूर्व्ववत् सन इत्यात्मनेपदम् (१।३।६२)। दधि सिञ्चतीति। सात्पदाद्योरिति ( ८।३।१११ ) प्रतिषेधः। निःसेचको देश इति। अत्र गमिक्रियया निसो योगः। न सिचिक्रिययेति गमिमेव प्रति तस्योपसर्गसंज्ञा। न सिचिं प्रति। यं प्रति क्रियायुक्ताः प्रादय स्तं प्रति गत्युपसर्गसंज्ञका भवन्तीति (M)वचनात्। अभिसावकीयतीति। सुनोतेर्ण्वुल्। सावकमिच्छतीति सुप आत्मनः क्यच् ( ३।१।८ )। क्यचि ( ७।४।३३ ) चेतीत्वम्। सावकीय इति स्थितेऽभिना योगः। ततो लट्। अत्रापि सावकीयतिं प्रत्यभेरुपसर्गसंज्ञा। तं प्रति क्रियायोगात्। न सुनोतिं प्रति। विपर्य्ययात्। तेन षत्वं न भवति। यद्येवमभिषावयतीत्यत्रापि न स्यात्। इहापि सावयतिं प्रति विपर्य्ययादित्यत आह अभिषावयतीत्यत्र त्वित्यादि। अत्र हि प्रागेव सुनोतिरुपसर्गेण योगमनुभूय पश्चात् प्रेषणाध्येषणाद्यर्थेन योगमनुभवन् णिचमुत्पादयति। तस्मादुपसर्गविशि-

---

(M) १।४।६० सूत्रस्थवार्त्तिकानुवादोऽयम्।

ष्टायामेव क्रियायां प्रेष्यतेऽध्येष्यते वा। ततः सुनोतिमेव प्रत्यभेरुपसर्गसंज्ञेति भवत्येव षत्वम्।

## ६६। सदिरप्रतेः।

सात्पदाद्योरिति ( ८।३।१११ ) प्रतिषेधे प्राप्ते वचनम्। सदिरिति सुब्-व्यत्ययेन षष्ठ्याः स्थाने प्रथमा। निषीदतीति। षद्लृ विशरणगत्यवसादनेषु। पाघ्रादिसूत्रेण ( ७।३।७८ ) सीदादेशः। निषसादेति। सदिस्वञ्जोः परस्य लिटीति ( ८।३।११८ ) प्रतिषेधादभ्यासात् परस्य न भवति षत्वम्।

## ६७। स्तन्भेः।

स्तम्भिः सौत्रो धातुः। स यद्यजदन्त्यपराः सादयः षोपदेशा इति लक्षणत्वात् (N) षोपदेशस्तस्य ततः पूर्ववत् षत्वप्रतिषेधे प्राप्ते वचनम्। अथ सूत्रे तथा पाठादषोपदेश स्ततोऽप्राप्त एव। अभिष्टभ्नातीति। स्तन्भुस्तुन्भुस्कन्भुस्कुन्भुस्कुञ्भ्यः श्नुश्चेति (३।१।८२) चकारेण श्नाप्रत्ययः समुच्चीयते। अनिदिता-( ६।४।२४ ) मित्यनुनासिकलोपः। अप्रतेरेतदिह नानुवर्त्तत इति। एतच्च योगविभागादेव गम्यते। इतरथा हि पूर्वसूत्र एव स्तम्भेर्ग्रहणं कुर्य्यात्। स्यादेतत्। अवाच्चालम्बनाविदूर्य्ययोरिति ( ८।३।६८ ) षत्वं वक्ष्यति। ततः स्तम्भेरेव यथा स्यात् सदेर्मा भूदित्येवमर्थो योगविभाग इति। नैतदस्ति। एकयोगेऽपि यस्या लम्बनाविदूर्य्ये वृत्तिरस्ति तस्यैव भविष्यति। कस्य चैते स्तः? स्तम्भेरेव।

## ६८। अवाच्चालम्बनाविदूर्य्ययोः।

चकारः स्तम्भेरनुकर्षणार्थः। अनिणर्थोऽयमारम्भः। आलम्बन माश्रयणम्। विदूरं विप्रकृष्टम्। ततोऽन्यदविदूरम्। तत् पुनर्यदासन्नं यच्च नात्यतिदूरं तद्वेदितव्यम्। नासन्नमात्रम्। आसन्नमात्रं यद्यभिमतं स्यात् तदासन्नग्रहणमेव कुर्य्यात्। अविदूरस्य भाव आविदूर्य्यम्। अतएव निपातनान्नञ्पूर्वादपि तत्पुरुषादुत्तरो भावप्रत्ययः। ब्राह्मणादित्वाद्वा। अवष्टभ्येति। ल्यबन्तमेतत्। आश्रित्येत्यर्थः। अवष्टब्धा शरदिति। आसन्नेत्यर्थः। अथवा नात्यासन्ना नाति-

(N) ६।१।६४ सूत्रस्थभाष्यम्।

विप्रकृष्टेत्यर्थः। एष त्वर्थभेदः प्रकरणादिगम्यः। निष्ठातकारस्य झषस्तथोर्धोऽध इति धकारः (८।२।४०)। झलाञ्जश् झशीति (८।४।५३) भकारस्य बकारः। अवस्तब्धइति। अभ्यर्हित इत्यर्थः।

## ६९। वेश्च स्वनो भोजने।

चकारोऽवादित्यस्यानुकर्षणार्थः। वेरुत्तरस्य स्वनते रनादेशसकारत्वादप्राप्ते। अवशब्दात् पुनरनिणन्तत्वाच्चाप्राप्त एवेदमारभ्यते। अभ्यवहारक्रियाविशेषोऽभिधीयत इति। अनेन भोजनार्थतां दर्शयति। विष्वणतीति। सशब्दं भुङ्क्त इत्यर्थः। अनेकार्थत्वाद्धातूनां स्वनतिरत्राभ्यवहारक्रियाविशेषे वर्त्तते। यद्वेत्यादिना तमेव भोजनविशेषं दर्शयति।

## ७०। परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम्।

षेवृ सेवृ सेवनइति भ्वादावात्मनेपदिनौ पठ्येते। योऽत्र षोपदेशः स्तस्य सात्पदाद्योरिति (८।३।१११) प्रतिषेधे प्राप्ते इतरस्य (O) त्वप्राप्त एव षत्वे वचनम्। सित इति। षिञ् बन्धन इत्येतस्य पूर्ववत् प्रतिषेधे प्राप्ते वचनम्। अपरे तु स्यतेरपि ग्रहणमिच्छन्ति। तस्यापि क्ते द्यतिस्यतीत्यादिनेत्त्वे (७।४।४०) कृते सितइति रूपम्। किमर्थं पुनस्तस्य ग्रहणम्? यावतोपसर्गात् सुनोतीत्यादिना (८।३।६५) सिद्धमेव। नियमार्थम्। परिनिविभ्य एवोपसर्गेभ्यो यथा स्यात्। अन्येभ्यो मा भूदिति। सय इति सुनोतेरेरजित्यजन्तस्य (३।३।५६) ग्रहण मन्यप्रत्ययान्तनिवृत्त्यर्थम्। सिवु इति। षिवु तन्तुसन्ताने। पूर्ववत् प्रतिषेधे प्राप्तेऽस्य ग्रहणम्। षह मर्षणे। सुडिति। सुट् कात् पूर्व इति सुडागमः (६।१।१५५)। तस्यानादेशसकारत्वादप्राप्तएव षत्व उपादानम्। स्तुस्वञ्जोरुपसर्गात् सुनोतीत्यादिनैव (८।३।६५) सिद्ध उत्तरसूत्रेणाड्व्यवायेऽपि विकल्पो यथा स्यादिति ग्रहणम्। परिषीव्यतीति। हलि चेति (८।२।७७) दीर्घः। परिष्करोतीति। सम्पर्य्युपेभ्य (६।१।१३७) इत्यादिना सुट्।

---

(O) अत्र भट्टोजिः "अयं सोपदेशोऽपीति न्यासकारादयः। तद्भाष्यविरुद्धम्" इति कौमुद्याम्। मनोरमायां पुनः "यदि हि द्वौ धातू सम्मतौ स्यातां तर्हि षोपदेशलक्षणो न्यायतिरिवायमपि पर्य्युदस्येतेति भावः।" इति। So also in the case of सञ्ज; vide the न्यास of the Sutra 65 above.

## ७१ । सिवादीनां वाड्व्यवायेऽपि ।

सिवादयः प्रत्यासत्तेः सिवुसहसुट्स्तुस्वञ्जामिति पूर्वसूत्रएव सन्निविष्टा गृह्यन्ते । नतु गणसन्निविष्टाः । स्तुस्वञ्जोः प्राक्सितादड्व्यवायइति ( ८।३।६२ ) प्राप्ते शेषाणामप्राप्ते विभाषेयमारभ्यते ।

## ७२ । अनुविपर्य्यभिनिभ्यः स्यन्दतेरप्राणिषु ।

स्यन्दू स्रवणे । अस्याषोपदेशत्वादप्राप्तएव षत्व इदं वचनम् । अनुस्यन्दते मत्स्य उदकइति । अथ कथमिदं प्रत्युदाहरण मुपपद्यते ? यद्यप्राणिष्विति प्रसज्यप्रतिषेध आश्रीयते प्राणिषु न भवतीति । प्रसज्यप्रतिषेधे हि यत्र प्राणिगन्धोऽस्ति तत्र मूर्धन्येन न भवितव्यम् । इह चास्ति मत्स्यः प्राणीति षत्वं न प्रवर्त्तते । यदि तु पर्य्युदास आश्रीयते प्राणिभ्योऽन्यत्र भवतीति तदा प्राण्यप्राणिसमुदायः प्राणिभ्योऽन्यो भवतीति स्यादेवात्र प्राण्यप्राणिसमुदायात्मके विषये मूर्धन्यः ।

## ७३ । वेः स्कन्देरनिष्ठायाम् ।

स्कन्दिर् गतिशोषणयोः । अषोपदेशः । अत स्तस्याप्राप्तएव मूर्धन्ये वचनम् । विस्कन्नइति । अनिदितामित्यनुनासिकलोपः ( ६।४।२४ ) । रदाभ्यामित्यादिना ( ८।२।४२ ) नत्वम् ।

## ७४ । परेश्च ।

पृथग् योगकरणसामर्थ्यादित्यादि । यदि परेरप्युत्तरस्य स्कन्देर् निष्ठायां मूर्धन्यो नाभिमतः स्यात् ततो विपराभ्यां स्कन्देरनिष्ठायामित्येकयोगमेव कुर्य्यादित्यभिप्रायः । चकारः स्कन्देरनुकर्षणार्थः ।

## ७५ । परिस्कन्दः प्राच्यभरतेषु ।

पूर्वेण षत्वविकल्पे प्राप्ते तदभावो विधीयते । परिष्कन्द इति । पचाद्यच् । बह्वच इञः प्राच्यभरतेष्वित्यत्र ( २।४।७७ ) प्राचां ग्रहणेन भरतानां ग्रहणं न भवतीति ज्ञापितमेतत् । अतः प्राच्यत्वेऽपि भरतानां पृथग् ग्रहणम् ।

## ७६। स्फुरतिस्फुलत्योर्निर्निविभ्यः।

स्फुर स्फुर सञ्चलन इति तौदादिकौ। एतयोरपि पूर्व्ववदप्राप्तएव मूर्धन्यो विधीयते। श्तिपा निर्देशो धातुनिर्देशार्थं एव। न यङ्लुग्निवृत्त्यर्थः। नहि यङ्लुक्यभ्यासस्य खयः शेषे कृते निरादिभ्य उत्तरः सकारः सम्भवति।

## ७७। वेः स्कभ्नातेर्नित्यम्।

विष्कभ्नितेति। स्तन्भुस्तुन्भुस्कन्भुस्कुन्भुस्कुञ्भ्यः श्नुश्चेति (३।१।८२) सूत्रे पाठात् सौत्रोऽयं धातुरषोपदेशः। ततसकारस्याप्राप्तएव मूर्धन्यो विधीयते वेरुत्तरस्य। नित्यग्रहणं विकल्पनिवृत्त्यर्थम्। श्तिपा निर्देशस्य पूर्ववदेव प्रयोजनम्।

## ७८। इणः षीध्वंलुङ्लिटां धोऽङ्गात्।

इणन्तादङ्गादुत्तरेषामित्यादिनेणन्तमङ्गं षीध्वंलुङ्लिटां विशेषणम्। तेऽपि धकारस्येति दर्शयति। अथ धकारस्यैवेणन्तमङ्गं विशेषणं कस्मान्न विज्ञायत इणन्तादुत्तरो यो धकार इति? एवं मन्यते। इणन्तस्याङ्गस्य धकारविशेषणत्वे सति च्योषीढ्वं प्रोषीढ्वमित्यत्र न स्यात्। षीशब्देन व्यवधानात्। अथापि येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यादित्येकेनेति षीशब्देन व्यवधानेऽपि स्यादेव। एवमपि वचनप्रामाण्यादर्थप्रतिपत्तौ मन्दधियः प्रतिपत्तिगौरवं स्यात्। षीध्वमादिषु विशेष्यमाणेषु नायं दोष इति तेषामेवाङ्गभिणन्तं विशेषणं युक्तम्। गुणत्वादयुक्तमिति चेत् स्यादेतत्। धकारस्य कार्यित्वात् तेषां विशेष्यमाणत्वात् प्राधान्यम्। तेषान्तु विपर्य्ययाद् गुणभावः। तस्माद्धकारस्यैवेणन्तमङ्गं विशेषणं न्याय्यम्। एतच्च न। यत्र हि विशेषणेन सह सम्बन्धमनुभूय गुणः प्रधानस्य भूयांसमुपकारं कर्त्तुं समर्थो भवति तत्र विशेषणेन च सह तावदप्रधानेन प्रथमं सम्बन्धमनुभवति। पश्चात् प्रधानेन सम्बन्धम्। तथाच—

गुणः कृतात्मसंस्कारः प्रधानं प्रतिपद्यते।<br>
प्रधानस्योपकारे हि तथा भूयसि वर्त्तते ॥१॥ इति।

इह चेणन्तेनाङ्गेन षीध्वमादयो विशेषिता धकारस्य विशिष्टमुपकारं प्रतिपत्तिगौरवदोषरहितं कार्य्यविशेषं प्रतिपादयन्ति। तस्मादिण्विशिष्टेनाङ्गेन षीध्व-

मादय एव विशेष्यन्ते। तेन धकार इत्येतदेव युक्तं भवति। च्योषोढ्वं प्लोषोढ्वमिति। चुङ् प्लुङ्भ्यामाशिषि लिङ्। सीयुट्। ध्वम्। एकाच इत्यादिनेट्प्रतिषेधः (७।२।१०)। गुणः। अच्योढ्वमप्लोढ्वमिति। धि चेति (८।२।२५) सकारलोपः। चकृढ्वे ववृढ् इति। कृञो वृञो लिट्। कृसृभृवृस्तुद्रुस्रुश्रुवो लिटीत्यादिनेट्-(७।२।१३)-प्रतिषेधः। द्विर्वचनमभ्यासकार्य्यम्। ननु चानुवर्त्तत एवेहेण्को-(८।३।५७)रिति पूर्वकमिण्ग्रहणम्। कथं पुनरिण्ग्रहणं क्रियत इत्याह इण्ग्रहणमित्यादि। तद्धि पूर्वमिण्ग्रहणं कवर्गेण सह सम्बद्धम्। अतस्तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यात्। तस्मात् तन्निवृत्त्यर्थं पुनरिण्ग्रहणमिह क्रियते। पक्षीध्वं यक्षीध्वमिति। पचियजिभ्यामाशिषि लिङ्। चोः कुरिति (८।२।३०) कुत्वम्। तस्मिन् कृते कवर्गस्येह निवृत्तत्वान् मूर्धन्यो न भवति। स्तुध्वमिति। स्तौतेर्लोट्। अदादित्वाच्छपो लुक्। अस्तुध्वमिति। लङ्। परिवेविषीध्वमिति। विषॢ व्याप्तौ। विध्यादिलिङ्। सीयुट्। शप्। तस्य जुहोत्यादिभ्यः इति (२।४।७५) श्लुः। श्लाविति (६।१।१०) द्विर्वचनम्। निजां त्रयाणामित्य-(७।४।७५) भ्यासस्य गुणः। लिङः सलोपोऽनन्त्यस्येति (८।२।७९) सकारस्य लोपः। लोपो व्योर्वलीति (६।१।६६) यकारलोपः। अत्र धातुषकारस्य ईध्वंशब्दस्य च यः समुदाय स्तदात्मकः षीध्वंशब्दोऽस्ति। नत्वसाविणन्तादङ्गादुत्तरः। तथाहि वेविषित्यस्याङ्गसंज्ञा। नतु वेवोत्येतावन्मात्रस्य षकारात् पूर्वभागस्य। अर्थवद्ग्रहणादप्येतत् सिद्धमिति चोदकस्यैतद् वचनम्। गृह्यतेऽनेनेति ग्रहणम्। अर्थवतो ग्रहणमर्थवद्ग्रहणम्। तत् पुनरर्थवद्ग्रहणे नानर्थकस्येति (प, १५) परिभाषासूत्रम्। ततोऽपि परिवेविषीध्वमित्येतत् सिद्धम्। अर्थवद्ग्रहणपरिभाषयार्थवत (प, १५)। एव षीध्वंशब्दस्य ग्रहणे सत्यस्यैव ढत्वेन भवितव्यम्। नचेह षीध्वं शब्दोऽर्थवान्। किं तर्हि? तदवयव ईध्वंशब्दः। तत् किमितन्निवृत्त्यर्थेनाङ्ग ग्रहणेनेत्यभिप्रायः। अत्रोत्तरमाह एतत्तु नाश्रितमिति। एतदित्यर्थवद्ग्रहणे नानर्थकस्येति (प, १५) परिभाषावचनम्। अथवा गृह्णातीति ग्रहणम्। अर्थवतो ग्रहणमिति षष्ठीसमासः। अतोऽप्येतत् सिद्धमितीह पूर्वकएवाभिप्रायः। एतत् तु नाश्रितमित्युत्तरम्। एतदर्थवतो ग्रहणमिति नाश्रितम्। अर्थवद्ग्रहणपरिभाषाया अनाश्रयणात्। तदनाश्रयणं तु प्रतिपत्तिगौरवदोषपरिहाराय। सूत्रानुपात्तवचनाश्रयेण ह्यभीष्टमर्थं प्रतिपद्यमानस्य मन्दधियः प्रतिपत्तुः प्रतिपत्तिगौरवं स्यात्। इह त्वङ्गग्रहणे क्रियमाणे सुखत एवाभिमतोऽर्थः प्रतीयते। लिङ्ग्रहणएव कर्त्तव्ये षीध्वं-

ग्रहणमस्य रूपस्य यो धकार स्तस्य यथा स्यात्। तेनायीध्वं स्तुवीध्वमित्यत्र न भवति।

७९। विभाषेटः।

क्वचित् पूर्वेण नित्ये प्राप्ते क्वचिदप्राप्तएव विकल्पार्थं वचनम्। एतच्चोदाहरणे व्यक्तीकरिष्यामः। अत्रेण् ग्रहणमिटो विशेषणम्। सोऽपि षीध्वमादीनाम्। तेऽपि धकारस्येति दर्शयन्नाह इणः परस्मादित्यादि। ननुच षीध्वमो लिटश्चेड़पेच्चं परत्वं न सम्भवति। तस्य तद्ग्रहणेन ग्रहणात्। यद्यपि शास्त्रकृतं न सम्भवति तथापि श्रुतिकृतन्तु सम्भवत्येवेत्यदोषः। लविषीध्वं लविषीढ़मिति। अत्र षीध्वं-शब्दस्येटि कृते तस्य तद्ग्रहणेन ग्रहणादव्यवधानं नास्तीति पूर्वेण नित्यं प्राप्नोति। अलविध्वमित्यत्रापि सिच एवेड़ागमः क्रियते। न लुङइति तस्य तद्ग्रहणेना-ग्रहणात् पूर्वेण न प्राप्नोति। लुलुविढ़इत्यत्रापि लिट एवेड़ागम इति तस्य तद्-ग्रहणेन ग्रहणादसति व्यवधाने पूर्वेण नित्यं प्राप्नोति। आसिषीध्वमिति। आस उपवेशने। लिङ्। सीयुट्। धातुसकारस्येणोऽसन्निवेशादिणः परोऽत्रेड़ागमो न भवति। अथेह कथं भवितव्यमिति। किमत्रानेन विकल्पेन भवितव्य मुत नित्येन भवितव्यमित्यभिप्रायः। दीङ् क्षये। लिट्। क्रादिनियमादिट् (७।२।१३)। दीङो युड़चि क्ङितीति (६।४।६३) युट्। टेरेत्वम्। उपदि-दीयिध्व इति स्थिते केचिदाहुर्न भवितव्यमेवात्र ढत्वविकल्पेन। इणन्तादङ्गादिटो यदानन्तर्यं तस्य युटा व्यवहितत्वात्। समुदायभक्तो ह्यसौ युट् समुदायमेव न व्यवदधाति। अवयवं तु व्यवदधात्येव। अथ पूर्वेण नित्यं कस्मान्न भवति? अत्रेणन्तादङ्गादुत्तरो लिट्। तत्सम्बन्धी च धकार इति भवितव्यम्। तथा च वृत्तिकृता सूत्रार्थो दर्शितः। अथ तु नेष्यते ततो विभाषाग्रहणं पूर्वेणा-सम्बन्धनीयम्। सा च व्यवस्थितविभाषा। तेनेह न भवति। एवमन्यत्र तु नित्यमेव भविष्यति। अपरेषामित्यादि। यदाङ्गग्रहणमिह निवृत्तमिण इतीयत-देवानुवर्त्तते तदेणैव केवलेनेड़ागमो विशिष्यत इणः परो य इड़िति। एवञ्चात्र भवितव्यमेव पाक्षिकेण ढत्वेन। भवति ह्यत्र यकारादिण उत्तरोऽनन्तरश्चेड़ागमः।

८०। समासेऽङ्गुलेः सङ्गः।

सङ्ग इति षष्ठ्याः स्थाने सुब्व्यत्ययेन प्रथमा। एवमुत्तरत्रापि वेदितव्यम्।

सात्पदाद्योरिति (८।३।१११) प्रतिषेधे प्राप्तेऽस्यारम्भः। एवमुत्तरस्यापि। सञ्जनं सङ्ग इति भावे घञ्। अङ्गुलिषु सङ्गः संश्लेषोऽस्या अस्तीति बहुव्रीहिः।

## ८१। भीरोः स्थानम्।

भीरुष्ठानमिति। अधिकरणसाधनेन स्थानशब्देन षष्ठीसमासः। पृथग्योगकरणं यथासंख्यभावनिवृत्त्यर्थम्। एकयोगे हि निमित्तनिमित्तिनोः साम्येऽपि सत्यस्वरितत्वाद् यथासंख्यभावः स्यात्। अथ तदर्थं स्वरितत्वं प्रतिज्ञायते ? ततो योगविभागकरणं वैचित्र्यार्थम्।

## ८२। अग्नेःस्तुत्स्तोमसोमाः।

पदादिसकारत्वात् प्रतिषेधे प्राप्तेऽयमारभ्यते। एवमुत्तरत्रापि। स्तोमसोमशब्दौ स्तौतिसुनोतिभ्यामर्त्तिस्तु-सु-हु-सृ-धृक्षिक्षुभायावापदियक्षिनीभ्यो मन्निति (उण्, १।१३७) मन्प्रत्ययं विधाय व्युत्पाद्येते। अव्युत्पत्तिपक्षे त्वादित एवाप्राप्तेऽनयोः षत्वं विधीयते। अग्निष्टुदिति। अग्नावुपपदे स्तौतेः क्विप्। ह्रस्वस्येत्यादिना (६।१।७१) तुक्। उपपदसमासः। अग्निष्टोमइति। षष्ठीसमासः। अग्निषोमाविति। द्वन्द्वः। ईदग्नेः सोमवरुणयोरितीत्त्वम् (६।३।२७)। अग्नेर्दीर्घात् सोमशब्दस्य षत्वमिष्यते। एतच्च विभाषेटइत्यतो (८।३।७९) विभाषाग्रहणानुवृत्तेर्लभ्यते। नच तदनुवृत्तावतिप्रसङ्गः स्यात्। व्यवस्थितविभाषाविज्ञानात्।

## ८३। ज्योतिरायुषः स्तोमः।

ज्योतिःष्टोम आयुःष्टोमइति। षष्ठीसमासः। सकारस्य रुत्वम्। विसर्जनीयः। वा शरीति (८।३।३६) पक्षे सकारः। तस्य तकारस्य च ष्टुत्वम्।

## ८४। मातृपितृभ्यां स्वसा।

मातृपितृभ्यामिति। अभ्यर्हितं पूर्वं निपततीति (२।२।४४, वा) मातृशब्दस्य पूर्वनिपातः। अनादेशसकारत्वादप्राप्तस्यैव षत्वस्येदं विधानम्। मातृष्वसा पितृष्वसेति। षष्ठीसमासः।

## ८५ । मातुः पितुर्भ्यामन्यतरस्याम् ।

पूर्वेणाप्राप्ते विभाषेयमारभ्यते। मातृपितृभ्यां केवलाभ्यां प्रकृतिप्रत्ययसमुदाययोर्मातुःपितुरित्येतयोरन्यत्वात्। मातुःष्वसा पितुःष्वसेति। विभाषा स्वसृपत्योरित्यलुक् ( ६।३।१९ ) षष्ठ्याः। उत्तरपदस्य रेफान्तस्य ग्रहणात् तत्साहचर्य्यात् पूर्वपदस्यापि रेफान्तस्य ग्रहणं विज्ञायत इत्याह मातुः पितुरिति रेफान्तयोरित्यादि। यद्येवं रेफस्य विसर्जनीये कृते तस्य वा शरीति ( ८।३।३७) पक्षे सकारे कृते विसर्जनीयान्तात् सकारान्ताच्च न प्राप्नोतीत्याह एकदेशविकृतस्येत्यादि। यदि रेफान्तयोर् ग्रहणं न स्यात् ततो यदि विसर्जनीयान्तयोरुपादानं क्रियेत तदा तथाभूताभ्यामेव स्यात्। न सकारान्ताभ्याम्। निर्देशस्य तन्त्रत्वात्। अथापि सकारान्तयोर्ग्रहणं स्यादेवमपि तथाभूताभ्यामेव स्यात्। न विसर्जनीयान्ताभ्याम्। रेफान्तयोस्तु ग्रहणे स्वसृशब्दे परतो नियोगतो विकारेण भवितव्यमिति निर्देशस्य तन्त्रता नास्ति। तेन विसर्जनीयान्ताभ्यां सकारान्ताभ्याञ्च षत्वं सिध्यति।

## ८६ । अभिनिसः स्तनः शब्दसंज्ञायाम् ।

अनादेशसकारत्वादप्राप्त एव षत्वे वचनम्। ष्टन शब्दइति भौवादिकस्य ग्रहणम्। स्तन गदी देवशब्द इत्येतस्य चौरादिकस्य तु न। तस्य ग्रहणे सत्यदन्तत्त्वादत उपधाया इति (७।२।११६) न वृद्धिर्लभ्यते। अभिनिस इत्येताभ्यां समस्ताभ्यामिवेदं षत्वं विधीयते। नहि व्यस्ताभ्यामुत्तरस्य तस्य स्तनतेर् मूर्धन्ये कृते शब्दसंज्ञा गम्यते। अभिनिसइत्येतस्मादित्यादि। अभिनिसिति योऽयमुपसर्गसमुदाय स्तस्मादित्यर्थः। अभिनिष्टानइति। अभिनिस्तन्यतेऽनेन। अकर्त्तरि च कारके संज्ञायामिति ( ३।३।१९ ) घञ्। प्रादिसमासः। ननुच समानाधिकारादेवाभिनिःस्तनतीत्यत्र न भविष्यति। किमेतन्निवृत्त्यर्थेन शब्दसंज्ञाग्रहणेनेत्यतआह समासइत्यतः प्रभृति निवृत्तमिति।

## ८७ । उपसर्गप्रादुर्भ्यामस्तिर्यच्परः ।

इदमपि पूर्ववदप्राप्ते वचनम्। यश्चाच तौ यचौ। यचौ परौ यस्मात् स यच्परः। प्रादुःशब्दस्यानुपसर्गत्वात् पृथग् ग्रहणम्। अभिषन्तीति। अस भुवि। अदादित्वाच्छपो लुक्। श्नसोरल्लोप ( ६।४।१११ ) इत्यकारस्य।

अभिष्यादिति। लिङ्। अनुसृतमिति। सृ गतौ। ननु च सकारस्य प्रकृतत्वात् तमेव प्रत्युपसर्गत्वमाश्रीयते। न चानुसृतमित्यत्र यः सकार स्तं प्रत्यनुशब्दस्योपसर्गसंज्ञा। तन्मात्रस्याऽक्रियावचनत्वात्। क्रियावचनञ्च प्रति प्रादीना सुपसर्गसंज्ञाविधानात्। यं प्रति क्रियायुक्ताः प्रादयस्तं प्रति गत्युपसंज्ञका भवन्तीति वचनात्। तस्मादसत्यप्यस्तिग्रहणे नैवात्र मूर्धन्यः प्रसज्येत। तत् किमस्तिग्रहणेन ? तत्रैतत् स्यात्। असति तस्मिन् प्रादुः शब्दादुत्तरस्य धात्वन्तरसकारस्य मूर्धन्यः प्राप्नोति। अत स्तन्निवृत्त्यर्थमस्तिग्रहणम्। एतच्च नास्ति। प्रादुःशब्दस्य नियतविषयत्वात्। स हि सर्वदा कृभ्वस्तिविषय एव प्रयुज्यते। तत् कुतोऽयं प्रसङ्ग इति यो देशयितुकाम स्तदीयं मतमथेत्यादिना दर्शयति। प्रत्युदाहरणान्तरं वक्तुकाम आह अन्यत्रेति। अनुसृतमित्यत्र प्रत्युदाहरणे। तथापीति। एवमपीत्यर्थः। एतेनैतद्दर्शयति। एवमपि कल्प्यमानेऽस्तिग्रहणस्यानुसेय इत्येतत् प्रत्युदाहरण मस्त्येव। तस्मात् कर्त्तव्य मेवास्तिग्रहणम्। षूङ् प्राणिगर्भविमोचन इत्येतस्मादनुपूर्वात् क्विप्। अनसूत इत्यनुसूः। तस्यापत्यं शुभ्रादित्वाड्ढक् ( ४।१।१२३ )। एयादेशः। ढे लोपोऽकद्वा ( ६।४।१४७ ) इत्युकारलोपः। अत्र सकारं प्रत्यनुशब्दस्योपसर्गसंज्ञेत्यसत्यस्तिग्रहणे स्यादेव मूर्धन्यः।

## ८८। सुविनिर्दुर्भ्यः सुपिसूतिसमाः।

सुपिसूत्योः सात्पदाद्योरिति ( ८।३।१११ ) निषेधे प्राप्ते। समइत्येतदव्युत्पन्नं प्रातिपदिकं सर्वादिषु पठ्यते। तेनास्यादित एवाप्राप्ते षत्वमुच्यते। अथ तु षम ष्टम अवैकल्य इत्यस्य पचाद्यचि समशब्दो व्युत्पाद्यते तथाच सति तस्यापि प्रतिषेधे प्राप्तइदं वचनम्। सुषुप्तइति। ञिष्वप् शये। निष्ठा। वच्यादिसूत्रेण ( ६।१।१५ ) संप्रसारणम्। एकाच ( ७।२।१० ) इतीट् प्रतिषेधः। सुषूतिरिति। सूतेः सूयतेर्वा स्त्रियां क्तिन् ( ३।३।९४ )। सूतीति स्वरूपग्रहणम्। यत्रास्यैतद्रूपं नास्ति तत्र न भवति सुसूतं विसूतमिति। कथं पुनर्ज्ञायते स्वरूपग्रहणमेतत्र पुनः सूते र्लुग्विकरणस्य ग्रहणमिति ? भवति तस्यापीक्श्तिपौ धातुनिर्देश इति ( ३।३।१०८, वा ) श्तिपि कृते सूतिरित्येष निर्देशः। समशब्देन साहचर्य्यात् तस्य चेह स्वरूपं गृह्यत इति। यद्यपि सुपिना धातुना साहचर्य्याद् धातोरपि ग्रहणं युक्तं तथापि शब्दपरविप्रतिषेधेन शब्दपरं यत् साहचर्य्यं तद्बलीय इति

समशब्देनैव साहचर्य्यात् स्वरूपमेव गृह्यते। न सुपिना धातुना साहचर्य्याद्धातुः। अथ किमर्थं सुपेः कृतसंप्रसारणस्य षत्व मुच्यत इत्यत आह सुपेः षत्वं स्वपेर्मा भूदित्यादि। सुस्वापो विस्वापः सुस्वपनं निःस्वपनं दुःस्वपन मित्यत्राकृतसंप्रसारणस्य स्वपेः षत्वं मा भूदित्येवमर्थं स्वपेः कृतसंप्रसारणस्य षत्वमुच्यते। यद्येवं विसुष्वापेति केन नेति ? स्वपेर्लिट्। तिप्। णल्। द्विर्वचनम्। लिट्यभ्यासस्योभयेषामिति (६।१।१७) संप्रसारणम्। कृतसंप्रसारणस्य स्वपेरभ्यासस्येति केन हेतुना षत्वं न भवति ? नास्त्येव स हेतुर्येन हेतुना विसुष्वापेत्यत्र न भविष्यतीत्यभिप्रायः। परस्य तु सकारस्यादेशप्रत्यययोरित्यनेन षत्वं भविष्यत्येव (८।३।५९)। न तद्विषयेयं चिन्ता। हलादिशेषान्न सुपिरिति। एतेन येन हेतुना षत्वमत्र न भवति तं दर्शयति। लिट्यभ्यासस्योभयेषा (६।१।१७)-मित्येतस्माद्धि सम्प्रसारणात् परत्वाद् हलादिशेषे कृते यद्यपि पश्चात् संप्रसारणं क्रियते तथापि सुपइति रूपं न भवति। पकारस्याभावात्। तस्मात् षत्वन्न भविष्यतीत्यभिप्रायः। तेन सुप इत्यस्य रूपस्याभावः षत्वाभावे हेतुरुक्तः। पूर्वपक्षवादिना तु प्राक् संप्रसारणे कृते पश्चाद् हलादिशेषेण पकारो निवृत्त इति मन्यमानेन देशितं ननु पश्चादपि पकारस्य निवृत्तिः। नैवायं सुपिर् भवति। पकाराभावात्। तत् किमिति देशितम् ? एकदेशविकृतस्यानन्यत्वात् (प, ७८) सुपिरेवायमित्यभिप्रायः। यदा तु परत्वाद्धलादिशेषे कृते संप्रसारणं भवति तदैकदेशविकृतस्यानन्यत्वे सुपिरयं न भवति। नहि तदा सुपेरेव विकारः। किं तर्हि ? स्वपेः। अत आह इष्टं पूर्वं संप्रसारणमिति। हलादिशेषादिदं पूर्वं संप्रसारणमेवेष्यते। तथाह्युभयेषां ग्रहणं तत्रैवमर्थं कृतम्। परमपि हलादिशेषं बाधित्वा पूर्वं संप्रसारणमेव यथा स्यादिति। तस्माद् हलादिशेषात् पूर्वमभ्यासस्य संप्रसारणेनैव भवितव्य मित्ययुक्तं हलादिशेषान्न सुपिरिति। ततश्च विसुष्वापेति केन नेत्येतद् देश्यं तदवस्थमेव। एवं तर्हि स्थादिष्वभ्यासेन चाभ्यासस्येति (८।३।६४) योऽयन्नियमः स्थादीनामिवाभ्यासस्य षत्वं प्रवर्त्तते नान्येषामित्येतस्मान्नियमाद् विसुष्वापेत्यत्राभ्यासस्य षत्वं न भवतीत्यत आह स्थादीनामित्यादि। स्थादिनिमित्तको नियमः स्थादिनियमः स्थादिभिर्व्यपदिश्यते। स्थादिनिमित्तकत्वन्तु नियमस्य तानुपादाय विधानात्। स्थादीनां यो नियमः सोऽत्र न प्रवर्त्तते। कथं विसुष्वापेत्यत्राभ्यासस्य षत्वं न भविष्यति ? कस्मात् पुनः स्थादिनियमोऽत्र न प्रवर्त्तत

इत्यत आह प्राक् सितादिति । तेषु पुन नियमविधानादिति शेषः । स्थादिष्व-भ्यासेन चाभ्यासस्येत्यत्र (८।३।६४) प्राक् सितादिति वर्त्तते । तेन सेर्वसितेत्यत्र (८।३।७०) सितसंशब्दनाद् ये प्राग् व्यवस्थिताः सुनोतिसुवतिस्यतिस्तोभति-प्रभृतय स्तेष्वेवायन्नियमः । अतस्तेषामेवाभ्यासस्य षत्वं व्यावर्त्तयति । नान्येषा-मिति दर्शयति । सिद्धान्तवादिनस्तु सामान्येन नियम इत्यभिप्रायः । स्यादेतत् । सुपिरपि प्राक् सितादेव व्यवस्थितः । तेनात्रापि नियमः प्रवर्त्तिष्यत इत्यत आह उत्तरः सुपिरिति । सितादित्येतदपेक्षते । सितशब्दादुत्तरः सुपिः पठ्यते । तत् कुतस्तत्र नियमस्य प्रवृत्तिः । अतो नियमेन तदभ्यासस्य षत्वं न व्यावर्त्त्येत इति विसुष्वापेति केन नेत्यविकलं देश्यमेव । एवं तर्ह्यर्थवद्ग्रहणे नानर्थकस्येत्यर्थवतः (प,१५) सुपेर् ग्रहणात् । इह च तस्यानर्थकत्वात् षत्वं न भविष्यति । न ह्यत्र सुपिरर्थवान् । तथाहि यदा तावत् स्थाने द्विर्वचनं तदा समुदाय एवार्थवान् । अवयवस्त्वनर्थकएव । यदा तु द्विष्प्रयोगो द्विर्वचनं तदापि शब्दस्यावृत्तिः । नार्थस्य । तेन कृतेऽपि द्विर्वचने समुदायस्यैवार्थवत्त्वम् । नतु केवलायाः प्रकृतेः । नापि केवलाभ्यासस्येत्यतआह अनर्थके विषुषुपुरिति । कथं षत्वमिति वाक्य-शेषः । यद्यर्थवतः सुपेर्ग्रहणाद् विसुष्वापेत्यत्र षत्वं न भवत्येवं सति विषुषुपुरित्यत्र षत्वं न भविष्यति । अत्रापि ह्यनर्थकत्वान्नैव षत्वेन भवितव्यं यथा विसुष्वापेत्य-त्रेत्यत आह षुपिभूतो द्विरुच्यत इति । षुपीत्येतद्रूपमापन्नो द्विरुच्यतइत्यर्थः । स्वपेर् लिट् । उस् । द्विर्वचनम् । असंयोगाल्लिट् किदिति (१।२।५) कित्त्वम् । वच्यादिसूत्रेण (६।१।१५) संप्रसारणम् । अनेन षत्वम् । विषुप उस् इति स्थित आन्तरतम्यात् षुप्इतेरतस्य द्विर्वचनम् । एवं षुपिभूते द्विरुच्यमाने विषुषुपुरित्यत्रा-भ्यासस्य षत्वं सिध्यति । विसुष्वापेत्यत्र षुपिभूतस्य द्विर्वचनं नास्ति । षुपि-भूतस्याभावात् । तदेवं कुतः संप्रसारणे हि कृते षुपिभूतेन भवितव्यम् ? णलः कित्त्वाभावात् संप्रसारणमेव नास्ति । कुतः पुनः षत्वम् । तस्मात् सुपीतेरतदेव द्विरुच्यते । यद्यप्युत्तरकालं संप्रसारणे कृते सुपीतेरवं भवति तथाप्यनर्थकत्वात् तस्य मूर्धन्यो न भवतीति । तदेवं यदि कृतसंप्रसारणस्य षत्वं भवति विसुष्वा-पेति केन नेति देश्यमर्थवद्ग्रहणपरिभाषामाश्रित्य (प, १५) परिहृतम् । ननु च द्विर्वचने कर्त्तव्ये षत्वमसिद्धम् । तत् किमुच्यते षुपिभूतो द्विरुच्यतइतरत आह पूर्वत्रासिद्धीय इत्यादि ।

## ८९ । निनदीभ्यां स्नातेः कौशले ।

ष्णा शौचे । अस्य पूर्ववत् षत्वप्रतिषेधे प्राप्तेऽस्यारम्भः । कौशलं नैपुण्यम् । निष्णातः कटकरणइति । तत्र कुशल इति गम्यते । नदीष्ण इत्यत्रापि नदी स्नाने कुशल इति । आतो लोप इटि ( ६।४।६४ ) चेत्याकारलोपः । उपपद-समासः । नदीस्नात इत्यत्रापि सप्तमीति ( २।१।४० ) योगविभागात् समासः ।

## ९० । सूत्रं प्रतिष्णातम् ।

प्रतिष्णात मिति । पूर्ववत् षत्वप्रतिषेधे प्राप्ते निपात्यते । स्नातेरित्यनुवृत्तौ सत्यां सूत्रे प्रतेरित्युच्यमाने कामं प्रतिष्णातमिति सिध्यति । त्वजादिष्वपि प्राप्नोति । तस्मादतिप्रसङ्गनिवृत्त्यर्थं प्रतिष्णात मिति निपातन माश्रितम् ।

## ९१ । कपिष्ठलो गोत्रे ।

यदि ष्ठल स्थान इत्ययं धातुरजदन्त्यपराः सादयः षोपदेशा इति लक्षणात् ( ६।१।६४, भा ) षोपदेशस्तस्य चैतद्रूपं भवति तदा पूर्ववत् प्रतिषेधे प्राप्ते वचनम् । अथ गणे तथाऽपाठादषोपदेश इति लक्षणादषोपदेशोऽव्युत्पन्नो वा स्थलशब्दस्तदादिन एवाप्राप्ते षत्वे वचनम् । गोत्रविषय इति । गोत्रविषयश्चेत् कपिष्ठलशब्दो भवतीत्यर्थः । गोत्रग्रहणेन चेह लौकिकं गोत्रं गृह्यते । न पारि-भाषिकम् । लोके च ये पुरुषा अपत्यसन्ततेः प्रवर्त्तयितारो यत्पूर्विकापत्यसन्ततिर्भवति ते गोत्रमित्यभिधीयन्ते । कश्च कपिष्ठलशब्दो गोत्रविषयः ? यः संज्ञाशब्दः प्रवराध्याये पठ्यते । पारिभाषिकं गोत्रविषयत्व मपत्यप्रत्ययमन्तरेण न सम्भव-तीति पारिभाषिकगोत्रस्येहाग्रहणम् । कपिष्ठलो नामेति । स्थलतीति स्थलः । पचाद्यच् । कपिरिव स्थलः कपिष्ठलः । उपमितं व्याघ्रादीत्यादिना (२।१।५६) समासः । व्युत्पत्तिमात्रमेवैतत् कृतम् । न त्ववयवार्थो विद्यते । नामशब्दः संज्ञाशब्दतां कपिष्ठलशब्दस्य दर्शयितुं प्रयुक्तः । कपिष्ठलशब्दस्याप्रसिद्धत्वात् तदपत्येन प्रसिद्धेन तमाख्यातु माह यस्य कापिष्ठलिरिति । यस्य कापिष्ठलिरपत्यं स कपिष्ठलो नामेत्यर्थः । कपिस्थलमिति । कपीनां स्थलं स्थानमित्यर्थः ।

## ९२ । प्रष्ठोऽग्रगामिणि (P) ।

प्रष्ठशब्दस्यानिणन्तत्वादप्राप्तमेव षत्वं विधीयते। अग्रे गन्तुं शीलं यस्य सोऽग्रगामी पुरःसर उच्यते। प्रतिष्ठत इति प्रष्ठः। सुपि स्थ इति ( ३।२।४ ) कप्रत्ययः। पूर्ववदकारलोपः।

## ९३ । वृक्षासनयो र्विष्टरः ।

विष्टर इति। स्तृञ् आच्छादन इत्यस्याजन्त्यपरस्यापि षोपदेशत्वं नास्ति। स्पिस्सृजिस्तृस्त्यासेकसृवर्जमिति वचनात् ( ६।१।६४,भा )। तेन नाप्राप्तमेव षत्वं निपात्यते। विस्तीर्यत इति विष्टरः। ऋदोरप् ( ३।३।५७ )। रूढिशब्दोऽयं यथाकथञ्चिद् व्युत्पाद्यते। नात्रावयवार्थे प्रत्यभिनिवेशः कर्त्तव्यः।

## ९४ । छन्दोनाम्नि च ।

छन्दोग्रहणेन बृहत्यादीनां ग्रहणम्। नहि वेदस्य विष्टार इति नाम। किं तर्हि? बृहत्यादीनां वृत्तानाम्। ननु विष्टर इति प्रकृतम्। तत् कथं विष्टार इति निपातयितुं शक्यत इत्याह विपूर्वादित्यादि। प्रे स्त्रोऽयज्ञ इत्यतः (३।३।३२) स्त्र इत्यनुवर्त्तमाने प्रथने वावशब्द इत्यतो ( ३।३।३३ ) वाविति छन्दोनाम्नि चेति ( ३।३।३४ ) स्तृणातेर्घञ् विधीयते। न च घञि विष्टर इत्येतद्रूपमापद्यते। तस्माद् यद्यपि विष्टर इति प्रकृतं तथापि निपात्यते। ननु च घञपि विहितेऽस्मादेव निपातनाद् ह्रस्वत्वे कृते विष्टर इति भवत्येव। तत् कथं विष्टार इति शक्यं विज्ञातुम्? छन्दोनाम्नि चेति वचनात्। नहि विष्टर इति छन्दोनाम। किं तर्हि विष्टार इति।

## ९५ । गवियुधिभ्यां स्थिरः ।

स्थिरशब्दोऽयमजिरशिशिरेत्यादिसूत्रेण (उण्, १।५३) यदि तिष्ठतेः किरच्प्रत्ययान्तो निपात्यते तदा मातृपदाद्योरिति ( ८।३।१११ ) प्रतिषेधे प्राप्ते

---

(P) In many of my MSS अग्रगामिणि is spelt with the cerebral ण though a few have the dental न here, probably taking it under क्षुभ्नादि. The काशिकाकार cites अग्रगामिणी in कुमति च ( 4. 4. 13 ). This likely leads the former to retain the cerebral ण in the word.

वचनम्। अथाव्युत्पन्नमेव प्रातिपदिकं तदादित एवाप्राप्ते वचनम्। गविष्ठिरो युधिष्ठिर इति। संज्ञायां समासः। अथ कथं गविष्ठिर इत्यत्र सप्तम्या अलुक्। हलदन्तात् सप्तम्याः संज्ञायामिति ( ६।३।९ ) चेत्? न। गोशब्दस्याहलन्तत्वादित्यत आह गोशब्दादित्यादि।

## ९६। विकुशमिपरिभ्यः स्थलम्।

सात्पदाद्योरिति ( ८।३।१११ ) प्रतिषेधे प्राप्ते वचनम्। यथा चैवं तथा कपिष्ठलो गोत्र ( ८।३।९१ ) इत्यत्र प्रतिपादितम्। विष्ठलं कुष्ठलमिति। स्थलशब्दः पचाद्यजन्तः। तेन यदा विकुशब्दौ निपातौ समस्येते तदा कुगतिप्रादय इति ( २।२।१८ ) समासः। अथानिपातौ पक्षिपृथिवीवचनौ तदा षष्ठीसमासः। शमिष्ठलमिति। शमीनां स्थलमिति समासः। ङ्यापोः संज्ञाछन्दसोर्बहुलमिति ( ६।३।६३ ) ह्रस्वः। ह्रस्वोच्चारणं दीर्घपक्षे मा भूदित्येवमर्थम्। अन्यथा हि बहुलवचनाद् दीर्घोऽपि पक्षे विज्ञायेत। परिष्ठलमिति। प्रादिसमासः।

## ९७। अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्क्वङ्गुमञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः स्थः।

येषामत्रोपपदसमासे कृते स्थलशब्द उत्तरपदे सप्तम्या अलुग् भवति ये चेणन्तास्तेभ्य इणकोरित्यनेन ( ८।३।५७ ) प्राप्तस्य षत्वस्य पदादिलक्षणप्रतिषेधे प्राप्ते वचनम्। बर्हिःशब्दादपि नुम्विसर्जनीयशर्व्यवायेऽपीति ( ८।३।५८ ) पदादिलक्षण एव प्रतिषेधे प्राप्ते वचनम्। शेषेभ्य स्त्वप्राप्त एव। स्थइति धातुग्रहणं स्यात्? स्वरूपग्रहणं वा? यद्यातो धातोरित्याकारलोपं ( ६।४।१४० ) कृत्वा तिष्ठतेः षष्ठ्या निर्देश स्ततो धातुग्रहणम्। अथ सुब्व्यत्ययेन षष्ठ्याः स्थले प्रथमां कृत्वा स्थशब्दस्य कप्रत्ययान्तस्य निर्देश स्तदा स्वरूपग्रहणम्। तदात्र यदि धातोरिह ग्रहणं स्यात् तदा गोस्थानमित्यादावपि प्रसज्येतेत्यालोच्य स्वरूपग्रहणं दर्शयन्नाह इत्येतेभ्य इत्यादि। उदाहरणेषु गोष्ठइत्यत्र गोशब्दे प्रथमान्त उपपदे घञर्थे कविधानम्। स्थास्नापाव्यधिहनियुध्यर्थं घञर्थे कविधानमिति ( ३।३।५८, वा ) गावस्तिष्ठन्त्यस्मिन्नित्यधिकरणे कप्रत्ययः। अपतिष्ठतीत्यर्थेऽपष्ठ इत्यत्र सुपि स्थ इति ( ३।२।४ ) कप्रत्ययः। आपष्ठइति क्वचित् पाठः।

तत्रान्येषामपि दृश्यत इति (६।३।१३७) दीर्घः। अन्यत्रापि सर्वत्र सुपि स्थ (३।२।४) इति कप्रत्ययः। यदि कुशब्दो निपात स्तदा प्रथमान्त एतस्मिन्नुपपदे कविधिः। अथानिपातस्तदा सप्तम्यन्ते। अम्बादिषु सप्तम्यन्तेष्वेव। अम्बष्ठ इति। ङ्यापोः संज्ञाच्छन्दसोर्बहुलमिति (६।३।६३) ह्रस्वः। स्थ इति स्वरूपग्रहणादन्येषां न प्राप्नोतीतीदमाह स्थास्थिन्स्थॄणामित्यादि। एषामपि षत्वं वक्तव्यं व्याख्येय मित्यर्थः। तत्रेदं व्याख्यानम्। सुषामादेराकृति-गणत्वादेषां षत्वं भविष्यतीति। सव्येष्ठेति। सव्ये तिष्ठतीति दिवेर्ऋरित्य-नुवर्त्तमाने (उण्, २।२५६) नयते र्डिच्चेति (उण्, २।२५७ डिति च सव्ये स्थश्छन्दसीति (उण्, २।१५८) सव्यशब्द उपपदे तिष्ठते ऋं प्रत्ययः। डित्त्वाट्टिलोपः। तत्पुरुष इत्यादिना (६।३।१४) सप्तम्या अलुक्। सव्येष्ठृ इति स्थित ऋदुशनस् पुरोदंशोऽनेहसामित्यादिनानङ् (७।१।९४)। सर्व्वनाम-स्थाने चासम्बुद्धाविति (६।४।८) दीर्घः। परमेष्ठीति। गमेरिनि-(उण्,४।४३) रित्यनुवर्त्तमाने परमे स्थः किच्चेतीनिप्रत्ययः (उण्, ४।४५०)। कित्त्वादा-लोपः। परमेष्ठिन्निति स्थिते सौ चेति (६।४।१३) दीर्घः। सव्येष्ठ सारथिरिति। पूर्ववत् सव्येष्ठृ शब्दं साधयित्वा सारथिशब्देन कर्मधारयः।

## ९८। सुषामादिषु च।

क्वचित् षत्वप्रतिषेधे प्राप्ते क्वचिदादित एवाप्राप्ते मूर्धन्यो विधीयते। सुषा-मेति। सामशब्दोऽयं षो अन्तकर्मणीत्येतस्मान्मनिन् प्रत्ययं विधाय व्युत्पादितः। तस्य पदादिलक्षणे प्रतिषेधे प्राप्ते तद्बाधनार्थं मिह पाठः। निष्षामेति। दुष्षा-मेति। रेफस्य विसर्जनीये कृते तदा वा शरीति (८।३।३६) पक्षे सकारस्तदा परस्य षत्वे कृते पूर्वस्य ष्टुत्वम्। ननु च सुषेधादीनां त्रयाणामुपसर्गात् सुनोतीत्या-दिनैव (८।३।६५) मूर्धन्यः सिद्धः। तत् किमर्थमिह पठन मित्याह सुशब्देत्यादि। सुशब्दस्य कर्मप्रवचनीयत्वादनुपसर्गत्वे सति सुषेध इति पाठः। निर्दुःशब्दयो-स्तु क्रियान्तरविषयत्वादनुपसर्गत्वे सति निःषेधो दुःषेध इत्ययं पाठ इति सम्बन्धः कर्त्तव्यः। सुषेधादिषु स्वादीनामुपसर्गत्वं नास्ति। ततो यदि तेषामिह पाठो न क्रियते तदोपसर्गात् सुनोतीत्यादिनोपसर्गस्थान्निमित्तात् (८।३।६५ षत्वं विधीय-मानं न स्यात्। इष्यते च। तस्मादनुपसर्गान्निमित्तात् षत्वं यथा स्यादित्येवमर्थमेषां सुषेधादीनामिह पाठः। तत्र सुशब्दस्य कर्मप्रवचनीयत्वे सत्युपसर्गसंज्ञा न

भवति। एका संज्ञेत्यधिकारात् ( १।४।१ )। अनुपसर्गत्वं त्वस्य सुः पूजायामिति ( १।४।९४ ) कर्मप्रवचनीयसंज्ञाविधानात्। निर्दुःशब्दयोस्तूपसर्गत्वाभावः क्रियान्तरविषयत्वात्। निर्गतः सेधो निष्षेधो दुर्गतः सेधो दुष्षेधो इति। गमिक्रियाविषयौ हि तौ। तस्माद् गमिमेव प्रति तयोरुपसर्गत्वम्। न सेधतिं प्रति। यं प्रति क्रियायुक्ताः प्रादय स्तं प्रति गत्युपसर्गसंज्ञका ( १।४।६०, भा ) भवन्तीति वचनात्। एवं तावत् षिधु संराद्धावित्येतस्य घञि यद्रूपं सेध इति तदा सुषेधादीनामिह पाठोऽनुपसर्गार्थः। षिध गत्यामिति यदा गतौ वर्त्तमानस्य सेध इत्येतद् भवति तदा प्रतिषेधबाधनार्थः पाठ इति दर्शयितु माह सेधते रित्यादि। अथवा सेधते र्गताविति ( ८।३।११३ ) प्रतिषेधं वक्ष्यति। स मा भूदित्येवमर्थं एषाम्पाठः। सुषन्धिर् निष्षन्धिर् दुष्षन्धिरिति। एत उपसर्गे घोः किरिति ( ३।३।९२ ) किप्रत्ययान्तः। तेनैषामनादेशसकारत्वादप्राप्ते षत्वे पाठः। सन्धीयत इति सन्धिः। शोभनः सन्धिरिति प्रादिसमासः सुषन्धिरिति। एव मन्यत्रापि। सुष्ठुदुष्ठुशब्दयोस्तु पदादिलक्षण एव प्रतिषेधे प्राप्ते पाठः। तिष्ठतेः कुणादिष्वेतौ व्युत्पाद्येते इति। कुभ्रश्चत्यतः (उण्, १।२२) कुग्रहण मनुवर्त्तते। मृगय्वादयश्चेति ( उण्, १।३६ ) कुप्रत्ययान्तौ व्युत्पाद्येते। गौरिषक्थइति। गौरिषक्थशब्दस्य सकारस्य संज्ञायां षत्वं भवति। गौर्य्याः सक्थीति षष्ठीसमासः। अच प्रत्यन्ववपूर्वादित्यादिसूत्रे ( ५।४।७५ ) ऽजिति योगविभागादच् समासान्तः। यदा तु बहुव्रीहिर्गौर्य्या इव सक्थि यस्येति तदा बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षजिति ( ५।४।११३ ) षच् प्रत्ययान्तः। सक्थिशब्दोऽयमसिसञ्जिभ्यां क्थिन्निति ( उण्, ३।४३४ ) क्थिन् प्रत्ययान्तो व्युत्पाद्यते। तेन प्रतिषेधबाधनार्थो गौरिषक्थशब्दस्य पाठः। अव्युत्पत्तिपक्षे त्वप्राप्त एव षत्वे। प्रतिष्णिकेति। अस्यापि प्रतिस्नातीत्यातश्चोपसर्गे ( ३।१।१३६ ) इति कप्रत्ययः। टाप्। तदन्तात् संज्ञायां ( ५।३।८७ ) कन्। केऽण इति ( ७।४।१३ ) ह्रस्वः। प्रत्ययस्थादित्यादिनेत्त्वम् ( ७।३।४४ )। जलाषाहमिति। अनिषन्तार्थः पाठः। अनाषः पुनरयं लक्ष्यते। तथाहि सवनादिष्व-( ८।३।११० ) श्वसनिशब्दग्रहणेन ज्ञापकेनास्य षत्वं प्रतिपादयिष्यते। अपरे त्वश्वसनिशब्दो वा सवनादिज्ञापनार्थः पठितव्य इह वा जलाषाहशब्द इति विकल्पदर्शनार्थं मिहास्य पाठं समर्थयन्ते। उपलक्षणार्थश्चेतोहास्य पाठः।

तेनाखषाह्मित्यस्यापि पाठो वेदितव्यः । नौषेचनं दुन्दुभिषेवणमिति । षष्ठीसमासौ । सिचेः षिञ् सेवन इत्यस्माच्च ल्युटि प्रतिषेधबाधनार्थः पाठः ।

## ९९ । एति संज्ञायामगात् ।

एति संज्ञायामित्यादि । एतद् ग्रहणकवाक्यम् । अस्यैवैकारपरस्येत्यादिना विवरणम् । एकारः परो यस्मादिति बहुव्रीहिः । एतेनेतीत्यस्याः परसप्तमीत्वं दर्शयति । हरिषेण इति । हरयः सेना अस्येति बहुव्रीहिः । उपसर्जनह्रस्वत्वम् । पृथुसेन इति । स्त्रिया इत्यादिना ( ६।३।३४ ) पुंवद्भावः । विष्वक्सेन इति । विष्वच्चतीति ऋत्विगित्यादिना ( ३।२।५९ ) क्विन् । अनिदितामिति ( ६।४।२४ ) नलोपः । उगितश्चेति ( ४।१।६ ) ङीप् । अच इत्यकार-(१।४।१६८) लोपः । चाविति ( ६।३।१३८ ) दीर्घः । विषूची सेनास्येति बहुव्रीहिः । उपसर्जनह्रस्वत्वम् । स्त्रिया इत्यादिना ( ६।३।३४ ) पुंवद्भावः । क्विन्प्रत्ययस्य कुरिति ( ८।२।६२ ) कुत्वम् । झलां जशोऽन्त इति ( ८।२।३९ ) जश्त्वं गकारः । तस्य खरि चेति ( ८।४।५५ ) चर्त्वं ककारः । तस्यासिद्धत्वाद् गकारः ।

## १०० । नक्षत्राद्वा ।

नक्षत्राद्वेति । पूर्वेण नित्ये प्राप्ते विकल्पोऽयमुच्यत इति । सूत्रे ( ८।३।९८ ) चकारोऽनुक्तसमुच्चयार्थः । स चाकृतिगणतां सुषामादे र्बोधयतीत्यतआह अविहितलक्षण इत्यादि ।

## १०१ । ह्रस्वात् तादौ तद्धिते ।

अपदान्तस्येत्यधिकारात् पदान्तेऽप्राप्ते मूर्धन्ये सतीदमारभ्यते । येषु तकारादिषु तद्धितेषु मूर्धन्येन भवितव्यं तान् दर्शयितुमाह तरप्तमपावित्यादि । सर्पिष्टरमिति । द्विवचनविभज्येत्यादिना ( ५।३।५७ ) तरप् । प्रकृतिसकारस्य रुत्वम् । विसर्जनीयः । तस्यापि विसर्जनीयस्य सइति ( ८।३।३४ ) सकारः । तस्यानेन षत्वम् । ष्टुत्वम् । सर्पिष्टममिति । अतिशायनइत्यादिना (५।३।५५) तमप् । चतुष्टय इति । संख्याया अवयवे तयप् (५।२।४२) । तदन्ताज् जस् । सप्तम्येकवचनं वा । यदा जस् तदा जसः शी (७।१।१७) इति शीभावः । क्वचिच्चतुष्टयीति पाठः । तत्र हि टिड्ढाणञिति (४।१।१५) ङीप् । सर्पिष्ट्वं सर्पिष्टेति ।

तस्य भावस्त्वतलौ ( ५।१।११९ )। सर्पिष्ट इति प्रयोगे पञ्चम्यास्तसिल्य (५।३।७) नुवर्त्तमानेऽपादाने चाहीयरुहोरिति ( ५।४।४५ ) तसिप्रत्ययः। आविष्ट्य इति। आविःशब्दाद् भवादावर्थेऽव्ययात् त्यप् ( ४।२।१०४ )। ननु चामेहत्वतसित्रेभ्यस्त्यब्विधिरव्ययात् स्मृत इति तत्र ( ४।२।१०४ ) परिगणयति। तत् कथमाविःशब्दात् त्यप् ? नैष दोषः। अल्पाच्तरत्वात् कुशब्दस्य त्रशब्दस्य वा पूर्वनिपाते कर्त्तव्ये तदकरणाल्लक्षणव्यभिचारं दर्शयता सूचितं व्यभिचार्य्येव तत् परिगणनम्। तेनाविःशब्दादपि भवति। सर्पिस्सात्दिति। विभाषा सातिकार्त्स्न्य इति सातिः ( ५।४।५२ )। ननु च सात्पदाद्योरिति (८।३।१११) वक्ष्यमाणात् प्रतिषेधादेव मूर्धन्यो न भविष्यति। तत् किं तन्निवृत्त्यर्थेन तादाविव्यनेनेत्यतआह प्रत्ययषकारस्येत्यादि। सादित्यनेन हि सात्प्रत्ययस्य यः सकारो यश्च पदादिलक्षणस्तयोः षत्वं प्रतिषिध्यते। ननु सात्प्रत्ययात् पूर्वस्य प्रकृतिसकारस्य। ततो यदि तादाविति नोच्येत तदा प्रत्ययसकारस्याषत्वे प्रकृतिसकारस्य स्यादेव। तस्मिंश्च सति ष्टुत्वं प्रत्ययसकारस्यापि स्यात्। वक्तव्य इति। व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्। इहादिग्रहणं न कर्त्तव्यम्। यस्मिन् विधिस्तदादावल्ग्रहण इत्येवं ( १।१।७२ वा ) हि तादौ भविष्यति। तत् क्रियते। ग्रन्थाधिक्यादर्थाधिक्यं सूचयतीति तिङन्तस्य प्रतिषेधो यथा स्यादित्येवमर्थम्। अथवा न रपरेत्यादौ (८।३।११०) नेति योगविभागः करिष्यते। तेन तिङन्तस्य न भवतीति। अस्मिंस्तु व्याख्यान आदिग्रहणं विस्पष्टार्थम्। भिन्द्यास्तरां छिन्द्यास्तरामिति। भिदिच्छिदिभ्यां लिङ्। यासुट्। श्नसोरल्लोप (३।४।१०८)। लिङः सलोप इत्यादिना ( ७।२।७९ ) सलोपः। उस्यपदान्तादिति ( ६।१।९६ ) पररूपत्वम्। श्नसोरल्लोप (६।४।१११) इत्यकारलोपः। तिङश्चेति (५।३।५६) तरप्। किमेत्तिङव्ययेत्यादिनामुप्रत्ययः ( ५।४।११ )।

## १०२। निसस्तपतावनासेवने।

अयमपि पदान्तार्थ आरम्भः। निष्टपतीति। तप धूप सन्तापे। रुत्वे विसर्जनीयः। विसर्जनीयस्य सः ( ८।३।३४ )। तस्य मूर्धन्यः। ष्टुत्वम्। अथेह निष्टप्तं रक्षो निष्टप्ता अरातय इति निष्ठान्ते तपतौ कस्मान्न भवति। अस्त्यत्रासेवनमित्यत आह निष्टप्तमित्यादि। नह्येह वस्तुनः सत्त्वेव शब्दव्युत्पत्तेः प्रधानं कारणम्। अपि तु तद्विवक्षा। न चेहासेवनविवक्षास्तीति भवति मूर्धन्यः।

यदि तच्छीसेवनं विवक्ष्यते तदा न भवितव्यं मूर्धन्येनेत्यत आह च्छान्दसो वेत्यादि । सभावे कृते व्यत्ययो बहुलमिति ( ३।१।८५ ) पुनः षकारः ।

## १०३ । युष्मत्तत्ततक्षुष्वन्तःपादम् ।

अयमपि पदान्तार्थ आरम्भः । अन्तःपादमिति । पादस्य मध्ये । विभक्त्यर्थेऽव्ययीभावसमासः । पादग्रहणेन ऋक्पादश्लोकपादयोः सामान्येन ग्रहणम् । तकारादित्वं त्विह युष्मदएव विशेषणम् । नेतरयोः । अव्यभिचारात् । युष्मच्छब्दस्यापि त्वादिष्वादेशेषु तकारादित्वं भवतीत्यतआह युष्मदादेशा इत्यादि । अग्निष्ट्वमिति । त्वाहौ साविति ( ७।२।९४ ) त्वादेशः । ङे प्रथमयोरमिति ( ७।१।२८ ) सोरम्भावः । शेषे लोपः ( ७।२।९० ) । अग्निष्ट्वेति । त्वामौ द्वितीयाया ( ८।१।२३ ) इति द्वितीयान्तस्य त्वादेशः । अग्निष्टइति । तेमया- ( ८।१।२२ ) वेकवचनस्येति षष्ठ्यन्तस्य तयादेशः । अग्निष्टवेति । तवममौ ङसीति ( ७।२।९६ ) तवादेशः । युष्मदस्मद्भ्यां ङसोऽशित्यशभावः (७।१।२७) । अग्निष्टदिति । तच्छब्दोऽयमिपातः । सर्वनाम वा । निष्टतक्षुरिति । तक्षेर्लिट । उस् । अग्निस्तत् पुनरिति । अग्निशब्दोऽत्र पूर्वपादस्यान्ते वर्त्तते । तेनायं सकारः पादस्यान्ते वर्त्तते । न पादमध्य ।

## १०४ । यजुष्येकेषाम् ।

यजुषीति । यजुर्वेदे । अत्र पादा न सम्भवन्तीति पूर्वेण नाप्राप्ते षत्वमिदमारभ्यते । एकेषांग्रहणं विकल्पार्थम् ।

## १०५ । स्तुतस्तोमयोश्छन्दसि ।

सात्पदाद्योरिति प्रतिषेधे प्राप्तेऽस्यारम्भः । ननु चोत्तरसूत्रेणैव नृभिःष्टुतं गोभिःष्टोममित्यत्र षत्वं सिध्यति । तत् किमर्थमिदमारभ्यते ? स्यादेतत् । समासे सत्येतद् भवति पूर्वपदमुत्तरपदमिति । नचात्र समासः । तस्मात् पूर्वपदादि ( ८।३।१०६ ) त्युत्तरेण न सिध्यतीति । एतच्चासम्यक् । असमासे यत् पूर्वपदं तदपि तत्रापि गृह्यते । वक्ष्यत्यसमासे यदपि पूर्वपदं तदपि गृह्यतइत्यतआह पूर्वपदादित्येवेत्यादि ।

## १०६ । पूर्वपदात् ।

द्विषन्धिरिति । षष्ठीतत्पुरुषो बहुव्रीहिर्वा । मधुष्ठानमिति । षष्ठीसमासः । द्विषाहस्रमिति । द्वयोः सहस्रयोर्भवइति तद्धितार्थे समासः । तत्र भव (४।३।५३) इत्यण् । संख्यायाः संवत्सरसंख्यस्य चेत्युत्तरपदवृद्धिः (७।३।१५) । अथेह कथं षत्वं त्रिःषमृद्धत्वायेनि ? यावता समासे यत् पूर्वपदं तत्र पूर्वपदशब्दो रूढः । नचायं समासः । किं तर्हि? वाक्यमित्यत आह असमासेऽपीत्यादि । कथं पुनरेतल्लभ्यते ? व्यवस्थावचनस्येह पूर्वपदस्याश्रयणात् । यथैव हि पूर्वशब्दो लोके रूढ़िमादाय क्वचित् तु समुदाये वर्त्तते पूर्वपञ्चाला इति क्वचित् व्यवस्थायामयमस्मात् पूर्व इति वा तथा शास्त्रेऽपि । तत इह व्यवस्थाशब्दो गृह्यते । कुतः ? व्याप्तेः । रूढिशब्द एव गृह्यमाणे समास एव स्यात् । नासमासे । व्यवस्थाशब्दे तु सर्वत्र भवति ।

## १०७ । सुञः ।

पूर्वपदादित्येवं सिद्धे प्रपञ्चार्थमिदम् । सुञ इति निपातो गृह्यत इति । अथ षुञ् अभिषव इति धातुः कस्मान्न गृह्यते ? एवं मन्यते । यत्रास्य धातोर्ग्रहण-मिच्छति तत्र श्तिपा निर्द्देशं करोति । शैलीयमिदमाचार्य्यस्य । यथोपसर्गात् सुनोतीत्यत्र (८।३।६५) । सुनोतेः स्यसनोरित्यत्र (८।३।११७) च । तदिहापि यदि धातोर्ग्रहणमभीष्टं स्यात् श्तिपा निर्द्देशं कुर्य्यात् । नैव कृतम् । अतो निपातस्ये-दं ग्रहणमवसीयते । अभीषुण इति । षष्ठीबहुवचनस्यास्मच्छब्दस्य बहुवचनस्य वस्नसाविति (८।१।२१) नस् । इकः सुञोति (६।३।१३४) दीर्घः । नश्च धातुस्थोरुषुभ्य (८।४।२७) इति णत्वम् ।

## १०८ । सनोतेरनः ।

अनइति । अविद्यमानो नकारोऽस्येत्यर्थः । गोषा इति । षणु दाने । गां सनोतीति जनसनखनक्रमगमो विट् (३।२।६७) । विड्वनोरनुनासिकस्यादि-त्यात्त्वम् (६।४।४१) । गोसनिमिति । स्तम्बशकृतोरिन्नित्यत (३।२।२४) इन्नित्यनुवर्त्तमाने छन्दसि वनसनरक्षिमथामितीन्प्रत्ययः (३।२।२७) । ननु पूर्वपदादित्येवं गोषाइत्यादौ षत्वं सिद्धम् । तत् किमर्थमिदमित्याह पूर्वपदादि-

त्येवेत्यादि । अविद्यमाननकारस्यैव भवति । नान्यस्येत्येष नियमो यथा स्यादि त्येवमर्थमेतत् । यद्येवं गोसनिमिति न नियमस्य फलम् । सवनादित्वादित्याह अत्रेत्यादि । इतिकरणो हेतौ । यस्मात् सवनादिषु पाठाद् गोसनिशब्दो नियमस्य फलं न भवति तस्मात् केचित् सिसानयिषतीति प्रत्युदाहरन्ति । सिसनी-रित्यपर इति । सनोतेर्ण्यन्तस्य सनि रूपं सिसानयिषतीति । अत्र यदि नियमार्थं मेतन्नोच्येत तदा स्तौतिण्योरेव ( ८।३।६१ ) षत्वं स्यात् । अस्मिंस्तु सति न भवतीति ण्यन्तस्योदाहरणम् । अण्यन्तस्य स्तौतिण्योरेवेत्यत ( ८।३।६१ ) एव नियमात् षत्वनिवृत्तेः सिद्धत्वात् । सिसनीरिति । सनोतेः सन् । इट् । द्विर्वचनम् । सनः सकारस्य षत्वम् । सिसनिष इति स्थिते क्विप् । अतो लोपः ( ६।४।४८ ) । षत्वस्यासिद्धत्वाद्रुत्वम् । र्वोरुपधाया दीर्घ इकः इति ( ८।२।७६ ) दीर्घः । सिस-नीरिति स्थितेऽत्र सनः षत्वभूतस्याभावात् स्तौतिण्योरेवेत्येष ( ८।३।६१ ) नियमो न प्रवर्त्तते । अत्र यदीदं नोच्येतादेशप्रत्यययोरिति ( ८।३।५९ ) मूर्धन्यः स्यात् । अस्मिंस्तु सति न भवति ।

## १०६ । सहेः पृतनर्त्ताभ्याञ्च ।

अमाड्ग्रेमनिस्सग्रेभ्य । पृतनाषाहमिति । छन्दसि सह (३।२।६३) इति ण्विः । ऋतीषाहमिति । अन्येषामपि दृश्यत इति (६।३।१३७) दीर्घः । ऋतीषहमिति । कृत्यल्युटो बहुलमिति ( ३।३।११३ ) क्विप् । नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वाविति (६।३।११६) दीर्घत्वम् । संहितायामेतद् दीर्घत्वं षत्वञ्चेति । उभयोरपि विधाने संहिताधिकाराद् दीर्घस्य प्रतिपादनम् । ऋतिशब्दस्यायं प्रयोग इति प्रतिपादनार्थम् । अन्यथा ह्यतिशब्दान्तर मेवेदमित्याशङ्क्येत । यस्तु मन्यते वर्ण-व्यत्ययेनैवात्र षत्वं भविष्यति । तत् किमेतदर्थेन योगविभागेनेति तं प्रति षत्वस्य सांहितिकत्वं प्रतिपादितम् । यदि हि व्यत्ययो बहुलमिति ( ३।१।८५ ) षकारः क्रियते ततोऽसंहितायामेव स्यात् । नहि तत्र संहिताधिकारोऽस्ति । तस्मात् संहिताधिकारे यथा स्यादिति योगविभागः कर्त्तव्य इति भावः । अनुक्तसमुच्चयार्थं इति । न केवलं साड्भूतस्यैव्कोः परस्येत्यपितु पृतनर्त्ताभ्याञ्च षत्वं भवतीति । ये तु योगविभागं न कुर्वन्ति त ऋतीषहमित्यर्थं सकारः समुच्चयार्थ इति वर्णयन्ति ।

## ११० । न रपरसृपिसृजिस्पृशिस्पृहिसवनादीनाम् ।

रः परो यस्मादिति रपरः । सृप्लृ गतौ । सृज विसर्गे । स्पृश संस्पर्शे । स्पृह ईप्सायां चुरादावदन्तः पठ्यते । सवनमादि येषामिति बहुव्रीहिः । विसंसिकाया इति । स्रंसु अवस्रंसने । अस्माद्विपूर्वाद् रोगाख्यायां ण्वुल् बहुलमिति (३।३।१०८) ण्वुल् । विस्रब्ध इति । स्रम्भु विश्रम्भे । अनिदितामिति ( ६।४।४८ ) नलोपः । झषस्तथोर्धोऽध इति ( ८।२।४० ) धकारः । झलाञ्जश् झशीति ( ८।४।५३ ) भकारस्य बकारः । विसृप इति । सृपितृदोः कसुन्निति (३।४।१७) कसुन् । विसर्जनादिति । ल्युट् । दिविस्पृशमिति । स्पृशोऽनुदके क्विन्निति ( ६।२।५८ ) क्विन् । तत्पुरुषे कृति बहुल ( ६।३।१४ ) मिति सप्तम्या अलुक् । निस्पृह इति । स्पृहणं स्पृहः । एरजित्यच् ( ३।३।५६ ) । णिलोपः । निर्गतः स्पृहो निःस्पृहः । सवने सवन इति । सुनोतेर्ल्युट् । सप्तम्येकवचनम् । वीप्सायां द्विर्वचनम् । सूते सूत इति । षूङ् प्राणिगर्भविमोचने । सुवतेर्वा । निष्ठा । सोमे सोम इति । सुञित्येतस्मादर्त्तिस्तुसुहु इत्यादिना ( उण्, १।१३७ ) सोमशब्दो व्युत्पादितः । सवनमुखे सवनमुख इति । सवनस्य मुखमिति षष्ठीसमासः । किंसं किंसमिति । षो अन्तकर्मणि । आतोऽनुपसर्गे कः ( ३।२।३ ) । तत्र किमो मकारस्यानुस्वारे कृतेऽयोगवाहानामट्सूपदेशादड्व्यवायेऽपीति पूर्वपदस्थान्निमित्तात् प्राप्तः । अनुसवनमिति । ल्युडन्तमेतत् । अश्वसनेर्व्युत्पत्ति र्गोसनिवत् । अथाऽश्वसनिग्रहणं किमर्थम् ? नह्यत्र सकारस्य षत्वं प्राप्नोति । तथाहि पूर्वस्मादिण उत्तरस्य षत्वं प्राप्नोति । नचासाविण उत्तरः सकार इत्यत आह अश्वसनिग्रहणमित्यादि । किमेतज् ज्ञापनेन प्रयोजनमित्यत आह जलाषाहमित्यादि । क्वचिद् विसं विसं मुसलं मुसलमिति पाठः । स्थाने द्विर्वचनपक्षे आदेशप्रत्यययोरित्यादेशसकारत्वात् ( ८।३।५९ ) प्राप्तस्य षत्वस्य प्रतिषेधो वक्तव्यः ।

## १११ । सात्पदाद्योः ।

आदेशप्रत्यययोरिति ( ८।३।५९ ) षत्वे प्राप्तेऽयं प्रतिषेधः ।

## ११२ । सिचो यङि ।

आदेशप्रत्यययो ( ८।३।५९ ) रित्युपसर्गात् सुनोतीति (८।३।६५) च प्राप्तस्य

षत्वस्यायं प्रतिषेधः । सेसिच्यत इति । आदेशप्रत्यययोरिति ( ८।३।५६ ) प्राप्तिः । अभिसेसिच्यत इति । अत्रोपसर्गात् सुनोतीत्यादिना ( ८।३।६५ )। कथं पुनरत्र प्रतिषेधः प्रवर्त्तते ? यावतोपसर्गात् सुनोतीत्यादिना ( ८।३।६६ ) सूत्रेण षत्वं प्रतिषेधविषये विधीयते । अत्रोपसर्गस्यानिमित्ताद् या प्राप्तिः सा यथा सात्पदाद्योरितीमं ( ८।३।१११ ) पदादिलक्षणप्रतिषेधं बाधते तथा सिचो यङीत्येतच्चेति देश्यमाशङ्क्याह उपसर्गाद् या प्राप्तिरित्यादि । येन नाप्राप्तिन्यायेन (प,५८) पदादिलक्षणस्यैव प्रतिषेधस्य बाधा युक्ता । तत्र प्राप्त एवोपसर्गार्थमारभ्यते । सिचो यङीत्येतस्मिन् पुनःप्राप्ते चाप्राप्ते च । अथवा पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते (प,६०) नोत्तरानित्येवमुपसर्गात् षत्वप्राप्तिः सिचः पदादिलक्षणमेव प्रतिषेधं बाधते । नतु सिचो यङीत्यभिप्रायः ।

## ११३ । सेधतेर्गतौ ।

उपसर्गात् सुनोतीति ( ८।३।६५ ) प्राप्तस्य षत्वस्य प्रतिषेधः । प्रतिषेधस्याकार्थ्यादिति निवारणे सेधतिर् वर्त्तते ।

## ११४ । प्रतिस्तब्धनिस्तब्धौ च ।

प्रतिस्तब्धं निस्तब्धमिति । स्तम्भेरिति प्राप्तस्य ( ८।३।६७ ) षत्वस्याभावो निपात्यते ।

## ११५ । सोढः ।

परिनिविभ्य इति ( ८।३।७० ) प्राप्ते षत्व आरभ्यते । सोढ इति । निष्ठायामपि प्रथमैकवचने कृत एतद्रूपं भवति । एतद्ग्रहणाशङ्कानिरासायाह सहिरय मित्यादि । सोढभूत इति । हकारे ढकारे कृते यद्रूपं भवति तत् प्राप्त इत्यर्थः । ढकारस्तु जश्त्वे न श्रूयते । परिसोढेति । धत्वढत्वष्टुत्वढलोपेषु कृतेषु सहिवहोरोदवर्णस्येत्योकारः ( ६।३।११२ )।

## ११६ । स्तम्भुसिवुसहां चङि ।

अत्राद्यस्य स्तम्भेरिति ( ८।३।६७ ) षत्वे प्राप्त इतरयोस्तु परिनिविभ्य इति ( ८।३।७० ) प्रतिषेधोऽयमारभ्यते । अभ्यतस्तम्भदिति । णिच् । लुङ् । णिश्रि-

द्रुस्रुभ्रः कर्त्तरि चङ् ( ३।१।४८ )। णिलोपः। चङीति (६।१।११) द्विर्वचनम्। पूर्ववत् खयः शेषः। अट्। प्राक्सितादड्व्यवायेऽपि ( ८।३।६३ )। स्थादिष्वभ्यासेन चाभ्यासस्येति (८।३।६४) व्यवाये सत्युपसर्गस्थान्निमित्तात् षत्वं प्राप्तं न भवति। पर्य्यसीषिवदित्यादि। पूर्ववल्लुङादि। सिवेर्लघूपधगुणः। सहेस्त्वत उपधाया ( ७.२।११६ ) इति वृद्धिः। सन्वल्लघुनीतीत्त्व ( ७।४।९३ ) उभयोर्णौ चङ्युपधोया इति ह्रस्वः। दीर्घो लघोरिति ( ७।४।९४ ) दीर्घः। अत्रापि सिवादीनां वाड्व्यवायेऽपीत्यड्व्यवाय ( ८।३।७१ ) उपसर्गस्थान्निमित्तात् परेषां प्राप्नोति। तन्न भवति। सिषुसद्धोरित्यादि। एतयोः सिषुसद्धोश्चङ्युपसर्गस्थान्निमित्तात् षत्वं प्राप्नोति। तन्मा भूदित्येवमर्थंरूपं व्याख्येयमित्यर्थः। किमर्थमित्याह उपसर्गाद् या प्राप्तिरित्यादि। तत्रेदं व्याख्यानम्। उपसर्गात् सुनोतीत्यतो ( ८।३।६५ ) मण्डूकप्लुतिन्यायेनोपसर्गादितीहानुवर्त्तते। तेनोपसर्गाद् या प्राप्तिस्तस्या एव प्रतिषेधो भविष्यतीति। तथाचैवोदाहृतमिति। यत् तदर्थंरूपं व्याख्येयं तत् तथोक्तम्। तदर्थंरूप मेवोदाहृत मित्यर्थः।

## ११७। सुनोतेः स्यसनोः।

अभ्यसोष्यदिति। लृङ्। अभिसुसूषतीति। सन्। इको झलिति ( १।२।९ ) कित्त्वे गुणाभावः। अज्झनगमां सनीति ( ६।४।१६ ) दीर्घः। अत्रेत्यादि। इतिकरणो हेतौ। अत्र यस्मात् स्तौतिण्योरेव षण्यभ्यासादित्यतो ( ८।३।६१ ) नियमादप्राप्ते स्थादिष्वभ्यासेनेति (८।३।६४) नियमादप्राप्ति स्तस्मादभिसुसूरित्युदाहरन्ति। स्यादेतत्। अत्रापि नास्ति यत् तदप्युदाहरणं नोपपद्यत इत्यतआह सन् षभूतो न भवतीत्यादि। षभूते हि सनि स्तौतिण्योरेव ( ८।३।६१ ) नियमः। नचात्र सन् षभूतः। तस्मादसति सन्ग्रहणेऽभ्यासस्थान्निमित्तादादेशप्रत्यययोरिति ( ८।३।५९ ) षत्वं प्राप्नोति। अभ्यासग्रहणमुपसर्गात् प्राप्तेरसम्भवात्। अत उपसर्गस्थान्निमित्ताद् धातुसकारस्य षत्वं न प्राप्नोति। अभ्यासेन व्यवहितत्वात्। नाभ्याससकारस्य स्थादिनियमेन व्यावर्त्तितत्वात्। अभिसुसूरिति। अभिसुसूषइति स्थिते क्विप्। अतो लोपः ( ६।४।४८ )। षत्वस्यासिद्धत्वाद्रुत्वविसर्जनीयौ।

## ११८। सदिस्वञ्जोः परस्य लिटि।

लिटि द्विर्वचने कृते द्वौ सकारौ सम्भवतः। तत्र सदेः स्थादिष्वभ्यासेन चाभ्यासस्येति (८।३।६४) सत्यप्यभ्यासेन व्यवाये षत्वं प्राप्नोति। स्वञ्जेरप्युपसर्गात् सुनोतीत्यादिना (८।३।६५)। अतः प्रतिषेधोऽयमारभ्यते। अभिषस्वजइति। लिट्। लिटस्तझयोरेशिरेजित्येश् (३।४।८१)। अनिदितामिति (६।४।२४) नलोपः। ननु चासंयोगादिति प्रतिषेधात् (१।२।५) स्वञ्जेः परस्य लिटः कित्त्वं नास्ति। तत् कथमत्र नलोप इत्यत आह स्वञ्जेः संयोगान्तादपि लिटि विभाषा कित्त्वमिच्छन्तीति। तच्चेन्धिभवतिभ्याञ्चेत्यत्र (१।२।६) चकारस्यानुक्तसमुच्चयार्थत्वात्। विभाषोर्णोरित्यतो (१।२।३) विभाषाग्रहणानुवृत्तेर्वा। नन्वेवमिन्धिभवतिभ्याञ्चेत्यत्रापि (१।२।६) विभाषा प्रसज्येत। नैवम्। तस्या व्यवस्थितविभाषाविज्ञानात्।

## ११९। निव्यभिभ्योऽड्व्यवाये वा छन्दसि।

येन केनचिल्लक्षणेन प्राप्तस्य षत्वस्य प्रतिषेधोऽयमारभ्यते। न्यसीददिति। लङ्। पाघ्रेत्यादिना (७।३।७८) सीदादेशः। अत्र सदिरप्रतेरिति (८।३।६६) प्राप्तिः। न्यस्तौदिति। उपसर्गात् सुनोतीत्यादिना (८।३।६५)। स्तौतेर्लङ्। अदादित्वाच्छपो लुक्। उतो वृद्धिर्लुकि हलीति (७।३।८९) वृद्धिः।

इति बोधिसत्त्वदेशीयाचार्य्यश्रीजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरणपञ्जिकायामष्टमाध्यायस्य तृतीयःपादः॥ ८।३॥

अथ

# काशिकाविवरणपञ्जिका ।

## अष्टमाध्यायः ।

## चतुर्थः पादः ।

### १ । रषाभ्यां नो णः समानपदे ।

समानपदस्थौ चेदित्यादि । समानशब्दोऽयमेकपर्य्यायः । समानमेकमभिन्नमित्यर्थः । समानञ्च तत् पदञ्चेति कर्म्मधारयः । तत्र तिष्ठत इति समानपदस्थौ । सुपि स्थ इति ( ३।२।४ ) कप्रत्ययः । अत्र निमित्तं रेफः षकारश्च । तन्निमित्तं यस्यास्तीति णत्वभावेन विपरिणतौ साध्यायां स निमित्तो नकारः । तेनैतदुक्तं भवति यत्र पदे रेफषकारौ स्त स्तत्र यदि नकारोऽपीत्यर्थः । आस्तीर्णं विशीर्णमिति । स्तृञ् आच्छादने । शॄ हिंसायाम् । व्याङ् पूर्व्वाभ्यां निष्ठा । श्र्युकः क्तितीट्प्रतिषेधः ( ७।२।११ ) । ॠत इद् धातोरितीत्त्वम् ( ७।१।१०० ) । रपरत्वञ्च । अवगूर्णमिति । गुरी उद्यमने । श्वीदितो निष्ठाया-( ७।२।१४ ) मितीट्प्रतिषेधः । हलि चेति ( ८।२।७७ ) दीर्घः । रदाभ्यां निष्ठातो न इति ( ८।२।४२ ) तकारस्य नकारः । तस्यानेनैव णत्वम् । कुष्णाति पुष्णातीति । कुष निष्कर्षे । पुष पुष्टौ । श्नाप्रत्ययः । षग्रहणमुत्तरार्थमिति । अथैतदर्थमपि कस्मान्न भवतीत्याह ष्टुत्वेनैव सिद्धत्वादिति । यद्येवं कुष्णातीत्यादेरुपन्यासः किमर्थः ? उत्तरार्थं षग्रहणं क्रियमाणमेतदर्थमपि भवतीति प्रदर्शनार्थः । असति षग्रहणे कुष्णातीत्येवमादौ ष्टुत्वेनैव सिद्धिर्भवति । सति च तस्मिन्नुत्तरार्थं आरभ्यमाणेऽनेनैव णत्वं कर्त्तव्यम् । अस्मिन् कर्त्तव्ये ष्टुत्वस्यासिद्धत्वादन्यत्र चरितार्थत्वान्न च

परत्वमुपपद्यते । पूर्व्वत्रासिद्धीये नास्ति विप्रतिषेधोऽभावादुत्तरस्येति ( प, १२० ) । ऋवर्णाच्चेति वक्तव्य मित्यादि । रषाभ्यां णत्वमुच्यमान मृवर्णान्न प्राप्नोति । तस्य वर्णान्तरत्वात् । नच शक्यते वक्तु मृवर्णस्थाद्रेफाद् भविष्यति । वर्णो हि रेफः सूत्रे णत्वं प्रति निमित्तत्वेनाश्रितः । न हि ऋवर्णस्थो रेफो वर्णः । किं तर्हि ? वर्णैकदेशः । तदेकदेशत्वात्' नहि वर्णैकदेशो वर्णग्रहणेन गृह्यते । तथाचोक्तं (A) वर्णेषु ये वर्णैकदेशा वर्णान्तरसमानाकृतय स्तेषु तत्कार्य्यं न भवति । तच्छायानुकारिणो हि ते । न पुनस्तएव । पृथक् प्रयत्ननिर्वर्त्त्यं वर्णं मिच्छन्त्याचार्य्या इति । तस्मादृवर्णाच्चेति वक्तव्यम् । तिसृणां चतसृणामिति । त्रिचतुरोः स्त्रियां तिसृचतसृत्येतावादेशौ ( ७।२।९९ ) भवतः । न तिसृचतसृति ( ६।४।४ ) निषेधान्नामीति ( ६।४।३ ) दीर्घत्वं न भवति । रश्रुतिसामान्यनिर्देशात् सिद्धमिति । अनेनोपसंख्यानं प्रत्याचष्टे । रइतीह श्रुतिरुपलब्धिर्यस्येति बहुव्रीहिः । अथवा श्रूयतइति श्रुतिः । रश्चासौ श्रुतिश्चेति रश्रुतिः । तस्याः केवलाया ऋवर्णस्थायाश्च वर्णत्वावर्णत्वकृतभेदमुत्सृज्य यत् सामान्यं रश्रुतिमात्रं तदिह निर्दिश्यते । नतु वर्णात्मिकैव रेफव्यक्तिः । तेनेह सिद्धं तिसृणामित्यादावपि णत्वम् । ऋवर्णे हि तस्य रश्रुतिसामान्यस्य विद्यमानत्वात् । स्यादेतत् । ऋकारे त्रयोऽज्भागाः सन्ति । तन्मध्यवर्त्ती तुरीयो रेफः । तत्र रश्रुतिसामान्यनिर्देशादपि नैव णत्वं सिध्यति । योऽसौ रेफात् परोऽज्भाग स्तेन व्यवधानादित्यत आह अवर्णभागित्यादि । यदयं क्षुभ्नादिषु णत्वप्रतिषेधार्थं नृनमनतृप्नोतिग्रहणं करोति तेनैतज् ज्ञाप्यते ऽवर्णभागव्यवधानेऽपि णत्वं भवतीति । अन्यथैतयोः पाठोऽनर्थकः स्यात् । प्राप्त्यभावात् । प्राप्तिपूर्वकत्वात् प्रतिषेधानामिति । इदानीं यद्यपि वर्णात्मिकैव रेफव्यक्ति र्निर्दिश्यते तथापि णत्वं भवतीति दर्शयितुमाह अथवेत्यादि । पूर्वं सूत्रोपात्ताद्रश्रुतिसामान्यनिर्देशादवर्णभागव्यवधानेऽपि णत्वं भवतीति ज्ञापितम् । सम्प्रति तु सूत्रानुपात्तादृवर्णादव्यवहितत्वाद् भवतीत्येष विशेषः । अथ किमर्थं णग्रहणम् ? यावता प्रकृतोऽत्र मूर्धन्योऽनुवर्त्तिष्यते । स एव विधेयः । तत्रान्तरतम्याद् नकारस्य णकार एव भविष्यति । सत्यमेतत् । पूर्वसूत्रे मूर्धन्यग्रहणं निषेधेन सम्बद्धम् । अतस्तदनुवृत्तौ तस्याप्यनुवृत्तिराशङ्क्येत । तस्मात् प्रतिषेधशङ्कानिरासार्थं पुनर्णग्रहणं कृतम् । ननुच प्राप्त्यभावादेव प्रतिषेधशङ्का न भविष्यति । प्राप्तिपूर्वका हि प्रतिषेधा भवन्ति । नच केन-

(A) ऐ औ चिति ( प्र, ४ ) प्रत्याहारव्याख्यायां वृत्तिकृतेति ।

चिद्रषाभ्यामुत्तरस्य नकारस्य मूर्धन्यप्राप्तिरस्ति। सत्यमेतत्। अस्मादेव प्रतिषेधाद्विधिरनुमीयत इति। अथवानन्तरसूत्रे ( ८।३।११९ ) वेति वचनाद् विकल्पेनायं विधि र्विज्ञायते। तस्माद् विकल्पनिवृत्त्यर्थं विस्पष्टार्थं वा।

## २। अट्कुप्वाङ्नुम्व्यवायेऽपि।

रषाभ्यामिति पञ्चमीनिर्देशान्निर्दिष्टग्रहणस्यानन्तर्य्यार्थत्वात् पूर्वणाड़ादिव्यवधाने सत्यप्राप्तमेव णत्वमनेन विधीयते। पर्य्याणद्धमिति। नह बन्धने। निष्ठा। नहो धइति ( ८।२।३४ ) हकारस्य धकारः। झषस्तथोर्धोऽध इति ( ८।२।४० ) तकारस्य धकारः। पूर्वधकारस्य झलाञ्जश् झशीति ( ८।४।५३ ) दकारः। ननु चाड्व्यवायेऽत्र णत्वं सिद्धम्। अण् सवर्णान् (१।१।६९) गृह्णातीत्याङोऽप्यड्ग्रहणेन ग्रहणात् किमर्थमाङ्ग्रहणमित्याह आङ्ग्रहणमित्यादि। असत्याङ्ग्रहणे पदव्यवायेऽपीत्याङ्व्यवाये (८।४।३८) प्रतिषेधः स्यात्। अतस्तद्बाधनार्थमाङ्ग्रहणम्। बृंहणमिति। बृह बृहि वृद्धौ। इदितो नुम् धातोरिति नुम् (७।१।५८)। ल्युट्। नश्चापदान्तस्य झलीत्यनुस्वारः ( ८।३।२४ )। कथं पुनरिदं नुम्ग्रहणस्योदाहरणं यावतानुस्वारेणात्र व्यवायः। न नुमा। दृंहणमित्यत्रापि नुमोऽभावात् ? प्रेन्वन मित्यत्रैव प्रसज्येत। अस्ति ह्यत्र नुमा व्यवाय इति देश्यमाशङ्क्याह नुम्ग्रहणमित्यादि। अनुस्वारोपलक्षणार्थं ह्यत्र नुम्ग्रहणम्। न नुमः प्रतिपादनार्थम्। तेन किं सिद्धभवतीत्याह तेनेत्यादि। दृंहणमिति। दृह दृन्ह हिंसायाम्। ल्युट्। पूर्व्ववदनुस्वारः। अत्र नुम्ग्रहणस्यानुस्वारोपलक्षणार्थत्वादसत्यपि नुम्यनुस्वारव्यवाये णत्वं भवत्येव। अपिशब्दोऽयं बृंहण मित्यत्र नुमोऽनुस्वारे तद्व्यवाये णत्वं भवतीत्येवमर्थं द्योतयति। प्रेन्वनमिति। इवि व्याप्तौ। पूर्ववन्नुम्। तस्याझल्परत्वादनुस्वारो न भवति। अत्राप्यनुस्वारोपलक्षणार्थत्वाद् विद्यमानेऽपि नुम्यनुस्वारव्यवायो नास्तीति णत्वं न प्रवर्त्तते। यथैव हि नक्षत्रं दृष्ट्वा वाचो विसृज्येरन्नित्यत्र नक्षत्रदर्शनकालस्योपलक्षणार्थत्वाद सत्यपि नक्षत्रादर्शने तस्मिन् कालविशेषे सति वाचो विसृज्यन्ते सत्यपि नक्षत्रदर्शने तस्मिन् कालविशेषाभावे वाचो न विसृज्यन्ते तथेहापि नुम्ग्रहणस्यानुस्वारोपलक्षणार्थत्वादसत्यपि नुमि यत्रानुस्वारव्यवायोऽस्ति तत्र णत्वं भवति। सत्यपि नुमि यत्रानुस्वारव्यवायो नास्ति तत्र न भवतीत्येवमर्थं वेदितव्यम्। किं पुनरिह समुदायेन वाक्यपरिसमाप्तिः ? प्रत्येकं वा ? तत्र यदि पूर्वकः पक्ष आश्रीयते तदा

क्वचिदपि न स्यात्। नह्येकस्मिन्नुदाहरणे सर्वैरड़ादिभिर्व्यवायः सम्भवति। अथ द्वितीयस्तदार्क्षणेत्यादौ न स्यात्। अनेकेन व्यवधानादित्यत आह व्यवायोपलक्षणार्थत्वादित्यादि। इहैषामड़ादीनां व्यवायोपलक्षणार्थ मुपादानम्। तेन व्यवाये णत्वम्भवति। कतरस्मिन् व्यवाये? अड़ादिभि र्यो व्यवायस्तस्मिन्निति। शक्नुवन्ति चेत एकैकाः (B) परस्परसहिताश्च। तमुपलक्षयितुं ये च तदुपलक्षणार्थं मुपादीयन्ते तेषामेकेन द्वाभ्यां बहुभिश्च य उपलक्षितः स संगृह्यत एव। तथाहि देवदत्तयज्ञदत्तविष्णुमित्रैः सह नाध्येतव्यमित्युक्ते देवदत्तादयो ये सहाध्ययनप्रतिषेधोपलक्षणार्थं मुपात्ता स्तेषा मेकेनापि सह नाधीयते। द्वाभ्यां बहुभिश्च। तस्मादिहापि व्यवायोपलक्षणार्थत्वादड़ादीनां तै र्व्यस्तैः समस्तैश्च व्यवाये णत्वं भवति। व्यस्तै रिति। तैरेकैकै र्व्यवाय उपलक्ष्यते। समस्तै रिति। परस्परसहितैः। समस्तग्रहणमनेकोपलक्षणार्थम्। नहि समस्तै र्व्यवायः क्वचित् सम्भवति। एवञ्च क्वचित् प्रत्येकं वाक्यपरिसमाप्तिः क्वचिद् यथासम्भवं समुदायेनेत्युक्तं भवति। अथापिग्रहणं किमर्थम्? अव्यवाये यथा स्यादिति चेत्? न। पूर्वेणैव सिद्धत्वात्। एवं तर्ह्युत्तरार्थमपिग्रहणम्। असति हि तस्मिन्नुत्तरार्थं उपसर्गादसमासेऽ (८।४।१४) पीत्येतदिहैव स्यात् प्रणयतीति यत्रास्ति व्यवायः। इह तु न स्यान् निर्णयतीति। न ह्यत्राड़ादीनामेकतमेन व्यवायोऽस्ति।

## ३। पूर्वपदात् संज्ञायामगः।

रेफादिनिमित्त मिहानुवर्त्तते। तस्य केवलस्य पूर्वपदत्वं न सम्भवतीति सामर्थ्यात् पूर्वपदस्थान्निमित्तादुत्तरस्येत्येषोऽर्थो विज्ञायत इत्याह पूर्वपदस्थान्निमित्तादित्यादि। द्रुणसइति। द्रुरिव नासिकास्येति बहुव्रीहिः। द्रुशब्दोऽत्र शाखावचनः। अत्र् नासिकायाः संज्ञायां नसञ्चास्थूलादित्यच् (५।४।११८ समासान्तः। नासिकायाश्च नसादेशः। चर्मनासिक इति। चर्मविकारो नासिकास्येति समुदायविकारषष्ठ्याश्च बहुव्रीहि रुत्तरपदलोपश्चेति (२।२।२४, वा) समासः। उपसर्जन-

---

(B) अत्र रक्षितः—"एकैकाः परस्परसहिता इति न्यासग्रन्थ दृश्यते। स चायुक्तः। सर्वनामत्वाज् जसः शीति (७।१।१७) शीप्राप्तेः। असहायवाच्यप्येकशब्दः सर्वनामैव। यथाद्यन्तवदेकस्मिन्निति (१।१।२१)। एकं बहुव्रीहिवदिति (८।१।९) बहुव्रीहिवद्भावान्न सर्वनामसंज्ञानिषेधः सम्भवति। न बहुव्रीहाविति (१।१।२९) स्यातिदेशिकबहुव्रीहौ नेष्यते। तस्मादेकैके इति पाठो युक्तः। अन्ये त्वेकादाकिनिच्चासहाय इत्यत्र (५।३।५२) समर्थानां प्रथमाद्वेत्यतो (४।१।८२) वाग्रहणानुवृत्तेः प्रकृतरूपसिद्धावपि कप्लुकौ (५।३।५१) चेत्याकिनिचो लुग् विधानं प्रकृत्याश्रयकार्य्यनिवृत्त्यर्थमिति सर्वनामकार्य्याभाव इत्याहुः।" इति तन्त्रप्रदीपे।

ऋखत्वम्। ऋगयनमिति। ऋचोऽयनमिति षष्ठीसमासः। अगद्दति शक्य मकर्त्तुम्। अणृगयनादिभ्य इति (४।०।७३)निपातनादेव ऋगयन मित्यत्र णत्वाभावः सिद्धः। नैतदस्ति। अत्राधिकान्यपि निपातनानि भवन्तीत्युक्तम्। तत्र यद्यगद्दति नोच्येत तदा पक्ष ऋगयणमित्यपि विज्ञायेत। तस्मादगद्दति वक्तव्यम्। अथ किं पुनरिदं नियमार्थं मुत विध्यर्थमित्यतआह केचिदित्यादि। अपरे विध्यर्थं मेतदिति वर्णयन्ति। अतः केदिदित्युक्तम्। ननु पूर्वसूत्रेण निमित्तनिमित्तिनोः समान-पदस्थत्वे सति णत्वं विहितम्। नच द्रुणस इत्यादौ समासे कृते निमित्तनिमित्तिनोः समानपदस्थत्वमस्ति। निमित्तस्य पूर्वपदस्थत्वात्। निमित्तिन उत्तरपदस्थाच्च। एवञ्च पूर्वसूत्रेणाप्राप्तिरेव णत्वस्य। तत् कथमस्य नियमार्थतोपपद्यत इत्यत आह समासेऽपीत्यादि। यद्यपि समासार्थाभ्यां पदाभ्यां या विभक्तिरुत्पन्ना तस्यां लुप्ताया मपि तयोः प्रत्येकं प्रत्ययलक्षणेन पदसंज्ञायां सत्यां (C) समासावयवापेक्षयाऽ समानपदतास्ति तथापि समासाद् या विभक्ति रुत्पन्ना तया समुदायस्य पद-संज्ञायां सत्यां समुदायापेक्षय समानपदतास्त्येव। तस्मात् समासेऽपि समानपदे निमित्तनिमित्तिनोर्‌भावादस्ति पूर्वेण प्राप्तिः। ततश्च नियमार्थं मेतदिति स्थितम्। यद्येवं तर्हि यथा चर्म्मनासिक इत्यत्रोत्तरपदस्थस्य नकारस्य णत्वं न भवति नियमेन व्यावर्त्तितत्वात् तथा खरपस्यापत्यं खारपायणो नड़ादिभ्यः (४।१।-९९) फग् मातृभोगाय हितो मातृभोगीण—आत्मन्‌विश्वजनभोगोत्तरपदात् (५।१।९) ख इत्यत्र च तद्धितस्थस्यापि न स्यात्। तथा करणं प्रियमस्य करणप्रिय इत्यत्र पूर्वपदस्थस्यापि न स्यात्। अतआह स चेत्यादि। सम्बन्धिशब्दो हि नियतमेव प्रतियोगिनं सन्निधापयन्ति। यथाहि मातरि भक्तया प्रवर्त्तितव्य-मित्युक्ते यद्यपि स्वस्यामिति नोच्यते तथापि स्वस्यां मातरीति गम्यते तथेहापि पूर्वपद मुत्तरपदमिति सम्बन्धिशब्दावेतौ। सति पूर्व्वपदत्व उत्तरपदत्व सम्भवति। सति चोत्तरपदत्वे पूर्वपदत्वं सम्भवति। पूर्वपदसन्निधानादुत्तरपदे सन्निधापिते तस्यैवोत्तरपदस्थस्य नकारस्य नियमो णत्वं निवर्त्तयति चर्म्मनासिकइत्यादौ। न तद्धितपूर्वपदस्थस्यापि। खारपायणो मातृभोगीण इत्यादौ यथा योगं तद्धितपूर्व-पदस्थो नकारः। नतूत्तरपदस्थः। अयं तर्ह्यस्मिन्नियमार्थे दोषः। अगद्दति प्रतिषेधो

---

(C) अत्र रक्षितः—"इह च सूत्रे न्यासकृता प्रत्ययलक्षणेनोत्तरस्यापि पदत्वमुक्तम्। तच्च नोपपद्यते। उत्तरपदत्वे चापदादिविधाविति (१।१।६२, वा) निषेधात्। एतत्प्रतिवचनं पदव्यवायेऽपीत्यत्र (८।४।३८) अभिधास्यामहे।" इति।

नियमस्यैव स्यान्नतु णत्वस्य। नियमवाक्यैकदेशभूतत्वात् प्रतिषेधस्य। ततः संज्ञायामसंज्ञायाञ्च गकाराण्णत्वं स्यात्। अत एवाह अगइत्यादि। अगइति योऽयं प्रतिषेधः स णत्वस्यैव। न नियमस्य। तस्मान्न भवत्येष दोषप्रसङ्गः। कथं पुनर्नियमवाक्यैकदेशभूतः सन्नेष प्रतिषेधो णत्वस्य विज्ञातुं शक्य इति प्रश्नावसर इदमुत्तरमाह योगविभागेनेत्यादि। पूर्वपदात् संज्ञायामित्येको योगः। अगइति द्वितीयः। अनेन यावती काचिण् णत्वस्य प्राप्तिः सा सर्वा प्रतिषिध्यते। नत्वनन्तरमेव कार्य्यम्। अन्यथा योगविभागस्य वैयर्थ्यं स्यात्। अपरे त्वित्यादि। तुशब्दः पूर्वस्मात् पश्चार्द्धं विशेषं दर्शयति। अपरे त्वाचार्य्याः पूर्वसूत्रे समानमेव यन्नित्यं पदं तत् समानपदमित्याश्रयन्ति। तदेतदुक्तं भवति। यदावयवापेक्षा क्रियते तदापि यत् समानपदं यदापि समुदायापेक्षा क्रियते तदापि यत् समानपदं तत् समानपदमित्येवं परिगृह्णन्ति। कस्मादित्यत आह समानग्रहणादित्यादि। समानग्रहणं ह्येवमर्थं क्रियते। एकपदाधिकरणत्वे सति निमित्तनिमित्तिनोर् णत्वं यथा स्यात्। भिन्नपदत्वे सति मा भूदिति। एतच्चाप्रयोजनम्। पदग्रहणादेवास्यार्थस्य लब्धत्वात्। यदि भिन्नपदाधारत्वे सति णत्वं स्यात् तदा पदग्रहणमनर्थकं स्यात्। व्यवच्छेद्याभावात्। नह्यपदस्थौ तौ स्तः। तस्मात् पदग्रहणसामर्थ्यादेवाभिन्नपदयो र्निमित्तनिमित्तिनो णत्व लभ्यते। तत् पदग्रहणादेव समानपदे लब्धे समानग्रहणं क्रियमाणं नियमार्थं भवति। नित्यं यत् समानपदमित्यभिप्रायः। तेषामित्यादिना समानमेव यन्नित्यं पदं तत् पूर्वसूत्रे य आश्रयन्ति तन्मतेन विध्यर्थतामस्य दर्शयति। स्यादेतत्। समासेऽपि नित्यं समानपदमेवाश्रयो निमित्तनिमित्तिनोः। अतो नियमार्थमेतदुक्तं न विध्यर्थमित्यत आह समासेऽपीत्यादि। समासे ह्यवयवापेक्षयैतत् पूर्वपदमित्येतदुत्तरमित्येष विभागोऽस्ति। तस्मादसमानपदत्वमप्यस्ति। अपिशब्दात् समानपदत्वमपि। तत्र यदा पूर्वोत्तरपदापेक्षा भवति तदा पूर्वोत्तरविभागादसमानपदत्वम्। यदा तु समुदायापेक्षा तदा पूर्वोत्तरविभागाभावात् समानपदत्वम्। अतो न समासे समानपदत्वं नित्यमेव।

## ४। वनं पुरगामिश्रकासिध्रकाशारिकाकोटराग्रेभ्यः।

वनमिति षष्ठीस्थाने सुब्व्यत्ययेन प्रथमा। पुरगावणमिति षष्ठीसमासः। वनगिर्य्योः संज्ञायां कोटरकिंशुलुकादीनामिति (६।३।११७) पूर्वपदस्य दीर्घः।

अग्रेवणमिति। षष्ठीसमासः। तस्मिन् कृते राजदन्तादित्वाद् वनशब्दस्य परनिपातः। हलदन्तात् सप्तम्याः संज्ञायामिति (६।३।९) सप्तम्या अलुक्। ननुच पूर्वेणैव णत्वं सिद्धम्। तत् किमर्थोऽयमित्यत आह सिद्धइत्यादि। पुरगादिभ्यो वननकारस्यैवेति विपरीतनियमो नाशङ्कनीयः। पुरगादीनां कृतदीर्घाणां निर्देशात्। स ह्येवमर्थः क्रियते। यत्रैषां दीर्घत्वं तत्र नियमो यथा स्यात्। अन्यत्र मा भूदिति। अन्यथा वनगिर्योरित्यनेनैव दीर्घत्वे सिद्धे दीर्घोच्चारणं गौरवफलमेव केवलं स्यात्। तस्माद् यत्रैषां दीर्घत्वं तत्रैव नियमः। अतो व्यवच्छेद्याभावान्न भवति विपरीतनियमाशङ्का। नहि वनादन्यस्मिन्नमीषां पूर्वपदभूतानां दीर्घत्वमस्ति।

## ५। प्रनिरन्तःशरेक्षुप्लक्षाम्रकार्ष्यखदिरपीयूक्षाभ्योऽसंज्ञायामपि।

येऽत्रौषधिवनस्पतिशब्दा न भवन्ति प्रादयस्तेभ्यः संज्ञायां यदि पूर्वसूत्रं नियमार्थम्। अथापि विध्यर्थमुभयथाप्यप्राप्तणत्वमनेन विधीयते। एवमसंज्ञायामपि विधिपक्षे। नियमपक्षे त्वसंज्ञायां निष्प्रयोजनोऽस्यारम्भः। असंज्ञायां नियमाभावात्। आद्याभ्यामेव सूत्राभ्यां यथायोगं णत्वस्य सिद्धत्वात्। इतरेषु शरादिष्विक्षुशरशब्दावोषधिवचनौ। शेषाः प्लक्षादयो वनस्पतिवचनाः। तेभ्यः संज्ञायां विधिपक्षे नियमपक्षे चाप्राप्तं णत्वमनेन विधीयते। असंज्ञायान्तु विभाषौषधिवनस्पतिभ्य इति (८।४।६) विभाषा णत्वं प्राप्तं नित्यमनेन विधीयते। असंज्ञायामपीत्यपिशब्दस्य व्यापारं दर्शयति। असत्यपिशब्दे संज्ञाधिकारादसंज्ञायां न स्यात्। अथ तु संज्ञाधिकारं निवर्त्त्य सामान्येन विधिरुच्यते तदा शक्यते संज्ञाग्रहणमकर्त्तुम्। तत् क्रियते विस्पष्टार्थम्। प्रवणं निर्वणमिति। प्रगतं वनं निर्गतं वनमिति प्रादिसमासः। अन्तर्वणमिति। विभक्त्यर्थेऽयमव्ययमित्यदिनाव्ययीभावः (२।१।६)। वनस्य मध्यइत्यर्थः। शरवणमित्यादयश्च षष्ठीसमासाः।

## ६। विभाषौषधिवनस्पतिभ्यः।

संज्ञायां (८।४।४) वनं पुरगामिश्रकादिनियमादोषधिवनस्पतिभ्यः परस्य वननकारस्य णत्वेन न भवितव्यमिति पारिशेष्यादसंज्ञायां विभाषा वेदितव्या। परत्वा-

दनया विभाषया संज्ञायामपि भवितव्यमित्येतच्च नाशङ्कनीयम्। नियमे कर्त्तव्ये विभाषाया असिद्धत्वात्। अथ तु संज्ञायामसंज्ञायामपि विभाषेय मिष्यते तदर्थं यत्नान्तरमास्थेयम्। किं पुनस्तद्? विभाषेति योगविभागकरणम्। योगविभागे सत्येको योगो नियमबाधनार्थो विज्ञायत इति संज्ञायामपि विभाषा सिध्यति। असिद्धत्वं तु योगविभागसामर्थ्यान्न भविष्यति। अत्र समानग्रहणसामर्थ्यात् समानमेव यन्नित्यं पदं तत् समानपदमित्याश्रयन्ति ये तेषामप्राप्तविभाषेयम्। अन्येषां तु प्राप्तविभाषा। बहुवचननिर्द्देशस्तु स्वरूपनिरासार्थः। दूर्वावण मित्येवमादयः षष्ठीसमासाः। द्व्यक्षरत्र्यक्षरेभ्य इति वक्तव्यमिति। अक्षरशब्दोऽत्राच्सु वर्त्तते। द्वे अक्षरे त्रीणि वाक्षराणि येषां ते द्व्यक्षरत्र्यक्षरा ओषधिवनस्पतिशब्दाः। तेभ्यः परस्य वननकारस्य णत्वं भवत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्। व्यवस्थितविभाषाविज्ञानाद् द्व्यक्षरत्र्यक्षरेभ्य एव भवति। एवमुत्तरत्रापि वक्तव्यशब्दस्य व्याख्येयमित्यर्थः। व्याख्यानन्तु व्यवस्थितविभाषा माश्रित्य कर्त्तव्यम्। ननुच शिरीषादयो वृक्षाः। नतु वनस्पतयः। नतु वनस्पतिग्रहणेन वृक्षस्य ग्रहणं भवति। तेषामत्यन्तभेदात्। तथाचोक्तं शास्त्रान्तरे फली वनस्पतिर्ज्ञेयो वृक्षाः पुष्पफलोपगा इति। तत् कथं शिरीषवणं बदरीवण मित्युदाहृतमिति यो देशयेत् तं प्रत्याह फली वनस्पतिर्ज्ञेय इति। यद्यप्यनेन श्लोकेन वृक्षवनस्पत्योर्भेदो दर्शित स्तथापि तयोरिहाभेदेन ग्रहणं वेदितव्यम्। अभेदग्रहणे तु तयो र्भाष्यकारवचनमेव लिङ्गम्। तथाहि लुपि युक्तवद् व्यक्तिवचने इत्यत्र (१।२।५१) भाष्यकारेणोक्तं व्यक्तिवचने इति किम्? शिरीषाणामदूरभवो ग्रामः शिरीषाः। तेषां वनं शिरीषवनम्। यद्यत्र व्यक्तिवचने इति नोच्येत तदा वनस्पतित्वमतिदिश्येत। तत्र विभाषौषधिवनस्पतिभ्य इति (८।११६) णत्वं प्रसज्येत। यदि चेह वृक्षवनस्पत्योरभेदेन ग्रहणं न स्यात् ततो वनस्पतित्वातिदेशाद् विभाषा णत्वप्रसञ्जनञ्च नोपपद्यते। शिरीषाणामवनस्पतित्वात्। फली वनस्पतिर्ज्ञेय इति पुष्पमन्तरेण फलमात्रं यस्यास्तीति स फली वनस्पतिर्ज्ञेय इति। उदुम्बरादयः। वृक्षाः पुष्पफलोपगा इति। पुष्पं फलञ्चोपगच्छन्ति प्राप्नुवन्तीति पुष्पफलोपगाः। अन्तत्यन्त्येत्या-(३।२।४८) दावन्येष्वपि दृश्यत इत्युपसंख्यानाड् (३।२।४८, वा) डप्रत्ययः। नच ये पुष्पफले उपगच्छन्ति त एव वृक्षाः। किं तर्हि? येऽन्यतरत् पुष्पं फलं चोपगच्छन्ति तेऽपि वृक्षा एव। तत्र वेतसादयः पुष्पमेवोपगच्छन्ति। प्लक्षादयः फलमेव। आम्रादय स्तूभयम्।

तत्र यो वनस्पतिः स नियतं वृक्षो भवति। यस्तु वृक्षः स तु नावश्यं वनस्पतिः। यथा पुष्पोपगाश्च वृक्षा वेतसादयः। फलोपगाश्च प्लक्षादयः। पुष्पफलोपगाश्चाम्रादयः। ओषध्यः फलपाकान्ता इति। ओषधिशब्दात् कृदिकारादक्तिन इति (४।१।४५, ग सू) सर्वतोऽक्तिन्नर्थादित्येक इति बह्वादिपाठात् (४।१।४५, वा) ङीष्। फलपाकेनान्तो विनाशो यासां ताः फलपाकान्ता ओषध्यो विज्ञेयाः कदल्यादयः। लता गुल्माश्च वीरुध इति। लताः प्रतानवत्यो मालत्यादयः। गुल्मा ह्रस्वस्कन्धास्तरवः। वीरुधो बहुप्रकाण्डपत्रा विज्ञेयाः।

## ७। अह्नोऽदन्तात्।

अह्न इति षष्ठ्याः स्थाने प्रथमा पूर्ववत्। समानमेव यन्नित्यं पदं तत् समानग्रहणादाश्रयन्ति ये तेषां विध्यर्थमेतत्। अन्येषां तु नियमार्थम्। एवमुत्तरत्रापि नियमार्थता विध्यर्थता च यथायोगं वेदितव्या। पूर्वाह्ण इत्यादि। पूर्वापरादिसूत्रेणैकदेशी समासः ( २।२।१ )। राजाहःसखिभ्यष्टजिति ( ५।४।९१ ) टच् समासान्तः। अह्नोऽह्न एतेभ्य इत्यह्नादेशः (५।४।८८)। सवर्णदीर्घः। निरह्न इति। निर्गतमह्न इति प्रादिसमासः। शेषं पूर्ववत्। दीर्घाह्नीति। दीर्घाण्यहानि यस्यामिति बहुव्रीहिः। टज्विधौ तत्पुरुषस्याङ्गुलेः ( ५।४।८६ ) संख्याव्ययादेरित्यतस्तत्पुरुषग्रहणमनुवर्त्तते। तेन बहुव्रीहौ टज् न भवति। अन उपधालोपिनोऽन्यतरस्यामिति (४।१।२८) ङीप्। अल्लोपोऽन (६।४ १३४) इत्युपधाकारलोपः। अत्राकारान्तग्रहणान्न भवति णत्वम्। यदि त्वनकारान्तस्य स्यात् ततः पूर्व्वाह्ण इत्यत्र प्रत्ययात् प्राग् यथा व्यवस्थितस्याह्नो नकारस्य णकारादेशो भवति तथा दीर्घाह्नो शरदित्यत्रापि स्यात्। अतोऽस्य ग्रहणं हि व्याख्यानाद् विज्ञायते। तपरकरणात् पराजितमहः पराह्न इत्यत्र आकारान्तान्न भवति। अन्तग्रहणं विस्पष्टार्थम्। तपरेणाकारेण पूर्वपदे विशेष्यमाणे तदन्तविधिर्भविष्यतीति विनाप्यन्तग्रहणं तदन्तता लभ्यत इति।

## ८। वाहनमाहितात्।

उह्यतेऽनेनेति करणे ल्युट्। अतएव निपातनादुपधादीर्घः। इक्षुवाहणमिति। इक्षूणां वाहन मिति कृद्योगलक्षणायाः कर्मणि षष्ठ्याः समासः। वाहने यदारोपितं तदाहित मुच्यत इति। अनेकार्थत्वाद् धातूनां दधाति स्त्वत्र

वर्त्तते। आहितमिति भूतकालोऽत्र न विवक्षितः। क्तल्युटौ ( ३।३।११३ ) बहुलमिति कालसामान्ये क्ता विधीयते। तेन यद्यपि वाहने वाहनार्थमिक्ष्वादिकमारोपितं न भवति। तदर्थन्तु केवल मुपकल्पितं भूतलक्षितं तदापि भवत्येव। दाक्षिवाहन मिति। अत्र दाक्षिस्वामिकवाहनमेव प्रतीयते। नत्वाहितत्वम्। अतएवाह दाक्षिस्वामिकं वाहनमित्यर्थ इति। अत्र शब्दशक्तिर्हेतुः।

## ९। पानं देशे।

देशाभिधान इति गम्यमान इति शेषः। क्षीरं पानं येषाम्। कर्त्तरि कृद्योगलक्षणा षष्ठी। क्षीरपाणा उशीनरा इति। अतिशयोऽत्र प्रतीयते। नतु क्षीरपानसम्बन्धमात्रम्। तस्यान्यत्रापि सम्भवात्। ननु च क्षीरपाणादयः शब्दा मनुष्ये वर्त्तन्ते। तत् सामानाधिकरण्यादुशीनरादयोऽपि तत्रैव। तत् कथमिह देशाभिधानं गम्यते? नैतदस्ति। उशीनरादिदेशवासिनां तात्स्थ्यात् तथा प्रतीयमानत्वादुशीनरादिदेशसम्बन्धद्वारेण मनुष्येषूशीनराख्याः। उशीनरादयोऽपि शब्दाः संज्ञात्वेन प्रागदेशेष्वेव प्रवृत्ताः। पश्चात् तत्सम्बन्धेन मनुष्येषु। तेन मनुष्याभिधाने देशाभिधानं गम्यत इत्युक्तम्भवति। यथा मञ्चाः क्रोशन्तीत्यत्र मञ्चसम्बन्धद्वारेण मनुष्येष्वपि वर्त्तमाना ये मञ्चशब्दास्तेषां मञ्चाभिधानं गम्यते। यदि तेषां मञ्चाभिधानं न गम्येत तदा मञ्चाधारविशिष्टाः पुरुषाः कथं प्रतीयेरन्?

## १०। वा भावकरणयोः।

अदेशार्थोऽयमारम्भः। क्षीरपाणमिति। पीतिः पानम्। नपुंसके भावे क्त इत्यनुवर्त्तमाने ( ३।३।११४ ) ल्युट् चेति ( ३।३।११५ ) ल्युट् प्रत्ययः। क्षीरपाणः कंस इति। पीयतेऽनेनेति पानः। करणाधिकरणयोश्चेति ( ३।३।११७) ल्युट्। वाप्रकरण इत्यादि। उपसंख्यानशब्दस्य चेह प्रतिपादनमर्थः। अस्मिन् वाप्रकरणे गिरिनदीप्रभृतीनां यो नकारस्तस्य णत्वप्रतिपादनं कर्त्तव्यमित्यर्थः। तत्रेदं प्रतिपादनम्। उत्तरसूत्रेऽनुक्तसमुच्चयार्थं चकारः। तेन गिरिनदीप्रभृतीनां यो नकारस्तस्य णत्वं वा भविष्यतीति।

## ११ । प्रातिपदिकान्तनुम्विभक्तिषु च ।

अन्तशब्दोऽवयववाची । माषवापिणाविति । बहुलमाभीक्ष्ण्ये इति (३।२।८१) णिनिः । ननु सुप्यजातौ णिनिस्ताच्छील्ये इति ( ३।२।७८ ) । जातिवाचित्वादुपपदस्य । माषवापाणीतुपपदसमासः । माषान् वपन्तीति कर्मण्यण् (३।२।१) । जश् शसोः शिरिति ( ७।१।२० ) शिरादेशः । नपुंसकस्य झलच इति (७।१।७२) नुम् । सर्वनामस्थाने चासम्बुद्धाविति ( ६।४।८ ) दीर्घः । माषवापेणेति । माषवापशब्दात् तृतीयैकवचनस्य टाङसिङसामिनात्स्याइतीनादेशः ( ७।१।१२ ) । अथेह कस्मान्न भवति गर्गाणां भगिनी गर्गभगिनीति । अत्रापि गर्गशब्दात् परो भगिन्नित्येष शब्दः प्रातिपदिकम् । तस्य चान्तो नकारो भवतीत्यस्ति प्राप्तिरित्यत आह पूर्वपदाधिकारादित्यादि । पूर्वपदात् संज्ञाया मग इत्यतः ( ८।,।३ ) पूर्वपदादित्यनुवर्त्तते । पूर्वपदस्य सम्बन्धिशब्दत्वाद् यदपेक्षया तस्य पूर्वपदत्वं तदेवोत्तरपदमुपस्थापयति । तेन यद्यपीह प्रातिपदिकस्य विशेषो नोपात्त स्तथाप्युत्तरपदं यत् प्रातिपदिकं तदन्तस्य नकारस्यैव णकारादेशो भवति । इह हि न भवति । हिशब्दो हेतौ । यस्मात् पूर्वपदाधिकारादुत्तरपदं यत् प्रातिपदिकं तदन्तस्यैव नकारस्य णत्वं विज्ञायते तस्माद् गर्गभगिनीत्यत्र न भवति । नह्यत्र भगिन्नित्येतच्छब्दरूप मुत्तरपदम् । कि तर्हि ? भगिनीत्येष शब्दः । स च प्रातिपदिकं न भवति । अप्रत्यय इति (१।१।४५) निषेधात् । न च तस्यान्तो नकारः । किं तर्हि ? ईकारः । ननु गर्गभगिणीत्ययमपि च प्रयोगो दृश्यते ? (D) स चैवं सति नोपपद्यत इत्यत आह यदा त्वित्यादि । यदा तु गर्गाणां भगिनीत्येवं व्युत्पत्ति स्तदा न भवितव्यं णत्वेन । यदा तु गर्गस्य भग इति भगशब्देन षष्ठीसमासं कृत्वा ततः स्त्रियां मत्वर्थे इनिरिति व्युत्पाद्यते तदैवं व्युत्पत्तौ सत्यां यथा माषभोगीण इत्यत्र नित्यं णत्वं भवति तथा गर्गभगिणीत्यत्रापि णत्वेन भवितव्यम् । माषभोगीणवदित्यनेन तदापि नानेन सूत्रेण वा णत्वम् । किं तर्हि ? लक्षणान्तरेणेति दर्शयति । तेनैतदुक्तं भवति । यदैवं व्युत्पत्ति र्भवति तदा यथा माषभोगीण इत्यत्राट्कुप्वादिना ( ८।४।२) नित्यं तद्धितस्य नकारस्य णत्वं भवती तथा गर्गभगिणीत्यत्रापि । अत्र तद्धितस्य एव नकारः । नतूत्तरपदस्थः । अतएव भिन्नपदस्थता निमित्तनिमित्तिनो नाशङ्कनीया । यथा पूर्वपदात् संज्ञायामग ( ८।४।३ ) इत्यनेन नियमेन णत्वं न निवर्त्यते तथा तत्रैव प्रतिपादितम् । यद्यु-

(D) वस्तुतो गर्गभगिणीत्यत्र कुमति चेति ( ८।४।१३ ) णत्वप्रसङ्गो वेदितव्यः ।

त्तरपदं यत् प्रातिपदिकं तदन्तस्य नकारस्य णकारेण भवितव्यमेवं सति माषवापिणो माषवापिनीत्यत्र (E) विभाषा णत्वं न प्राप्नोति। अत्र वापिनीशब्द एवोत्तरपदम्। न वापिन्नित्येतच्छब्द इत्यत आह माषवापिनीत्यत्र लित्यादि। अत्र हि प्राक् सुबुत्पत्तेः कृदन्तेनैव वापिन्नित्यनेन समासे कृते सति प्रातिपदिकस्यान्तो नकारो भवति। वापिन्नित्येतस्य कृत्तद्धितसमासाश्चेति (१।२।४६) प्रातिपदिकत्वात्। तस्माद् भवत्येवात्र णत्वमिति। कथं पुनः प्राक् सुबुत्पत्तेः समासे सत्युत्तरपदस्यान्तो नकार उपपद्यते? यावता सुप्तिङन्तं पद-(१।४।१४) मित्यनेन सुबन्तस्य तिङन्तस्य च पदमित्येषा संज्ञा विहिता। तत्रासत्यां सुबुत्पत्तौ पदत्वमत्र न सम्भवति। कुतः पुनरेतदुत्तरपदमित्येष विशेषः? रूढित्वाददोषः। पूर्वपदोत्तरपदशब्दावेतौ रूढिशब्दौ। यस्मात् समासे कृते यः कश्चिच्छब्दः पूर्वपदमिति प्रसिद्धः यः कश्चिदुत्तरपदमिति। सा च रूढिर्न सुबन्तेष्वेव समासावयवेषु सम्भवति। किं तर्हि? असुबन्तेष्वपि केषुचिदिति। तत् किमत्र नोपपद्यते पूर्वोत्तरपदव्यवहारः? तथात्वेत्यादिना यदुक्तं पूर्वपदाधिकारादुत्तरस्येति तद् द्रढयति। यत एवमुत्तरपदस्य प्रातिपदिकस्य योऽन्त्यो नकारस्तस्यैव णत्वं भवति। नान्यस्येत्यय मत्रार्थः। एवञ्च कृत्वा नुम्ग्रहणं कृतम्। कस्मात् पुनरस्मिन्नर्थे सति नुमो न सिध्यति यतस्तदुपादानं कृतमित्यत आह स हीत्यादि। अङ्गस्य नुम्विधानात्। माषवापानीत्यत्र समुदायस्याङ्गत्वात् समुदायात्मनोऽङ्गस्य भक्तो नुम्। नोत्तरपदस्य। ततश्चोत्तरपदस्यान्तो नुम् न भवति। तत्र यदि नुम्ग्रहणं न क्रियेत तदा णत्वन्न स्यादित्यभिप्रायः। यदि पुनः प्रातिपदिकस्यानुत्तरपदभूतस्यापि योऽन्तो नकारस्तस्य णत्वं विधीयते तदा नुम्ग्रहणं न कर्त्तव्यमेव। प्रातिपदिकान्तस्येत्येव सिद्धत्वात्। भवति हि माषवापिनीत्यत्रापि समासे सति प्रातिपदिकस्यान्तो नकारः। वक्तव्यमिति। व्याख्येय मित्यर्थः। तत्रेदं व्याख्यानम्। वेति वर्त्तते। सा च व्यवस्थितविभाषा। तेन युवादीनां णत्वेन न भवितव्यम्। आर्य्ययूनेति विशेषणसमासः। श्वयुवमघोनामतद्धित इति (६।४।१३३) संप्रसारणम्। संप्रसारणाच्चेति (६।१।१०८) पूर्वरूपत्वम्। अकः सवर्णदीर्घः (६।१।१०१)। प्रपक्वानीति। गतिसमासः। चकारस्य पूर्वोक्तमेव प्रयोजनम्।

---

(E) अन्यथापि सिध्यति। वापिनीशब्देन समासे माषवापिनीति। माषवापोऽस्या अस्तीति मत्वर्थीयेऽवश्यं माषवापिणीति। शिरः पाविणी शिरः पाविनीत्येतदर्थं तु कृदन्तेन समासोऽभ्युपगन्तव्यः।

## १२। एकाजुत्तरपदे णः।

वृत्रहणाविति। ब्रह्मभ्रूणेति ( ३।२।८७ ) क्विप्। चीरपाणीति। पिबतेः पातेर्वातोऽनुपसर्गे कः ( ३।२।३ )। आतो लोप इटि चेत्याकार ( ६।४।६४ ) लोपः। सुरापाणीति। पिबतेर्गापो ष्टक् ( ३।२।८ )। पाते र्वा पूर्ववत् कः। अथ णग्रहणं किमर्थम्? यावता णइत्यनुवर्त्ततएव। नित्यार्थमिति चेत्? स्यादेतत्। वेति प्रकृतम्। तत्रासति पुनर्णग्रहणे विकल्पः प्रसज्येत। तस्मान्नित्यं यथा स्यादित्यवमर्थं पुनर्णग्रहणं कृतमिति। एतच्चायुक्तम्। पूर्वेणैव विकल्पः सिद्धः। तत्रारम्भसामर्थ्यादेवायं विधिर्नित्यो भविष्यतीत्यत आह णइत्यनुवर्त्तमान इत्यादि। विकल्पाधिकारस्यास्वरितत्वाद् या निवृत्तिस्तस्य। विस्पष्टार्थं पुनर्णग्रहणम्। असति हि णग्रहणे कश्चिन्मन्दबुद्धिरेवं मन्येत। अनुवर्त्ततएव वाग्रहणम्। तस्मिंस्त्वनुवर्त्तमानेऽप्यारम्भसामर्थ्यादयं विधिर्नित्यो भविष्यति। उत्तरस्तु पाक्षिक एवेति।

## १३। कुमति च।

अनेकाजुत्तरपदार्थ आरम्भः। चकारः प्रातिपदिकान्तनुम्विभक्तिषु चेत्यनुकर्षणार्थः। तेनोत्तरत्रानुवृत्तिर्न भवति। चानुकृष्टपरिभाषया (प,७८)। वस्त्रयुगिणाविति। (F) अत इनिठनाविनीनिः (५।२।११५)। काविति कर्त्तव्ये कुमतीति वचनमकवर्गादावपि यथा स्यात्। इतरथा हि यस्मिन् विधिस्तदादवल्ग्रहण इति ( प, ३४ ) कवर्गादेरेव स्यात्। वपनं वापः। कुम्भस्य वापः कुम्भवापः। माषाणां कुम्भवापो माषकुम्भवापः। अत इनि ठनावितीनिः ( ५।२।११५ )। माषकुम्भवापिणावित्यत्र (G) स्यात्। वस्त्रयुगिणावित्यत्र न स्यादिति।

---

(F) "वस्त्रयुगिणाविति ( युगमनयोरस्तीति युगिनौ। वस्त्रयोर्युगिनौ वस्त्रयुगिणाविति। यदि वस्त्रयुगमनयोरस्तीति वाक्यं तदा समुदायात् तद्धितः स्यात्। ततश्च मातृभोगीणवन्नित्यं णत्वं स्यात्। इदञ्च सूत्रं प्रातिपदिकान्तनुम्विभक्तिषु चेति ( ८।४।११ ) विकल्पबाधनार्थम्। स चोत्तरपदप्रातिपदिकान्तत्वे पूर्वव्युत्पत्तावेव युज्यते। भागवृत्तौ तु युजाक्रीडेति ( ७।२।१४२ ) घिनुणन्तमुदाहृतं वस्त्रयोगिणाविति। एतस्यां व्युत्पत्तौ सम्भवत्येवोत्तरपदप्रादिपदिकान्तत्वं नकारस्य।" इति तन्त्रप्रदीपे मैत्रेयः।

(G) "यच्चात्र न्यासे दृश्यते माषकुम्भवापिणाविति स प्रमादपाठः। नह्यत्रोत्तरपदप्रतिपादिकान्तत्वं विद्यते नकारस्य। समुदायादिनेर्विधानात् तद्धितस्य। समुदायात् तद्धितत्वात् मातृभोगीणवन्नित्यमेवात्र णत्वं स्यात्। नानेन। एष तु पाठो भाष्ये दृश्यते माषकुम्भवापेणेति। अत्र विभक्तिस्थत्वान्नकारस्य णत्वं स्यात्।" इति रचितः। तथाच भाष्यम्—"अथेह कथं भवितव्यम्? माषकुम्भवापेण। व्रीहिकुम्भवापेण। किं नित्यं भवितव्य माहोस्विद्विभाषया? यदा तावदेतद्वाक्यं भवति कुम्भस्य वापः कुम्भवापः। माषाणां कुम्भवापः

## १४ । उपसर्गादसमासेऽपि णोपदेशस्य ।

णोपदेशस्येति । ण उपदेशे यस्य स णोपदेशः । गमकत्वाद् वैयधिकरण्ये बहुव्रीहिः । अथवोपदिश्यते प्रथमत उच्चार्यत इत्युपदेशः । ण उपदेशो यस्येति समानाधिकरण एव बहुव्रीहिः । प्रणमतीति । णम प्रह्वत्वे शब्दे च । प्रणायक इति । णीञ् प्रापणे । ण्वुल् । प्रादिसमासः । प्रनायको देश इति । अत्र गमिं प्रति क्रियायुक्तत्वात् प्रशब्दस्य गमिमेव प्रत्युपसर्गत्वम् । न नयतिं प्रति । यं प्रति प्रयुक्ताः प्रादयस्तं प्रति गत्युपसर्गसंज्ञाविधानात् । असमासेऽपीति किमिति । विनाप्यनेन विशेषानुपादानात् समासेऽसमासेऽपि भविष्यतीति भावः । पूर्वपदाधिकारादित्यादि । पूर्वपदादिति वर्त्तते । असमासे भवति पूर्वपदत्वम् । रूढिशब्दो हि पूर्वपदशब्दः पूर्वमाश्रितः । स एव चेहानुवर्त्तते । स च समास एव सम्भवति । ततश्च समासेऽपीत्युच्यमाने समास एव स्यादिति । इतिकरणो हेतौ । यस्मादसति तस्मिन्नेष दोष स्तस्मात् तस्य पूर्वपदस्य निवृत्तिं द्योतयितुमसमासेऽपीत्युच्यते । द्योतनग्रहणेनैतदाचष्टे । नानेन तस्य निवृत्तिः क्रियते । किं तर्हि ? अस्वरितत्वादविद्यमानतैव केवलं प्रकाश्यत इति । तदेतदुक्तं भवति । मन्दबुद्धिर्य एवं प्रतिपत्तुमसमर्थ स्तं प्रति विस्पष्टीकरणार्थमसमासेऽपीत्युच्यत इति । प्रनर्दतीति । नर्द गर्द शब्दे । सत्यप्यच्परत्वेऽच्परोऽयं णोपदेशो न भवति । नृतिनर्दिनन्दिनक्किनाथनवर्जमित्यपवादविधानात् ।

---

माषकुम्भवाप इति तदा नित्यं णत्वेन भवितव्यम् । यदा त्वेतद्वाक्यं भवति माषाणां कुम्भी माषकुम्भः । माषकुम्भस्य वापः माषकुम्भवाप इति तदा विभाषया भवितव्यम्" इति । अत्र कैयट :—"अथेति विचारो निष्प्रयोजनम् इत्याहुः । विग्रहद्वयेऽप्यर्थाभेदाद्रूपद्वयसिद्धौ च विकल्पस्यैव समर्थनान्नित्यणत्वोपन्यासस्याजागलस्तनतुल्यत्वात् । नचात्र णत्वेन भाव्यम् । पदव्यवाय (८।४।३८) इति प्रतिषेधात् । केचिदाहुः । यदा माषाणां कुम्भी माषकुम्भ स्तस्य वाप इति प्रक्रिया तदोत्तरपदत्वे चापदादिविधाविति (१।१।६३, वा) प्रत्ययलक्षणनिषेधात् पदत्वाभावान्निषेधाप्रवृत्तिः । कुम्भस्य वापः कुम्भवापो माषाणां कुम्भवापो माषकुम्भवाप इत्यस्यां तु प्रक्रियायां णत्वप्रतिषेध इति ।" इति । नैयासिकास्त्वाहुः—"अथात्र पदव्यवायेऽपीति (८।४।३८) णत्वप्रतिषेधः कस्मान्न भवति । अस्त्येवात्र कुम्भपदेन निमित्तनिमित्तिनो र्व्यवायः । अत्र समर्थयन्ते । पदव्यवायेऽपीत्यत्र (८।४।३८) अपिशब्दः पठ्यते । स प्रतिषेधानित्यत्वार्थः । तेनात्र णतिषेधो न भवतीति । अन्ये तु मन्यन्ते कुम्भस्य वापः कुम्भवाप इत्युपपदसमासोऽयम् । कुम्भस्य वाप इति च बालबोधनपर मन्वाख्यानम् । न पुनः प्रयोगार्हमिदं वाक्यम् । उपपदसमासस्य नित्यत्वात् । अत्र गतिकारकोपपदानां कृद्भिः समासवचनं प्राक् सुबुत्पत्तेः (प, ७६) । तेन सुबन्तत्वाभावात् प्रत्ययलक्षणं नास्तीति पदव्यवायेऽपीति (८।४। ८) प्रतिषेधाप्रवृत्तिरिति । एतच्च क्वचिदेवाश्रीयते । न सर्व्वत्र । कर्म्मकारादिषु नलोपाद्यप्रसङ्गात् । अत्र च तत्पुरुषे कृति बहुल (६।३।१४) मित्यलुग्वचनं ज्ञापकं पूर्वपदेषु सुबुत्पत्ति र्भवतीति ।" इति च रक्षितः ।

## १५। ह्विनुमीना।

प्रह्विणोतीति। ह्वि गतौ। स्वादिभ्यः श्नुः (३।१।७३)। गुणः। प्रमीणातीति। मी हिंसायाम्। क्र्यादित्वाच् श्ना। प्रमीणीत इति। ई हल्यघोरितीत्वम् (६।४।११३)। अथ कथं प्रह्विणोति प्रमीणीत इत्यत्र णत्वम्? यावता ह्विनुमीनेति स्वरूपयो र्ग्रहणम्। नचात्र गुणादौ विकारे कृते तं रूपे स्तः। तस्मात्रात्रैव भवितव्यं प्रह्विणुतः प्रमीणातीति। अजादेशस्य स्थानिवद्भावादेकदेशविकृत-स्यानन्यत्वाद् (प, ३८) वा भविष्यतीत्यदोषः। ननु प्रतिषिध्यते स्थानिवद्भावः। पूर्वत्रासिद्धीये न स्थानिवदिति दोष एवायमस्याः परिभाषायाः। तथाचोक्तम् श्रस्या दोषः संयोगादिलोपलत्वणत्वेष्विति (१।१।५८, वा)। अथ ह्विमीभ्या-मित्येवं कस्मान्नोक्तम्? अशक्यमेवं वक्तुम्। अविकरणनकारस्यापि स्यात्। प्रह्वेनर्द्दनमिति। प्रमीनर्द्दनमिति। प्रह्विणोतीति प्रह्वेः। अन्येभ्योऽपि दृश्यन्त इति (३।२।७५) विच्। गुणः। प्रमीणातीति प्रमीः। क्विप्। प्रह्वेर्नर्द्दनं प्रम्यो (H) नर्द्दनमिति षष्ठीसमासः।

## १६। आनि लोट्।

प्रवपाणीति। वपेर्लोट्। मिप्। मेर्निः (३।४।८९)। आडुत्तमस्य पिच्चे-त्याट् (३।४।९२)। प्रयाणीति। या प्रापणे। प्रवपानि मांसानीति। प्रकृष्टा वपा येषामिति बहुव्रीहिः। जश्शसोः शिरिति (७।१।२०) शिरादेशः। नपुंसकस्य झलच इति (७।१।७२) नुम्। सर्वनामस्थाने चासम्बुद्धाविति (६।४।८) दीर्घः। प्रवपानीति। अत्र लोड्ग्रहणान्न भवति। प्रातिपदिकान्तनुम्विभक्तिषु चेत्यनेन (८।४।११) तर्हि कस्मान्न भवतीति? भवत्येव पक्षे। ननु चोपसर्गादिति वर्त्तते। नचानिं प्रति प्रशब्दस्योपसर्गत्वम्। किं तर्हि? कृषिं प्रति। तस्मादुपसर्गत्वा भावादेव न भविष्यतीति किं लोड्ग्रहणेन? नैतदस्ति। मूलोदाहरणेष्वपि तर्हि न स्यात्। अत्र हि धातुं प्रत्युपसर्गत्वम्। नानिं प्रति। तस्मात् सामर्थ्यादि-होपसर्गग्रहणमनुवर्त्तमानं प्राद्युपलक्षणार्थं विज्ञायते यथाञ् नासिकायाः संज्ञायां (५।४।११८) नसञ्ज्ञास्थूलादित्युपसर्गाच्चेत्यत्रोपसर्गग्रहणं (५।४।११९)

---

(H) "क्वचित् प्रमियो नर्द्दनमिति दृश्यते। स चापपाठः। एरनेकाच इति (६।४।८२) यणादेश-विधानात्। कश्चित्तु समर्थयमान आह अपवादविषयेऽप्युत्सर्गोऽभिनिविशत इति (प, ५९)।" इति मैत्रेयः।

प्राद्युपलक्षणार्थम् । ततश्चासति लोड्ग्रहणे स्यादेव णत्वमिति तन्निवृत्त्यर्थं लोड्ि-त्युच्यते । नन्वेवमपि न कर्त्तव्यं लोड्ग्रहणम् । अर्थवद्ग्रहणे (प,१५) नानर्थकस्ये-त्यर्थवतो ह्यानिश्चब्दस्येदं ग्रहणम् । नहि प्रवपानि मांसानीत्यत्रानिशब्दोऽर्थ-वान् । किं तर्हि ? इकारः । एवं तर्ह्येतज् ज्ञापयति । अनित्यैषा परिभाषेति । तेनेन्हन्पूषार्यम्णां ( ६।४।१२ ) शावित्यत्रानर्थकस्यापीनो ग्रहणे सति बहु-वाग् ग्मीनि ब्राह्मणकुलानीत्यत्रापि दीर्घत्वं सिद्धं भवति । आनीत्याकारोच्चा-रणं किमर्थम् ? यदाड़ागमो न भवति तदा शुद्धस्य निशब्दस्य भूदित्येवमर्थम् । ननु च नित्यमेवाड़ागमेन भवितव्यम् । नहि तद्विधौ विकल्पोऽस्ति । एवं तर्ह्येतज् ज्ञापयति । अनित्यमागमशासनमिति । तेनापि शाकं पचानस्य सुखा वै मघवन् गृह्य इत्यादयः प्रयोगाः सिद्धा भवन्तीति ।

## १७ । नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्राति-प्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च ।

घुइति घुसंज्ञकानां ग्रहणम् । मा इति माङ् माने मेङ् प्रणिदान इत्येतयो र्ग्रहणम् । ननु मीञ् हिंसायां डुमिञ् प्रक्षेपण इत्येतयोः मीनातिमिनोतिदीङां ल्यपि चेति ( ६।१।५० ) कृतात्वयोः । नापि मा मानइत्येतस्य । ननु च गामादा-ग्रहणेष्वविशेष इति ( प, ११५ ) सर्वेषामेव ग्रहणेन भवितव्यम् । तत् कथं माङ्मेङोरेव ग्रहणं लभ्यते ? नैतदस्ति । इह द्वन्द्वे घि ( २।२।३२ ) । अल्पाच्तरमिति ( २।२।३४ ) वचनमनपेक्ष्य घुइत्येतस्य पूर्वनिपातमकुर्वता नात्र वचनानुरोधेन प्रवर्त्तितव्यमपि त्विच्छयेति सूचितम् । तेन यत्रेच्छा भवति स एव गृह्यते । इच्छालक्षणानुरोधान्माङ्मेङोरेव ग्रहणं भवतीति युक्तम् । अत-एवेच्छया प्रवर्त्तितव्यमिति सूचनाद् यदापि मेङ आत्वाभावे मेत्येत द्रूपं न सम्भवति तदापि तस्य ग्रहणं भवत्येव प्रणिमयतइति । प्रणिपश्यतइति । दिवादित्वाच्छ्यन् । अनुदात्तेत्वादात्मनेपदम् । प्रणिमिमीतइति । जुहोत्यादित्वाच्छ्लुः । श्लाविति ( ६।१।१० ) द्विर्वचनम् । भृञामिदित्यभ्यासस्येत्त्वम् ( ७।४।७४ ) । ई हल्यघो रितीत्त्वम् ( ६।४।११३ ) । प्रणिष्यतीति । ओतः श्यनीत्योकार-( ७।३।७१ ) लोपः । उपसर्गात् सुनोतीति (८।३।६५) षत्वम् । प्रणिहन्तीत्यादिषु प्रणिप्सा-तीति पर्य्यन्तेष्वदादित्वाच्छपो लुक् । प्रणिशाम्यतीति । शमामष्टानां दीर्घ इति

( ७।३।७४ ) दीर्घः। प्रणिदेग्धोति। दिह उपचये। लट्। पूर्ववच्छपो लुक्। दादेर्धातो र्घ इति ( ८।२।३२ ) घत्वम्। झषस्तथोर्धोऽध इति ( ८।२।४० ) धत्वम्। झलां जश् झशीति ( ८।४।५३ ) जश्त्वं गकारः। इह गदादीनां सप्तम्या निर्दिष्टत्वात् तस्मिन्निति निर्दिष्टे पूर्वस्येति ( १।१।६६ ) निर्दिष्टग्रहणस्यानन्तर्य्यार्थत्वादड्व्यवधानान्न भवितव्यमिति कस्यचिद् भ्रान्तिः स्यात्। अतस्तां निराकर्त्तुमाह अड्व्यवायेऽपीति। कथं पुनरिष्यमाणमड्व्यवाये णत्वं लभ्यते ? अत्र चकारस्यानुक्तसमुच्चयार्थत्वान् निव्यभिभ्योऽड्व्यवायेऽपीत्यतो ( ८।३।११९ ) मण्डूकप्लुतिन्यायेनाड्व्यवाय इत्यस्यानुवृत्तेर्वा। ननु चाटो गदादिभक्तत्वात् तस्य ग्रहणेनैव ग्रहणम्। तत् कुतो व्यवायः ? नैतदस्ति। अङ्गस्य ह्यड़ागम उच्यते। विकरणान्तञ्चाङ्गम्। स ह्यङ्गस्य संघातस्य भक्तो न गदादिमात्रस्य। अतो न शक्यते गदादिग्रहणेन ग्रहीतुम्।

## १८। शेषे विभाषाऽकखादावषान्त उपदेशे।

उपसर्गादिति वर्त्तते। उपसर्गत्वञ्च यं प्रति क्रियायुक्ताः प्रादयस्तं प्रति भवति। धातुरेव क्रियावाची। तमेव प्रति प्रादीनामुपसर्गत्वम्। ततश्चोपसर्गग्रहणेन धातौ सन्निधापिते तस्यैवाकखादित्वमषान्तत्वञ्च विशेषणं विज्ञायत इत्यत आह अककारादि रखकारादिरषान्त उपदेशे यो धातु रिति। आद्यन्तग्रहणे उभे अपि विस्पष्टार्थे अकखे अषे इत्येवं सिद्धत्वात्। यदि सर्व्वैरेवाककारादिभि स्तदादिविधि स्तदन्तविधिर्वा स्यात् तदा सर्वेषां द्वन्द्वं कृत्वाऽकखष इत्येवं ब्रूयात्। अकखे अषे इति वचनात् केनचित् तदादिविधिः केनचित् तदन्तविधिरिति विज्ञायते। अत्र त्वेतावान् सन्देहः स्यात् केन तदादिविधिः। केन वा तदन्तविधिरिति। स चापि व्याख्यानान्निवर्त्तिष्यत इति। शेषग्रहणमिति स्पष्टार्थम्। यदि च गदादिषु विभाषा स्यात् पूर्वयोगो निरर्थकः स्यात्। उपदेशग्रहणमपि स्पष्टार्थमेव। शक्यतेतद् ह्युपसर्गादसमासेऽपि ( ८।४।१४ ) णोपदेशस्येत्यतोऽनुवर्त्तयितु मुपदेशग्रहणं मण्डूकप्लुतिन्यायेन। प्रनिपिनष्टीति। पिष्लृ सञ्चूर्णने। रुधादिभ्यः श्नम् ( ३।१।७८ )। इह च प्रतिषेध इत्यादि। प्रणिपेक्ष्यतीति। पिषेः षकारस्य षढोः कः सीति ( ८।२।४१ ) कत्वेऽकखादित्वादषान्तत्वाच्चासत्युपदेशग्रहणे प्रतिषेधो न स्यात्। अस्मिंस्तु सति न भवति। उपदेशे षकारान्तत्वादिति। इह च मा भूदिति प्रतिषेध इत्यपेक्ष्यते। प्रणिवेष्टेति।

अत्र विश प्रवेशन इत्येतस्य अस्रादिसूत्रेण ( ८।२।३६ ) षत्वे कृते षकारान्तत्वा-दुपदेशग्रहणेऽसति प्रतिषेधः स्यात्। अस्मिंस्तु सति न भवति। अपि चोपदेश-ग्रहणेऽसति प्रणिचकार प्रणिचखादेत्यस्याभ्यासस्य कुहो श्चुरिति ( ७।४।६२ ) चुत्वे प्रतिषेधो न स्यात्। अकखादित्वात्। अस्मिंस्तु सति भवति।

## १९। अनितेः।

प्राणितीति। श्वस प्राणने अन च। पूर्ववच्छपो लुक्। रुदादिभ्यः सार्वधातुके इतीट् ( ७।२।७४ )। अनितेरिति श्तिपा निर्देशो धातुनिर्देशार्थ एव। न यङ्लुग्निवृत्त्यर्थः। नह्यनिते र्यङ्प्राप्तिरस्ति। हलादित्वाभावात्।

## २०। अन्तः।

अन्तशब्दोऽयमवयववचनो वस्त्रान्तवत्। हे प्राणिति। क्विबन्तात् सम्बुद्धिः। तस्य हल्ङ्यादिलोपः ( ६।१।६८ )। सम्बुद्धेरन्यत्र यो नकारः प्रातिपदिकान्त स्तस्य लोपेन भवितव्यमिति सम्बुद्ध्यन्तस्योपन्यासः। सम्बुद्धौ हि न ङिसम्बुद्ध्यो-रिति ( ८।२।८ ) प्रतिषेधान्नलोपो न भवति। ननु च पूर्वेणैवात्र णत्वं सिद्धम्। तत् किमर्थमिदमारभ्यत इत्यत आह पदान्तस्येत्यादि। पदान्तस्येति (८।४।३७) प्रतिषेधं वक्ष्यति। तस्यायं पुरस्तादपवाद आरभ्यते। अन्तस्य पदापेक्षया गृह्यते। तत्रैव सम्भवव्यभिचारौ स्तः। न त्वनित्यपेक्षः। व्यभिचाराभावा-दिति भावः। केचिदित्यादि। केचिदन्तग्रहणं पूर्वयोगएव सम्बध्नन्ति। अनितेरन्त इत्येकयोगमेव कुर्वन्तीत्यर्थः। किमर्थम्? अन्तग्रहणं सामीप्यार्थम्। सामीप्यमर्थो यस्य तत् तथोक्तम्। समीपमेव सामीप्यम्। चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ्। तद-नेनोदकान्तवत् समीपवचनस्तैरन्तशब्दः समाश्रित इति दर्शयति। किमर्थं पुनस्त एवमन्तशब्दं सम्बध्नन्तीत्याह निमित्तसमीपभूतस्येत्यादि। यदि हि पूर्वसूत्रेऽन्त शब्दः समीपवचनो न सम्बध्येत तदेहापि स्यात् पर्यनितीति। तस्मात् प्रकृतस्य णत्वनिमित्तस्य समीपो य एकवर्णव्यवहितः स प्रत्यासन्नो नकारस्तस्यैव णत्वं यथा स्यात्। पर्यनितीत्यत्र निमित्ताद् विप्रकृष्टस्य मा भूदित्येवमर्थम् पूर्वसूत्रे समीपवचनमन्तशब्दं सम्बध्नन्ति। एकवर्णव्यवहितस्येत्यनेन सामीप्यमाचष्टे। अवर्णैकव्यवहितस्य सामीप्यं नोपपद्येतेत्येतद् देश्यं नाशङ्कनीयम्। तस्यापेक्षि-कत्वात्। पर्यनितीत्यत्रैवानेकवर्णेन व्यवहितो नकारः। यणादेशे कृते सत्यकार-

यकाराभ्यां रेफस्य व्यवधानात्। प्राणितीत्यत्र त्वेकादेशे कृते सत्येकेन वर्णेन व्यवहितो नकारः। निमित्तादाकारेणैव केवलेन व्यवधानात्। यो ह्यनेकवर्णव्यवहितः स एकमपेक्ष्य विप्रकृष्टो भवति। इतरस्तु तमपेक्ष्य सन्निकृष्टः। सोऽप्यव्यवहितमपेक्ष्य विप्रकृष्टो भवति। भवत्येवं यद्यव्यवहितः सम्भवेत्। स चानितेर्न सम्भवतीति न भवति तदपेक्षं विप्रकृष्टत्वम्। ननु चाचः परस्मिन् पूर्वविधावित्यत्र (१।१।५७) पूर्वस्माद् विधिः पूर्वविधिरिति तत्पुरुषस्याश्रयणात्सत्वे कर्त्तव्ये सत्येकादेशस्य स्थानिवद्भावात् प्राणितीत्यत्रानेकेन वर्णेनापि व्यवहितो नकारः। पूर्वत्रासिद्धीये न स्थानिवदिति (प,१२७) वचनान्न भवति स्थानिवद्भाव इत्यदोषः। तैरित्यादि। येऽत्रान्तशब्दः सामीप्यार्थमाश्रित्यैकयोगं कुर्वन्ति तेषां तस्य योगस्य प्राणित्यत्र सावकाशत्वाद् हे प्राणित्यत्र पदान्तस्येति (८।४।३७) प्रतिषेधः प्राप्नोति। तस्मात् ते द्वितीयमप्यन्तस्य ग्रहणं मावृत्त्या तन्त्रेण न्यायेनाश्रयितव्यम्। पदान्तस्य णत्वं यथा स्यात्। ननु येऽपि योगविभागं कुर्वन्ति तेऽन्तशब्दमवयववचनमाश्रयन्ति। तैरपि पूर्वसूत्रे सामीप्यवाचन्त ग्रहणमाश्रयितव्यमेव। अन्यथा हि पर्यनितीत्यत्रापि णत्वं स्यादित्यत आह येषान्त्वित्यादि। येषामिति योगविभागकारिणाम्। ते ह्यनेकवर्णव्यवहितस्यापि णत्वमिच्छन्त्येव। तस्मान्नार्थ स्तेषां पूर्वसूत्रेऽन्तग्रहणेन।

## २१। उभौ साभ्यासस्य।

नकारोऽयमड़ादीनामेकोऽपि न भवतीति। ततो द्विर्वचने कृते सत्यभ्यासनकारेण व्यवहितत्वादितरस्य नकारस्य न स्यात्। इष्यते च। तस्मात् तस्यापि यथा स्यादितीदमारभ्यते। प्राणिणिषतीति। सन्। इट्। अजादे द्वितीयस्येति (६।१।२) सन्यङोरित्यनेन (६।१।९) निशब्दो द्विरुच्यते। प्राणिणदिति। ण्यन्ताच्चुङ्। णिलोपः। तस्य द्विर्वचनेऽचीति (१।१।५९) स्थानिवद्भावान्निशब्दस्य द्विर्वचनम्। पूर्वत्रासिद्धीयमित्यादि। पूर्वत्रासिद्धीयमद्विर्वचन (प, १२७) इत्येतस्मिन्नसति द्विर्वचने कर्त्तव्ये णत्वस्यासिद्धत्वात् प्राग् द्विर्वचनेन भवितव्यम्। अत्रास्मिन् सूत्रेऽसति प्रथमेन नकारेण व्यवाये द्वितीयस्यानितेरित्यनेन (८।४।१९) णत्वं न स्यादिति प्राणिणिषतीत्यादि न सिध्यति। अस्मिंस्तु पूर्वत्रासिद्ध (८।२।१) मित्यस्यापवादे सत्यनितेरित्यनेन (८।४।१९) परत्वाण्णत्वमेव क्रियते। ततः कृतणत्वस्य द्विर्वचने कृते सिद्धमेवैतदन्तरेणाप्येतत् सूत्रम्। यद्येवं किमर्थमिद

मारभ्यत इत्यत आह एतस्मिन्नित्यादि। शक्यार्थे कृत्यः। इतिकरणो हेतौ। तुशब्दोऽयमवधारणे। यस्मात् तदपवादवचनं नैव शक्यमाश्रयितुं तस्मात् सूत्रमिदमारभ्यते। यदि हि तदेवाश्रीयते तदेदं सूत्रं न कर्त्तव्यं स्यात्। ततश्चास्यापवादवचनस्यासर्व्वविषयता न विज्ञायते। एव मूढ माव्यदौजढदित्यत्र पुर्वत्रासिद्धस्याभावाड् ढत्वादीनामसिद्धत्वाद् हृत् इत्येतस्य द्विर्वचनं न स्यात्। अस्मिंस्तु सूत्रे सति तस्यापवादवचनस्यासर्व्वविषयता विज्ञायते। तेनौजढदित्यत्र ढत्वादीनामसिद्धत्वाद् हृत् इत्येतस्य द्विर्वचनं भवति। अथोभाविति किमर्थम्? यावता पूर्वस्य नकारस्य पूर्वसूत्रेणैव णत्वं सिद्धम्। इतरस्य त्वारम्भसामर्थ्यात्। अन्तरेणाप्युभाविति वचनं णकारस्य व्यवायेऽप्यनेन भविष्यति। एवं मन्यते। साभ्यासस्येत्येतावत्युच्यमाने यथाजादे द्वितीयस्येति (६।१।२) द्विर्वचनमारभ्यमाणं प्रथमद्विर्वचनस्यापवादो विज्ञायते तथेहाप्यनड़ादिव्यवाये द्वितीयस्य नकारस्य णत्वमारभ्यमाणं पूर्वस्यापवादो विज्ञायते। साभ्यासस्येति वचनं विस्पष्टार्थम्। उभावित्यनेनैव सिद्धत्वात्। नह्यनभ्यासस्यानितेरुभौ नकारौ सम्भवतः।

## २२। हन्तेरत्पूर्वस्य।

हन्तेरित्यवयवलक्षणा षष्ठी। अत्पूर्वस्येति। अत्पूर्वो यस्मादिति बहुव्रीहिः। नकारोऽन्यपदार्थः। प्रहण्यत इति। हन हिंसागत्योः। भावकर्मणो-(१।३।१३) रित्यात्मनेपदम्। प्रघ्नन्तीति। गमहनेत्यादिनोपधालोपः (६।४।९८)। हो हन्तेर्ञ्णिन्नेष्विति (७।३।५४) कुत्वम्। प्राघानीति। लुङ्। चिण् भावकर्मणो (३।१।६६) रिति च्लेश्चिण्। अत उपधाया (७।२।११६) इति वृद्धिः। चिणो लुगिति (६।४।१०४) तकारस्य लुक्। श्तिपा निर्देशो धातुनिर्देशार्थ एव। न यङ्लुग्निवृत्त्यर्थः। प्रजङ्घनोतीति। द्विर्वचने चुत्वे जश्त्वे कृते परस्य नकारस्य जकारेण व्यवधानाण्णत्वं न भविष्यतीति। पूर्वस्य तु नश्चापदान्तस्य झलीत्यनुस्वारे (८।३।२४) सत्यनुस्वारीभूतत्वाच्च। अत इति कर्त्तव्ये पूर्वस्येति वचनं वैचित्र्यार्थम्। (I)

## २३। वमो वा।

पूर्वेण नित्ये प्राप्ते विकल्पार्थं वचनम्। वाग्रहणं पूर्वविधीनां नित्यत्वज्ञाप-

---

(I) विस्पष्टार्थमिति च क्वचित् पाठः।

नार्थम्। अन्यथा हि योगारम्भसामर्थ्यादेवास्य विधिर्नित्यत्वं विज्ञायेत। पूर्वेषां तु विधीनां शेषे विभाषेत्यतो ( ८।४।१८ ) विभाषाग्रहणस्यानुवृत्तेः पाक्षिकत्वं स्यात्। इह तु वाग्रहणे द्वयोर्विभाषयोर् मध्ये ये विधय स्तएव नित्या इति तेषां नित्यत्वं विज्ञायते।

## २४। अन्तरदेशे।

अन्तरपरिग्रह ( १।४।६५ ) इत्यत्रान्तःशब्दस्याङ्किविधिणत्वेषूपसर्गसंज्ञा वक्तव्येत्यनेन णत्वविधावुपसर्गसंज्ञाया विद्यमानत्वाद् धन्तेरत्पूर्वस्येत्यनेनैव ( ८।४।२२ ) णत्वे सिद्धेऽदेशार्थोऽस्य योगस्यारम्भः। अन्तर्हणनमिति। अत्र भावे ल्युट। मध्ये हनन मित्यर्थः। अन्तरपरिग्रह इति ( १।४।६५ ) गतिसंज्ञकत्वात् कुगतिप्रादय इति ( २।२।१८ ) समासः। अन्तर्हननो देश इति। अधिकरणे ल्युट्। अन्तः शब्दादवन्तस्य हन्तेरन्तर्घणो देश इति निपातनादेव देशाभिधानेऽपि णत्वम्भवति।

## २५। अयनञ्च।

अयनमिति। अयतेरिणो वा ल्युटि रूपम्। कृत्यच इत्यनेनैव (८।४।२९ ) सिद्धेऽदेशप्रतिविधानार्थं वचनम्। चकारेणादेशग्रहणमुपसर्गग्रहणञ्चानुकृष्यते। तेषामुत्तरत्रानुवृत्तिनिरासार्थम्।

## २६। छन्दस्यृदवग्रहात्।

अवगृह्यते विच्छिद्य पठ्यतइत्यवग्रहः। ऋच्चासावग्रहश्चेत्यृदवग्रहः। ऋकारादवग्रहात् पूर्वपदादित्येता स्तिस्रः समानाधिकरणाः पञ्चम्यः। ऋकारमात्रञ्च पूर्वपदं न भवतीति सामर्थ्यात् पूर्वपदैकदेश ऋकारे पूर्वपदशब्दो वर्त्तत इति दर्शयति। समुदायेषु हि प्रवृत्ताः शब्दाः क्वचिदवयवेष्वपि वर्त्तन्त इति। यथा पटो दग्ध इत्यत पटैकदेशे पटशब्दः। नृमणा इति। नरि मनोऽस्येति बहुव्रीहिः। अत्वसन्तस्य चाधातोरिति ( ६।४।१४ ) दीर्घः। पितृयाणमिति। यान्त्यनेनेति यानम्। करणे ल्युट्। पितृ र्यान मिति षष्ठीसमासः। अत्र ह्रोत्यादिना ऋकारस्यावग्रहत्वं दर्शयति। अवग्रहग्रहण मित्यादि। यद्यवग्रहग्रहणं न क्रियते ततोऽप्यपदान्तादनवगृह्यमाणादृकारात् स्यात्। अस्मिंस्तु सति न भवति।

पदान्तस्यैवावग्रहो भवति। नापदान्तस्य। अत्र केषाञ्चिद् दर्शनम्। अत्र संहितायामित्यनुवर्त्तमानमपि नाभिसम्बध्यते। अवग्रहग्रहणात्। तेन यदावगृह्यत ऋकार स्तदैव णत्वं भवति। नान्यदेति। अपरे तु मन्यन्ते यथाऽनृत्यन्नपि नर्त्तनयोग्यत्वान्नर्त्तक इत्युच्यते तथाऽनवगृह्यमाणोऽपि ऋकारोऽवग्रहयोग्यत्वाद-वग्रहइतुग्रक्तः। अत एतदुक्तं भवति। अवग्रहयोग्यादृकाराण्णत्वं भवति। एवं सत्यवग्रहग्रहणे संहिताधिकारात् संहितायामेव णत्वं भवति। नावग्रहादिति।

## २७। नश्च धातुस्थोरुषुभ्यः।

धातौ तिष्ठतीति धातुस्थः। सुपि स्थइति (३।२।४) कप्रत्ययः। उर्विति ष्विति च स्वरूपग्रहणम्। नसिति नासिकादेशस्यास्मदादेशस्य च सामान्येन ग्रहणम्। ततो ह्यस्मदादेशएव कार्यी। नेतरः। इतरस्य धातुस्थादिभ्यः परस्या-सम्भवात्। उत्तरत्र हि नासिकादेशस्य कार्यित्वम् भविष्यति। रक्षा ण इति। रक्ष पालन इत्यस्माद् धातो र्लोट्। मध्यमपुरुषैकवचनान्तात् परस्यास्मदो द्वितीयान्तस्य बहुवचनस्य वम्नसाविति (८।१।२१) नसादेशः। द्व्यचोऽतस्तिङ इति (६।३।१३५) पूर्वपदस्य दीर्घः। शिक्षा ण इति। शिक्ष विद्योपादान इत्यस्मात् तथाविधादेवास्मदो नसादेशः। उरुण स्कृधीति। कृञो लोट्। सिप्। सेर्ह्यपिच्चेति (३।४।८७) हिरादेशः। श्रुशृणुपॄकृवृभ्यश्छन्दसीति (६।४।१०२) हेर्धिरादेशः। कःकरदित्यादिना (८।३।५०) विसर्जनीयस्य सत्वम्। अभीषु ण इति। इकः सुञीति (६।३।१३४) दीर्घः। सुञ इति षत्वम् (८।३।१०७)। एवमूर्द्ध ऊषुण इत्यत्राप्युकारस्य निपातस्य चेत्यनेन (६।३।१३६) दीर्घः। सुञ इति (८।३।१०७) षत्वम्। चकारेण च्छन्दसीत्यनुकृष्यत उत्तरत्रानुवृत्ति-निरासार्थम्।

## २८। उपसर्गाद् बहुलम्।

नसादेशस्याक्रियावाचित्वात् तं प्रत्युपसर्गत्वं न सम्भवतीति प्राद्युपलक्षणार्थ-मेतदुपसर्गग्रहणं विज्ञायते। प्र ण इति। पूर्ववदस्मदो नस्। प्रणसमिति। प्रगता नासिका यस्येति बहुव्रीहिः। उपसर्गाच्चेत्यच् (५।४।११९) समासान्तः। नासिकायाश्च नसादेशः।

## २९ । कृत्यचः ।

कृत्स्थो यो नकारोऽच उत्तरइति। एतेनाच इति नकारस्येदं विशेषणम्। ननु कृत इति दर्शयति। यदि कृत एव विशेषणं स्यात् प्रवपणमित्यत्र णत्वं न स्यात्। नह्यत्र कृदचः परः। नकारस्तु सम्भवत्येव यदि कृत एतद् विशेषणं स्यात्। तदा न भाभूपूकमिगमिप्यायीत्यादौ (८।४।३४) कम्यादीनां ग्रहणमनर्थकं स्यात्। प्राप्त्यभावात्! नह्येतेभ्यो यः कृद् विधीयते सोऽचः परः सम्भवति। तेषामनजन्तत्वात्। तस्मान्नकारस्येदं विशेषणं युक्तम्। कृत्स्थानां येषां णत्वं सम्भवति तान् दर्शयितु माह अनमानानीयानीत्यादि। अनो योरादेशः। मान आगतमुकः शानच् कानच् चानशः। अनीयर् तव्यदादिसूत्रेण ( ३।१।९६ ) यो विहितः। अनिराक्रोशे नञ्यनिर्रिति ( ३।३।११२ )। इनिः सुप्यजातौ णिनि-स्ताच्छील्य इति ( ३।२।७८ )। आवश्यकाधमर्ण्ययोरिनिरिति ( ३।३।१७० )। अयञ्च उत्सृष्टानुबन्धः। निष्ठादेशो रदाभ्यां निष्ठातो न इति ( ८।२।४२ ) प्रकरणे यो विहितः। प्रयाणमिति। प्रपूर्वाद् यातेर् ल्युट्। प्रयायमाणमिति। कर्मणि लकारः। शानच्। यक्। आने मुगिति (७।२।८२) मुक्। प्रयाणीय-मिति। अनीयर्। अप्रयाणिरिति। आक्रोशे नञ्यनिरित्यनिः ( ३।३।११२ )। प्रयायिणाविति। आतो युक् चिण्कृतोरिति ( ७।३।३३ ) युक्। प्रहीण इति। ओहाक् त्यागे। ओदितश्चेति ( ८।२।४५ ) तकारस्य नकारः। घुमा-स्थेत्यादिनेत्त्वम् ( ६।४।६६ )। प्रमग्नइति। टुमस्जो शुद्धौ। मस्जिनशोर् झलीति ( ७।१।६० ) नुम्। स च भवन्नकारात् पूर्वो भवति। मस्जेरन्त्यात् पूर्वं नुममिच्छन्त्यनुषङ्गसंयोगादिलोपार्थमिति ( १।१।४७, वा ) वचनात्। अनिदितामित्यादिनास्य नकारलोपः ( ६।४।२४ )। स्कोरित्यादिना (८।२।२९) सकारस्य च। चोः कुरिति (८।२।३०) कुत्वम्। परिभुग्नइति। भुजो कौटिल्ये। निर्विण्णइति। लाभसत्ताविचारणार्थानां विदीनामन्यतमस्य रूपम्। न विद ज्ञानइत्यस्य। सेट्त्वात् तस्य। अत्राच उत्तरो न भवति। तस्मान्निर्विण्णस्य सिद्धय उपसंख्यानं प्रतिपादनं कर्त्तव्यमित्यर्थः। तत्रेदं प्रतिपादनम्। पूर्वसूत्राद्-हुलग्रहणमनुवर्त्तते। तेनानचोऽपि परस्य भविष्यतीति।

## ३० । णेर्विभाषा ।

पूर्वेण नित्ये प्राप्ते विकल्पार्थमिदमारभ्यते। यद्येवं विभाषाग्रहणमनर्थकं

स्यात्। आरम्भसामर्थ्यादेव विकल्पो विज्ञायते। नैतत्। विपर्य्ययोऽपि सम्भाव्येत। अयन्तु नित्यो विधिः। पूर्वसूत्रन्तु बहुलग्रहणानुवृत्तर्विभाषेति। ण्यन्ताद् यो विहित इति। एतेन णेरिति विहितविशेषणत्वं दर्शयति। तस्य च प्रयोजनं वृत्तौ वक्ष्यति। प्रयाप्यमाणमिति। हेतुमति चेति (३।१।२६) णिच्। अर्त्तिह्रीत्यादिना (७।३।३६) पुक्।

## ३१। हलश्चेजुपधात्।

चकारो विभाषेत्यनुकर्षणार्थः। तेनोत्तरत्र विधिर्नित्यो भवति। प्रकोपणमिति। कुप क्रोधे। प्रेहणं प्रोहणमिति। ईह चेष्टायाम्। ऊह वितर्के। अत्र कृत्यच इति (८।४।२९) नित्यमेव भवति। कथं पुनर्ज्ञायते हल्ग्रहणमिहादेर् विशेषणम्? नत्वन्तस्येत्यत आह इजुपधस्येत्यादि। सर्व एवेजुपधा धातवो हलन्ता एवेतीजुपधादेव हलन्तत्वे लब्धे हल्ग्रहणं क्रियमाणमादेर्विशेषणं विज्ञायते।

## ३२। इजादेः सनुमः।

हलइत्यनुवर्त्तत इति। तदनुवृत्तेः प्रयोजनं वक्ष्यति। ननु च पूर्वसूत्रे हल्ग्रहणमादेर्विशेषणम्। अन्तस्य विशेषणेन चेहार्थ इत्याह तेनेत्यादि। नह्यीजादिर्धातुः कश्चिद् धलादि विद्यते। सामर्थ्यात्। तेन हल्ग्रहणानुवृत्तेन तदन्तविधि र्भवति। सनुमइति। सानुस्वारादित्यर्थः। कुतएतत्? नुम्ग्रहणस्यानुस्वारोपलक्षणार्थत्वात्। कस्मात् पुनरेवं व्याख्यायते? नियमार्थत्वादस्य योगस्य। एवञ्चास्य नियमार्थता भवति यदि नुम्ग्रहणमनुस्वारोपलक्षणार्थं भवति। नान्यथा। असति विधेये नियमार्थता विज्ञायते। यदि नुम्ग्रहणं नुमएव प्रतिपादकं स्यान् नानुस्वारोपलक्षणार्थं स्यात्। एवञ्च सति यत्र कृत्यच इत्यनेन (८।४।२९) न सिध्यति तत्र स्यादेवास्य विधेयत्वम्। क्वतेन न सिध्यतीति? इवि व्याप्तौ (J) प्रेन्वनमिति। अत्र यद्यपि चाट्कुप्वाङ्नुम्व्यवायेऽपी-(८।४।२)त्यनुवर्त्तते तथापि तेनात्र न प्राप्नोति। नुम्ग्रहणस्यानुस्वारोपलक्षणार्थत्वात्। इह चानुस्वाराभावात्। तस्मान्नियमार्थतामस्येच्छता नुम्ग्रहणस्यानुस्वारोपलक्षणार्थत्वं वेदितव्यम्। एवं प्रेङ्खण मित्यादौ कृत्यच (८।४।२९) इति सिद्धे नियमार्थमेतत्

(J) इवि धिवि प्रीणनार्थ इति पाठान्तर मेकस्मिन् पुस्तके ।

सम्पद्यते। अनुस्वारोपलक्षणार्थता च नुम इजादेः सनुमइति महतः सूत्रस्य प्रणयनादवसीयते। यदि हि नुम्ग्रहणं नुमएव प्रतिपादकं स्यान्नानुस्वारोपलक्षणार्थं तदानीमिवेरित्येवं ब्रूयात्। नह्नीवेरन्यो धातुरिजादिर्हलन्तः सनुम् सम्भवति। इखिप्रभृतयः सम्भवन्तीति चेत्? न। अनुस्वारे कृते नुमोऽभावात्। प्रेङ्खणमिति। उख नखेत्यादौ कवर्गान्त इखिः पठ्यते। तस्येदित्त्वान्नुम् (८।४।५८)। नश्चापदान्तस्य झलीत्यनुस्वारः (८।३।२४)। अनुस्वारस्य ययि परसवर्णत्वम्। तस्यासिद्धत्वादनुस्वार एवायम्। प्रोम्भण मिति। उभ उन्भ पूरणे। पूर्ववदनुस्वारः। ननु च कृत्यच इत्येवं (८।४।२९) सिद्धमत्र। किमर्थमिदमारभ्यत इत्याह सिद्ध इत्यादि। प्रमङ्गनमिति। तत्रैव गत्यर्थवर्गे मगिः पठ्यते। क्वचित् प्रमङ्खनमिति पाठः। स मकि मण्डन इत्यस्य द्रष्टव्यः। ननु चासति विधेये नियमार्थता भवति। इह च णेर्विभाषायां प्राप्तायां नित्यं णत्वं विधेय मस्ति। विधिनियमसम्भवे हि विधिरेव ज्यायानिति (प, १०९)। ततो ण्यन्तान्नित्यं विध्यर्थमेतत् कस्मान्न भवतीत्याह हलइत्यधिकारादित्यादि। पूर्वसूत्राद्धलइत्यनुवर्त्तते। तेन च तदन्तविधिरित्युक्तम्। नहि हलन्तो भवति ण्यन्तो धातुः। किं तर्हि? अजन्तः। न च हलन्तादुच्यमान मजन्ताद् भवितुमर्हति। तस्मान्नेदं ण्यन्ते नित्यं विध्यर्थम् भवति। ननु च णिलोपे कृते ण्यन्तोऽपि हलन्तो भवति। ततश्च हलइत्यधिकारेऽपि स्यादेव विध्यर्थता। नेतदस्ति। विहितविशेषणाश्रयणात्। एतच्चोद्यनिरासायाह इजादेः सनुमो हलन्ताद् धातोर् यो विहितः कृदिति। विहितविशेषणमाश्रितम्।

## ३३। वा निंसनिक्षनिन्दाम्।

णिसि चुम्बने। णिक्षि रोषे। णिदि कुत्सायाम्। णोपदेशत्वादेषामुपसर्गेत्यादिना (८।४।१४) नित्ये प्राप्ते विकल्पार्थमिद मारभ्यते। यद्येवं न कर्त्तव्यं वाग्रहणम्। पृथग्योगकरणादेव विकल्पो भविष्यति। नेतदस्ति। विपर्य्ययोऽपि विज्ञायेत। अयं विधि र्नित्यः स विभाषेति। उपसर्गादसमास इत्य- (८।४।१४) स्यानन्तरमस्मिन् कर्त्तव्य इहास्य करणं पूर्वविधे नित्यत्वज्ञापनार्थम्। द्वयो र्विभाषयो र्मध्ये ये वै विधय स्ते नित्या भवन्तीति।

## ३४। न भाभूपूकमिगमिप्यायिवेपाम्।

पूग्रहणेन पूङ्ग्रहणं द्रष्टव्यमिति। पूङ् पवन इति भ्वादौ यः पठ्यते तस्य-

ग्रहणं नेष्यते। तेन क्रैयादिकस्य चेष्यते। कथम् पू इत्युच्यमाने पूञएवग्रहणं लभ्यते ? उच्यते। कृत्यच इति (८।२।२९) कृतीति योगविभागात्। योगविभागादिष्टसिद्धिरिति (प,१२४) पूङएव योगविभागेन णत्वं भवतीति। एवं योगविभागेन पूङःपरस्य कृत्स्थस्य नकारस्य णत्वेऽसाधिते पारिशेष्यात् पूञएव ग्रहणं विज्ञायते। ण्यन्तानाञ्चेत्यादि। ण्यन्तानां ग्रहणं शब्दान्तरत्वान्न प्राप्नोति। तस्मादुपसंख्यानं कर्त्तव्यमेवेति। तस्य प्रतिपादन मित्यर्थः। तत्रेदं प्रतिपादनम्। नेति योगविभागः कर्त्तव्यः। तेन ण्यन्तानामपि न भविष्यतीति। न चैवं सति भादीनां ग्रहणमनर्थकं स्यात्। पूर्वयोगस्यासर्व्वविषयत्वज्ञापनात्। एवं ह्यतिप्रसङ्गः परिहृतो भवति।

## ३५। षात् पदान्तात्।

निष्पानं दुष्पानमिति। इदुदुपधस्येति (८।३।४१) विसर्जनीयस्य षत्वम्। इह कृत्यच इत्यनेन (८।४।२९) (K) प्राप्तिः। सर्पिष्पानं यजुष्पानमिति। षष्ठीसमासः। इसुसोः सामर्थ्ये इत्यनुवर्त्तमाने (८।३।४४) नित्यं समास इत्यादिना (८।३।४५) विसर्जनीयस्य षत्वम्। अत्र वा भावकरणयोरिति (८।४।१०) प्राप्तिः। पदान्तादिति षष्ठीसमासोऽयमिति मन्यमानो यो देश्ययेदयेह णत्वप्रतिषेधः कस्मान्न भवति सुमरपिष्केणेति ? अत पदस्यान्तः षकार इति तंप्रत्याह पदेऽन्तइत्यादि। षष्ठीसमासे हि सति णत्वस्य प्रतिषेधः स्यात्। नचायं षष्ठीसमासः। किं तर्हि ? सप्तमीति योगविभागात् समासः (२।१।३०)। पदे परभूतेऽन्तः पदान्त इति। नचात्र पदे परभूते षकारोऽन्तः। कशब्दस्यापदसंज्ञकत्वात्। तेनेह न भवति णत्वप्रतिषेधः। शोभनं सर्पिरस्येति बहुव्रीहिः। शेषाद्विभाषेति (५।४।१५४) कप्।

## ३६। नशेः षान्तस्य।

उपसर्गादसमास इत्यादिना (८।४।१४) प्राप्तस्य णत्वस्य प्रतिषेधः क्रियते। प्रनष्ट इति। णश अदर्शने। तस्मान्निष्ठा। मस्जिनशो र्झलीति (७।१।२६) नुम्। अनिदितां हलउपधायाः क्ङितीति (६।४।२४) नलोपः। व्रश्चादिसूत्रेण

---

(K) यथा कृत्यचइति (८।४।२९) प्रयायिणामित्यत्र विकल्पितं णत्वं बाधित्वा नित्यं भवति तथात्रापि वा भावकरणयोरिति (८।४।१०) विकल्पं बाधित्वा कृत्यचइत्यनेन (८।४।२९) प्राप्तिर्वेदितव्या।

( ८।२।३६ ) षत्वम्। प्रणश्यतीति। दिवादित्वाच्छ्यन्। अथान्तग्रहणं किमर्थम्? यावता नशेः ष इत्युच्यमाने नशौ विशिष्यमाने येन विधिस्तदन्तस्येति ( १।१।७२ ) तदन्तविधौ षान्तस्य णत्वप्रतिषेधो भविष्यतीत्याह अन्तग्रहणमित्यादि। प्रनङ्क्ष्यतीति। पूर्ववत् षत्वे षढोः कः सीति ( ८।२।४१ ) कत्वम्। अत्र यद्यन्तग्रहणं न क्रियेत कत्वे षान्तता नास्तीति प्रतिषेधो न स्यात्। अस्मिंस्तु सति कत्वेऽपि कृते भवति। एतदेव हि तस्य प्रयोजनं भूतपूर्वेऽपि षान्ते प्रतिषेधो यथा स्यात्।

## ३७। पदान्तस्य।

अट्कुप्वाङ्नुम् व्यवायेऽपीति (८।४।२) प्राप्तस्य णत्वस्य प्रतिषेधोऽयमुच्यते। वृक्षानिति। प्रथमयोः पूर्वसवर्ण इति ( ६।१।१०२ ) दीर्घः। तस्माच्छसो नः पुंसीति ( ६।१।१०३ ) सकारस्य नकारः।

## ३८। पदव्यवायेऽपि।

निमित्तनिमित्तिनोः प्रकृतत्वादुभयोरेव व्यवायो विज्ञायते इत्यत आह पदेन व्यवाये सति निमित्तनिमित्तिनोरित्यादि। माषकुम्भवापेनेति (L) माषाणां कुम्भः माषकुम्भः। तं वपतीति कर्मण्यण् ( ३।२।१ )। तदन्तात् तृतीयैकवचनम्। अत्र प्रातिपदिकान्तनुम्विभक्तिषु चेति ( ८।४।११ ) प्राप्तिः। चतुरङ्गयोगेनेति। अत्र कुमति चेति (८।४।१३) प्राप्तिः। चत्वार्यङ्गान्यस्येति बहुव्रीहिः। तेन योगश्चतुरङ्गयोगः। कर्तृकरणे कृता बहुलमिति (२।१।३२) तृतीयासमासः। पूर्वत्र कुम्भशब्देन व्यवायः। उत्तरत्र त्वङ्गशब्देन। प्रावनद्धमिति। नह बन्धने। निष्ठा। नहो धः (८।२।३४)। झषस्तथोर्धोऽधः (८।२।४०)। जलाञ्जश् झशि (८।४।५३) त्येते विधयः कर्त्तव्याः। गतिसमासः। अत्रावशब्देन व्यवायः। णत्वप्राप्तिस्तूपसर्गादसमासेऽपीत्यादिना (८।४।१४)। एवं प्रगान्नयामइत्यत्रापि। व्यवधा-

(L) "माषकुम्भवापेनेत्यादावुत्तरपदत्वे चापदादिविधाविति ( १।१।६२, वा ) वचनादुत्तरस्य पदत्वे कर्त्तव्ये प्रत्ययलक्षणनिषेधः। कथं कुम्भादेः पदत्वम्? यतो पदव्यवाये प्रतिषेधो भवेत्। उच्यते। उत्तरपदत्वे चापदादिविधावित्य-( १।१।६२, वा ) त्रापदादिविधिशब्दः पदादिशब्दमारभ्य ये विषया स्तदुपलक्षणम्। तेन सात्पदाद्योरित्येतदारभ्य ( ८।३।१११ ) कार्य्येष्वपदादिविधाविति वचनादुत्तरस्य पदत्वं भवत्येव। अत्र च ज्ञापकं षात् पदान्तादित्यत्र ( ८।४।३ ) पदे परभूतेऽन्तः पदान्तइति। एवमर्थमन्तस्योपादानम्। नहि तदन्यथा सम्भवति।" इति तन्त्रप्रदीपे मैत्रेयरचित:

नन्तु गामित्यनेन । इदन्तु छान्दसमुदाहरणम् । नहि भाषायां व्यवहितानामुपसर्गाणां धातोः प्राक् प्रयोगोऽस्ति । किं तर्हि? छन्दसि परेऽपीत्यत (१।४।८२) छन्दसीत्यनुवर्त्तमाने व्यवहिताश्चेत्यनेन (१।४।८२) छन्दसि व्यवहितो भवति । गोशब्दस्यौकारस्यौतोऽम् शसोरित्यात्वम् (६।१।९३)। पदव्यवाय इत्यादि । योऽयं पदव्यवाये प्रतिषेध उच्यते सोऽतद्धिते भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम् । वा निंसनिक्ष निन्दामित्यतो (८।४।३३) मण्डूकप्लुतिन्यायेन वाग्रहणमनुवर्त्तते । सा च व्यवस्थितविभाषा । तेन तद्धिते प्रतिषेधो न भविष्यतीति । आर्द्रगोमयेणेति । गोरिदं गोमयम् । गोश्च पुरीष इति (४।३।१४५) मयट् । आर्द्रञ्च तद् गोमयञ्चेति कर्मधारयः । गोशब्देन पदेन व्यवधानम् । पदसंज्ञा चास्य स्वादिष्वसर्वनामस्थान इत्यनेन (१।४।१७)।

## ३९ । क्षुभ्नादिषु च ।

रषाभ्यां नो णः (८।४।१) इत्यादिशास्त्रेण प्राप्तस्य णत्वस्य प्रतिषेधोऽयमुच्यते । क्षुभ्नेति स्वरूपग्रहणमेतत् । न धातुग्रहणम् । अन्यथा क्षोभणमित्यत्रापि स्यात् प्रतिषेधः । यद्येवं क्षुभ्नन्तीत्यत्र श्नाभ्यस्तयोरात (६।४।११२) इत्याकारलोपे कृते क्षुभ्नीत इत्यत्रे हल्यघोरितीत्वे (६।४।११३) कृते णत्वस्य प्रतिषेधो न स्यात् । स्वरूपस्याभावात् । अजादेशस्य स्थानिवद्भावादेकदेशविकृतस्यानन्यत्वाद्वा (प, ३८ भविष्यतीत्यदोषः । एतान्युत्तरपदानीत्यादि । एतेन पूर्वपदात् संज्ञायामग (८।४।३) इति प्राप्तिं दर्शयति । हरिनन्दीति । ताच्छील्ये णिनिः । हरिनन्दन इति । ल्युडन्तेन समासः । एवं हरिनगरमित्यत्रापि नगरेण षष्ठीसमासः । नरीनृत्यत इति । रीगृदुपधस्य चेत्यभ्यासस्य (७।४।९०) रीगागमः । अट्कुप्वाङित्यादिना (८।४।२) प्राप्तिः । एवं तृप्नोतीत्यत्रापि । तृप प्रीणने । व्यत्ययेन श्नुः । परिनर्त्तनं परिगहनमिति । गतिसमासौ । कृत्यच इति (८।४।२९) प्राप्तिः । शरनिवेशादयो दर्भानूपपर्य्यन्ताः षष्ठीसमासाः । अनूप इति । अनुगता आपो यस्मिन्निति बहुव्रीहिः । ऋक्पूरब्धूःपथामानक्ष इत्यकारः (५।४।७४) समासान्तः । ऊदनोर्देश इत्यूत्वम् (६।३।९८)। सवर्णदीर्घत्वम् । आचार्य्यादणत्वञ्चेति । चकारात्षत्वञ्च । तेन विभाषा सम्पद्यते । व्यवस्थितविभाषाविज्ञानादाचार्य्यंणेति नित्यं णत्वम् भवति । आचार्य्यभोगी-

न इति। आत्मन्विश्वजनभोगोत्तरपदात् खः (५।१।९)। अट्कुप्वादिना (८।४।२) प्राप्तिः। एव माचार्य्यानीत्यत्रापि। इन्द्रवरुणेत्यादिना (४।१।४९) ङीष्। आनुगागमश्च। चकारस्यानुक्तसमुच्चयार्थत्वादपरिसमाप्तिं क्षुभ्नादे र्बोधयतीति मत्वाह क्षुभ्नादिराकृतिगणः।

## ४०। स्तोः श्चुना श्चुः।

शकारचवर्गाभ्यां सन्निपात इत्यादि। सन्निपात आनन्तर्य्य इत्यर्थः। वृश्चश्शेत इति। वा शरीति (८।३।३६) विसर्गस्य सकारः। तस्यानेन शकारः। मज्जतीति। टुमस्जो शुद्धौ। झलाञ्जश् झशीति (८।४।५३) सकारस्य दकारः। तस्यानेन जकारः। श्चुत्वे कर्त्तव्ये जश्त्वस्यासिद्धत्वं नाशङ्कनीयम्। मज्जिनशो र्झलीत्यत्र (M) मज्जेः कृतश्चुत्वनिर्द्देशात्। असिद्धत्वे ह्ययं निर्द्देशो नोपपद्यते। भृज्जति वृश्चतीति। ग्रह्यादिसूत्रेण (६।१।१६) संप्रसारणम्। यज्ञो याच्ञेति। यजियाचिभ्यां यजयाचेत्यादिना (३।३।९०) नङ्। इह सकारतवर्गौ द्वौ कार्य्यिणौ। निमित्ते अपि द्वे एव शकारचवर्गौ। ततश्च साम्यात् संख्यातानुदेशः प्राप्नोति। सकारस्य शकारेण सन्निपाते तवर्गस्य चवर्गेण कस्मान्न भवतीत्याह शादित्यादि। प्राप्तिपूर्वका हि प्रतिषेधा भवन्ति। यदि निमित्तं प्रति यथासंख्यं स्यादेवं सति शात् परस्य तवर्गस्य चुत्वप्राप्तिरेव नास्तीति शादिति (८।४।४४) प्रतिषेधं न कुर्य्यात्। कृतश्चासौ। अतः स ज्ञापयति संख्यातानुदेशो न भवतीति। स्तो श्चाविति लाघवार्थं सप्तम्या निर्द्देशे कर्त्तव्ये श्चुनेति तृतीयानिर्द्देशः पूर्वभूतेनापि सन्निपातेन यथा स्यात्। यज्ञो याच्ञेति। सप्तमीनिर्द्देशे हि तस्मिन्निति निर्दिष्टे पूर्वस्येति (१।१।६६) परभूतेनैव स्यात्। न पूर्वभूतेन।

## ४१। ष्टुना ष्टुः।

अत्रापि संख्यातानुदेशाभावस्य तोः षीति (८।४।४३) प्रतिषेधो ज्ञापकः। यद्यत्रापि निमित्तं प्रति संख्यातानुदेशः स्यात् षकारेण सन्निपाते तवर्गस्य ष्टुत्वमेव न प्राप्नोति। तोः षीति (८।४।४३) प्रतिषेधं न कुर्य्यात्। कृतश्चासौ। अतः स एव लिङ्गमिह संख्यातानुदेशाभावस्य। वृश्चष्टीकत इति। तिक्त टिक्त टीक्त रगि

---

(M) मस्जिनशोर्झलीति तु बहुसम्प्रदायानुमतः पाठः। न्यासकारस्त्वत्र मज्जिनशोरिति पाठं गृह्णाति। वस्तुतो ग्रहिज्येति सूत्रे (६।१।१५) भृज्जतिग्रहणमेव ज्ञापकम्।

लघि गत्यर्थाः। पेष्टेति। पिष्लृ सञ्चूर्णने। कपीष्ट कपीष्ठा इति। करोतेराशिषि लिङ्। तस्य तथासौ। सीयुट्। लोपो व्योर्वलीति ( ६।१।६६ ) यकारलोपः। सुट् तिथोरिति ( ३।४।१०७ ) सुट्। आदेशप्रत्यययो-( ८।३।५९ )रिति षत्वम्। अनेन ष्टुत्वम्। अग्निचिड्डीन इति। डीङ् विहायसा गतौ। स्वादित्वादोदितश्चेति ( ८।२।४५ ) नत्वम्। अग्निचिड् ढौकत इति। ढौकृ गतौ। अट्टति। अड्डतीति। अतृट अतिक्रमणहिंसयोः। अद् ड अभियोगे। तकारदकारोपधयोरेतयो र्गणे पाठः क्विबन्तयो स्तयोः संयोगान्तलोपे तकारदकारयोः श्रवणार्थः।

## ४२। न पदान्ताट् टोरनाम्।

अनामिति षष्ठीबहुवचनस्यागतनुट्कस्य प्रतिषेधः। श्वलिट् साय इति। यदा ङः सि धुड्िति (८।३।२९) धुण् नास्ति तदैतदुदाहरणम्। ईट्ट इति। ईड़ स्तुतौ। अनुदात्तेत्त्वादात्मनेपदम्। अदादित्वाच्छपो लुक्। खरि चेति (८।४।५५) डकारस्य टः। सर्पिष्टममिति। अतिशायने तमप्। ह्रस्वात् तादौ तद्धित इति (८।३।१०१) सकारस्य मूर्धन्यः। षण्णामिति। षट्चतुर्भ्यश्चेति (७।१।५५) नुट्। झलाञ्जशोऽन्त इति ( ८।२।३९ ) षकारस्य डकारः। यरोऽनुनासिकेऽनुनासिको वेति (८।४।४५) डकारस्य णकारः (N)। षण्णवतिरिति। षड़धिका नवतिरिति शाकपार्थिवादित्वादुत्तरपदलोपिसमासः। षण्णां नगराणां समाहारः षण्णगरी। द्विगोरिति (४।१।२१) ङीप्।

## ४३। तोः षि।

अग्निचित् षण्ड इति। अग्नौ चेरिति ( ३।१।९१ ) क्विप्। सोमसुत्षण्ड इति। सोमे सुञ इति ( ३।२।९० ) क्विप्। अत्र षीति सप्तमी निर्देशात् पूर्वभूतेन सन्निपातेन भवत्येव ष्टुत्वमिति। पेष्टा पेष्टुमिति।

## ४४। शात्।

विश्नः प्रश्न इति। विछ गतौ। प्रछ ज्ञीप्सायाम्। पूर्ववन्नङ्। च्छ्वोः शूड़नु-

(N) "अत्र च श्रीहर्षः—"गतान्तरा नल भैमीं नाकस्मात् त्वं प्रवेक्ष्यसि। षण्णाग्लक्रमसंयुक्तं पठ्यमानं डकारवत् ॥१॥" इति।

नासिके चेति ( ६।४।१९ ) च्छकारस्य शकारः। यद्यपि प्रश्ने चासन्नकाल इति ( ३।२।११७ ) निपातनादेव शात् परस्य तवर्गस्य चुत्वन्न भवतीत्येषोऽर्थो लभ्यते तथापि मन्दधियां प्रतिपत्तिगौरवपरीहारार्थमिदमारभ्यते। अथवाऽबाधकान्यपि निपातनानि भवन्तीत्युक्तम्। यद्येतन्नारभ्यत प्रश्नो विश्न इत्यपि रूपं सम्भाव्येत।

## ४५। यरोऽनुनासिकेऽनुनासिको वा।

पदान्तस्येत्यनेन ( ८।४।३७ ) न पदान्ताट्टोरनामित्यतः पदान्तग्रहणमनुवर्त्तते। तच्चार्थात् षष्ठ्यन्तता मनुभवतीति दर्शयति। वाङ्नयतीत्यादावुदाहरणे झलां जशोऽन्त इति ( ८।२।३९ ) गकारादौ जश्त्वे कृते तस्यानुनासिकः कर्त्तव्यः। वाङ्मयमिति (O)। नित्यं वृद्धशरादिभ्य ( ४।३।१४४ ) इति मयट्। त्वङ्मयमिति। अत्रापि मयड्वैतयोरित्यादिना (P) ( ४।३।१४३ )।

## ४६। अचो रहाभ्यां द्वे।

अच उत्तरौ यौ रेफहकाराविति। एतेनाच इति रहो विशेषणमिति दर्शयति। आभ्यामुत्तरस्य यर इति। अनेनापि रहौ यविशेषणमिति। अर्क इति। अर्च पूजायाम्। घञ्। चजोः कुघिण्ण्यतोरिति ( ७।३।५२ ) कुत्वम्। मर्क इति। मचिः सौत्रो धातुः। तस्मादिण्भीकापाशल्यतिमर्चिभ्यः कन्निति ( उण्, ३।२२३ ) कन्। चोः कुरिति ( ८।२।३० ) कुत्वम्। अत्राकारादुत्तरो रेफः। तस्मादपि परो ककारो यरिति। ब्रह्मेति। अत्राप्यकारादेवाच उत्तरो हकार। तस्मादपि परो मकारो यरिति। अपह्नुत इति। अत्राप्यकारादुत्तरो हकारः। पूर्ववच्छपो लुक्। तस्मात् परस्य नकारस्य द्विर्वचनम्। किन् कृतइत्यत्राच उत्तरो हकारो न भवतीति नकारो न द्विरुच्यते। किम् ह्मलयतीति। ह्मल ह्मल सञ्चलने। हेतुमण्णिच्। ज्वलह्मलह्वलनमामनुपसर्गाद्वेति ( ग, सू ) मित्त्वम्। मितां ह्रस्व इति ( ६।४।९२ ) ह्रस्वत्वम्।

---

(O) मुद्रितकाशिकायान्तु वाङ्मात्रं कियन्मात्रमित्येवोदाहृतम्। न वाङ्मयं त्वङ्मयमिति। पदमञ्जरी च न्यासारूढ़ं पाठं जग्राह। न्यासवत् तं समर्थयामास च।

(P) इदं चिन्त्यम्। एकाचो नित्यं मयटमिच्छन्तीति नित्यग्रहणस्य नित्यं वृद्धशरादिभ्य इत्यत्र ( ४।३।१४४ ) फलम्। तेनानेनैवात्र मयट्। वाच्त्वच्छब्दस्यैकाच्त्वात्।

## ४७। अनचि च।

अनच्परस्येति। अचोऽन्योऽनच्। अनच् परो यस्मात् सोऽय मनच्परः। दद्ध्यत्रेति। अत्राचः परो धकारो यर्। तस्यानचि यकारे परतो द्विर्वचनम्। झलाञ्जश् झशीति (८।४।५३) धकारस्य दकारः। मद्ध्वत्रेति। अत्रानच्-परस्य धकारस्य द्विर्वचनम्। यणो मय इत्यादि। अच उत्तरस्य यरो द्विर्वचन मुक्तम्। अनचि यण उत्तरस्य मयोऽचि परतो न प्राप्नोतीत्युपसंख्यायते। किंपुन रिहोदाहरण मित्याह केचिदित्यादि। उल्क्का वल्म्मीक इति। यकाराद् यण उत्तरस्य ककारस्य मकारस्य च मयो द्विर्वचनम्। दध्य्यत्र मध्व्वत्रेति। धकारा-न्मय उत्तरस्य यकारस्य वकारस्य च यणो द्विर्वचनम्। शरःखय इत्यादि। स्त्थाली स्त्थातेति। सकाराच्छर उत्तरस्य खयस्थकारस्य द्विर्वचनम्। वत्स्सइति। तकारात् खय उत्तरस्य सकारस्य शरो द्विर्वचनम्। इक्ष्षुः क्ष्षीरमिति। ककारात् खय उत्तरस्य शरः षकारस्य द्विर्वचनम्। अप्स्सरा इति। पका-रात् खयः परस्य सकारस्य शरो द्विर्वचनम्। अवसाने च इत्यादि। अनचि चेति पर्य्युदासाश्रयणादिदमुच्यते। प्रसज्यप्रतिषेधे तु यरोऽनुनासिके वेत्यतो (८।४।४५) वाग्रहणमनुवर्त्तय शक्य मिदमकर्त्तुम्। नैतत्। प्रसज्यप्रतिषेधे हि विधि-वाक्यत्वं सूत्रस्य नोपपद्यते। ततश्च केनचिद् द्विर्वचनं स्यात्? तस्मादेव प्रतिषेध-वाक्याद्विधिवाक्यतास्यानुमास्यत इत्यदोषः। प्रसज्यप्रतिषेधे सति प्रतिपत्तिगौरव भयात् पर्य्युदासाश्रयणम्।

## ४८। नादिन्याक्रोशे पुत्रस्य।

आदिनीति(Q) परसप्तमीयम्। अत आह आदिनि परत इति। पुत्रादिनीति। पुत्रानत्तुं शीलमस्याइति ताच्छील्ये णिनिः। पुत्रादिनी शिशुमारीति। तत्त्वाख्यान-मेतत्। नाक्रोशः। तत्परे चेति वक्तव्यम्। स आदिनिशब्दः परो यस्मात् पुत्र-शब्दात् तत्र द्विर्वचनं न भवतीत्येतदर्थं रूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्। नेति योगविभागः क्रियते। तेन तत्परे न भविष्यतीति। वा हतेत्यादि। हत-जग्धशब्दयोः परतः पुत्रस्य वा द्विर्वचनं न भवतीत्येतदर्थंरूपं व्याख्येयमित्यर्थः। व्याख्यानं तु वाग्रहणमनुवर्त्त्य नेति योगविभागकरणमाश्रित्य वा कर्त्तव्यम्।

---

(Q) मुद्रितकाशिकायां पदमञ्जर्यांश्च ङीबन्त आदिनीशब्दो गृहीतः।

नचैवं पुत्रादिनीत्यत्रापि विकल्पः प्रसक्तः। व्यवस्थितविभाषाविज्ञानात्। हतश्च जग्धश्च तद् हतजग्धम्। हतजग्धश्च तत् परश्चेति हतजग्धपरम्। तस्मिन् हतजग्धपरे। पुत्रहती पुत्रजग्धीति। पुत्रो हतः पुत्रो जग्धोऽनयेति बहुव्रीहिः। अस्वाङ्गपूर्वेत्यादिना ( ४।१।५३ ) ङीष्। चयो द्वितीयाइत्यादि। चयइति स्थानषष्ठी। खफछठथफाइति द्वितीया इत्यस्यार्थः। द्वितीयत्व मेषां वर्णानां प्रथमवर्णापेक्षया भवति। वथ्स इति। तकारस्य चयः सकारे शरि परतो द्वितीयस्थकारः। खषीरमिति। ककारस्य चयः षकारे शरि परतो द्वितीयः खकारः। अफ्सरा इति। पकारस्य चयः सकारे शरि परतो द्वितीयः फकारः। (R)

## ४९। शरोऽचि।

कर्षतीति। कृष विलेखने। वर्षतीति। वृषु वृषु मृषु सेचने। आदर्श इति। दृशिर् प्रेक्षणे। अधिकरणे घञ्। दर्श इति। अत एव करणे घञ्।

## ५०। त्रिप्रभृतिषु शाकटायनस्य।

इन्न्द्रइत्यादावनचि चेति ( ८।४।४७ ) प्राप्तिः। इन्द्रश्चन्द्रो मन्द्रइति। इदि परमैश्वर्ये। चदि आह्लादे। मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु। स्फायितञ्चीत्यादिना ( उण्, २।१७० ) रक्प्रत्ययः। राष्ट्रो भ्राष्ट्र इति। राज् भ्राज् इति दीप्तौ। सर्वधातुभ्य इन्प्रत्ययः। व्रश्चादिसूत्रेण ( ८।२।३६ ) षत्वम्। शाकटायनग्रहणं पूजार्थम्। नित्यएवायं विधिः। अन्यथोत्तरसूत्रेणैव सिद्धत्वादस्यारम्भो निरर्थकः स्यात्।

## ५१। सर्वत्र शाकल्यस्य।

अत्रिप्रभृत्यर्थोऽयमारम्भः। अर्कइत्यादावचो रहाभ्यां द्वे इति ( ८।४।४६ ) प्राप्तिः। आरम्भसामर्थ्यादेवात्रिप्रभृतिष्वपि सिद्धे सर्वत्रग्रहणं पूर्वस्यापि प्राप्ते प्रतिषेधो यथा स्यादित्येवमर्थम्। असति तस्मिन् प्रत्यासत्तेरनचि चे-( ८।४।४७ ) त्यस्या एव प्राप्तेरयं निषेधः स्यात्। शाकल्यग्रहणं पूजार्थम्। न विकल्पार्थम्। विधिरपि योगद्वयेनोच्यते। प्रतिषेधोऽपि। अत्र सामर्थ्यादेव विकल्पो भविष्यति। अन्यथा विधेरनवकाशः स्यात्।

---

(R) एवञ्च प्राङ्षष्ठः प्राङ्क्षष्ठः प्राङ्ख्षष्ठः। वण्षष्ठी वण्ट्षष्ठी वण्ठ्षष्ठी वेति त्रैरूप्यम्।

## ५२ । दीर्घादाचार्य्याणाम् ।

नित्यार्थोऽयमारम्भः । अत्रारम्भसामर्थ्यादेव सिद्ध आचार्य्यग्रहणं पूजार्थम् । दात्वमित्यादावनचि चेति ( ८।४।४७ ) प्राप्तिः ।

## ५३ । झलाञ्जश् झशि ।

लब्धेत्यादि । लभे स्तृच्तुमुंस्तव्याः । झषस्तथोर्धोऽध इति ( ८।२।४० ) धकारे झशि भकारस्य जश्त्वं बकारः । दोग्धेति । दिह उपचये । दादेर्धातोर्घ इति ( ८।२।३२ ) हकारस्य घकारः । बोद्धेति । जश्त्वेन धकारस्य दकारः ।

## ५४ । अभ्यासे चर्च ।

चकारेण जश्ग्रहणमनुवर्त्तते । तेनोत्तरत्र तदनुवृत्तिर्न भवति । चिखनिषतीति । खनतेः सन् । द्विर्वचनम् । हलादिशेषः । कुहोश्चुरिति (७।४।६२) चुत्वं छकारः । तस्यानेन चकारः । चिच्छित्सतीति । छिदेः सन् । द्विर्वचनम् । छे चेति ( ६।१।७३ ) तुक् । चुत्वम् । टिठकारयिषतीति । ठकारमाचष्ट इति तत् करोति तदाचष्ट इति णिच् ( ३।१।२६, वा ) । इष्ठवद्भावाट्टिलोपः । सन् । इट् । गुणः । अयादेशः । तिष्ठासतीति । शर्पूर्व्वाः खयः (७।४।६१) शेषः । पिफकारयिषतीति । टिठकारयिषतीत्यनेन तुल्यसाधनम् । अयन्तु विशेषः । फकारशब्दाण्णिच् । प्रकृतिचरां प्रकृतिचरो भवन्तीति । जश्त्वबाधनार्थम् । पर्जन्यवल्लक्षणप्रवृत्त्या (प,१२०) प्रकृतिरूपाश्चरः प्रकृतिचरः स्थानिनाऽभिन्नरूपा इत्यर्थः । चिचीषतीति । अज्झनगमां सनीति ( ६।४।१६ ) दीर्घः । तितीर्षतीति । ऋत इद्धातोरितीत्वम् ( ७।१।१०० ) । रपरत्वञ्च । हलि चेति ( ८।२।७७) दीर्घः । जिझकारयिषतीति । टिठकारयिषतीत्यनेन तुल्यसाधनम् । अत्र झकारशब्दाण्णिजिति विशेषः । जिघत्सतीति । अदेः सन् । लुङ्सनोर्घस्लृिति (२।४।३७) घस्लादेशः । पूर्ववदभ्यासस्य चुत्वञ् झकारः । तस्य जश्त्वं जकारः । सः स्यार्धधातुक इति ( ७।४।४९ ) सकारस्य तकारः । डुढौकिषत इति । ढौकतेः सन् । प्रकृतिजशां प्रकृतिजशो भवन्तीति । चर्त्वबाधनार्थं पूर्ववत् प्रकृत्या स्थानिनाऽभिन्नरूपा जशः प्रकृतिजशः । जिजनिषत इति । पूर्व्ववत् सन ( १।३।६२ ) इत्यात्मने-पदम् । बुबुध इति । अनुदात्तेत्त्वादात्मनेपदम् । लिट स्तझयोरेशिरेजित्येश्

( ३।४।८१ )। ददाविति। आत औ णल (७।१।३४) इत्यौत्वम्। डिड्य इति। डीङ् विहायसा गतौ। पूर्ववदेशादेशः। स्थानिवद्भावाड् डीत्यस्य द्विर्वचनम्।

## ५५। खरि च।

युयुत्सत इति। युधेः सन्। पूर्ववत् सन इत्यात्मनेपदम् ( १।२।६२ )। आरिप्सत इत्यादि। रभिलभिभ्यां सन्। सनि मीमेत्यादिनेस् (७।४।५४)। स्कोः संयोगाद्योरन्ते ( ८।२।२९ ) चेति सकारलोपः। अत्र लोपोऽभ्यासस्ये-(७।४।५८) त्यभ्यासलोपः। समुच्चयार्थश्चकारः। न केवलमभ्यासे चरो भवन्तीत्यपितु खरि च। असति ह्यस्मिंश्चकारेऽनन्तरविहितं यच्चर्त्वं तत् खरादावभ्यासनिमित्ते प्रत्यये स्यात् तिष्ठासतीत्यादौ। ननु चखादित्यादावपीति कस्यचिन्मन्दधियो भ्रान्तिः स्यात्।

## ५६। वावसाने।

झलां जशोऽन्तइति (८।२।३९) नित्ये जश्त्वे प्राप्तेऽवसाने वा चरो विधीयन्ते। वावचनात् पक्षे जश्त्वमपि भवत्येव।

## ५७। अणोऽप्रगृह्यस्यानुनासिकः।

अण इति पूर्वेण णकारेण प्रत्याहारग्रहणम्। अन्यथाऽसन्देहार्थमच इति कुर्य्यात्। न च पदान्तहलोऽणः सम्भवन्ति। दधिँ मधुँ इति। स्वमोर्नपुंसकादिति ( ७।१।२३ ) स्वमोर्लुक्। अग्नी वायू इति। प्रथमयोः पूर्वसवर्ण इति ( ६।१।१०२ ) दीर्घः। ईदूदेद्द्विवचन मिति ( १।१।११ ) प्रगृह्यसंज्ञा।

## ५८। अनुस्वारस्य ययि परसवर्णः।

शङ्कितेत्यादि। शकि शङ्कायाम्। उकि उञ्छे। कुड़ि दाहे। टुनदि समृद्धौ। कपि चलने। एभ्य स्तृजादयः। इदित्त्वान्नुम्। नश्चापदान्तस्य झलो-( ८।३।२४ ) त्यनुस्वारः। तस्यानेन परसवर्णः। कुर्व्वन्ति कृषन्तीति। करोतेः-कृष विलेखन इत्यस्माच्च तौदादिकात् परस्य लड़ादेशस्य झे झोऽन्तइत्य-(७।१।३) न्तादेशः। नकारस्यानुस्वारे तस्य च परसवर्णे नकारे सत्यट्कुप्वाङ्नुमित्यादिना ( ८।४।२ ) णत्वं प्राप्नोति। तत् कस्मान्न भवतीत्याह इहेत्यादि। णत्वमत्रानु-

स्वारात् पूर्वं स्यात्? पश्चाद्वा? पूर्वं तावन्न भवति। यस्मादनुस्वारे कर्त्तव्ये णत्वस्यासिद्धत्वम्। अतः पूर्वं नकारस्यानुस्वार एव क्रियते। परसवर्णे नकारे कृते पश्चादपि न भवति। णत्वे कर्त्तव्येऽनुस्वारस्थानिकस्यासिद्धत्वात्। परसवर्णेनेति। परसवर्णार्थेन शास्त्रेणेत्यर्थः। भवति हि तादर्थ्यात् ताच्छब्द्यम्। यथा प्रदीपार्था मल्लिका प्रदीप इति। पुनरिति। अनुस्वारक्रियाया उत्तरकालमित्यर्थः। एवमित्यादिनाऽनुस्वारीभूतो नकारो णत्व मतिक्रामतीति भाष्ये णत्वस्यातिक्रमणमनुस्वारीभूतस्य नकारस्योक्तम्। तदेवासिद्धत्वात् परसवर्णस्य नकारस्य णत्वं न सम्पद्यत इति दर्शयति। अतिक्रामतीति। अतिक्रम्य वर्त्तत इत्यर्थः। आक्रंस्यत इति। आङ्पूर्वात् क्रमेर्लृट्। आङ उद्गमन (१।३।४०) इत्यात्मनेपदम्। आचिक्रंसत इति। पूर्ववत् सन (१।३।६२) इत्यात्मनेपदम्।

## ५९। वा पदान्तस्य।

वावचनं पूर्वस्य नित्यत्वज्ञापनार्थम्। द्वयोर्विभाषयोर्मध्ये ये वै विधयस्ते नित्या भवन्तीति कृत्वा। असति वाग्रहणे विपर्य्ययः सम्भाव्येत। पूर्वो विधिर्विभाषा। अयं तु विधिरारम्भसामर्थ्यान्नित्य इति।

## ६०। तोर्लि।

## ६१। उदः स्थास्तम्भोः पूर्वस्य।

उत्थातेति। आदेः परस्येति (१।१।५४) सकारस्य महाप्राणस्याघोषस्य तादृश एव पूर्वसवर्णं स्थकारः। खरि चेति (८।४।५५) थकारस्य तकारः। (S) अनचि चेति (८।४।४७) पूर्वतकारस्य द्विर्वचनम्। झरो झरीति (८।४।३५) पक्ष एकस्य लोपः। उत्तम्भितेति। स्तम्भिः सौत्रो धातुः (T)। उत्स्नातेति। ष्णा शौचे। पूर्वग्रहणं परसवर्णनिवृत्त्यर्थम्। उत् पूर्वस्येत्यादि। पूर्वसवर्णे कर्त्तव्ये स्कन्देश्छन्दसि विषय उपसंख्यानं प्रतिपादनं कर्त्तव्य मित्यर्थः। तत्रेदं प्रतिपादनम्। व्यत्ययो बहुल मिति (३।१।८५) व्यत्ययेनोदः परस्य स्कन्दे श्छन्दसि विषये पूर्वसवर्णो भविष्यति। उत् कन्देति। लोट्। सिप्। सेर्ह्यपिच्चेति (३।४।८७)

---

(S) इदमपि चिन्त्यम्। थकारस्यासिद्धत्वात्। थकारस्यैवात्र श्रवणम्। ननु तस्य चर्त्वेन तकारः स्यात्। तेन झरो झरीति (८।४।६५) लोपाभावपक्षे उत्थ्थातेति।

(T) उत्तम्भितोऽभिरतीवतरां शिरोभिरिति माघः।

ह्निरादेशः। अतो हेरिति ( ६।४।१०५ ) हेर्लुक्। रोगि चेत्यादि। इदम-विशेषेण च्छन्दसि भाषायाञ्च। रोगि वाच उदः परस्य स्कन्देः पूर्वसवर्णो भवती-त्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्। पृषोदरादित्वाद् ( ६।३।-१०९ ) भविष्यतीति। उत्कन्दक इति। रोगाख्यायां ण्वुल बहुल (३।३।१०८) मिति ण्वुल्।

## ६२। झयो होऽन्यतरस्याम्।

वाग् घसतीत्यादावुदाहरणे हकारस्य महाप्राणत्वात्तरतम्यात् तादृश एव घकारादयो वर्गचतुर्था भवन्ति। अन्यतरस्यांग्रहणं पूर्वविध्योर्नित्यत्वज्ञापनार्थम्।

## ६३। श श्छोऽटि।

छत्व ममीति वक्तव्यमिति। अमि परतश्छत्वं भवतीत्येतदर्थरूपं व्याख्येय-मित्यर्थः। तत्रेदं व्याख्यानम्। शश्छ इति योगविभागः क्रियते। तेनाट्प्रत्या-हारेऽसन्निविष्टे लकारादावपि भविष्यति। अतोऽटीत्यतिप्रसङ्गनिरासार्थो द्वितीयो योगः। तेनाट्येव परभूते। नान्यत्रेति। योगविभागकरणसामर्थ्याच्चाप्रत्या-हारान्तर्गतेऽन्यपि क्वचिद् भवत्येव। अन्यथा योगविभागकरण मनर्थकं स्यात्। अमीति नोक्तं वैचित्र्यार्थम्। अत्र वा पदान्तस्येत्यतः ( ८।४।५९ ) पदान्तग्रहण मनुवर्त्तते झयो विशेषणार्थम्। तेन श्नि तुगित्यत्र ( ८।३।३१ ) तुकः पूर्वान्त-करणं छत्वार्थमुपपन्नं भवति। अन्यथा डः सि धुडित्यतो ( ८।३।२९ ) धुड्-ग्रहणानुवृत्तेः परस्यासिद्धत्वात् पूर्वान्तकरण मनर्थकं स्यात्।

## ६४। हलो यमां यमि लोपः।

शय्येत्यत्र द्वौ यकाराविति। एकः संज्ञायां समजेत्यादिना ( ३।३।९९ ) विहितस्य क्यपोऽवयवः। अपरस्त्वगङः। क्रमज स्तृतीय इति। क्रम आनुपूर्वी। ततो जातः क्रमजः। स पुनरनचि चेत्यनेन (८।४।४७) यो विहितः। स हि पूर्व-यकाराभ्यां पश्चाज्जात इति क्रमजो भवति। तकारात् परो यकार एक इति। दित्यदित्येत्यादिना ( ४।१।८५ ) विहितस्य ण्यस्यावयवः। द्वौ यकाराविति। एकोऽदितिशब्दात् तस्यापत्यमित्यर्थे ( ४।१।९२ ) दित्यदित्यादिसूत्रेण विहितस्य (४।१।८५) ण्यस्यावयवः। द्वितीयस्त्वादित्यशब्दादेव सास्य देवतेत्यर्थे ( ४।२।२४ )

तेनैव सूत्रेण विहितस्य थमुत्रावयवः । क्रमजस्तृतीय इति । यणो मय इत्यनेन ( ८।४।४७, वा ) यो विहितः । मध्यमस्य मध्यमयोर्वेति । अन्यतरस्यामित्यधिकारात् । यद्येकस्य भवति ततो मध्यमस्य । अथ द्वयोरिति ततो मध्यमयोः । आन्नमिति । अन्नाण्ण इति ( ४।४।८५ ) निपातनाददो जग्धिर्ल्यप्ति किंतीति ( २ ४।३६ ) न भवति जग्धादेशः । रदाभ्यामित्यादिना ( ८।२।४२ ) निष्ठानत्वम् । भवत्ययं नकारो यम् । यमि परतश्च । न च हलउत्तरः । किं तर्हि ? अचः । अर्घ्यमिति । पादार्घाभ्यां चेति ( ५।४।२५ ) तादर्थ्ये यत् । अत्र घकारो रेफादुत्तरो भवति । यकारे यमि परतः । नत्वयं यम् घकारः । तस्य यमस्वमसन्निवेशात् । शार्ङ्गमिति । शृङ्गस्य विकार इत्यण् । आदिवृद्धिः । रपरत्वम् । अत्र ङकारो यम् हलउत्तरो भवति । ननु तस्मात् परे यम् गकारः । तस्य यमप्रत्याहारेऽसन्निवेशात् । नन्वादिवृद्धिस्तद्धिताश्रया बहिरङ्गा भवति । लोपस्त्वन्तरङ्गः । ततश्चान्तरङ्गे लोपे कर्त्तव्ये वृद्धेरसिद्धत्वम् । तस्या असिद्धत्वात् तदाश्रितस्य रेफस्याप्यसिद्धत्वमेव । एवञ्च सति ङकारो हलएव परो न भवतीति यत् केचिच्चोदयन्ति तन्मतमिदं नोपन्यसनीयमेव । मूलोदाहरणेऽपि तथा सम्भवात् ।

## ६५ । झरो झरि सवर्णे ।

प्रत्तमवत्तमित्यादि । ददातेः क्तः । अच उपसर्गात् त ( ७।४।४७ ) इत्याकारस्य तकारः । दकारस्यापि खरि चेति ( ८।४।५५ ) चर्त्वम् । एवं तावत् त्रय स्तकाराः । द्वावादेशावेकः प्रत्ययावयवः । अनचि चेति ( ८।४।४७ ) यो निर्वृत्तः स क्रमजश्चतुर्थः । मध्यमस्य मध्यमयोर्वेति । पूर्ववदन्यतरस्यांग्रहणानुवृत्तेरेव वेदितव्यम् । मरुत्त इति चत्वारस्तकारा इति । त्रयः पूर्ववत् । चतुर्थो मरुच्छब्दावयवः । क्रमजः पञ्चम इति । अनचि चेति ( ८।४।४७ ) यो विहितः । ननु चाजन्तादुपसर्गात् तत्व मुच्यते । नच मरुच्छब्दोऽजन्तः । किं तर्हि ? हलन्तः । तत् कथं तत्वं भवतीत्याह मरुच्छब्दस्येत्यादि । उपसर्गाः क्रिया योग इत्यत्र ( १।४।५९ ) मरुच्छब्दस्योपसंख्यानमुपसर्गकार्य्यार्थम् । यदि सत्यामपि तस्यां तत्वं न स्यात् तदा तस्य वैयर्थ्यं स्यात् । तस्मादुपसंख्यानसामर्थ्यादनजन्तादपि तत्वं भवत्येव । तर्हि यथा ह्युपसर्गोपसंख्यानसामर्थ्यात् तत्वं भवति तथा मरुन्नयतीत्यत्राप्युपसर्गादसमासेऽपि णोपदेशस्येति ( ८।४।१४ )

तकारेणानड़ादिव्यवाये णत्वं स्यात्। यदीष्यते तदा भवतु। यदि नेष्यते तदा क्षुभ्नादिषु ( ८।४।३९ ) द्रष्टव्यः। शाङ्गमिति। ङकारो हलउत्तरो भवति झरि च सवर्णे परतः। नत्वयं झरिति न भवति लोपः। प्रियपञ्चेति। प्रियाः पञ्चास्येति बहुव्रीहिः। तत स्तृतीयैकवचनम्। अल्लोपोऽन इत्यकार-(६।४।१३४) लोपः। स्तोः श्चुना श्चुरिति ( ८।४।४० ) श्चुत्वं तवर्गस्य। वर्गो वर्गेन सवर्ण इति ञकारश्चवर्गस्य सवर्णः। नत्वयं ञकारो झर्। तेन तस्मिन् परभूते पूर्वस्माद्धलः परस्यापि चकारस्य लोपो न भवति। ननु चाक्रियमाणेऽपि झरीत्येतस्मिन् नैवात्र लोपः प्राप्नोति। निर्दिष्टग्रहणस्यानन्तर्य्यार्थत्वात्। अनन्तरे परभूते सवर्णे लोपेन भवितव्यम्। नचात्रानन्तरो ञकारः। पूर्वस्य लोपे कृतेऽचः परस्मिन् पूर्वविधावित्य-(१।१।५७) कारलोपस्य स्थानिवद्भावात्। तत् किं झरीत्यनेनेत्यत आह लोपस्ये-त्यादि। पूर्वत्रासिद्धीये ह्यल्लोपस्य स्थानिवद्भावः प्रतिषिध्यते। अत्र झरीत्येतन्नोच्येत यदि, तदात्र लोपः स्यादेव। तर्प्तेति। तृप प्रीणने। पकारस्य तकारः स्थानभेदात् सवर्णो न भवति। तेनात्र लोपो न भवति। ननुच निमित्तानां कार्य्यिणाञ्च साम्या दिह संख्यातानुदेशेन भवितव्यम्। तत्रासत्यपि सवर्णग्रहणे तर्प्तत्यादौ नैव लोपः प्राप्नोति। तत् किं तन्निवृत्त्यर्थेन सवर्णग्रहणेनेत्यत आह सवर्णग्रहणसामर्थ्या-दित्यादि। यद्यत्र यथासंख्यं स्यात् ततो झकारस्य झकार एव लोपः प्रसज्येत। यावता झकारस्य झकार एव सवर्णः। एवञ्च सति सवर्णग्रहणमनर्थकं स्यात्। व्यवच्छेद्याभावात्। नहि झकारस्यासवर्णो झकारः सम्भवति। तस्मादत्र सवर्ण-ग्रहण सामर्थ्यान् न संख्यातानुदेशो भवति। तेन शिण्ढि पिण्ढीत्यत्र सवर्णमात्रे ढकारे डकारलोपो भवतीति। शिषॢ विशरणे। पिषॢ सञ्चूर्णने। लोट्। सिप्। सेर्ह्यपिच्चेति ( ३।४।८७ ) हिरादेशः। श्नम्। श्नसोरल्लोप ( ६।४।१११ ) इत्यकारलोपः। हुझल्भ्यो हेर्धिरिति (६।४।१०१) धिभावः। झलाञ्जश् झशीति ( ८।४।५३ ) जश्त्वं षकारस्य डकारः। नश्चापदान्तस्य झलीत्य-( ८।३।२४ ) नुस्वारः। ष्टुना ष्टुरिति ( ८।४।४१ ) धकारस्य ढकारः। अनुस्वारस्य ययि पर-सवर्ण इति (८।४।५८) णकारः। अनेन डकारस्य ढकारे लोपः।

## ६६। उदात्तादनुदात्तस्य स्वरितः।

गार्ग्यो वात्स्यइति। गर्गवत्सशब्दाभ्यां गर्गादिभ्यो यञिति ( ४।१।१०५ ) यञ्। ञ्नित्यादिर्नित्य मित्याद्युदात्तत्वम् ( ६।१।१९७ )। अनुदात्तं पदमेक-

वर्जमिति ( ६।१।१५८ ) शेषस्यानुदात्तत्वम् । तस्य स्वरितो भवति । पचति पठतीति । तिप्शपौ पित्त्वादनुदात्तौ । पकारस्याकारोऽपि धातुस्वरेणोदात्तः । तस्मात् परस्य शवकारस्य स्वरितत्वं भवति । किं पुनः कारणं सूत्रमिदमिहोच्यते ? न तित्स्वरितमित्यस्या ( ६।१।१५८ ) नन्तरमुच्यताम् ? एवं हि स्वरितग्रहणं न कर्त्तव्यं भवति । प्रकृत मेव ह्यनुवर्त्तिष्यत इत्याह अस्येत्यादि । यदि तत्र क्रियेत तदानुदात्तं पदमेकवर्जमित्येतदिह ( ६।१।१५८ ) प्रवर्त्तेत । ततश्चानुदात्तस्वरितौ श्रूयेयाताम् । नोदात्तस्वरितौ । इह तु क्रियमाणे स्वरितस्यासिद्धत्वात् तदाश्रयमनुदात्तं पदमेकवर्जमिति ( ६।१।१५८ ) न प्रवर्त्तते । तेन द्वावप्यस्योदात्तस्वरितौ श्रूयेते ।

## ६७ । नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम् ।

उदात्तस्वरितोदयमिति । उदात्तस्वरितावुदयौ यस्मादिति बहुव्रीहिः । उदयशब्दोऽत्र प्रत्येकमभिसम्बध्यत इति दर्शयितुमाह उदात्तोदयस्येत्यादि । उदयशब्दः परशब्दस्यार्थे वर्त्ततेऽत्र । गार्ग्यस्तत्रेति । तत्रशब्द आद्युदात्तः । सप्तम्या त्रलिति ( ५।३।१० ) त्रल्प्रत्ययान्तात्लित्स्वरेण । गार्ग्यःक्वेति । क्वशब्दः स्वरितस्तित्स्वरेण । किमोऽदिति (५।३।१२) किम्शब्दादत्प्रत्ययः । किमः क्वादेशःक्वातीति (७।२।१०५) । उदात्तस्वरितमिति वक्तव्ये लाघवार्थत्वाद् विस्पष्टार्थत्वाच्चोदयग्रहणं मङ्गलार्थमिति । इष्टार्थसिद्धेर् हेतुर् मङ्गलमिष्टं पुनरर्थः शास्त्रस्य प्रथनं वीरपुरुषादिता च । तथाचोक्तं(U) यतो मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते । वीरपुरुषाणि भवन्त्यायुष्मत्पुरुषाणि चेति । यथा मङ्गलादीन्येवंविधानि भवन्ति तथा मङ्गलावसानान्यपि । मङ्गलार्थे इहोदयशब्दे क्रियमाण उत्तरारम्भो मङ्गलपूर्वको भवन्ति । तेन यद् वक्ष्यति दीर्घप्लुतयोश्चानेन विवृताकारेण ग्रहणं नेष्यते । संवृतेन तु मात्रिकस्य सर्वगुणयुक्तस्याकारस्य ग्रहण मिष्यत इति तदुपपन्नं भवति । मङ्गलपूर्वकेषु हि कार्य्येष्वारभ्यमाणेष्वपीष्टार्थसिद्धिर्भवति । उदयशब्दश्चायं लोके वृद्धिशब्दवन्मङ्गलार्थत्वेन प्रसिद्धः । तस्मात् तस्य ग्रहणं मङ्गलार्थं क्रियते ।

---

(U) इति भाष्यं ।

## ६८। अ अ इति।

एकोऽत्र विवृतोऽपरः संवृतः। तेन स्थान्यादेशयोरुभयो रूपाभेदादपि प्रयत्नभेदाद् भेदो भवति। अत्यन्ताभेदे सत्यकारस्य त्वकारवचनमनर्थकं स्यात्। अत्र यो विवृतः स स्थानी। यः संवृतः स आदेशः। अकारो विवृतः। स संवृतो भवति। विवृतप्रयत्नोऽकारः संवृतप्रयत्नो भवति। संवृतप्रयत्न मादेशमनुभवतीत्यर्थः। हृत्तः प्लुत्तइति। संवृतप्रयत्नविषयोपदर्शनार्थम्। ननुच विवृतोऽकारो नास्त्येव लोके वेदे च। संवृतस्यैव प्रयोगदर्शनात्। तदपार्थकमिद मित्याह इहेत्यादि। यद्यपि लोके वेदे च संवृत एवाकार स्तथापीह व्याकरणे कस्यचित् कार्य्यस्य सिद्धये विवृतोऽप्यभ्युपगतः। किं पुन स्तत् कार्य्यम्? अकारस्य चान्योन्यापेक्षया सावर्ण्यम्। एतदुक्तं भवति। ह्रस्वदीर्घाकारौ सवर्णौ यथा स्यातामित्येवमर्थमकारो विवृतगुणः प्रतिज्ञात इति। अन्यथा यदि संवृतविवृतप्रयत्नौ परस्परं सवर्णौ न स्यातां ततश्चाकारो गृह्यमाण आकारं न गृह्णीयात्। एवञ्च सति दण्डाग्रमित्यादावेवाकः सवर्णे दीर्घः (६।१।१०२) इति दीर्घत्वं स्यात्। दण्डाढकमित्यादौ तु न स्यात्। अभेदका इह शास्त्रे गुणा (प, ११८) इत्युक्तम्। ततोऽयमदोष इति चेत्? न। सवर्णसंज्ञासूत्रे (१।१।९) प्रयत्नभेदस्याप्याश्रितत्वात्। अन्यथा तत्र प्रयत्नग्रहणमनर्थकं स्यात्। यदि तर्हि विवृतः प्रतिज्ञात स्तत् किमर्थं तस्येह प्रत्यापत्तिः क्रियतइत्याह तस्येत्यादि। तथाभूतस्येति। विवृतप्रयत्नभूतस्येत्यर्थः। प्रत्यापत्तिः पुनस्तस्य संवृतगुणस्याकारस्य स्वरूपात् प्रच्युतस्य पुनः स्वरूपस्य प्रतिलम्भः। मृतस्य प्रत्युज्जीवनवत्। इदानीन विवृतेनाकारेण गृह्यमाणेनाणत्वात् सकलमवर्णकुलमुदात्तादिभेदभिन्नमष्टादशप्रकारं गृहीतम्। ततश्च यथा गुणान्तरयुक्तस्य ह्रस्वस्य संवृतो ह्रस्व आदेशो भवत्येवं दीर्घप्लुतयोरपि स्यात्। किञ्चादेशोऽयमकारः संवृत उपात्तः। संवृतस्य चाकारस्याणत्वं नास्ति। प्रत्याहारेऽसन्निवेशात्। ततश्च यथाणत्वाभावाद् दीर्घप्लुतौ न गृह्णाति तथा संवृत मपि मात्रिकं गुणान्तरयुक्तं न गृह्णीयात्। एवञ्च सति यद्गुण उच्चारित स्तद्गुणयुक्तस्यैव प्रत्यापत्तिः स्यात्। न गुणान्तरयुक्तस्येत्याह दीर्घप्लुतयोश्चेत्यादि। कथं पुनर्दीर्घप्लुतयोरनेन विवृतेनाकारेण ग्रहणमिष्यमाणमपि न भवति? कथञ्च संवृतेन सर्वगुणयुक्तस्य मात्रिकस्य ग्रहणमिष्यमाणमपि लभ्यते? पूर्वसूत्र उदयग्रहणादिति पूर्व्वमेव कारण मुक्तमवास्माभि रुदयग्रहणस्य प्रयोजनं वर्णयद्भिः।

तपरकरणनिर्द्देशमन्ये त्वाहुः । अद् अ इति तपरनिर्द्देशः कर्त्तव्यः । तथाच भाष्य उक्तम् । सिद्धन्तु तपरनिर्द्देशादिति (V) । तत्र प्रथमोऽकार स्तः परो यस्मादिति तपरः । द्वितीयस्तु तादपि पर स्तपरइति । तस्य विवृतस्य तपरत्वं दीर्घप्लुत-निवृत्त्यर्थम् । संवृतस्य सर्वगुणयुक्तस्य मात्रिकस्य च ग्रहणार्थमिति । इष्ट्रप संख्यानवतीत्यादिश्लोकः पूर्व्वमेव व्याख्यातः । (W)

इति बोधिसत्त्वदेशीयाचार्य्यश्रीजिनेन्द्रबुद्धिपादविरचितायां
काशिकाविवरणपञ्जिकायामष्टमाध्यायस्य
चतुर्थःपादः समाप्तः ॥ ८ । ४ ॥

——(०)——

समाप्तश्चाष्टमोऽध्यायः ॥ ८ ॥

——(०)——

इति बोधिसत्त्वदेशीयाचार्य्यश्रीजिनेन्द्रबुद्धिपादविरचिता
काशिकाविवरणपञ्च ( ञ्जि ) का
समाप्ता ।

——(०)——

समाप्तश्च न्यासग्रन्थो जिनेन्द्रबुद्धिकृतः ॥

---

(V) According to some, the Sutras VIII. 4. 68 is to be read as अद्‌ अ and according to others as अदअत् . But कात्यायन rejects all these by his last वार्त्तिक—"एकशेषनिर्देशाद्वा स्वरभिन्नानां भगवतः पाणिनेः सिद्धम् ।"

(W) In preparing the press copy of the 8th Adhyaya, the Editor had to depend mainly on the following MSS :—

(a) The 5th MS. marked त containing VII. 1, 2, 3, 4 and VIII. 1, 2, 3, 4. This is in Bengali characters and the only copy from Bengal in which the असिद्ध or त्रिपादी i.e. VIII. 2 is found in part.

(b) The 12th MS. or क with 1, 3 ; II, 1, 2, 3 ; IV, 1, VII. 1. 2. 3. 4 and VIII. 1, 4.

(c) The 14th MS. or न with VIII. 3

(d) The 18th MS. or द containing VII. 2 and VIII. 4

(e) The 20th MS. or ब with VII. 1, 2, 3 and VIII. 1, 3.

(f) The 21st or ष with II, 1 ; VII. 1, 4 and VIII. 1, 3.

(g) The 23rd MS. or ट with VI. 3, 4 and VIII. 3, 4

(h) The 25th MS. or म with VI. 1, 2 and VIII. 1, 2

(i) The 27th MS. or र with VI. 2 and VIII. 1, 2.

# PUBLICATIONS OF THE VARENDRA RESEARCH SOCIETY,

*RAJSHAHI, BENGAL.*

## I. Society's Own Series.

1. Gaudarajamala—A dynastic History of Bengal from the earliest times to the Muhammadan Conquest (in Bengali). By Rai Bahadur Ramaprasad Chanda, B. A., F. A. S. B. Rs 2/-.

2. Gaudalekhamala—Vol. II.—Inscriptions of the Pala Kings of Bengal (In Bengali). Text in Nagari character with plates, Bengali translation and notes. By Akshay Kumar Maitra, C. I. E. Rs 3/-.

3. Do Vol. III. Inscriptions of the Chandra, Varman and Sena Dynasties of Bengal (In English). Text in Nagari character with plates, English translation, introduction, notes etc. By N. G. Majumdar, M. A. (In the Press).

4. Taratantra—Text in Nagari character. Edited by Pandit Girischandra Vedantatirtha with an English introduction by Akshay Kumar Maitra, C. I. E., As. -/8/.

5. Kasika-Vivarana-Panjika or Nyasa by Jinendrabuddhi. Edited by Prof. Srishchandra Chakravarti, B. A. Complete in 3 volumes, with Introduction etc. Vol. I (Adhyayas 1-4), Rs 9/-. Also a vailable in 4 separate parts. Vol. II. Pt. I (Adhyaya 5), Rs 2/8/- . Vol. II. Pt. II (Adhyaya 6), Rs 5/- . Vol. III S. M. Series. (Adhyayas 7 & 8), Rs 6/8. (Introduction, and title pages of Vols. I & II now available).

"Done in a scholarly manner"—H. Jacobi.

"The edition is very good and scholarlike"—Sten Konow.

6. The Indo-Aryan Races (In English)—By Rai Bahadur Ramaprasad Chanda, B. A., F. A. S. B. Rs 5/-.

"A valuable addition to the literature dealing with the origin of the Indo-Aryan peoples." A. B. Keith (J. R A. S., 1917).

"Creditable to the scholarship of the author"—Nature, Nov. 23, 1916.

7. A Catalogue of the Archaeological Relics in the Museum of the Varendra Research Society, Rajshahi. Co[illegible]iled by Prof. Radhagovinda Basak, M. A. and Prof. [illegible]sh Chandra Bhattacharya, M. A. As -/12/-.

[illegible] A Descriptive List of Copper-plates and Inscriptions [illegible] Museum of the Varendra Research Society, Rajshahi. [illegible]dbandhu Sanyal, M. A. (In the Press).

[illegible] Varendra Research Society's Monograph No. 1—The [illegible]a Copper-plate of Devapala. By N. G. Majumdar (In the Press).

### II. Savita Memorial Series.

Bhashavritti—a commentary on Panini's Grammar by Purushottamadeva. Edited by Prof. Srishchandra Chakravarti, B. A. Rs 6/-.

"A scholarly work"—S. K. Belvalkar.

"A very creditable production"—A. F. R. Hoernle.

"The editor has carried out his work with care and success"—A. B. Keith.

2. Dhatupradipa—a work on Paniniya Dhatupatha (Sanskrit verbal roots) by Maitreya Rakshita. Edited by Prof. Srishchandra Chakravarti, B. A. Rs 1/8/-.

3. Alamkarakaustubha—a work on Sanskrit Rhetoric by Kavi Karnapura. Edited by Prof. Sivaprasad Bhattacharya, M. A. (In Progress).

"Excellent edition,.........the work has been very carefully done and neatly executed"—Ganganath Jha.

"Edited with great judgment and discrimination"—A. B. Keith.

"The manner in which the work has been edited is to be highly commended"—H. Jacobi.

4. Prayaschittaprakarana of Bhatta Bhavadeva. Edited by Pandit Girishchandra Vedantatirtha. (In the Press).